शेषश्चात्र–

"निलिम्पाः कामरूपाश्च साध्याः शोभाधिरायुषः ।
पूजिता मर्त्यमहिताः सुधाशा मासुभाः सुराः ॥ १ ॥

तथा—

"द्वादशार्का वसवोऽष्टौ विश्वेदेवास्त्रयोदश ।
षट्त्रिंशत्तुषिताश्चैव षष्टिराभास्वरा अपि ॥ २ ॥

षट्त्रिंशदधिके माहाराजिकाश्च शते उभे ।
रुद्रा एकादशैकोनपञ्चाशद्वायवोऽपरे ॥ ३ ॥

चतुर्दश तु वैकुण्ठाः सुशर्माणः पुनर्दश ।
साध्याश्च द्वादशत्याद्या विज्ञेया गणदेवताः" ॥ ४ ॥

तेषां यानं विमानं

तेषां देवानां यानं वाहनं देवयानं सुरयानमित्यादि । विमान्ति वर्तन्तेऽस्मिन् देवा इति विमानं पुंक्लीबलिङ्गः । व्योम्नि यात्यनेन व्योमयानमित्यपि । तेषां विमानो यानमिति सम्बन्धात् विमानयानाः, वैमानिकाः, विमानिकाश्च इत्यादीनि यौगिकानि देवनामानि ज्ञेयानि ॥

अन्धः पीयूषममृतं सुधा ॥३॥

तेषां देवानाम् अन्धोऽन्नं भोज्यमाहार इति यावत् देवान्धो, देवान्नं देवभोज्यं, देवाहार इत्यादि । पीयि सौत्रो धातुः पीय्यत इति पीयूषम् । "खलिफलि-" ॥ (उणा–५६०) ॥ इत्यादिना ऊषः । पेयूषमित्यपि ॥ १ ॥ नास्ति मृतमनेनेत्यमृतम् ॥ २ ॥ सुष्ठु धीयते पीयत इति सुधा 'उपसर्गादातः" ॥५।३।११०॥ इत्यङ् ॥ ३ ॥ समुद्रनवनीतमपि । देवाश्च जैनसमये भवनपतिव्यन्तरज्योतिष्कवैमानिकभेदाच्चतुर्भा भवन्ति ॥ ३ ॥

तत्र भवनपतीनाह–

असुरा नागास्तडितः सुपर्णका वह्नयोऽनिलाः स्तनिताः ।
उदधिद्वीपदिशो दश भवनाधीशाः कुमारान्ताः ॥४॥

दशेति दशसङ्ख्या असुराद्याः रत्नप्रभाया मध्ये भवन्तीति भवनानि आवासाः तेषामधीशा भवनाऽधीशाः कुमारान्ताः कुमारशब्दान्ताः । तेन असुरकुमाराः नागकुमाराः तडित्कुमाराः सुपर्णकुमाराः वह्निकुमाराः, अनिलकुमाराः स्तनितकुमाराः उदधिकुमाराः, द्वीपकुमाराः दिक्कुमाराः इत्युच्यन्ते । कुमारवदेते कान्तदर्शना

सुकुमाराः मृदुमधुरललितगतयः शृङ्गाराभिजातरूपविक्रियाः कुमारवच्चोद्धतवेषभाषाभरणप्रहरणावरणयानवाहनाः । कुमारवच्चोल्बणरागाः क्रीडनपराश्चेत्यतः कुमारा इत्युच्यन्ते ॥ ४ ॥

अथ व्यन्तरानाह—

स्युः पिशाचा भूता यक्षा राक्षसाः किन्नरा अपि ।
किंपुरुषा महोरगा गन्धर्वा व्यन्तरा अमी ॥५॥

पिशाचादयोऽष्टौ विविधेषु शैलकन्दरान्तरवनविवरादिषु प्रतिवसन्तीति व्यन्तराः, वनानां समूहो वानं तस्यान्तरे भवन्तीति पृषोदरादित्वाद्वानमन्तरा इत्यपि ॥५॥

अथ ज्योतिष्कानाह—

ज्योतिष्काः पञ्च चन्द्रार्कग्रहनक्षत्रतारकाः ।

द्योतन्त इति ज्योतींषि विमानानि तान्यावासतया सन्त्येषां ज्योतिष्काः । "ब्रीह्यादिभ्यस्तौ" ॥७।२।५॥ इतीकप्रत्ययः । भास्वरशरीरत्वात् समस्तादिग्मण्डलद्योतनाद् ज्योतींषि देवाः ज्योतींष्येव वा ज्योतिष्काः । पञ्चेति पञ्चसंख्याः पञ्चविधा इत्यर्थः । ते तु चन्द्रा अर्का ग्रहा नक्षत्राणि तारकाश्च ॥

वैमानिकानाह—

वैमानिकाः पुनः कल्पभवा द्वादश ते त्वमी ॥ ६ ॥
सौधर्मैशानसनत्कुमारमाहेन्द्रब्रह्मलान्तकजाः ।
शुक्रसहस्रारानतप्राणतजा आरणाच्युतजाः ॥ ७ ॥
कल्पातीता नव ग्रैवेयकाः पञ्च त्वनुत्तराः ।

विमानेषु भवा वैमानिकाः । अध्यात्मादित्वादिकण् । ते च द्विविधाः कल्पभवाः कल्पातीताश्च । इन्द्रादिदशतया कल्पनात् कल्पः समुदायः सन्निवेशो विमानमात्रपृथिवीप्रस्तारस्तत्र भवाः कल्पभवा द्वादश ते पुनरमी ॥६॥ सुधर्मा देवसभा साऽस्मिन्नस्तीति सौधर्मः कल्पः "तदत्रास्ति" ॥६।२।७०॥ इत्यण् । तत्र जाताः सौधर्मजाः, ईशानस्येन्द्रस्य निवासः ऐशानः कल्पस्तत्र जाता ऐशानजाः, एवं सनत्कुमारादिकल्पेषु जाताः सनत्कुमारजाः, माहेन्द्रजाः, ब्रह्मा ब्रह्मलोकोऽभिधीयते भीमो भीमसेन इति न्यायादिति ब्रह्मजाः, लान्तकजाः, महाशुक्रजाः, सहस्रारजाः, आनतजाः, प्राणतजाः, आरणजाः, अच्युतजाः । अत्रार्यायां तु ब्रह्माक्षरयोः पूर्वौ ह्रस्वौ द्वावपि संयोगपरत्वमात् गुरू न भवतः ॥७॥ कल्पानतीताः कल्पातीताः कल्पान् अतिक्रम्यो

परि स्थिता इत्यर्थः । नवसंख्या नव, लोकपुरुषस्य ग्रीवाप्रदेशविनिविष्टा ग्रीवाभरणभूता ग्रैवेयकाः । "कुलकुक्षिग्रीवाच्छ्वास्यलङ्कारे" ॥६।३।१९॥ इत्येयकञ् । पञ्च स्थिति पञ्चसंख्याः, न विद्यते उत्तरे येभ्यस्ते अनुत्तराः विजयवैजयन्तजयन्तापराजितसर्वार्थसिद्धनामानः ॥

उपसंहारमाह—

निकायभेदादेवं स्युर्देवाः किल चतुर्विधाः ॥ ८ ॥

एवमुक्तप्रकारेण, देवा भवनपत्यादयः चतुर्विधा निकायभेदात् निकायो निवास उत्पादस्थानं तद्भेदात् । तथाहि— भवनपतयोऽशीतिसहस्राधिकयोजनलक्षपिण्डायां रत्नप्रभायामूर्ध्वमधश्च योजनसहस्रमेकैकमपहाय जन्माऽऽसादयन्ति । व्यन्तरास्तस्या एवोपरि यत्परित्यक्तं योजनसहस्रं तस्याध ऊर्ध्वं च योजनशतमेकैकमपहाय मध्येऽष्टसु योजनशतेषु जन्म प्रतिलभन्ते । ज्योतिष्कास्तु समतलाद् भूभागात् सप्त शतानि नवत्यधिकानि योजनानामारुह्य दशोत्तरयोजनशतपिण्डे नभोदेशे लोकान्तात् किञ्चिन्न्यूने जन्म गृह्णन्ति । वैमानिकास्तु रज्जुमध्यमधिरुह्य सौधर्मादिषु कल्पेषु सर्वार्थसिद्धविमानपर्यवसानेषूत्पद्यन्ते, तदेवमुत्पादनिवासभेदाच्चतुर्विधा देवाः । अन्यथा मनुष्यवद् भवनपत्यादयोऽन्यत्रापि लवणजलधिमन्दरपर्वतादिद्रुमगहनप्रभृतिषु वसन्ति । उत्पत्तिस्थानव्यतिरेकेणान्यत्रैषामुत्पादो जन्म नास्तीति निवासार्थः, राश्यर्थो वा निकायशब्दः ॥ ८ ॥

अथ देवविशेषनामान्याह—

आदित्यः सवितार्यमा खरसहस्रोष्णांशुरत्नं रवि-
र्मार्तण्डस्तरणिर्गभस्तिररुणो भानुर्नभोऽहर्मणिः ।
सूर्योऽर्कः किरणो भगो ग्रहपुषः पूषा पतङ्गः खगो
मार्ताण्डो यमुनाकृतान्तजनकः प्रद्योतनस्तापनः ॥ ९ ॥

ब्रध्नो हंसश्चित्रभानुर्विवस्वान्सूरस्त्वष्टा द्वादशात्मा च हेलिः ।
मित्रो ध्वान्तारातिरब्जांशुहस्तश्चक्राब्जाहर्बान्धवः सप्तसप्तिः ॥१०॥
दिवादिनाहर्दिवसप्रभाविभाभास्कराः स्यात् मिहिरो विरोचनः ।
ग्रहाब्जिनीगोद्युपतिर्विकर्तनो हरिः शुचीनौ गगनाध्वजाध्वगौ ॥११॥

हरिदश्वो जगत्कर्मसाक्षी भास्वान्विभावसुः ।
त्रयीतनुर्जगच्चक्षुस्तपनोऽरुणसारथिः ॥१२॥

अदितेरपत्यं लोकस्त्र्या आदित्यः । "अनिदमि "॥६।१।१५॥ इत्यादिना ञ्य ॥१॥ सूते प्रकाशं सविता ॥२॥ अरीनामयति अर्यमा "श्वन्मातरिश्वन्"–॥ (उणा–९०२) ॥ इत्यादिना अमन्तो निपात्यते ॥३॥ खरा, सहस्रम्, उष्णाश्चांशवो यस्य खरसहस्रोष्णांशुः खरांशुः, सहस्रांशुः, उष्णांशुः, यौगिकत्वात् खररश्मिः, दशशतरश्मिः, शीतेतररश्मिरित्यादयोऽपि ॥६॥ अश्नुते खं अशुः "अशेराभोऽन्तश्च" ॥ ( उणा–७१९ ) ॥ इति उर्नोऽन्तश्च ॥ ७ ॥ स्यते स्तूयते रविः "स्वरेभ्य इ " ॥ (उणा–६०६) ॥ इति इः ॥८॥ मृतण्डस्यापत्यं मार्तण्डः "ऋषि "॥६।१।६१॥ इत्यादिनाऽण् ॥९॥ तरन्त्यनेन तमः इति तरणिः पुंस्त्रीलिङ्गः । "ऋहस "॥ (उणा–६३८)॥ इत्यादिना अणिः ॥१०॥ गृध्यते अभिकाङ्क्ष्यते लोकैरसाविति गभस्तिः "गृभेर्गभ च" ॥ (उणा–६६१) ॥ इति अस्तिक् गृभेर्गभादेशश्च, गां नभस्ति दीपयतीति वा पृषोदरादित्वात् ॥११॥ अरुणः सारथिरस्यास्तीत्यरुणः । अभ्रादित्वादप्रत्ययः, अरुणवर्णत्वाद्वा अरुणः ॥१२॥ भातीति भानुः "दाभाभ्यां नु "॥ (उणा–७८६) ॥ इति नुः ॥१३॥ नभोऽह्नोर्मणिर्नभोऽहर्मणिः मणिशब्दः प्रत्येकं सबध्यते तेन नभोमणिः, अहर्मणिः । यौगिकत्वाद्व्योमरत्न, दिनरत्नमित्यादि ॥१४॥१५॥ सरति सुवति वा कर्मसु लोकानिति सूर्यः । "कुप्यभिद्य "॥५।१।३९॥ इत्यादिना क्यपि निपातः । सूर एव वा सूर्यः मर्त्यादित्वात् ॥१६॥ अर्च्यते स्तूयते इत्यर्कः । अर्च्यत इति वा "भीण्शलि " ॥(उणा–२१) ॥ इति कः ॥१७॥ किरति तमांसीति किरणः । "कॄगृपृकपिवृषिभ्यः कित् " ॥ (उणा–१८८) ॥ इत्यणः ॥१८॥ भज्यते आश्रीयते अनेन कृत्वा लोकैरालोक इति भगः । "गोचरसंचर " ॥५।३।१३१॥ इत्यादिना घः ॥१९॥ महान् पुष्णातीति महपुषः । "मूलविभुजादयः " ॥५।१।१४४॥ इति कः ॥ आदित्यो हि सुषुम्णाभिर्नाडिभिर्महान् पुष्णाति ।

यदाहि —"सुषुम्णाद्याश्च नाड्योऽस्य पुष्णन्ति सततं महान्" ॥२०॥

पूषति वर्धते ऋतुभेदाद्रश्मिभिरिति "उक्षितक्षि " ॥ (उणा–९००) ॥ इत्यादिना अनि पूषा ।

यदाहि —

"ऋतुभेदात् पुनस्तस्यातिरिच्यन्तेऽपि रश्मयः ।
शतानि द्वादश मधौ त्रयोदशैव माधवे ॥ १ ॥
चतुर्दश पुनर्ज्येष्ठे नभोनभस्ययोस्तथा ।
पञ्चदशैव त्वाषाढे षोडशैव तथाश्विने ॥ २ ॥
कार्तिके त्वेकादश शतान्येवं तपस्यपि ।
मार्गे तु दश सार्द्धानि शतान्येव च फाल्गुने ॥ ३ ॥

पौष एव पर मासि सहस्र किरणा रवे " ॥२१॥

पतति गच्छति व्योम्नीति पतङ्ग । "पतितमि "॥ (उणा–९८) ॥ इत्यादिना गङ्, पतं सन् गच्छतीति वा "भासो गम डाङ्गो च "॥५।१।१३१॥ इत्यादिना खड् ॥२२॥ खे गच्छतीति खे खग ॥२३॥ मृतमण्डमस्येति मृताण्ड । "मृतमण्डमजायत" इति श्रुते । तस्यापत्यमप्याणि मार्ताण्डः ॥२४॥ यमुनायाः, कृतान्तस्य च जनक यमुनाजनकः, कृतान्तजनक । यौगिकत्वात्कालिन्दीसू, यमसूरित्यादयोऽपि ॥२५॥२६॥ प्रद्योतते प्रद्योतन ॥२७॥ तापयतीति तापन नन्द्यादित्वाल्ल्युः ॥२८॥९॥ प्रभाति तेज सा द्यौरिति प्रभ "दिनमम "॥(उणा–२६८)॥ इत्यादिना निपात ॥२९॥ हन्ति तमो हंस "भावावपमि "॥ (उणा–५६४)॥ इत्यादिना स ॥३०॥ चित्रा नानाप्रकारा भानवो यस्य चित्रभानु ॥ ३१ ॥ विवस्तेजोऽस्यास्तीति विवस्वान् मतु ॥ ३२ ॥ सुते तेज इति सूर " सुस्याजि "–॥ ( उणा–३८८ ) ॥ इत्यादिना रक् । तालव्यादिरित्यन्ये ॥ ३३ ॥ त्वेपति दीप्यते त्वष्टा "त्वष्टृक्षत्तृहोतृ ..." ॥ ( उणा–८६५ ) ॥ इति निपातनात् ॥ ३४ ॥ द्वादशात्मानो रूपाण्यस्य द्वादशात्मा । द्वादश आदित्या इति स्मृते ॥ ३५ ॥ हेलयति प्रकाशयत्यखिलानिति हेलि । " खरेभ्य इ" ॥ ( उणा–६०६ ) ॥ इति इ ॥ ३६ ॥ मेद्यति मित्र " अमिचिमिदिशसिभ्य क्त्र" ॥ ( उणा–४५४ ) ॥ इति त्रः ॥ ३७ ॥ ध्वान्तस्यारातिर्ध्वान्तारातिः । यौगिकत्वात्तिमिरारिरित्यादय ॥ ३८ ॥ अब्जानि अरविन्दानि हस्ते यस्य, स तथा अब्जहस्त, अब्जहस्त । यौगिकत्वात् पद्मपाणिः, गभस्तिपाणिरित्यादय ॥३९॥४०॥ चक्रस्याब्जस्याह्नश्च बान्धव चक्रबान्धव, अब्जबान्धव , अहर्बान्धव । यौगिकत्वात् चक्रवाकबन्धु , पद्मबन्धु , दिनबन्धुरित्यादय ॥४१॥४२॥४३॥ सप्त सप्तयोऽश्वा यस्य सप्तसप्ति । यौगिकत्वात्सप्ताश्व इत्यादय । सप्तभिर्नामभिरुपलक्षितोऽश्वो यस्येति वा सप्तसप्ति । यद्वेदे 'सप्त युञ्जन्ति रथमेकचक्रमेकोऽश्वो वहति सप्तनामा" ॥४४॥१०॥ दिवादिभ्यः सप्तम्य सम्बन्ध करणम् तेन दिवाकर दिनकर, अहस्कर दिवसकरः, प्रभाकर, विभाकर, भास्करः । दिवा करोतीत्यादिष्वुत्पत्तौ "संख्याहर्दिवा '॥५।१।१०२॥ इत्यादिना ट । यौगिकत्वाद्वासरकृत्, दिनप्रणी, दिनकृदित्यादय ॥ ५१ ॥ मेहति सिञ्चति मिहिरः 'इषीपि ' ॥ (उणा–४१६) ॥ इत्यादिना इरच् ' आदित्याज्जायते वृष्टिः ' इति हि स्मृति ॥ ५२ ॥ विरोचते इति विरोचनः नन्द्यादित्वाल्ल्युः ॥ ५३ ॥ ग्रहाणामब्जिनीनां गवां दिवां च पति, ग्रहपतिः अब्जिनीपतिः, गोपति , द्युपति । यौगिकत्वात् ग्रहेशः पद्मिनीशः, दिवामीश, दिनेश इत्यादयोऽपि ॥ ५४ ॥ विकर्तनमस्यास्तीति विविधं कर्तनमस्येति वा विकर्तन चक्रभ्रमेण तेज शातनात् ॥ ५८॥ हरति तमांसीति हरिः । "खरेभ्य इ" ॥ ( उणा–६०६ ) ॥ इति इ, ॥ ५९ ॥ लोचनमग्निमुद्गारक इति अग्निः ।

माम्युपान्त्यत्वादि' कित् ॥ ६० ॥ एति इनः "जीणूर्शादीपुष्यविमीभ्य' कित्" ॥ (उणा-२६१) ॥ इति न ॥६१॥ गगनशब्दाद् ध्वजशब्दोऽध्वगशब्दश्च गगनध्वज, गगनाध्वग । यौगिकत्वाभ्रकेतन, नभ'पान्थ इत्यादय ॥६२॥६३॥११॥ हरितो नीला अश्वा अस्य हरिदश्व ॥ ६४ ॥ जगत, कर्मणां च साक्षी जगत्साक्षी, कर्मसाक्षी च ॥ ६६ ॥ भास सन्त्यस्य भास्वान। यौगिकत्वादंशुमान, अंशुमालीत्यादय ॥ ६७ ॥ विभा दीप्तिर्वसु धनमस्य विभावसु ॥ ६८ ॥ त्रयो वेदास्त्रयी सा तनुरस्य त्रयीतनु । "त्रयीतेजोमयो भानु" इति स्मृते ॥ ६९ ॥ जगतां चक्षुर्जगच्चक्षु प्रकाशकत्वात् ॥ ७० ॥ तपतीति तपन' मन्वादित्वादन' ॥ ७१ ॥ अरुण सारथिरस्यारुणसारथिः ॥ ७२ ॥ शेषश्चात्र—

"सूर्ये वाजीलोकबन्धुर्मार्तण्डोऽम्बुजकेसर ।
सहस्त्राङ्घ्रि दिवापुष्टः काष्ठाप्रान्तिनाशन ॥ १ ॥
पपी सदागति पीतुः सांवत्सररथ' कपि ।
इयान' पुष्करो ब्रह्मा बहुरूपश्च कर्णसू ॥ २ ॥
वेदोदय' कालिकः प्रद्योतन्दन सुराहृतः ।
लोकप्रकाशनः पीथो जगद्दीपोऽमृतस्रर" ॥ ३ ॥ १२ ॥

रोचिरुस्ररुचिशोचिरंशुगोज्योतिरर्चिरुपधृत्यभीशव' ।
प्रग्रह' शुचिमरीचिदीप्तयो धाम केतुघृणिरश्मिपृश्नयः ॥१३॥
पाददीधितिकरद्युतिद्युतो रुग्विरोकाकिरणत्विषित्विषः ।
भाः प्रभावसुगभस्तिभानवो भा मयूखमहसी छविर्विभा ॥१४॥

रोचत इति रोचि' क्लीबलिङ्ग "रुच्यर्चि" ॥ (उणा-९८९) ॥ इत्यादिना इस् ॥ १ ॥ वसन्त्यस्मिन् रसा इत्युस्र "ऋज्यजि-" ॥ (उणा-३८८) ॥ इत्यादिना र' कित् ॥ २ ॥ रोचते रुचि' स्त्रीलिङ्ग । माम्युपान्त्यत्वादि' कित् ॥ ३ ॥ शोचति तमोऽस्मिन्निति इसि शोचि' क्लीबलिङ्ग' ॥ ४ ॥ अश्नुते व्याप्तिसंख्य पुंलिङ्ग ॥ ५ ॥ गच्छत्यस्मात्तम इति गौः पुंलिङ्ग ॥ ६ ॥ द्योतते ज्योति' क्लीबलिङ्ग' । "द्युतेरादेश्च ज" ॥ (उणा-९९१) ॥ इति इस् ॥ ७ ॥ अर्च्यत इति इसि अर्चिः स्त्रीक्लीबलिङ्ग ॥ ८ ॥ उपध्रियते अवतिष्ठते रसोऽस्मिन्निति उपधृति' । "दमुपि" ॥ (उणा-६५१)॥ इत्यादिना बहुवचनात् ति कित् ॥९॥ अभ्यश्नाति तमांसीत्यभीशु पुंलिङ्ग । "केवयुभुरण्यध्वर्व्यादय" ॥ (उणा-७४६) ॥ इति उदन्तो निपात्यते । अभीषुरिति गौड' ॥ १० ॥ प्रगृह्यतेऽनेनेति अच्चि प्रग्रह' ॥ ११ ॥ शुचिर्मेरस्या श्रोऽत्र शोचयतीति शुचिः पुंलिङ्ग किद् इ' ॥ १२ ॥ म्रियते तमोऽस्मिन्निति मरीचिः

पुंस्त्रीलिङ्गः । "भ्रसिकम्यमिपद्याभिभ्य ईचिः" ॥(उणा-६२७)॥ इति ईचि ॥ १३ ॥ दीप्यतऽस्यमेति दीप्तिः स्त्रियां क्ति ॥ १४॥ भीयते भाम "मन्" ॥ (उणा-९११)॥ इति मन् ॥ १५ ॥ भाय्यते पूज्यते केतुः "चाय कें च" ॥ (उणा-७७८) ॥ इति तु ॥ १६ ॥ भरति घृणि "भृसृघृभ्रसिभ्यः किन्" ॥ (उणा-६३५) ॥ इति णि ॥ १७ ॥ अश्नुते व्याप्नोतीति रश्मिः, एते त्रयः पुंलिङ्गाः "अशो रश्चादि" ॥ (उणा-६८८) ॥ इति मि ॥ १८ ॥ पृष्णाति पृश्निः पुंस्त्रीलिङ्गः "घृषृष्णिभ्यः किन्" ॥ (उणा-६७९) ॥ इति निः, पृश्निरित्येके, पृष्णिरित्यन्ये ॥१९॥१३॥ पद्यतेऽनेन पादः ॥ २० ॥ दीधीयते दीप्यतेऽस्या दीधितिः स्त्रियां क्तिः ॥ २१ ॥ कीर्यते करः अल् ॥ २२ ॥ द्योतते द्युतिः स्त्रीलिङ्गः ॥ २३ ॥ द्योतनं द्युत् । "क्विब्वचिप्रच्छि" किप्" ॥५।२।११४॥ इति क्विप् ॥ २४ ॥ रोचनं रुक् ॥ २५ ॥ विरोचतेऽनेन विरोकः ॥ २६ ॥ किरणः प्रागवत् ॥ २७ ॥ त्विष्यते त्विषिः स्त्रीलिङ्गः ॥ २८ ॥ त्वेषणं त्विट् ॥ २९ ॥ भासते भाः पुंस्त्रीलिङ्गः ॥ ३० ॥ प्रभानं प्रभा ॥ ३१ ॥ वसति स्वामिति वसुः । "वसरुसरि" ॥ (उणा-७१६) ॥ इत्युः ॥३२॥ गभस्तिमान् पूर्ववत्, त्रयोऽपि पुंलिङ्गाः ॥ ३४ ॥ भाति भा "मृगयेच्छा" ॥५।३।१०१॥ इत्यादिना निपात्यते ॥ ३५ ॥ मयते विस्तारं गच्छति मयूखः । "मये भिस्याम्खो" ॥ (उणा-९१) ॥ इत्यूखः ॥ ३६ ॥ महते महः । "अस्" ॥ (उणा-९५२) ॥ इत्यस् ॥ ३७ ॥ छयति तम इति छविः स्त्रीलिङ्गः । "छवि छिवि" ॥ (उणा-७०६) ॥ इत्यादिना निपात्यते ॥३८॥ विभानं विभा ॥३९॥१४॥

## प्रकाशस्तेज उद्योत आलोको वर्च आतपः ।

प्रकाशते प्रकाशः ॥ १ ॥ तेजयति तेजः ॥ २ ॥ उद्योतते उद्योतः ॥ ३ ॥ आलोक्यते अनेनाऽनेनेत्यालोकः ॥४॥ वर्चते दीप्यते वर्चः ॥ ५ ॥ आतपति आतपः । द्योत इत्यपि ॥ ६ ॥

## मरीचिका मृगतृष्णा

मरीचिप्रतिकृतिर्मरीचिका । "तस्य तुल्ये कः संज्ञाप्रतिकृत्योः" ॥७।१।१०८॥ इति कः । ग्रीष्मे हि सिकतार्ककराः प्रतिफलिता जललेनाभान्ति, अत एव मरु-रीचिकेत्युच्यते ॥१॥ मृगाणां तृष्णाऽस्यां मृगतृष्णा ॥ २ ॥

## मण्डल तूपसूर्यकम् ॥ १५ ॥

## परिधि परिवेषश्च

मण्डयति मण्डलं त्रिलिङ्गः "वृषिकन्दि" ॥ (उणा ४६५) ॥ इत्यादिना अल ॥१॥ समीपे सूर्यस्य प्रतिकृतिरुपसूर्यकं क्लीबम् ॥२॥१५॥ परितो धीयते परिधिः

पुंलिङ्ग "उपसर्गाद् किः"॥५।३।८७॥ इति किः ॥३॥ परितो विध्यते व्याप्यतेऽनेन परिवेष ॥ ४ ॥

सूरसूतस्तु काश्यपि ।
अनूरुर्विनतासूनुररुणो गरुडाग्रज ॥ १६ ॥

सूरस्य सूत सूरसूत । यौगिकत्वाद्रविसारथिरित्यादय ॥ १ ॥ कश्यपस्यापत्यं काश्यपि व्यण बाधित्वा "बाह्वादिभ्यो गोत्रे"॥६।१।३२॥ इञ् ॥२॥ न विद्येते ऊरू अस्य अनूरुः ॥३॥ विनताया सूनुर्विनतासूनु यौगिकत्वाद्वैनतेय इत्यादय ॥४॥ अरुणवर्णत्वादरुण ॥५॥ गरुडस्याग्रजो गरुडाग्रज ॥ ६ ॥ शेषश्चात्र–"अरुणे विपुलस्कन्धो महासारथिराश्मन " ॥ १६ ॥

रेवन्तस्त्वर्करेतोज प्लवगो हयवाहन ।

रेवते गच्छति हयेनेति रेवन्त । "तृजिभूवदि " ॥ (उणा–२२१)॥ इत्यादिना झन्त ॥ १ ॥ अर्करेतसो जात अर्करेतोज । "अजाते पञ्चम्या " ॥५।१।१७०॥ इति डः ॥२॥ प्लवमानो गच्छति प्लवग ॥३॥ हयो वाहनमस्य हयवाहन ॥४॥

अष्टादश माठराद्या सवितु पारिपार्श्विकाः ॥१७॥

मठरस्यापत्य माठर ॥ "विदादेर्वृद्धे" ॥६।१।४१॥ इत्यञ् । माठराद्या माठरप्रभृतय , ते यथा—माठर पिङ्गलः दण्डो राजश्रोषौ स्रोतद्वारिकौ कल्मायपक्षिणौ जाड्यकार कुतापकौ पिङ्गगजौ दण्डिपुरुषौ किशोरकाविति । यदाहि—

"सुराग्रतस्त्वसाम्यश्च वक्ष्यामि पारिपार्श्विके ।
इन्द्रादयश्च ते देवा सर्वे नामान्तरैः स्थिता ॥ १ ॥
तत्र शक्रो वामपार्श्वे दण्डाख्यो दण्डनायक ।
वह्निस्तु दक्षिणे पार्श्वे पिङ्गलो नामतश्च स ॥ २ ॥
पूर्वद्वारे गुहहरौ राजश्रोषौ क्रमेण तौ ।
द्वितीये तु धर्माधर्मौ तौ स्रोतद्वारिकौ क्रमात् ॥ ३ ॥
तृतीये तु यमताक्ष्यौ क्रमात् कल्मायपक्षिणौ ।
चित्रगुप्तश्च कालश्च रवेर्दक्षिणपार्श्वगौ ॥ ४ ॥
प्रथमो जातृकाराख्यो माठराख्यो द्वितीयक ।
पश्चिमेनाब्धिवरुणौ तौ प्राप्नुयात् कुतापकौ ॥ ५ ॥
उदीच्यां यक्षहेरम्बौ तौ च पिङ्गगजौ क्रमात् ।
प्राच्यां तु रेवन्तौ तौ दण्डिपुरुषौ क्रमात् ॥ ६ ॥

कर ॥२६॥ चन्दति चन्द्र "चीशुचि" ॥ (उणा–३८७) ॥ इत्यादिना रः ॥२७॥ सुनोति धातूनामनेकार्थत्वात् सुतेऽमृतमिति सोम "अर्त्तीरि" ॥ (उणा–३३८)॥ इत्यादिना मः, सूयते वा सोम ॥ "नवो नवो भवति जायमान" इति श्रुतेः ॥२८॥ अमृतं श्वेता हिमाश्च द्युतयो यस्य स तथा अमृतद्युतिः, श्वेतद्युतिः, हिमद्युतिः; यौगिकत्वात् सुधांशु, सितांशुः, शीतांशुरित्यादय ॥३१॥ ग्लायते क्षीयते ग्लौ। "ग्लानुदिभ्यां डौः" ॥ (उणा–८६८) ॥ इति डौः ॥३२॥

शेषश्चात्र—

"चन्द्रस्तु मास्तपोराजो छायांशुः श्वेतवाहनः।
जर्मः सप्रो राजराजो यजतः कुसिकामवः।
यहराजौषधीगर्भस्तपस सायतो बुधः ॥ १ ॥
स्यन्दः क्षसिन्धुः सिन्धूत्थः थविज्ञारमणस्तथा।
आकाशचमस पीयुः क्लेदुः पर्वरिचिद्विषी ॥ २ ॥
परिज्वा युवनो नेमिश्चन्दिरः श्वेदुरेकभूः" ॥ १९ ॥

षोडशोंऽशः कला

चन्द्रस्येति शेषः। षोडशानां पूरणः षोडशः संख्यापूरणे डट्। कल्यति संख्यां कला ॥ १ ॥

चिह्नं लक्षणं लक्ष्म लाञ्छनम्।
अङ्कः कलङ्कोऽभिज्ञानं

चाहयति चिह्न "दिननम" ॥ (उणा–२६८) ॥ इत्यादिना मान्तो निपात्यते ॥ १ ॥ लक्ष्यते अनेनेति लक्षणं लक्ष्म च "मन्" ॥ ( उणा–९११ ) ॥ इति मन् ॥ २ ॥ ३ ॥ लाञ्छ्यते अनेनेति लाञ्छनम् ॥ ४ ॥ अङ्क्यते अनेन अङ्कः ॥५॥ किरति सन्देह कलङ्कः। "किरोऽङ्को रो लश्च वा" ॥ (उणा–६२) ॥ इत्यङ्कः ॥६॥ अभिज्ञायतेऽनेनेत्यभिज्ञानम् ॥ ७ ॥

चन्द्रिका चन्द्रगोलिका ॥ २० ॥
चन्द्रातप कौमुदी च ज्योत्स्ना

चन्द्रोऽस्त्यस्यां चन्द्रिका "अतोऽनेकस्वरात्"॥७।२।६॥ इतीकः ॥१॥ चन्द्रगोलोऽस्त्यस्यां चन्द्रगोलिका ॥२॥२०॥ चन्द्रस्यातपश्चन्द्रातपः ॥ ३ ॥ कुमुदानामिमं विकाशहेतुत्वात् कौमुदी ॥ ४ ॥ ज्योतिरस्त्यस्यां ज्योत्स्ना "तमिस्रार्णवज्योत्स्नाः" ॥७।२।५२॥ इति निपात्यते चन्द्रिमेत्यपि वाचस्पतिः ॥ ५ ॥

बिम्बं तु मण्डलम् ।

बभाति रश्मिभिर्म्योमिति बिम्बं पुंक्लीबलिङ्गः । "बिनीबन्धि" ॥ (उणा-१२५)॥ इत्यादिना डिम्ब , बिम्बेति सौत्रो वा धातुः बिम्बति भाति बिम्बम् ॥१॥ मण्डल मागवत् ॥ २ ॥

नक्षत्र तारका ताराज्योतिषी भमुडु ग्रहः ॥ २१ ॥

धिष्ण्यमृक्षम्

नक्षति गच्छति व्योमनीति नक्षत्र "वृन्नक्षि" ॥ ( उणा-४५६ ) ॥ इत्यादिना अत्र", यद्वा क्षद संवरणे इति सौत्रो धातुः न क्षदति प्रभामिति नक्षत्रम् । "हुयामा "॥ (उणा-४५१)॥ इत्यादिना त्रे नक्षादित्वात्सिद्धम् ॥१॥ तरतीति तारका त्रिलिङ्गः "तारकावर्णका "॥२।४।११२॥ इत्यादिना इत्वाभाव ॥२॥ तरन्त्यनया तारा । स्त्रीपुंसलिङ्ग ' भिदादयः' ॥५।२।१०८॥ इत्यन्तो निपात्यते ॥ ३ ॥ द्योतते ज्योतिः ॥ ४ ॥ भाति भ "कथित्"॥५।१।१७१॥ इति कः । भा विद्यतेऽस्येति भा ॥ ५ ॥ इयर्ति खमिति उडु । क्लीबलिङ्ग । "उद् च मे" ॥(उणा-७३८)॥ इति उ अर्तेरुकादेशश्च ॥६॥ गृह्यते इति ग्रह ॥७॥२१॥ धृष्णोति प्रगल्भते निशीति धिष्ण्यम् । 'धिष्ण्यास्या" ॥ (उणा-३६४) ॥ इत्यादिना यान्तो निपात्यते ॥८॥ ऋच्छति गच्छति ऋक्षं "ऋषिरिषि " ॥ ( उणा-५६७ ) ॥ इत्यादिना स किन् । ऋक्ष्णोति तम इति वा ॥ ९ ॥

अथाश्विन्यश्वकिनी दस्रदेवता ।

अश्वयुगश्वालिनी च

अश्वोऽस्या अस्तीति अश्विनी ॥१॥ अश्वतोऽश्वोऽश्वकः सोऽस्या अस्ति अश्वकिनी ॥२॥ दस्रो देवता अस्या दस्रदेवता ॥३॥ अश्वान् युङ्क्ते अश्वयुक् स्त्रीलिङ्ग । अश्वकर्मण्याम्नानात् ॥ ४ ॥ बाला" केशा" सन्त्यस्या बालिनी ॥ ५ ॥

अथ भरणी यमदेवता ॥ २२ ॥

बिभर्ति भरणी "भृ"॥ (उणा-६१८) ॥ इत्यादिना अणि" ॥ १ ॥ यमो देवताऽस्या यमदेवता ॥ २ ॥ २२ ॥

कृत्तिका बहुलाश्चाग्निदेवा

कृन्तन्ति ग्रममिति कृत्तिका । कृतिपुति "॥ (उणा-७६)॥ इत्यादिना तिक् किन् ॥ १ ॥ बंहन्ते वा बहुलाः "स्थापवि" ॥ (उणा-४८६ ) ॥ इत्यादिना उलः

कित्, नलुक् च। "मघा अपूकृतिका यहो"(लिङ्गा—२६) इति स्त्रीलिङ्गौ, नित्यं बहुवचनान्तौ चैतौ ॥ २ ॥ अश्विर्देव आसामश्विवेवाः ॥ ३ ॥

ब्राह्मी तु रोहिणी ।

ब्रह्मा देवतास्या ब्राह्मी ॥१॥ रोहन्ति कार्याण्यस्यां रोहिणी । "रुहरुहि"॥ (उणा–१९४) ॥ इत्यादिना बहुवचनादिणे "रेवतरोहिणाद्भे" ॥२।४।२६॥ इति ङी ॥ २ ॥

मृगशीर्षं मृगशिरो मार्गश्चान्द्रमस मृग ॥ २३ ॥

मृगस्येव शीर्षमस्य मृगशीर्षम् ॥१॥ तथा, मृगशिरः क्ले ताराणां तथावस्थानात् पुल्लीवलिङ्गोऽयम्, यद्वाचस्पति —सौम्य मृगशिरोऽस्त्रियाम् ॥ २ ॥ मृग एव मार्गः प्रज्ञादित्वादण् ॥ ३ ॥ चन्द्रमा देवताऽस्य चान्द्रमसम् ॥ ४ ॥ मृगाकारत्वात् मृगः ॥ ५ ॥ २३ ॥

इल्वलास्तु मृगशिर शिरस्था पञ्च तारका ।

इलन्ति गच्छन्ति इल्वला स्त्रीलिङ्ग । "गुल्वलेल्वलादयः"॥ (उणा–५००)॥ इति निपातनम्, इन्वन्ति प्रीणन्ति इन्वका इत्यपि ॥१॥

आर्द्रा तु कालिनी रौद्री

अर्दति हिनस्ति कार्यमिति आर्द्रा "चिजि"। (उणा–१९२) ॥ इत्यादिना रो दीर्घश्च ॥१॥ कालोऽस्यामस्ति कालिनी ॥२॥ रुद्रो देवताऽस्या रौद्री ॥३॥

पुनर्वसू तु यामकौ ॥ २४ ॥
आदित्यौ च

पुनर्वसतनयो पुनर्वसू पुंलिङ्ग ॥१॥ यमके यमले भवौ यामकौ युग्मरूपावित्यर्थः ॥ २ ॥ २४ ॥ अदितिर्देवता अनयोरादित्यौ ॥३॥

पुष्यस्तिष्यः सिध्यश्च गुरुदैवतः ।

पुष्यन्ति स्वेपन्ति सिध्यन्ति च कार्याण्यत्र पुष्य, तिष्य, सिद्धयः। "कृत्यमि च" ॥५।१।३९॥ इत्यादिना क्यबन्ता निपात्यन्ते ॥३॥ गुरुर्देवतमस्य गुरुदैवत ॥४॥

सार्प्योऽश्लेषा

सर्पा देवताऽस्या सार्पी ॥१॥ न विद्यते श्लेषोऽस्यां जातापत्यस्येत्यश्लेषा । पुंस्त्रीलिङ्गः ॥२॥

मघा पित्र्या

मह्नत्ये गच्छन्ति पितरः प्रीतिमास्विति मघा । "मघाघह्रा "॥ (उणा-११०)॥ इत्यादिना घान्तो निपात्यते ॥ १॥ पितरो देवता आसां पित्र्याः । "व्याप्यूपि त्युपयो म "॥४।२।१०९॥ इति म ॥ २ ॥

फल्गुनी योनिदेवता ॥२५॥

फल्वतीति फल्गुनी "फलेर्गोऽन्तश्च" ॥ (उणा २९१) ॥ इत्युमे गौरादित्वात् ङी', उत्तरप्रोत्तराविशेषणात् पूर्वेति लभ्यते । तेम पूर्वफल्गुनी एकवचनान्तोऽपि मद्राक्सरति-पूर्वफल्गुनी योनिदेवता । प्राग्विकास्तु पूर्वफल्गुन्यौ पूर्वफल्गुन्य इति मन्यन्ते । "फल्गुनीप्रोष्ठपदस्य भे"॥२।२।१२३॥ इति द्वित्वस्य वा बहुत्वविधा नाद् ॥१॥ योनिर्देवतास्या योनिदेवता ॥२॥२५॥

सा तूत्तरार्यमदेवा

सा फल्गुनी, उत्तरा उत्तरेतिविशेषणविशिष्टा, उत्तरफल्गुन्यावुत्तरफल्गुन्य इति ॥१॥ अर्यमा देवोऽस्या अर्यमदेवा ॥ २ ॥

हस्तः सवितृदैवतः ।

हसति हस्त' पुल्लिङ्गः । "हस्यमि " ॥ (उणा-२००) ॥ इत्यादिना तः ॥१॥ सविता देवतास्य सवितृदैवत' ॥ २ ॥

त्वाष्ट्री चित्रा

त्वष्टा देवताऽस्यास्त्वाष्ट्री ॥१॥ चिनोतीति चित्रा "चिमिदिशसिभ्यः क्त्र्"॥ (उणा-४५४) ॥ इति त्रः ॥२॥

आनिली स्वातिः

अनिलो देवताऽस्या आनिली ॥१॥ सुष्ठु अतति स्वाति पुंल्लिङ्गः । "पाद्य-चाम्यस्यिम्याम्" ॥ (उणा-६२०) ॥ इति इणित् ॥२॥

विशाखेन्द्राग्निदेवता ॥ २६ ॥

राधा

विशेषेण श्यति तनूकरोति अशुभं विशाखा "श्यतेरिश्च वा " ॥ (उणा-४५) ॥ इति खः । विशाखति व्याप्नोतीति वा ॥ १ ॥ इन्द्राग्नी देवते अस्या इन्द्राग्नि देवता ॥२॥२६॥ राध्नोति कार्ये राधा ॥ ३ ॥

अनुराधा तु मैत्री

अनुराध्नोति अनुराधा । एकदेशविकृतस्यादनूराधेत्यपि ॥१॥ मित्रो देवताऽस्या मैत्री ॥ २ ॥

ज्येष्ठैन्द्री

प्रकृष्टा वृद्धा ज्येष्ठा ॥१॥ इन्द्रो देवताऽस्या ऐन्द्री ॥२॥

मूलं आश्रपं ।

मूलति मूलं पुंक्लीबलिङ्गः ॥१॥ अश्रपो राक्षसो देवताऽस्य आश्रपं ॥ २ ॥

पूर्वाषाढाऽऽपी

न सहते अशुभं अषाढा । "नमः सहे षा च" ॥ (उणा–१८१) ॥ इति ढा, ॥१॥ आपो जलं देवताऽस्या आपी ॥ २ ॥

सोत्तरा स्याद्वैश्वी

सा अषाढा उत्तरा उत्तराषाढेत्यर्थः ॥१॥ विश्वे देवताऽस्या वैश्वी ॥२॥

श्रवणं पुनः ॥ २७ ॥

हरिदैवः

श्रूयतेऽसौ श्रवणः पुंक्लीलिङ्गः । "वृवृ"॥(उणा–१८७) ॥ इति अणः ॥१॥ २७॥ हरिर्विष्णुर्देवोऽस्य हरिदैवः ॥२॥

श्रविष्ठा तु धनिष्ठा वसुदैवता ।

बहूनां मध्ये प्रकृष्टा श्रोतृमती "गुणाङ्गाद्वेष्ठेयसू"॥७।३।९॥ इति इष्ठप्रत्यये श्रविष्ठा । एवं बहूनां मध्ये प्रकृष्टा धनवती धनिष्ठा । श्रूयते शुभकर्माणि श्रविष्ठा, धनति धनं करोति धनिष्ठा " षष्ठेधिष्ठादयः " ॥ (उणा–१६६) ॥ इति इष्ठान्तौ वा निपात्येते ॥ १ ॥ २ ॥ वसवो देवताऽस्या वसुदैवता ॥३॥

वारुणी तु शतभिषक्

वरुणो देवताऽस्या वारुणी ॥१॥ शतं भिषजोऽस्यां शतभिषक् स्त्रीलिङ्गः ॥२॥

[1]अजाहिर्बुध्न्यदैवता ॥ २८ ॥

---

१ पूर्वभद्रपदाया उत्तरभद्रपदायाश्च प्रत्येकं द्वे द्वे नाम्नी अजाहिर्बुध्नाभ्यामग्रे दैवतेति योज्यते । पूर्वोत्तराभ्यामग्रे भद्रपदा इति योज्यते ततोऽयमर्थः–अजदेवता, पूर्वभद्रपदाश्च एकार्थौ; अहिर्बुध्नदेवता, उत्तरभद्रपदाश्च एकार्थौ । पूर्वभद्रपदानां उत्तरभद्रपदानां च एकैकस्या एकं नाम प्रोष्ठपदा इति ।

पूर्वोत्तरा भद्रपदा द्वय्य प्रोष्ठपदाश्च ताः ।

अजपादो अजो भीमवत् । अजोऽहिर्बुध्न्यश्च देवते आसामजाहिर्बुध्न्यदेवता ॥२८॥ पूर्वाश्चोत्तराश्च पूर्वोत्तराः । भद्रौ पादावासां भद्रपदाः । "सुप्रात" ॥७।३।१२९॥ इत्यादिना इसमासान्तो निपात्यते । यथासंख्यमादजदेवता पूर्वभद्रपदाः । अहिर्बुध्न्यदेवता उत्तरभद्रपदाः । द्वयमवयवासां द्वय्य, ता इति पूर्वभद्रपदा उत्तरभद्रपदाश्च प्रोष्ठपदा उच्यन्ते । प्रोष्ठो गौस्तस्येव पादावासामिति प्रोष्ठपदा, प्रोष्ठी शफरी पादावासामिति वा ॥

रेवती तु पौष्णं

रैवते गच्छति "रक्" ॥ (उणा २०७) ॥ इत्यादिना बहुवचनादतप्रत्यये ङ्यां रेवती ॥१॥ पूषा देवताऽस्याः पौष्णं ज्योतिषे क्लीबे स्त्रम् ॥२॥

दाक्षायण्य सर्वा धिशिमिया ॥ २९ ॥

दक्षोऽप्यते पितृतया भामिरिति अनड्वि प्रत्ययापि ङपो "पूर्वपदस्य" ॥२।३।१४॥ इति णत्वे च दाक्षायण्य । दक्षस्यापत्यानि इति इमन्तादायनापि दाक्षायण्य इत्यमरटीका, तत्र च स्त्रीणां युवसंज्ञाया अभावादायनण् चिन्त्य ॥१॥ सर्वा अश्विन्या द्याः सप्तविंशतिरपि धिशिमियाभन्नवाय । सर्वा अपि दाक्षायण्यः, धिशिमियाश्चोच्यन्ते इत्यर्थः ॥ २ ॥ २९ ॥

राशीनामुदयो लग्नम्

अश्नुवते अहोरात्रमिति राशयः, "अशो रश्चादि" ॥ (उणा-१२२) ॥ इति इर्मिदं तेषामुदयः प्रासक्तता लगति क्षितिजे लग्नम्, पुल्लीबलिङ्ग "क्षुब्धस्विरिष्ट" ॥४।४।७०॥ इत्यादिना क्तीप्रत्ययान्तो निपात्यते ॥ १ ॥

मेषप्रभृतयस्तु ते ।

ते राशयो मेषादयः । यथा—मेषो वृषो मिथुनः कर्कटः सिंहः कन्या तुला वृश्चिको धनुर्मकरः कुम्भो मीन इति ॥

आरो वक्रो लोहिताङ्गो मङ्गलोऽङ्गारकः कुजः ॥३०॥
आषाढाभूर्नवार्चिश्च

आ समन्तादियर्ति मङ्गमेभिरिति आरः ॥१॥ वक्रति कुटिलं गच्छति वक्रः । "ऋज्र च" ॥ (उणा-१८८) ॥ इत्यादिना रक् ॥२॥ लोहितमङ्गमस्य लोहिताङ्गः ॥३॥ मङ्गति मङ्गलः । 'मृदिकन्दि' ॥ (उणा-४६५) ॥ इत्यादिना अलः ॥ ४ ॥ अङ्गति कुटिलं गच्छति अङ्गारः । 'अञ्गरि' ॥ (उणा-४०५) ॥ इत्यादिना आरः । अङ्गारमिवार्चि पीनत्वादिति वा स्वार्थे कः अङ्गारकः ॥ ५ ॥ कौ पृथिव्यां जातः कुजः, यौगि-

त्वाद्भौमो माहेयो धरणीसुत इत्यादयः ॥६॥३०॥ आषाढा उत्तराषाढास्तासु भवति आषाढाभूः ॥७॥ नवार्चिषोऽस्य नवार्चिः ॥८॥ शेषश्चात्र–भौमे व्योमोल्मुकैकाङ्गौ ॥३०॥

बुधः सौम्य प्रहर्षुल ।
ज्ञ पञ्चार्चि श्रविष्ठाभूः श्यामाङ्गो रौहिणीसुत ॥ ३१ ॥

बुध्यते बुध ॥१॥ सोम पिताऽपि देवताऽस्य सौम्य । "कसोमाद् ट्यण्"॥६।२।१०७॥ इति ट्यण्, यौगिकत्वाच्चन्द्रात्मज', चान्द्रमसायनिरित्यादय. ॥२॥ प्रहृष्यतीति प्रहर्षुलः "हृषिवृति "॥ (उणा—४८५) ॥ इत्यादिना उल ॥३॥ जानातीति ज्ञ ॥४॥ पञ्चार्चिषोऽस्य पञ्चार्चि ॥५॥ श्रविष्ठासु भवति श्रविष्ठाभूः ॥६॥ श्याममङ्गमस्य श्यामाङ्ग ॥ ७ ॥ रोहिण्या. सुतो रौहिणीसुत', यौगिकत्वाद्रौहिणेय इत्यादय. ॥ ८ ॥ ३१ ॥

बृहस्पति सुराचार्यो जीवश्चित्रशिखण्डिज ।
वाचस्पतिर्द्वादशार्चिर्धिषण फल्गुनीभव ॥३२॥
गीर्बृहत्योः पतिरुतथ्यानुजाङ्गिरसौ गुरुः ।

बृहतां पतिर्बृहस्पति' इति वा बृहस्पति "वर्चस्कादिष्ववस्करादय "॥३।२।४८॥ इति निपात्यते ॥ १ ॥ सुराणामाचार्य सुराचार्यः, यौगिकत्वाद्देवगुरुरित्यादय' ॥ २ ॥ जीव्यतेऽनेन मृतसञ्जीवनीज्ञत्वाज्जीव ॥ ३ ॥ अङ्गिरसोऽपत्यत्वाच्चित्रशिखण्डिजः, सप्तर्षिजोऽपि समुदाये प्रवृत्ताश्च शब्दा एकदेशेऽपि प्रवर्तन्त इति न्यायात ॥ ४ ॥ वाच' पतिर्वाचस्पति' "वाचस्पति "॥३।२।३६॥ इत्यादिना षष्ठ्यलुबभावे निपात्यते ॥ ५ ॥ द्वादशार्चिषोऽस्य द्वादशार्चि ॥ ६ ॥ धृष्णोति प्रगल्भते धिषण' । "धृषिवहेरिश्चोपान्त्यस्य ' ॥ (उणा–१८९) ॥ इत्यण. । धिषणास्यास्तीति वा ॥ ७ ॥ फल्गुन्यामुत्तरफल्गुन्यां भवति फल्गुनीभवः ॥८॥३२॥ गीश्च बृहती च गीर्बृहत्यौ तयोः पति' गीष्पतिर्बृहतीपति' ॥ ९ ॥ १० ॥ उतथ्यस्यानुज उतथ्यानुज' ॥ ११ ॥ अङ्गिरसोऽपत्यमृष्यणि आङ्गिरस' ॥ १२ ॥ गृणात्युपदिशति गुरुः "कृग्र भृत उर्च" ॥ (उणा ७३४) ॥ इति उ' ॥ १३ शेषश्चात्र—

गीष्पतिस्तु महामति' ।
प्रभ्याः प्रचक्षा वाग्वाग्मी धीरो वीविषिगीरथौ ॥

शुक्रो मघाभवः काव्य उशना भार्गवः कवि ॥ ३३ ॥
षोडशार्चिर्दैत्यगुरुर्धिष्ण्य

शोचति दामत्रामिति शुक्र' । स्वशुक्रद्वारेण निर्यातत्वाद्वा यद्वामनपुराणे–

इत्येवमुक्त्वा भगवान्मुमोच शिश्नेन शुक्रं स च निर्जगाम ॥१॥ मघासु भवति मघाभवः ॥२॥ कवेरपत्यं काव्यः । "कुर्वादिभ्यो ण्यः" ॥६।१।१००॥ इति ण्यः, कविरेव वा काव्यः, भेषजादित्वात् ट्यण् ॥३॥ वष्टीत्युशना "वष्टेः कनस्" ॥ (उणा-९८५) ॥४॥ भृगोरपत्यं भार्गवः ॥५॥ कवते कविः । कविमातृत्वाद्वा ॥६॥२३॥ षोडशार्चिषोऽस्य षोडशार्चिः ॥ ७ ॥ दैत्यानां गुरुर्दैत्यगुरुः, यौगिकत्वादसुराचार्य इत्यादयः ॥८॥ धिष्ण्यः प्राग्वत् ॥ ९ ॥ शेषश्चात्र–

शुक्रे सप्तः ॥

शनैश्चरः शनिः ।

छायासुतोऽसितः सौरिः सप्तार्ची रेवतीभवः ॥ ३४ ॥

मन्दः क्रोडो नीलवासा

शनैश्चरति शनैश्चरः ॥१॥ श्यति इच्छया जनमिति शनिः "घृणाद्योत्नो ह्रस्वश्च" ॥ (उणा-६७८)॥ इति निः ॥२॥ छाया आदित्यपत्नी तस्याः सुतश्छायासुतः ॥ ३ ॥ असितः कृष्णत्वात् ॥ ४ ॥ सूरस्यापत्यं सौरिः "तस्येदम्" ॥६।३।१६०॥ इत्यणि सौरोऽपि ॥५॥ सप्तार्चिषोऽस्य सप्तार्चिः ॥६॥ रेवत्यां भवति रेवतीभवः ॥७॥२४॥ मन्दगतित्वान्मन्दः ॥८॥ करोति पीडां, क्रामति क्षेत्रं राशिं च चिरेणेति वा क्रोडः । "विहडकडे" ॥ (उणा १७२) ॥ इत्यादिना डान्तो निपात्यते ॥ ९ ॥ नीलं वासोऽस्य नीलवासाः ॥ १० ॥ शेषश्चात्र—

शनौ पङ्गुः श्रुतकर्मा महाग्रहः ॥

श्रुतश्रवोऽनुजः कालो ब्रह्मण्यश्च यमः स्थिरः ।

क्रूरात्मा च ॥

स्वर्भाणुस्तु विधुन्तुदः ।

तमो राहुः सैंहिकेयो भरणीभूः

स्वर्भाति स्वर्भाणुः "पूर्वपदस्थान्नाम्न्यगः" ॥२।३।६४॥ इति णत्वम् ॥१॥ विधुं तुदति विधुन्तुदः । "बहुविध्वरुस्तिलात्तुदः" ॥५।१।१२४॥ इति खश् ॥२॥ तमस्त्वात्तमः पुंक्लीबलिङ्गः ॥३॥ रहति गृहीत्वा चन्द्रार्कौ अशरीरं वा राहुः "कृवापाजि" ॥ (उणा–१)॥ इत्यादिना उण् ॥४॥ अभ्रपिशाचमहद्ग्रहोऽपि । सिंहिकाया अपत्यं सैंहिकेयः "ङ्याप्त्यूङः" ॥६।१।७०॥ इत्येयण् ॥५॥ भरण्यां भवति भरणीभूः ॥ ६ ॥ शेषश्चात्र–

अथ राहौ स्यादुपराग उपप्लवः ॥

ग्रहादिक ॥ २१ ॥

अश्लेषाभूः शिखी केतु

अहिना सखद आहिकः ॥१॥२५॥ अश्लेषायां भवतीति अश्लेषाभूः ॥२॥ शिखा रूपा तेजोलेखाऽस्यास्ति शिखी "शिखादिभ्य इन्" ॥७।२।४॥ ३॥ चाय्यते निशाम्यते शुभाशुभमनेन केतुः ॥४॥ शेषश्चात्र—

केतावूर्ध्वकच ॥

ध्रुवस्तूत्तानपादजः ।

ध्रुवति ध्रुव "तुदादिविषिगुहिभ्य कित्" ॥ (उणा ५) ॥ इति अ ॥ १ ॥ उत्तानपादान्नृपतेजात उत्तानपादज, यौगिकत्वादौत्तानपादि, औत्तानपाद इत्या दय ॥ २ ॥ शेषश्चात्र—

ज्योतीरथमहाभयौ ध्रुवे ॥

अगस्त्योऽगस्ति पीताब्धिर्वातापिद्विट् घटोद्भव ॥२६॥
मैत्रावरुणिराग्नेय और्वशेयाग्निमारुतौ ।

स्तम्भि सौत्र । अगं स्तभ्नाति अगस्त्य । "अगपुराभ्यां स्तम्भेर्डित्" ॥ (उणा-३६३) ॥ इति य ॥१॥ अगति कुटिलं गच्छति अगस्तिः "अगिगिलि-" ॥ (उणा-६६०)॥ इत्यादिना अस्तिक् ॥२॥ पीतोऽब्धिरनेन पीताब्धिः ॥३॥ वातापिं द्वेष्टि वातापिद्विट् ॥४॥ घटादुद्भवति घटोद्भव ॥५॥२६॥ मैत्रावरुणयोरुर्वशीदर्शनाद्रेत कुम्भे पतितमिति हि प्रसिद्धि । मैत्रश्च वरुणश्च मैत्रावरुणौ "वेदसहश्रुतावायुदेवतानाम्" ॥३। २।४१॥ इति पूर्वपदस्यात्व तयोरपत्य मैत्रावरुणि, ऋषित्त्वाद्वाऽस्य ऋषित्वादिञ् ॥६॥ अग्नेरपत्यमाग्नेय तदंशत्वात् "कल्यग्नेरेयण्" ॥६।१।१७॥ इत्येयण् ॥७॥ उर्वश्या अप त्यमौर्वशेय ॥८॥ अग्निश्च मरुच्च तयोरपत्यमाग्निमारुत तदंशत्वात् अणि "देवतानामा त्वादौ" ॥७।४।२८॥ इत्युभयपदवृद्धौ "इवृद्धिमत्यविष्णौ" ॥३।२।४२॥ इति आत्वा पवाद इ ॥९॥ पीताब्ध्यादयो यौगिका । शेषश्चात्र—

*अगस्त्ये विन्ध्यकूट स्याद्दक्षिणाशारतिर्मुनिः ।*
*सत्याग्निर्वारुणि काथिस्तपन कलशीसुतः ॥ १ ॥*

लोपामुद्रा तु तद्भार्या कौषीतकी वरप्रदा ॥ २७ ॥

पतिशुभ्रूपाश्लेषेषु न मुदं राति लोपामुद्रा ॥ १ ॥ तस्यागस्तेर्भार्या तद्भार्या । कुष्णात्यात्मान तपसा कुषीतक "कुषेः कित्" ॥ (उणा-८०) ॥ इतीतक तस्या पत्यमृष्याणि इयां च कौषीतकी ॥२॥ वरं प्रददाति वरप्रदा ॥३॥२७॥

मरीचिप्रमुखा सप्तर्षयश्चित्रशिखण्डिन ।

मरीचिः प्रमुखः एषां मरीचिप्रमुखाः । यदाह—

मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महातेजाः सप्तमः परिकीर्तितः ॥ १ ॥

सप्त च ते ऋषयश्च सप्तर्षयः । "संख्या समाहारे च" ॥२।१।५१॥ इति संज्ञायां समासः ॥ १ ॥ शिखण्डश्चूडाऽस्त्येषां शिखण्डिनः चित्राश्च ते शिखण्डिनश्च चित्रशिखण्डिनः ॥ २ ॥

पुष्पदन्तौ पुष्पवन्तावेकोक्त्या शशिभास्करौ ॥ ३८ ॥

पुष्पे इव पुष्पे दन्ताविव दन्तौ, पुष्पे च ते दन्तौ च पुष्पदन्तौ, यद्विश्वप्रत— रविशशिनौ पुष्पदन्तावाख्याताविति ॥ १ ॥ पुष्पं विकासोऽस्त्यनयोः पुष्पवन्तौ एकयोक्त्या अपृथग्वचनेन रोदसीवच्छशिभास्करावुच्येते । न तु पुष्पदन्तः पुष्पवान् वा इन्दुः सूर्यो वोच्यते ॥ २ ॥ ३८ ॥

राहुग्रासोऽर्केन्द्वोर्ग्रह उपराग उपप्लवः ।

राहुणा ग्रसनं राहुग्रासः । अर्केन्द्वोः कर्मभूतयोर्ग्रहणं ग्रहः ॥ १ ॥ उपरज्येते ग्रस्येते चन्द्रार्कावनेनोपरागः ॥ २ ॥ उपप्लूयेते अनेन उपप्लवः ॥ ३ ॥

उपलिङ्गं त्वरिष्टं स्यादुपसर्ग उपद्रवः ॥ ३९ ॥

अजन्यमीतिरुत्पातः

उपलिङ्ग्यते दोषैर्गम्यते जनोऽत्र उपलिङ्गम् ॥ १ ॥ नास्ति रिष्टं क्षेममत्र अरिष्टम् ॥ २ ॥ उपसृज्यते उपद्रूयते प्रजाऽत्र उपसर्गः ॥ ३ ॥ उपद्रूयते प्रजाऽत्र उपद्रवः ॥ ४ ॥ ३९ ॥ न जने साधु अजन्यम्, पुंक्लीबलिङ्गः ॥ ५ ॥ ईयते प्राप्यते दुःखमस्मादिति, स्त्रीलिङ्गः । "इगुपि" ॥ (उणा–४५१) ॥ इति बहुवचनान्तोऽपि ॥ ६ ॥ उत्पतत्यकस्मादायाति अशुभमस्मादुत्पातः, पुम् ॥ ७ ॥

वह्न्युत्पात उपाहितः ।

वह्निकृत उत्पातो वह्न्युत्पातः ॥ १ ॥ उपासममाहितमस्मोपाहितः, धूमकेत्वादिर्वा उत्पात इत्येके ॥ २ ॥

स्यात्कालः समयो दिष्टानेहसौ सर्वमूषकः ॥ ४० ॥

कालयति क्षिपति सर्वभावान्, कल्यतेऽसाविति वा कालः ॥ १ ॥ समेति गच्छति समयः, पुंक्लीबलिङ्गः ॥ २ ॥ दिश्यते स्म दिष्टः ॥ ३ ॥ न ईहते अत्र अनेहा, पुंलिङ्गः । "नञि हन एह च" ॥ (उणा–५७५) ॥ हन्यते न ईहते वा ॥ ४ ॥

सर्वं भूपति सर्वंभूपक । यदाह–काल पचति भूतानि काल संहरते प्रजाः इति ॥ ५ ॥ ४० ॥

कालो द्विविधोऽवसर्पिण्युत्सर्पिणीविभेदतः ।
सागरकोटिकोटीना विंशत्या स समाप्यते ॥ ४१ ॥

अवसर्पो भावानां यतस्प्रकर्षता, सोऽस्यामस्ति अवसर्पिणी ॥ १ ॥ उत्सर्पो भावानामेव रोहत्प्रकर्षता, सोऽस्यामस्ति उत्सर्पिणी ॥ २ ॥ तयोर्विभेदात्कालस्य द्वैविध्यम् । सागर सागरोपमं दशकोटिकोटिपल्योपमप्रमाणम्, सागराणां कोटिकोट्य सागरकोटिकोट्यस्तासां विंशत्या स कालो द्विविधोऽपि परिपूर्यते ॥ ४१ ॥

अवसर्पिण्यां षडरा उत्सर्पिण्यां त एव विपरीताः ।
एवं द्वादशभिररैर्विवर्तते कालचक्रमिदम् ॥ ४२ ॥

षट् षट्सङ्ख्याः । इयूति गच्छन्ति अरा वक्ष्यमाणा एकान्तसुषमादय एकान्तदुःषमान्ता, अवसर्पिण्यां भवन्ति । त एवेति । एकान्तसुषमादय विपरीता एकान्तदुःषमाद्या एकान्तसुषमान्ता, उत्सर्पिण्यां भवन्ति । एवमुक्तप्रकारेण द्वादशभिररैश्चक्रमिव चक्र कालस्य चक्र कालचक्र विवर्तते परिभ्रमति ॥ ४२ ॥

तत्रैकान्तसुषमाऽरश्चतसः कोटिकोटयः ।
सागराणां

तत्रेति । द्वादशारे कालचक्रे शोभना समा वर्षाण्यस्यां सुषमा "निर्दुःसुवे सम सूतेः" ॥२।३।५६॥ इति षत्वम् । एकान्तेन सुषमा दुःषमानुभावरहिता एकान्तसुषमा सुषमसुषमेत्यर्थः प्रथमोऽरः । सागराणां सागरोपमानां चतस्रश्चतुःसंख्या कोटीनां कोटयो भवन्ति । चतुःसागरोपमकोटाकोटिप्रमाण इत्यर्थ ॥

सुषमा तु तिस्रस्तत्कोटिकोटय ॥ ४३ ॥

सुषमाख्यो द्वितीयोऽरः, तिस्रः सागरोपमकोटिकोटयो भवन्ति ॥ ४३ ॥

सुषमदुःषमा ते द्वे

सुष्ठु समा अस्यां सुषमा सुषमा चासौ दुःषमा च सुषमदुःषमा सुषमाऽनुभावयुक्ता अल्पदुःषमानुभावेत्यर्थ । तदाख्यस्तृतीयोऽरः । ते द्वे इति । सागरोपमकोटिकोट्यौ ॥

दुःषमसुषमा पुन ।

सैका सहस्रैर्वर्षाणां द्विचत्वारिंशतोनिता ॥४४॥

दुःषमा बाधो सुषमा च दुःषमसुषमा, दुःषमानुभावबहुला, अल्पसुषमानुभावेत्यर्थः । तथाख्यश्चतुर्थोऽरः, सा सागरोपमकोटिकोटी एका एकसंख्या द्विचत्वारिंशद्वर्षसहस्रैरूना ॥४४॥

अथ दुःषमैकविंशतिरब्दसहस्राणि

दुःषमाख्यः पञ्चमोऽरः, एकविंशतिर्वर्षसहस्राणि ॥

तावती तु स्यात् ।

एकान्तदुःषमाऽपि हि

एकान्तेन दुःषमा सुषमानुभावरहिता एकान्तदुःषमा दुःषमदुःषमेत्यर्थः । तथाख्यः षष्ठोऽरः, तावती दुःषमावदेकविंशतिवर्षसहस्रप्रमाणा ॥

एतत्सङ्ख्या परेऽपि विपरीताः ॥४५॥

एवैव अवसर्पिण्यरकोक्ता सङ्ख्या येषां त एतत्सङ्ख्याः, परेऽपि उत्सर्पिण्यरका अपि विपरीताः प्रतिलोमवृत्तयः एकान्तदुःषमाद्याः एकान्तसुषमापर्यन्ता भवन्ति ॥४५॥

प्रथमेऽरत्रये मर्त्यास्त्रिद्व्येकपल्यजीविता ।

त्रिद्व्येकगव्यूतोच्छ्रायास्त्रिद्व्येकदिनभोजनाः ॥४६॥

कल्पद्रुफलसन्तुष्टा

त्रीणि द्वे एकं च पल्यं पल्योपमं जीवितं येषां ते तथा । पल्यमिति धान्याधार विशेषः । इह तु उत्सेधाङ्गुलनिष्पन्नयोजनायामविष्कम्भावगाहो योजनप्रमाणः प्रदेश उच्यते । स चैकाहिकादिभिः साप्ताहिकपर्यन्तैः केशाग्रैः पुनरसंख्यातखण्डीकृतैर्भृतः उपरि च लोहकटाहेनाच्छादितः वर्षशते च गते एकैकवालाग्रापनयने यावता कालेन निर्लेपो भवति, तावान् कालः पल्योपमम्, अद्धापल्योपममित्युच्यते । त्रीणि द्वे एकं च गव्यूतं येषां उच्छ्रायो येषां ते तथा । त्रिषु द्वयोरेकस्मिंश्च दिने गते भोजनं येषां ते तथा । तत्र प्रथमे अरके मर्त्यास्त्रिपल्योपमजीविताः त्रिगव्यूतोच्छ्रायाः, चतुर्थदिनभोजिनो भवन्ति द्वितीयेऽरके द्विपल्योपमजीविताः, द्विगव्यूतोच्छ्रायाः तृतीयदिनभोजिनो भवन्ति तृतीयेऽरके एकपल्योपमजीविताः एकगव्यूतोच्छ्रायाः, द्वितीयदिनभोजिनो भवन्तीति यथासंख्यम् ॥४६॥ ते च कल्पद्रुमफलैः सन्तुष्टा भवन्ति कल्पद्रुमफलाभ्याहारिणीत्यर्थः ।

चतुर्थे त्वरके नराः ।

सर्वे भूपति सर्वभूपक । यदाह–कालः पचति भूतानि कालः संहरते प्रजाः इति ॥ ५ ॥ ४० ॥

कालो द्विविधोऽवसर्पिण्युत्सर्पिणीविभेदतः ।
सागरकोटिकोटीनां विंशत्या स समाप्यते ॥ ४१ ॥

अवसर्पो भावानां पततप्रकर्षता, सोऽस्यामस्ति अवसर्पिणी ॥१॥ उत्सर्पो भावानामेव रोहत्प्रकर्षता, सोऽस्यामस्ति उत्सर्पिणी ॥ २ ॥ तयोर्विभेदात्कालस्य द्वैविध्यम् । सागर सागरोपम दशकोटीकोटिपल्योपमप्रमाणम्, सागराणां कोटिकोट्यः सागरकोटिकोट्यस्तासां विंशत्या स कालो द्विविधोऽपि परिपूर्यते ॥ ४१ ॥

अवसर्पिण्यां षडरा उत्सर्पिण्यां त एव विपरीताः ।
एवं द्वादशभिररैर्विवर्तते कालचक्रमिदम् ॥ ४२ ॥

षट् षट्संख्याः । इयूति गच्छन्ति अरा वक्ष्यमाणा एकान्तसुषमादय एकान्तदुःषमान्ताः, अवसर्पिण्यां भवन्ति । त एवेति । एकान्तसुषमादयः विपरीता एकान्तदुःषमाद्या एकान्तसुषमान्ताः, उत्सर्पिण्यां भवन्ति । एवमुक्तप्रकारेण द्वादशभिररैश्चक्रमिव चक्रं कालस्य चक्रं कालचक्र विवर्तते परिभ्रमति ॥ ४२ ॥

तत्रैकान्तसुषमाऽरश्चतस्रः कोटिकोटयः ।
सागराणां

तत्रेति । द्वादशारे कालचक्रे शोभनाः समा वर्षाण्यस्यां सुषमा "निर्दुःसुवेः समसूतेः" ॥२।३।५६॥ इति षत्वम् । एकान्तेन सुषमा दुःषमानुभावरहिता एकान्तसुषमा सुषमसुषमेत्यर्थः प्रथमोऽरः । सागराणां सागरोपमानां चतस्रश्चतुःसंख्या कोटीनां कोटयो भवन्ति । चतुःसागरोपमकोटाकोटिप्रमाण इत्यर्थः ॥

सुषमा तु तिस्रस्तत्कोटिकोटयः ॥ ४३ ॥

सुषमाख्यो द्वितीयोऽरः, तिस्रः सागरोपमकोटिकोटयो भवन्ति ॥ ४३ ॥

सुषमदुःषमा ते द्वे

सुष्ठु समा अस्यां सुषमा सुषमा चासौ दुःषमा च सुषमदुःषमा, सुखानुभावबहुला अल्पदुःषमानुभावेत्यर्थः । तदाख्यस्तृतीयोऽरः । ते द्वे इति । सागरोपमकोटिकोट्यौ ॥

दुःषमसुषमा पुनः ।

दिनावसान दिनान्त ॥ १ ॥ उत्क्रान्त सूरोऽस्मिन्नुत्सूर ॥ २ ॥ विरुद्ध कालो विकाल ॥३॥ सह बलिभिरुपहारैर्वर्तते सबलि, पुंल्लिङ्ग ॥ ४ ॥ स्यति दिनं साय, क्लीबलिङ्ग ॥ गौडस्तु–उत्सूरश्च विकालश्च सायश्च सबलिश्च स इति पुस्याह । "स्याच्छामासा-" (उणा ३५७) ॥ इत्यादिना य ॥ ५ ॥ तथा सायमव्ययम् ॥

सन्ध्या तु पितृसूः

सन्ध्यायन्त्यस्यां सन्ध्या, सन्धीयेते सन्धीयेते अहोरात्रावस्यामिति वा "सन्धे धे च ॥ (उणा–३५९) ॥ इति य ॥ १ ॥ पितृन् सूते पितृसूः । ब्रह्मणो यस्या पितृमैर्सिविन्री तनुरिति प्रसिद्धि ॥ २ ॥

त्रिसन्ध्यं तूपवैणवम् ॥५४॥

तिस्रः सन्ध्याः प्राह्णमध्याह्नापराह्णलक्षणा समाहृतास्त्रिसन्ध्यम् ॥ १ ॥ उप समीपे वैणवो व्रतदण्डो यत्र तदुपवैणवम् ॥ २ ॥ ५४ ॥

श्राद्धकालस्तु कुतपोऽष्टमो भागो दिनस्य यः ।

श्राद्ध पितृकर्म तस्य कालः श्राद्धकाल ॥१॥ कुतिः सौत्र कौतन्ति गच्छन्ति प्रीतिं पितरोऽस्मिन् कुतप, पुंक्लीबलिङ्ग । ' भुजकुति– ॥ (उणा–२०५) ॥ इत्यादिना अप कित्, कुं तपति सूर्योऽत्रेति वा । यो दिनस्याष्टमो भाग स कुतप इत्यप । यत्स्मृतिः–

दिवसस्याष्टमे भागे मन्दीभवति भास्करे ।
स कालः कुतपो यत्र पितॄणां दत्तमक्षयम् ॥१॥२॥

निशा निशीथिनी रात्रिः शर्वरी क्षणदा क्षपा ॥५५॥
त्रियामा यामिनी भौती तमी तमा विभावरी ।
रजनी वसतिः श्यामा वासतेयी तमस्विनी ॥५६॥
उषा दोषेन्दुकान्ता

निश्यति तनूकरोति चेष्टा निशा । उपसर्गादातो डोऽश्य" ॥ ५।१।५६ ॥ इति ड । निशान्ति समाहितमनस्का भवन्ति अस्यामिति वा स्यादित्वात्क ॥ १ ॥ निशीथोऽस्त्यस्यां निशीथिनी ॥२॥ राति सुखं रात्रिः "राशदि"– ॥ (उणा–६९१) इत्यादिना त्रि, ड्यां रात्री च ॥ ३ ॥ शृणाति चेष्टाः शर्वरी, वनि "णस्वरायोपान्त्यो रश्च" ॥ २।४।४ ॥ इति ङी ॥ ४ ॥ क्षणमवसरं ददाति क्षणदा विश्रान्तिप्रदे-त्यर्थ ॥५॥ क्षिप्यते क्षपा, भिदाद्यङ् ॥६॥५५॥ त्रयो यामा यस्यां त्रियामा आद्य न्त्ययोरर्द्धयामयोर्दिनव्यवहारात् ॥ ७ ॥ यामाः सन्त्यस्यां यामिनी । यौगिकत्वाद्याम वतीत्यपि ॥ ८ ॥ भूतानामियं भौती, रात्रिंचरत्वात्तेषाम् ॥ ९ ॥ ताम्यन्ति चक्र-

प्रदोषो यामिनीमुखम् ॥५८॥

प्रारब्धा दोषा अस्मिन् इति प्रदोषः । यामिन्या मुखं प्रारम्भो यामिनीमुखम् ॥ ५८ ॥ शेषश्चात्र–

दिनात्ययः प्रदोषे स्यात् ॥

याम प्रहर

याति यामः । "अर्त्तीरि" ॥ (उणा ३३८) ॥ इत्यादिना मः ॥ १ ॥ प्रह्रियतेऽस्मिन् कालसूचकं वाद्यं प्रहरः "पुन्नाम्नि घः" ॥५।३।१३०॥ २ ॥

निशीथस्त्वर्धरात्रो महानिशा ।

नियतं शेरतेऽस्मिन्निशीथः । "न्युद्भ्यां शीङः" ॥ (उणा २२८) ॥ इति थः कित् । अत एव कश्चिो निशीथ मुसजनमाह ॥ १ ॥ अर्द्धं रात्रेरर्द्धरात्रः ॥२॥ महती प्राप्तप्रकर्षत्वात्, सा चासौ निशा च महानिशा ॥ ३ ॥ निःसम्पातोऽपि ॥

उच्चन्द्रस्त्वपररात्र

उत्क्रान्तश्चन्द्रो ऽस्मिन् उच्चन्द्रः ॥ १ ॥ रात्रेरपरो भागः अपररात्रः ॥ २ ॥

तमिस्रं तिमिरं तमः ॥ ५९ ॥

ध्वान्तं भूच्छायान्धकारं तमसं समवान्धतः ।

तमोऽस्यास्ति तामिस्रम्, क्लीबलिङ्गः । "तमिस्रार्णवज्योत्स्नाः" ॥ ७।२।४७ ॥ इति साधुः ॥ १ ॥ तिम्यतीव तिमिरं, पुंक्लीबलिङ्गः । "इषी" ॥ (उणा ४१६) ॥ इत्यादिना इरः कित् ॥ २ ॥ ताम्यन्त्यनेन तमः । "असुः" ॥ (उणा ९५२) ॥ इत्यस् ॥३॥५९॥ ध्वन्यते सर्वरोगहरतया तदिति ध्वान्तम्, पुंक्लीबलिङ्गः । "क्षुब्धविरिब्ध" ॥ ४।२।७० ॥ इत्यादिना ध्वान्तो निपात्यते ॥ ४ ॥ भुवश्छाया भूच्छाया, पुराणे भगुणश्रुतेः । "सेनाशाला" ॥ (लिङ्ग ६२) इत्यादिना क्लीबत्वे भूच्छायं च ॥५॥ अन्धं करोत्यन्धकारम्, पुंक्लीबलिङ्गः ॥ ६ ॥ समवान्धतः समवाऽन्धेभ्यः परं तमसम्, सततं तमः सन्तमसम् ॥७॥ अवगतं अवहीनं वा तमः अवतमसम्॥८॥ अन्धयस्यन्धं तमः तत्तमश्च अन्धतमसम् । "समवान्धात्तमसः" ॥ ७ । ३ । ८० ॥ इत्यत् ॥९॥ बाहुलकाद्विपर्यये अन्धातमसमित्यपि । अमरस्तु-ध्वान्ते गाढेऽन्धतमसं, क्षीणेऽवतमसं तमः । विष्वक् सन्तमसमिति विशेषमाह । शेषश्चात्र—

ध्वान्ते पुष्पो रजोबलम् ॥
रात्रिरागो नीलपङ्को दिगान्ध्यं दिनकेसरः ।
अपरागो निशावर्म वियद्भूतिर्दिगम्बरः ॥ १ ॥

प्रदोषो यामिनीमुखम् ॥५८॥

प्रारब्धा दोषा अस्मिन् इति प्रदोष । यामिन्या मुखं प्रारम्भो यामिनीमुखम् ॥ ५८ ॥ शेषश्चात्र–

दिनात्ययः प्रदोषे स्यात् ॥

याम प्रहर

याति यामः । "अर्त्तीरि" ॥ (उणा ३३८) ॥ इत्यादिना मः ॥ १ ॥ प्रहियतेऽस्मिन् कालसूचक वाद्यं प्रहरः "पुन्नाम्नि घ" ॥५।३।१३०॥ २ ॥

निशीथस्त्वर्धरात्रो महानिशा ।

नियतं शेरतेऽस्मिन्निशीथ । "न्युद्भ्यां शीङः" ॥ (उणा २२८) ॥ इति थ कित् । अत एव कालो निशीर्थं सुप्तजनमाह ॥ १ ॥ अर्द्धं रात्रेरर्द्धरात्रः ॥२॥ महती त्रासप्रकर्षत्वात्, मा चासौ निशा च महानिशा ॥ ३ ॥ निःसम्पातोऽपि ॥

उच्चन्द्रस्त्वपररात्र

उत्क्रान्तश्चन्द्रो ऽस्मिन् उच्चन्द्रः ॥ १ ॥ रात्रेरपरो भागः अपररात्रः ॥ २ ॥

तमिस्रं तिमिरं तम ॥ ५९ ॥

ध्वान्तं भूच्छायान्धकारं तमसं समवान्धतः ।

तमोऽस्याऽस्ति तामिस्रम्, क्लीबलिङ्गः । "तमिस्रार्णवज्योत्स्ना" ॥ ७।२।५७ ॥ इति साधु ॥ १ ॥ तिम्यतीव तिमिरं, पुंक्लीबलिङ्गः । "इषी" ॥ (उणा ४१६) ॥ इत्यादिना इरः कित् ॥ २ ॥ ताम्यत्यनेन तमः । "अस्" ॥ (उणा ९५२) ॥ इत्यस् ॥३॥५९॥ ध्वन्यते सर्वरोगहरतया तदिति ध्वान्तम्, पुंक्लीबलिङ्गः । "क्षुब्धविरिब्ध" ॥ ४।४।७० ॥ इत्यादिना क्तान्तो निपात्यते ॥ ४ ॥ भुवश्छाया भूच्छाया, पुराणे भूगुणभुवे । "सेनाशाला" ॥ (लिङ्ग ६२) इत्यादिना क्लीबत्वे भूच्छायं च ॥५॥ अन्धं करोत्यन्धकारम्, पुंक्लीबलिङ्गः ॥ ६ ॥ समवान्धत समवाऽन्धेभ्यः परं तमसम्, सततं तमः सन्तमसम् ॥७॥ अवगतं अवहीनं वा तमः अवतमसम् ॥८॥ अन्धयत्यन्धं तमः ततमश्च अन्धतमसम् । "समवान्धात्तमसः" ॥ ७ । ३ । ८० ॥ इत्यत् ॥९॥ बाहुलकादीर्घत्वे अन्धातमसमित्यपि । अमरस्तु ध्वान्ते गाढेऽन्धतमसं, क्षीणेऽवतमसं तम । विष्वक् संतमसमिति विशेषमाह । शेषश्चात्र—

ध्वान्ते वृत्रो रजोबलम् ॥

रात्रिरागो नीलपङ्को दिनाण्डं दिनकेसरं ।

उपरागो निशावर्म विषद्भूतिर्दिगम्बरः ॥ १ ॥

तुल्यनक्तन्दिने काले विषुवद् विषुवं च तत् ॥ ६० ॥

तुल्ये नक्तन्दिने यत्र काले तत्र विषुवम् विषुवं च, विषुनाम मुहूर्त माऽस्यास्ति विषुवत्, दुर्गसिंहस्तु यद्दुर्गचन्द्री-पुर्ग तन्मदिना देम विषुवत् मम लोम दो पूरुम्लिङ्ग । विषु सम्येऽव्ययम तदस्यास्तीति वा ॥ १ ॥ एष मस्यादित्वाद् वे विषुवम् । तप मेषादौ तुलादौ च भवति ॥ २ ॥ ६० ॥

पञ्चदशाऽहोरात्र स्यात् पक्ष

पञ्चदशाऽहोरात्रा अत्र पञ्चदशाहोरात्र, पचानि भूतानि पक्ष "माबावदमि-"॥ ( उणा-५६४ ) ॥ इत्यादिना सः ॥ १ ॥

स बहुलोऽसित ।

स पक्षोऽस्मिन् कृष्ण, बहुले वर्तन्ते तमोऽस्मिन्निति बहुल ॥ १ ॥

शेषश्चात्र-

पक्ष कृष्ण सितो द्वेधा कृष्णो मिश्रश्चोऽपरः ।

शुक्लो दिवाकय पूव ॥

तिथि पुन कर्मवाटी

तन्यत तिथि पुंस्त्रीलिङ्ग "तनेरिद्" ॥ ( उणा-६७४ ) ॥ इति इथि ॥ १ ॥ कर्मणो वाटीव कर्मवाटी तत्प्रतिबद्धत्वात् तेषाम् ॥ २ ॥

प्रतिपत् पक्षति समे ॥ ६१ ॥

प्रतिपद्यत पक्षस्याऽऽद्यतया प्रतिपत् ॥ १ ॥ पक्षस्य मूल प्रारम्भ पक्षति, स्त्रीलिङ्गा, "पक्षात्ति" ॥ ७ । १ । ८९ ॥ इति ति ॥ २ ॥ ६१ ॥

पञ्चदश्यौ यज्ञकालौ पक्षान्तौ पर्वणी अपि ।

पञ्चदशानां पूरण्यौ पञ्चदश्यौ ॥ १ ॥ यज्ञस्य कालौ यज्ञकालौ "दर्शपौर्णमासा भ्यां मिष्टमेन यजेत" इति श्रुते ॥ २ ॥ पक्षस्यान्तौ पक्षान्तौ ॥ ३ ॥ पूर्यन्ते पितरोऽत्र पर्वणी "स्नामदि—" ॥ ( उणा-९०४ ) ॥ इत्यादिना वन् ॥ ४ ॥

सत्पर्वमूल भूतेष्टापञ्चदश्योर्यदन्तरम् ॥ ६२ ॥

पर्वणो मूल पर्वमूल भूतेष्टा चतुर्दशी सा च पञ्चदशी च भूतेष्टापञ्चदश्यौ तयोरन्तरं मध्यम् ॥ १ ॥ ६२ ॥

स पर्व सन्धि प्रतिपत्पञ्चदश्योर्यदन्तरम् ।

स सन्धि पर्वेति सम्बन्ध यद् दुर्गः-प्रतिपत्पञ्चदश्योस्तु सन्धिः पर्व । प्राप्य स्य पर्वसन्ध्याश्चमास्यन् ॥ १ ॥

पूर्णिमा पौर्णमासी

पूरण पूर्णे, पूर्णेन निवृत्ता पूर्णिमा " भावादिम " ॥ ६ । ४ । २१ ॥ इतीम । केचित्तु, पूरण पूर्णि , पूर्णि मिमीते पूर्णिमेत्याहु ॥ १ ॥ पूर्णो माश्चन्द्रो ऽस्त्यस्यां पौर्णमासी " पूर्णमासो ऽण् " ॥ ७ । २ ॥ ५५ ॥ इत्यण् । पूर्णमास इयमिति वा " तस्येदम् " ॥ ६ । ३ । १६० ॥ इत्यण् । पूर्णो मासोऽस्यामिति वा, पूर्णमासा युक्तेति वा " साऽस्य पौर्णमासी " ॥ ६ । २ । ९८ ॥ इति सूत्र निपातनादण् ॥ २ ॥

सा राका पूर्णे निशाकरे ॥ ६३ ॥

सा पौर्णमासी, पूर्णे चन्द्रे, रात्यानन्द इति राका " भीण्शलिबलि " ॥ ( उणा–२१ ) ॥ इत्यादिना क ॥ १ ॥ ६३ ॥

कलाहीने त्वनुमति

कलया हीने कलाहीने अनुमन्यते अनुमति ॥ १ ॥

मार्गशीर्ष्याऽऽग्रहायणी ।

मृगशीर्षेण चन्द्रयुक्तेन युक्ता पौर्णमासी मार्गशीर्षी " चन्द्रयुक्तात्काले लुप्त्वप्रयुक्ते " ॥ ६ । २ । ६ ॥ इत्यण् ॥ १ ॥ अग्रहायनस्य " पूर्वपदस्था " ॥ २ । ३ । ६४ ॥ इति णत्वे, अग्रहायणमेव प्रज्ञादित्वादणि ङ्याम्, आग्रहायणी मार्गशीर्षादारभ्य वत्सरप्रवृत्ते ॥ २ ॥

अमाऽमावस्यमावस्या दर्श सूर्येन्दुसङ्गम ॥ ६४ ॥

अमावास्याऽमावासी च

अमेति अमावस्याशब्दैकदेशोऽयं भीमवत् । न विद्यते माश्चन्द्रमा अस्या मिति वा पृषोदरादित्वात् ॥ १ ॥ अमा सह वसतोऽस्यां चन्द्रार्कावित्यऽमावसी औणादिके अप्रत्यये ङी ॥ २ ॥ तथाऽमावस्या " वाऽऽधारेऽमावास्या " ॥ ५ । १ । २१ ॥ इति ण्यणन्तो निपात्यते ॥ ३ ॥ दृश्यते याज्ञिकैर्दर्श , दृश्यते चन्द्रोऽस्मिन्निति वा विपरीतलक्षणया ॥ ४ ॥ सूर्येन्द्वोः सङ्गमोऽत्र सूर्येन्दुसङ्गम ॥ ५ ॥ ६४ ॥ अमावस्यायां विकल्पपक्षे अमावास्या ॥ ६ ॥ अमावस्येव बाहुलकाद्दीर्घत्वे अमावासी॥ ७ ॥

सा नष्टेन्दु कुहु कुहू ।

सा अमावास्या नष्ट इन्दुरस्यां नष्टेन्दु , कुहयते विस्मापयते कुहु , सौत्रिक " पृकाहृपि—" ॥ ( उणा—७२९ ) ॥ इति उ कित् ॥ १ ॥ तथा कुहू " [illegible] कित् " ॥ ( उणा–६४४ ) ॥ इति कः ॥ २ ॥

दृष्टेन्दुस्तु सिनीवाली

सिता बाला चन्द्रकलाऽस्यां सिनीवाली पृषोदरादित्वात् ॥ १ ॥

भूतेष्टा तु चतुर्दशी ॥ ६५ ॥

भूतानामिष्टा भूतेष्टा ॥ १ ॥ चतुर्दशानां तिथीनां पूरणी चतुर्दशी ॥२॥६५॥

पक्षौ मासः

माति मिमीते वा मासः, पुल्लिङ्गः "मावावद्यमि--" ॥ (उणा--६६४) ॥ इति सः । मस्यते परिमीयते सावनचान्द्रसूर्यादिभेदेनेति वा घञ् ॥ १ ॥

शेषश्चात्र--

मासे वर्षांशको भवेत् वर्षांशो दिनमत्रः ॥

वत्सरादिर्मार्गशीर्षः सहः सहाः ।

आग्रहायणिकश्च

वत्सरस्यादिर्वत्सरादिः ॥ १ ॥ मार्गशीर्षी पौर्णमास्यस्य मार्गशीर्षः सास्य पौर्णमासी ॥ ६ । २ । ९८ ॥ इत्यण् । यौगिकत्वात् मार्गी पौर्णमास्यस्य मार्गः ॥ २ ॥ सहते सहः, अच् ॥ ४ ॥ सहते शीतोऽस्मिन् शीतमिति सहाः पुल्लिङ्गः 'असुः' ॥ (उणा--९५२) ॥ इत्यस् ॥ ४ ॥ आग्रहायणी पौर्णमास्यस्य आग्रहायणिकः 'आग्रहायण्यश्वत्थादिकण्' ॥ ६ । २ । ९९ ॥

अथ पौषस्तैषः सहस्यवत् ॥ ६६ ॥

पुष्येण चन्द्रयुक्तेन युक्ता पौर्णमासी पौषी साऽस्यास्ति पौषः ॥ १ ॥ एवं तैषः ॥ २ ॥ सहसि साधुः सहस्यः स इव सहस्यवत् । यथा सहस्यः पौषवाची तथा तैषोऽपीत्यर्थः ॥ ३ ॥ ६६ ॥

माघस्तपाः

माघी पौर्णमास्यस्य माघः ॥ १ ॥ तपति तपाः पुल्लिङ्गः ॥

फाल्गुनस्तु फाल्गुनिकस्तपस्यवत् ।

फाल्गुनी पौर्णमास्यस्य फाल्गुनः ॥ १ ॥ एवं फाल्गुनिकः 'चैत्री कार्त्तिकीफाल्गुनीश्रवणाद् वा' ॥ ६ । २ । १०० ॥ इति इकण् ॥ २ ॥ तपसि साधुस्तपस्यः ॥ ३ ॥

शेषश्चात्र--

फाल्गुनाकस्तु फाल्गुने ॥

चैत्रो मधुश्चैत्रिकश्च

चैत्री पौर्णमास्यस्य चैत्र ॥ १ ॥ एव चैत्रिक ॥ २ ॥ मन्यते मधु पुलिङ्ग "मनिजनिभ्यां धतौ च" ॥ ( उणा–७२१ ) ॥ इत्यु ।

शेषश्चात्र—

चैत्रे मोहनिक कामसखश्च फाल्गुनानुज ॥

वैशाखे राधमाधवौ ॥ ६७ ॥

वैशाखी पौर्णमास्यस्य वैशाखस्तत्र ॥ १ ॥ एव राध ॥ २ ॥ मधुरेव माधव प्रज्ञादित्वादण् ॥ ३ ॥

शेषश्चात्र—

वैशाखे सुसर ॥ ६७ ॥

ज्येष्ठस्तु शुक्र

मासेष्वद्भुतमत्वात् ज्येष्ठ ॥१॥ शोचन्ति पान्था अत्र शुक्र , पुक्लीवलिङ्ग ॥२॥

शेषश्चात्र–

ज्येष्ठमासे तु खरकोमल ज्येष्ठामूलीय इति च ॥

अथाऽऽपाढः शुचिः स्यात्

आषाढी पौर्णमास्यस्य आषाढ ॥ १ ॥ शोचन्ति पान्था अत्र शुचि , पुंसि ॥ २ ॥

श्रावणो नभा ।

श्रावणिक

श्रावणी पौर्णमास्यस्य श्रावण ॥ १ ॥ एव श्रावणिकोऽपि ॥ २ ॥ नभ्यति हिनस्ति पान्थानिति नभा पुंसि ॥ ३ ॥

अथ नभस्य प्रोष्ठभाद्रपर पद ॥ ६८ ॥

भाद्रश्चापि

नभसि साधुर्नभस्य ॥ १ ॥ प्रोष्ठभाद्राभ्यां पर पद इति प्रौष्ठपदी पौर्णमास्यस्य प्रौष्ठपदः ॥ २ ॥ एव भाद्रपद ॥ ३ ॥ ६८ ॥ भामवद्भद्रया युक्ता पौर्णमासी भाद्री साऽस्त्यस्य भाद्र, भाद्रपदैकदेशो वा ॥ ४ ॥

आश्विने स्वाश्वयुजेषौ

आश्विनी पौर्णमास्यस्य आश्विनस्तत्र ॥ १ ॥ एवमाश्वयुज ॥ २ ॥ इष्यते इर्तीष "मुदादिभिपिदिगुहिभ्य कित्" ॥ ( उणा–५ ) ॥ इति अ कित् ॥ ३ ॥

अथ कार्तिक ।

निदाघः व्यञ्जनाद् घमि "न्यङ्क्वादयः" ॥४।१।११२॥ इति घत्वम् ॥४॥ तपति तपः अच्, यल्लक्षम्-तपेन यथा शरदा हिमागम ॥ ५ ॥ ऊष्मयतीति ऊष्मः, ऊष्मप्रतिकृतिर्वा ॥ ६ ॥

शेषश्चात्र—ग्रीष्मे तूष्मायणो मत आखोरपथी ॥

वर्षास्तपात्ययः प्रावृड् मेघात्कालागमौ क्षरी ॥ ७१ ॥

म्रियते छाद्यते नभोऽत्र मेघैरिति वर्षा "वृकृसृभीब्भ्याम्य षः" ॥ ( उणा-५४० ) ॥ इति षः, वर्षमस्त्यासु, वर्षन्तीति वा, नित्यबहुवचनान्त स्त्रीलिङ्गश्च । वरिषा इत्यपि ॥ १ ॥ तपस्यात्ययोऽत्र तपात्ययः ॥ २ ॥ प्रवर्षन्त्यस्यां मेघाः प्रावृट् स्त्रीलिङ्ग "गतिकारकस्य" ॥ ३ । २ । ८५ ॥ इत्यादिना क्विपि दीर्घः ॥ ३ ॥ मेघशब्दात्परः कालः, आगमश्च मेघकालः ॥ ४ ॥ मेघागमः ॥ ५ ॥ क्षरा मेघाः सन्त्यत्र क्षरी ॥ ६ ॥ ७१ ॥

शरद् घनात्ययः

शीयन्तेऽस्यां पाकेनौषधयः शरद् स्त्रीलिङ्ग, "शृदृभसेरद्" ॥ ( उणा-८९४ ) ॥ इत्यद् ॥ १ ॥ घनस्यात्ययोऽत्र घनात्ययः ॥ २ ॥

अयनं शिशिरायैस्त्रिभिस्त्रिभिः ।

अयतेऽर्कोऽनेनेत्ययनम्, त्रिभिस्त्रिभिरिति शिशिरायैर्वर्षायैश्च ॥ १ ॥

अयने द्वे गतिरुदग् दक्षिणाऽर्कस्य वत्सरः ॥ ७२ ॥

उदगुत्तरा दक्षिणाऽपाची चार्कस्य गतिस्ते द्वे अयने उत्तरायणं दक्षिणायनञ्च, ते मिलिते वत्सरो वर्षं भवति, वसन्ति ऋतवोऽत्र वत्सरः "भीष्यजि-" ॥ ( उणा-४३९ ) ॥ इत्यादिना सरः ॥ २ ॥ ७२ ॥

स सपर्वनूद्भ्यो वर्षं हायनोऽब्दं समा शरत् ।

स वत्सरः, सपर्यनूद्भ्यः परः-संवत्सरः परिवत्सरः, अनुवत्सरः, उद्वत्सरः ॥ ४ ॥ वृणोति छादयति वर्षम् ॥ ५ ॥ जहाति जिहीते वा भावान् हायनः "ह कालव्रीह्योः" ॥५।१।९८॥ इति ण्वण् ॥ ६ ॥ आप्यते अब्दः "आपोऽप् च" ॥ ( उणा-२३८ ) ॥ इति दः । वर्षादयस्त्रयः पुंक्लीबलिङ्गाः ॥ ७ ॥ समन्ति समाः स्त्रीलिङ्गः, सह मान्ति वर्तन्ते ऋतवः आसु या बहुलेऽयम् ॥ ८ ॥ शीर्यते इति शरत् स्त्रीलिङ्गः ॥ ९ ॥

शेषश्चात्र—वर्षे तु मरुद्भूतिर्युगांशकः ।
कालग्रन्थिर्मासमलः सवतः सर्वतुवारदौ ॥
वत्सः इद्वत्सरः इडावत्सरः परिवाणिवत् ।
सर्वदिवसनम्ययम् । अम्मय रम्यमेषु वस्यते ॥

भवेत् पैत्र स्त्वहोरात्रं मासेन

पितृणामिदं पैत्रम्, अहोरात्रम्, तत्र कृष्णपक्षोऽह , शुक्ले रात्रि मासेन मानुषेणेति शेष ॥ १ ॥

अब्देन दैवतम् ॥ ७३ ॥

मानुषेणेति शेष । देवतानामिदं, दैवत, अहोरात्रम् तत्रोत्तरायणमह, दक्षिणायन रात्रि ॥ ७३ ॥

दैवे युगसहस्रे द्वे ब्राह्म

अहोरात्रमित्येव । दैवैर्हि पञ्चाधिकैस्त्रिभिरहोरात्रशतैर्दिव्य वर्ष, तैर्द्वादशभि सहस्रैर्लौकिकं चतुर्युगम्, तच्च देवानामेकं युग तत्सहस्र ब्रह्मणो दिनं भूतानां स्थितिकाल, तावत्येव रात्रिभूतानां प्रलयकाल ।

यन्मनु –

चत्वार्याहु सहस्राणि वर्षाणां तु कृत युगम् ।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविध ॥ १ ॥
इतरेषु ससंध्येषु ससन्ध्यांशेषु च त्रिषु ।
एकापायेन वर्तन्ते सहस्राणि शतानि च ॥ २ ॥
यदेतत् परिसंख्यातमादावेव चतुर्युगम् ।
एतद्द्वादशसाहस्र देवानां युगमुच्यते ॥ ३ ॥
दैविकानां युगानां तु सहस्रं परिसंख्यया ।
ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरुच्यते ॥ ४ ॥

मानुषमानेन ब्राह्ममहोरात्रं यथा—

मानुषाणि सहस्राणां शतान्याहुश्चतुर्दश ।
चत्वारिंशत् सहस्राश्च वर्षाणां तत् कृत युगम् ॥ १ ॥
लक्षाणि चतुर्हीनानि सहस्रा द्विगुणाशत ।
इति त्रेतायुगे कालगणना मानुषी कृता ॥ २ ॥
नियुतानि पुन सप्त सहस्राणि च विंशति ।
द्वापर युगमन्ये तु लक्षाष्टकी मृषैव तत् ॥ ३ ॥
त्रीणि लक्षाणि षष्टिश्च सहस्राणि कलौ युगे ।
चतुर्युगसहस्राणि द्वादश ब्रह्मणो दिनम् ॥ ४ ॥
इत्थं च मानुषेणैव मानेन गणना कृता ।

कल्पौ तु ते नृणाम् ।

ये द्वे दैवे युगसहस्रे ते नृणां कल्पौ, एक स्थितिं कल्पयति स्थितिकल्प इति, द्वितीयं तु क्षयमिति ॥

मन्वन्तर तु दिव्याना युगानामेकसप्तति ॥ ७४ ॥

मनूनां स्वायम्भुवचाक्षुषवैवस्वतादीनामन्तरमवकाशोऽवधिर्वा तैर्हि चतुर्दशभि ब्रह्मणो दिनम् ॥७४॥

कल्पो युगान्त कल्पान्त सहार प्रलय क्षय ।
सवर्त्त परिवर्त्तश्च समक्षुप्तिर्जिहानक ॥ ७५ ॥

कल्पते जगदस्मिन् कल्प ॥१॥ युगस्यान्तो युगान्त ॥२॥ कल्पस्यान्तोऽवधि कल्पान्त, अयंक कल्प क्षयार्थोऽन्यो ब्रह्मदिनार्थ यच्छाश्वत –कल्पः शास्त्रे विधौ न्याये सवर्ते ब्रह्मणो दिने ॥३॥ संह्रियते प्रलीयते क्षीयते जगदत्र सहार ॥ ४ ॥ प्रलय ॥५॥ क्षय ॥६॥ संवर्तने, परिवर्तते जगदत्र सवर्त, परिवत ॥ ७ ॥ ८ ॥ समा क्षुप्तिरत्र समक्षुप्ति ॥ ९ ॥ जिहीते गच्छति जिहान स्वार्थे के जिहानक ॥ १० ॥ ७५ ॥

तत्कालस्तु तदात्वं स्यात्

स चासौ कालश्च तत्काल ॥१॥ तदेत्यस्य भाव तदात्वम् ॥२॥

तज्ज सान्दृष्टिक फलम् ।

तज्ज तात्कालिक फल, सदृष्ट प्रत्यक्ष प्रयोजनमस्य सांदृष्टिकम् । "प्रयोजनम्" ॥६।४।११७॥ इतीकण् । सांदृष्टिकमित्यन्य ॥१॥

आयतिस्तूत्तर काल

आयमनमायति, ण्यन्तादायतिरित्यन्ये । उत्तर आगामी कालः ॥ १ ॥

उदर्कस्तद्भव फलम् ॥ ७६ ॥

उदियर्ति उदर्क "मिच्छलुण्ठ्योदक"॥ (उणा २६)॥ इति कान्तो निपात्यते, उदच्यते अभिलापात् सूयते इति वा, तद्भवमायतिभव फलम् ॥१॥७६॥

व्योमान्तरिक्षं गगन घनाश्रयो
विहाय आकाशमनन्तपुष्करे ।
अभ्रं सुराभ्रोडुमरुत्पथोऽम्बर
स द्योदिवौ विष्णुपदं वियद् नभ ॥ ७७ ॥

व्ययति छादयति क्ष्मां व्योम "व्येग एदोतौ च वा" ॥ (उणा–९१४) ॥ इति मन्, व्ययतीति वा मनि "मन्वन्विप्क्विच्क्वचि" ॥ ५।१।१४७ ॥ इत्यूट् ॥ १ ॥ अन्तामध्ये ऋक्षाण्यस्य, द्यावापृथिव्योरन्तरीक्षते वा अन्तरिक्षं पृषोदरादित्वात्, अन्तरीक्षमित्यपि ॥ २ ॥ गच्छन्त्यनेन देवा गगन "विदनगगनगहनादय" ॥

(उणा—२७९) ॥ इत्यसन्तो निपात्यते ॥ ३ ॥ घनानामाश्रयो घनाश्रय ॥ ४ ॥ विजहाति सर्वं विहाय विहायस्सुमनस ' ॥ (उणा—५७६) ॥ इत्यादिना असन्तो निपात्यते ॥ ५ ॥ आकाशन्ते सूर्यादयोऽस्मिन्निति आकाशम् पुल्लीबलिङ्गो न काशते वा बाहुलकात् दीर्घ ॥ ६ ॥ नास्त्यन्तोऽस्य अनन्तम् ॥ ७ ॥ पोषति मेघान् पुष्कर ' पुषिपुषिभ्यां कित् ' ॥ (उणा—४३६) ॥ इति करन् पुष्कं वारि रातीति वा ॥ ८ ॥ अभ्राण्यस्य सन्तीत्यभ्रं ' अभ्रादिभ्य ' ॥ ५।२।४६ ॥ इत्यः ॥ ९ ॥ सुराणां देवानाम्, अभ्राणां मेघानाम्, उडूनां नक्षत्राणां मरुतां वायूनां पन्था सुरपथ अभ्रपथ, उडुपथ मरुत्पथ, यौगिकत्वात् देववर्त्म, मेघवर्त्म, नक्षत्रवर्त्म वायुवर्त्मेत्यादय ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ अमन्त्यत्र देवा अम्बरं " अठरकरर " ॥ (उणा—४०३) ॥ इत्यरन्तो निपात्यते अम्यते शब्द्यते इत्यन्ये ॥ १४ ॥ सन्यते त्य क्विप् ' ॥५।१।१७१॥ इति क ॥ १५ ॥ १६ ॥ योविश्वौ पूर्ववत् ॥ १६॥१७ ॥ विष्णोः पदं क्रमोऽत्र विष्णुपदम्॥१८॥ वियच्छति न विरमति वियत् क्विप् ॥ १९ ॥ नभ्यतीति नभः न भमस्तीति वा नभादित्वात्, क्लीबलिङ्गौ ॥२०॥ विहायसा सुमनसाम्यये । महाविल देत्याम् ॥

शेषश्चात्र—नक्षत्रवर्त्मनि पुनर्मेहनेमिर्निमोचटी । अयापघथ ॥ ७७ ॥

अभ्राट् तडित्वान् मुदिरो घनाघनो-
ऽभ्रं धूमयोनिस्तनयित्नुमेघा ।
जीमूतपर्जन्यबलाहका घनो
धाराधरो वाहदमुग्धरा जलाद् ॥ ७८ ॥

म न भ्राम्यते मभ्राद् पृषोदरादित्वादेकस्य मभो लोप मध्वादित्वात् साधुः ॥ १ ॥ तडिदस्त्यस्य तडित्वान् ॥ २ ॥ मोदन्ते जना अनेन मुदिर इषी पि ॥ (उणा—४१६) ॥ इति किरच् ॥ ३ ॥ हन्ति प्रवासिन इति घनाघन घनाघनचलाचल- "॥४।१।१२॥ इत्यादिना अजन्तो निपात्यते ॥ ४ ॥ अभ्रति अभ्रं न भ्रश्यन्त्यापोऽस्मादित्यन्ये, अभ्युक्तम्—न भ्रश्यन्ति यतस्तेभ्यो जलान्यभ्राणि तान्यत आप्नोति सर्वो विधा इति वा अभ्रं खरशुर '—॥ (उणा—३९६) ॥ इति साधु ॥५॥ धूमो योनि कारणमस्य धूमयोनि ॥६॥ स्तनयति गर्जति स्तनयित्नु इषिपुषि —॥ (उणा—७९७) ॥ इत्यादिना इत्नु ॥७॥ मेहति सिञ्चति भुव मेघ न्यङ्क्वादित्वात् मेघादय ॥४।१।११२॥ इति साधु ॥८॥ जीवन्त्यनेन जीमूत "जीवेर्म च '॥ (उणा—२१६) ॥ इत्यूतः जीवनस्य जलस्य मूत पुटबन्ध इति पृषोदरादित्वाद् वा ॥ ९ ॥ परिषपति गर्जति वा पर्जन्यः हिरण्यपर्ण न्यादय ' ॥ (उणा—३८०) इत्यन्यान्तो निपात्यते ॥ १० ॥ वहन्ति जीवमस्यनेन बलाहक. बलिसिकि ॥ (उणा—८१) ॥ इत्याहक वारिणो वाहको वा पृषो

दरादित्वात् ॥११॥ हन्यते वायुना घन " मूर्त्तिनिचिताभ्रे घन " ॥५।३।३७॥ इत्यलन्तो निपात्यते ॥१२॥ धारां धरति धाराधर " आयुधादिभ्यो धृगोऽद ण्डादे "॥५।१।९४॥ इत्यच् ॥ १३ ॥ वाहश्च दश्च मुक् च धरश्च वाहदमुग्धरा, ते जलात् परा मेघस्य वाचका इत्यथ जलवाह, जलद, जलमुक्, जलधर, यौगिकत्वात् वारिवाह, वारिद, वारिमुक्, वारिधर, इत्यादय । अभ्रवर्जं सर्वे पुल्लिङ्गा । इन्द्रवज्रेन्द्रवज्रयोरुपजातिरियम् ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

शेषश्चात्र–मेघे तु व्योमधूमो नभोध्वज ।
गण्डयित्नुगदयित्नुवामसिर्वारिवाहन ॥
खतमालोऽपि ॥ ७८ ॥

कादम्बिनी मेघमाला

कमादत्ते कादम्बा मेघा ते सन्त्यस्यां कादम्बिनी, कदम्बविकास कादम्ब सोऽस्त्यस्यां वा मेघमाला मेघपङ्क्ति । कालिकाऽपि ॥ १ ॥

दुर्दिनं मेघजं तम ।

दुष्टं दिनमत्र दुर्दिनं मेघाज्जात मेघजं तमोऽन्धकार, यन्माग्गुरि–दुर्दिनं त्वन्धकारो ऽब्दे । वार्दलमपि ॥ १ ॥

आसारो वेगवान् वर्ष ।

आसरणमासार, स वेगवान् वर्ष इत्युच्यते ॥ १ ॥
शेषश्चात्र–अथासारे धारासंपात इत्यपि ॥

वाताऽस्तं वारि शीकर ॥ ७९ ॥

वातेनास्तं क्षिप्तं वातास्तम्, शीकते सिञ्चति शीकर " ऋच्छिचटि " ॥ ( उणा–३९७ ) ॥ इत्यर ॥ १ ॥ ७९ ॥

वृष्टिर्वा वर्षणवर्षे

वर्षणाद् वृषभ इति भाष्यकारवचनात् वर्षणमिति साधुः ॥ १ ॥ वर्षं पुंक्लीब लिङ्ग, " वर्षोदय क्लीबे "॥५।३।२९॥ इत्यल् । मङ्खाचस्पतिः– अथ वृष्टिर्वर्षमस्त्री केचिदिच्छन्ति वर्षणम् ॥ २ ॥

तद्विघ्नेऽवग्रहावग्राहौ समौ ।

तद्विघ्ने वृष्टिविघ्ने अवग्रहावग्राहौ अवग्राहः, अवग्रह " वर्षविघ्नेऽवाद् ग्रहः " ॥ ५ । ३ । ५० ॥ इति वा अल् ॥ १ ॥ २ ॥

घनोपलस्तु करक

घनोपलो मेघमाला, कीर्यते करकः शिलिभ्र "कृकृ" ॥ (उणा-२७) ॥ इत्यादिना अक ॥ १ ॥

शेषश्चात्र—करकेऽम्बुघनो मेघकफो मेघास्थि पुल्लिङ्का ॥
बीजोदकं तोयडिम्भो वर्षोपलमिरावरम् ॥

## काष्ठाऽऽशा दिग् हरित् ककुप् ॥ ८० ॥

काशते काष्ठा ॥ १ ॥ आऽश्नुते आशा ॥ २ ॥ दिशत्यवकाशं दिक् "ऋत्विग्दिश्" ॥ २ । १ । ६९ ॥ इति गत्वम् ॥ ३ ॥ हरन्त्यनया हरित् "हसृरुहियुषितिभ्य इत्" ॥ (उणा-८८७) ॥ इति इत् ॥ ४ ॥ कं वायु स्कुनाति विस्तारयति ककुप् "ककुप्त्रिष्टुबनुष्टुभः" ॥ (उणा-९१२) ॥ इति क्विबन्तो निपात्यते । एते स्त्रीलिङ्गाः ॥ ५ ॥ ८० ॥

## पूर्वा प्राची

पृणाति पूर्वा "निपूभ्य–" ॥ (उणा-५११) ॥ इति व कित्, पूर्वति व्याप्नोतीति वा ॥ १ ॥ प्रथममस्यामञ्चत्यादित्य इति प्राची क्विपि "अचः" ॥ २ । ४ । ३ ॥ इति ङी ॥ २ ॥

## दक्षिणाऽपाची

दक्षते शीघ्रं गच्छन्त्यस्यां रविरिति दक्षिणा 'द्रुदक्षि' – ॥ (उणा-१९४) ॥ इति इण ॥ १ ॥ अपाञ्चत्यस्यां रविरित्यपाची । अपादित्वाद् वत्वे अवाची इत्यपि ॥ २ ॥

## प्रतीची तु पश्चिमा ।

## अपरा

प्रत्यञ्चति रविरस्यां प्रतीची ॥ १ ॥ पश्चाद् भवा पश्चिमा 'पश्चादाद्यन्ताग्रादिमः' ॥ ६।३।७५ ॥ इतीमः ॥ २ ॥ न पूर्यति रविबिम्बमस्यामपरा ॥ ३ ॥
शेषश्चात्र—अथाऽपरेतरा पूर्वाऽपरा पूर्वेतरा तथा ॥

## अथोत्तरोदीची

अतिशयेनोत्कृष्टा उत्तरा 'द्वयोर्विभज्ये च तरप्' ॥७।३।६॥ इति तरप्, उत्तरतीति वा ॥ १ ॥ उत्तरमञ्चत्यर्कोऽस्यां उदीची ॥ २ ॥

शेषश्चात्र—यथोत्तरेतराऽपाची तथाऽपाचीतरोत्तरा ॥

## विदिक् स्यादपदिशं प्रदिक् ॥ ८१ ॥

विदिश्य दिक् विदिक् उभयव्यपदेशात्, यथाहु —मान्याराममनोरमासु विदिशः प्रदिशश्च ताः ॥ १ ॥ दिशोरपदिशमपदिशं, विभक्त्यर्थेऽव्ययीभावे 'शर

धादे" ॥७।३।९२॥ इत्यत् समासान्तः ॥ २ ॥ प्रकृष्टा दिक् प्रदिक् ॥ ३ ॥ ८१ ॥

दिश्यं दिग्भववस्तुनि

दिश्यमिति "दिगादिदेहांशाद् यः" ॥६।३।१२४ ॥ १ ॥

अवागपाचीनम्

अपाञ्चतीति अपाक् ॥ १ ॥ अपागेवाऽपाचीनम् "अदिक्स्त्रियां वाऽञ्च" ॥७।१।१०७॥ इति स्वार्थे ईनः ॥ २ ॥

एवम्—

उदगुदीचीनम् ।

एवम्—

प्राक् प्राचीनं च समे

एवम्—

प्रत्यक् तु स्यात् प्रतीचीनम् ॥ ८२ ॥
तिर्यग्दिशां तु पतय इन्द्राग्नियमनैर्ऋताः ।
वरुणो वायुकुबेरावीशानश्च यथाक्रमम् ॥ ८३ ॥

तिर्यगित्यूर्ध्वाधोदिग्व्यवच्छेदायम् । विदिगपि प्रसिद्ध्या दिक् । एवं च स्वस्वामिसंबन्धे पूर्वा दिग् ऐन्द्री ततो विदिक् आग्नेयी, दक्षिणा याम्या, ततो विदिक् नैर्ऋती, पश्चिमा वारुणी, ततो विदिक् वायव्या, उत्तरा कौबेरी, ततो विदिक् ऐशानी इति सिद्धम् ॥ ८३ ॥

ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ।
पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥ ८४ ॥

इरावति अब्धौ जात ऐरावतः "जाते" ॥६।३।९८॥ इत्यण् ॥ १ ॥ पुण्डरीकवर्णत्वात् पुण्डरीकः ॥ २ ॥ वामनाकारत्वाद् वामनः ॥ ३ ॥ कुमुदवर्णत्वात् कुमुदः ॥ ४ ॥ अञ्जनवर्णत्वात् अञ्जनः ॥ ५ ॥ पुष्पवत् दन्ता अस्य पुष्पदन्तः ॥ ६ ॥ सर्वभूमेरीशः सार्वभौमः पृथिवीसर्वभूमेरीशज्ञातयोश्चाम् ॥ ६ । ४ । १५६ ॥ इत्यण् ॥ ७ ॥ शोभनानि प्रतीकानि अङ्गानि अस्य सुप्रतीकः ॥ ८ ॥ दिशां धारका गजा दिग्गजाः । दिक्क्रमेणेति प्रस्तावाद् लभ्यते । 'ऐरावतः पुण्डरीकः कुमुदाञ्जनवामनाः ' इति माधुरिः क्रममाह । माला तु–ऐरावतः सुप्रतीक इति ॥ ८४ ॥

इन्द्रादयोऽष्टौ दिक्पालाः, तत्राग्निर्वायुर्यश्चेन्द्रियेषु तिर्यक्काण्डे वक्ष्येते, शेषा मुक्तक्रमेणाह—

इन्द्रो मरुत्वान्मघवा बिडौजाः पाकशासनः ।

इन्द्रो हरिर्दुश्च्यवनोऽच्युताग्रजो
वज्री विडौजा मघवान् पुरन्दरः ।
प्राचीनबर्हिः पुरुहूतवासवौ
संक्रन्दनाऽऽखण्डलमेघवाहनाः ॥ ८५ ॥
सुत्रामवास्तोष्पतिवस्तिमिशक्रा
वृषा शुनासीरसहस्रनेत्रौ ।
पर्जन्यहर्यश्वऋभुक्षिबाहु-
वन्तेयवृद्धश्रवसस्तुराषाट् ॥ ८६ ॥
सुरर्षभस्त्वपस्त्वक्षो जिष्णुर्वरमशतक्रतु ।
कौशिकः पूर्वदिग्देवाऽप्सरः स्वर्गशचीपतिः ॥ ८७ ॥
पूतनापाकुम्भमन्त्वा मरुत्वान् मघवा

इन्दति इन्द्रः "*भीरुषि*" ॥ (उणा–१८७) ॥ इति रः ॥ १ ॥ हरति दैत्यप्राणानिति हरिः ॥ २ ॥ दुःखेन च्यवते परदारेषु रेतश्च्युतेर्दुश्च्यवनः नन्द्यादि त्वात् ल्युः । दुःखेन च्यवते रणाद् वा ॥ ३ ॥ अच्युतस्याऽग्रजो अच्युताग्रजः ॥ ४ ॥ वज्रमस्यास्ति वज्री ॥ ५ ॥ वेवेष्टि विट् व्यापकं ओजोऽस्य विडौजाः पृषोदरादित्वात्, विट् भेदकं ओजो यस्येति वा ॥ ६ ॥ मघं सौख्यमस्याऽस्ति मघवान्, मघो देवसभा सोऽस्यास्तीति वा ॥ ७ ॥ पुराणि अरीणां दारयति त्रिपुरं वा पुरन्दरः ' पुरन्दरमघवन्दरौ ' ॥ ५।१।११४ ॥ इति खान्तो निपात्यते ॥ ८ ॥ प्राचीनमुख्या बर्हिषो दर्भा अस्य प्राचीनबर्हिः । यद्विष्णुपुराणे—

प्राचीनाग्राः कुशास्तस्य पृथिव्यां विश्रुता मुने ।
प्राचीनबर्हिरभवत् ख्यातो भुवि महाबलः ॥ १ ॥ ९ ॥

पुरु प्रभूतं हूतं यज्ञेष्वाह्वानमस्य पुरुहूतः ॥ १० ॥ वसति स्वर्गे वासवः मणिवसेर्णित् ' ॥ (उणा–५१६) ॥ इत्यवः वसुरेव वा प्रज्ञाद्यण् वसवः पर्व्य वा ॥ ११ ॥ संक्रन्दयत्यरीन् संक्रन्दनः ॥ १२ ॥ आखण्डयत्याखण्डलः ॥ १३ ॥ मेघो वाहनमस्य मेघवाहनः इन्द्रो हि मेघानारुह्य वर्षति मेघ ऐरावतो वा, अभ्रमातङ्गत्वात् ॥ १४ ॥ ८५ ॥ सुष्ठु त्रायते सुत्रामा मन्, सोमर्ष त्राम रक्षणमस्य वा । बाहुलकात् दीर्घत्वे सुत्रामाऽपि ॥ १५ ॥ वास्तोर्गृहक्षेत्रस्याऽधिपतिः वास्तोष्पतिः वामम्पतिवास्तोष्पति– ॥ ६ । ३ । २१ ॥ इति षष्ठ्या अलुक् ॥ १६ ॥ वस्ते वीरान् वस्तिः ' भीसारुपुत्रुवस्तिवक्षिभ्यो मिः ' ॥ (उणा–१८७) ॥ इति मिः ॥ १७ ॥ शक्नोति शक्रः भीरुषि ' ॥ (उणा–१८७) ॥

इति र', शक्र नाम सिंहासनमस्यास्तीति वा ॥ १८ ॥ वर्षतीति वृषा "इन्द्रो वर्षति" इति श्रुतेः "सपृसुष्पि" ॥ ( उणा–९०१ ) ॥ इत्यादिना कन् ॥१९॥ शोभन नासीरमग्रयानमस्य शुनासीर', श पूजायाम्, मधुरवत् । दन्त्यादिरपि ॥ २० ॥ सहस्रं नेत्राण्यस्य सहस्रनेत्र', यत् कौटल्य – इन्द्रस्य हि मन्त्रिपर्षदृषीणां सहस्रं, स तच्चक्षुस्तस्मात् इन्द्रं द्व्यक्ष सहस्राक्षमाहु ॥ २१ ॥ परिपर्पति पर्जन्य ॥ २२ ॥ हरय' पिङ्गा अश्वा अस्य हर्यश्वः ॥ २३ ॥ ऋयर्ति ऋभुक्षा "अर्तेर्मुक्षिनक्" ॥ ( उणा–९२८ ) ॥ ऋभून् देवान् क्षयत्यधिवसति इत्यन्ये ॥ २४ ॥ बहुदन्त्या अपत्य बाहुदन्तेय ॥ २५ ॥ वृद्धे श्रवसी अस्य वृद्धश्रवा, वृद्धेभ्य शृणोतीति वा ॥ २६ ॥ तुर त्वरित साहयत्यभिभवत्यरीन्, तुर वेग सहते वा तुराषाद्, पृषोदरादित्वात् ॥ २७॥८६ ॥ सुराणामृषभ सुरर्षभ' ॥ २८ ॥ तप स्तस्णोति इन्द्रपदप्राप्तिबाधयाऽन्येषां तपस्तक्ष ॥ २९ ॥ अमर्तोत्येषमीलो विष्णु "भूजे ष्णुक्" ॥ ५।२।३० ॥ इति ष्णुक् ॥ ३० ॥ वरा शत च क्रतवोऽस्य वरशतक्रतु वरक्रतु, शतक्रतु; शत क्रतवः प्रतिमामिमहविशेषा कार्तिकमवेऽस्या ऽभूवन् इत्यागमविद ॥३१॥३२॥ कुशैर्वर्मैश्चरति कौशिकः, जातमात्रस्याऽदित्या कुशैस्छादितत्वात्; मत्पुराणे—

जातमात्रोऽय भगवानदित्या स कुशैर्वृत ।
तदा प्रभृति देवेश कौशिकत्वमुपागत ॥ १ ॥

कुशिकापत्यमिति वा ॥ ३३ ॥ पूर्वदिशा', देवानां, अप्सरसां, स्वर्गस्य, शच्याश्च पति' पूर्वदिक्पति, देवपति, अप्सर पति, स्वर्गपतिः, शचीपति, यौगिकत्वात् प्राचीशः, पूर्वदिगीश', सुरेश, सुरनाथ', नाकेश, शचीश, पौ लोमीश इत्यादयः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ८७ ॥ पृतनां साहयति पृतनाषाद्, पृषोदरादित्वात् षत्वम् ॥ ३९ ॥ उग्र धनुरस्य उग्रधन्वा ॥ ४० ॥ म रुतो देवा सन्त्यस्य मरुत्वान् ॥ ४१ ॥ महते मघवा "श्वन्मातरिश्वन्" ॥ ( उणा–९०२ ) ॥ इत्यमन्तो निपात्यते । मघाऽस्यास्तीति वा "ह्रस्वापो बहुलं नाम्नि" ॥ २।४।९९ ॥ इति ह्रस्व । मघ सुखमस्यास्तीति वा ॥ ४२ ॥

शेषश्चात्र—

इन्द्रे तु नदिरो मेरी भ्रायसिंहपतिर्भय ।
गौरावस्कन्दी वम्रीको बराणो देवदुन्दुभि ॥ १ ॥
किणास्तथा हरिवान् माममेमिरसम्महा ।
शयीचिर्मादिरो वज्रदक्षिणो विपुणोऽपि च ॥ २ ॥

अस्य तु ।

द्विष पाकोऽद्रयो वृत्र पुलोमा नमुचिर्बल ॥ ८८ ॥

जम्भ

अस्येतीन्द्रस्य, द्विषः शत्रवः, ते तु पाकादयः—पात्यात्मानं पाकः "भीण्शलि-वलि-" ॥ (उणा–२१) ॥ इति कः ॥ १ ॥ अवन्ति अत्रय ॥ २ ॥ वर्तते वृत्रोऽहि "ऋज्यजि" ॥ (उणा—३८८) ॥ इति रक् ॥ ३ ॥ पुते लोमान्यस्य पुलोमा, पृषोदरादित्वात् सलोप ॥ ४ ॥ न मुञ्चत्यहंकारं नमुचिः "नाम्युपान्त्य-" ॥ (उणा–६०९) ॥ इति किः, नञादित्वात् साधु ॥ ५ ॥ बलति बल ॥ ६ ॥ ८८ ॥ जम्भते जम्भः, जायत इति वा "गृवृरमि-" ॥ (उणा–३२७) ॥ इति भः ॥ ७ ॥ ततो 'ब्रह्माद् भिद्वेषि-' (पृ० ५ श्लो० १०) इत्यादिवचनात् पाकद्विट्, अत्रिद्विट्, वृत्रद्विट्, पुलोमद्विट्, नमुचिद्विट्, बलद्विट्, जम्भद्विट् इन्द्रः; यौगिकत्वात् पाकशासनादय ॥

प्रिया शचीन्द्राणी पौलोमी जयवाहिनी ।

अस्येत्यनुवर्तते । प्रिया भार्या, शच्यते मधुरं वक्ति शची ॥१॥ इन्द्रस्य भार्या इन्द्राणी "वरुणेन्द्र-" ॥२।४।६२॥ इत्यादिना ङीः, आन् चान्तः ॥ २ ॥ पुलोम्नो मुनेरपत्यं पौलोमी बाह्वादित्वाद् इञ् ॥३॥ जयं वहतीत्येवंशीला जयवाहिनी ॥ ४ ॥

शेषश्चात्र—

स्यात् पौलोम्यां तु चक्राणी चारुधारा शतावरी ।
महेन्द्राणी परिपूर्णसहस्रचन्द्रवत्यपि ॥ १ ॥

तनयस्तु जयन्तः स्याज्जयदत्तो जयश्च सः ॥ ८९ ॥

इन्द्रस्य तनय, जयतीति जयन्त "तृजिभूवदि-" ॥ (उणा–२२१) ॥ इ-झन्तः ॥ १ ॥ जय एव देयात् जयदत्त 'तिक्कृतौ नाम्नि' ॥५।१।७१॥ इति साधुः ॥ २ ॥ जयतीति जयः ॥ ३ ॥

शेषश्चात्र—जयन्ते मागसंतान ॥ ८९ ॥

सुता जयन्ती तविषी ताविषी

इन्द्रस्य सुता, जयतीति जयन्ती ॥१॥ तवति गच्छति तविषी, ताविषी ॥२॥३॥

उच्चैःश्रवा हय ।

इन्द्रस्य हय, उच्चैः श्रवसी अस्य उच्चैःश्रवा ॥ १ ॥

शेषश्चात्र—श्वेतहयो हरेर्हये ॥

मातलि सारथि

इन्द्रस्य सारथि मतलस्यापत्यं मातलि ॥ १ ॥

शेषश्चात्र—मातलौ हर्यङ्कः स्यात् ॥

देवनन्दी द्वाःस्थ

इन्द्रस्य द्वाःस्थः, देवान् नन्दयतीत्येवंशीलो देवनन्दी ॥ १ ॥

गजः पुनः ॥ ९० ॥
ऐरावणोऽभ्रमातङ्गश्चतुर्दन्तोऽर्कसोदरः ।
ऐरावतो हस्तिमल्लः श्वेतगजोऽभ्रमुप्रियः ॥ ९१ ॥

इन्द्रस्य गजः ॥९०॥ इरावणे भव ऐरावणः ॥१॥ अभ्रस्थत्वात् अभ्रमातङ्गः, अभ्रमुप इत्येके, यत्कात्यः—ऐरावतं विजानीयात् नागमभ्रुपगोचरम् ॥२॥ चत्वारो दन्ता अस्य चतुर्दन्तः ॥ ३ ॥ अर्कस्य सोदरोऽर्कसोदरः, द्वयोः समुद्रजातत्वात् ॥ ४ ॥ इरावत्यम्भौ जातः ऐरावतः पुस्त्रीयलिङ्गः ॥ ५ ॥ हस्तिनां मल्लः हस्तिमल्लः ॥ ६ ॥ श्वेतश्चासौ गजश्च श्वेतगजः ॥ ७ ॥ अभ्रतीति अभ्रमुः "अभ्रेरमुः" ॥ (उणा–८००) ॥ अभ्रे खे माति न भ्राम्यति वा मन्थरगामित्वात्, यन्माघ्यम्—अभ्रम्वा जघनान्तर्वोल्लितकरः । तस्याः प्रियोऽभ्रमुप्रियः ॥ ८ ॥

शेषश्चात्र—ऐरावणे मदाम्बरः सदादानो गजाग्रणीः ॥ ९१ ॥

वैजयन्तौ तु प्रासादध्वजौ

इन्द्रस्य प्रासादो ध्वजश्च, वैजयन्ती पताकाऽनयोरस्ति वैजयन्तौ, विजयते विजयन्तो जिष्णुस्तस्येमाविति वा ॥ १ ॥

पुर्यमरावती ।

इन्द्रस्य पुरी, अमरा सन्त्यस्यां अमरावती "अनजिरादि–"॥३।२।७८॥ इत्यादिना मतौ दीर्घत्वम् ॥ १ ॥

शेषश्चात्र—पुरे त्वैन्द्रे सुदर्शनम् ॥

सरो नन्दीसरः

इन्द्रस्य सरः नन्दीनाम्ना सरो नन्दीसरः ॥ १ ॥

पर्षत् सुधर्मा

इन्द्रस्य पर्षत्, शोभनो धर्मोऽस्यां सुधर्मा । यन्माघ्यम्—सुधर्माऽनवमा पुरी ॥१॥

नन्दनं वनम् ॥ ९२ ॥

इन्द्रस्य वनम्, नन्दयति नन्दनम् ॥ १ ॥ ९२ ॥

वृक्षाः कल्पः पारिजातो मन्दारो हरिचन्दनः ।
सन्तानश्च

इन्द्रस्य वृक्षाः, कल्पः सङ्कल्पपूरणत्वात् ॥१॥ पारिणः पारवतोऽब्धेर्जातः पारिजातः ॥ १ ॥ मन्दन्ते मोदन्ते देवा अनेन मन्दारः "अम्यद्रिमदिमन्दि" ॥

(उणा-४०५) ॥ इत्यार ॥ १ ॥ हरिन्द्रस्य चन्दना हरिचन्दन पुंक्लीबलिङ्ग, हरि रूपे पिङ्गचन्दन इति वा ॥ १ ॥ सतन्यन्ते पुष्पाण्यस्मिन् सन्तान ॥ १ ॥

धनुर्देवायुधं

इन्द्रस्य धनु, देवानामायुधं देवायुधम् ॥ १ ॥

तदृजु रोहितम् ॥ ९३ ॥

तद् देवेन्द्रधनुरुत्पाते ऋजु अवक्र, रोह संजातोऽस्य रोहितम्, रोहितवर्णत्वाद् वा । केचित्तु ऋजुरोहितमिति समस्तमिच्छन्ति ॥ १ ॥ ९३ ॥

दीर्घमैरावत

तदेव दीर्घं ऋजु च इरावति मेघेऽस्यौ वा भव ऐरावतं पुंक्लीबलिङ्गः ॥१॥

वज्र स्त्वशनिर्ह्रादिनी स्वरु ।

शतकोटि पवि शंबो दम्भोलिर्भिदुरं भिदु ॥ ९४ ॥

व्याधाम कुलिश

वजति गच्छेन न प्रतिहन्यते वज्रं पुंक्लीबलिङ्गः ' भीवृधि ' ॥ (उणा-१८७) ॥ इति र ॥ १ ॥ अश्नुते व्याप्नोति रिपून् व्याप्स्यामि अशनिः पुंस्त्रीलिङ्ग ' अर्त्ति दृश्यमि " ॥ ( उणा-६८० ) ॥ इत्यनि ॥ २ ॥ ह्राद स्फूर्जथुरस्यास्ति ह्रादिनी ॥ ३ ॥ स्वरति स्वरु पुंसि "भृमृशृत्सरि " ॥ (उणा-७१६) ॥ इत्यु ॥ ४ ॥ शतं बहवः कोट्योऽस्येति शतकोटि पुंलिङ्ग, यौगिकत्वात् शतारशतधारौ च ॥ ५ ॥ पुनाति पवि पुंसि हीरकस्य पवित्रत्वाभ्यानात् ॥६॥ शत्रून् शाम्यति शंब "शम्ब मेर्भिद् वा " ॥ (उणा-३१८) ॥ इति व शं विद्यतेऽस्येति वा ' कशंभ्या ' ॥ ५।२।१८॥ इति बः ॥ ७ ॥ दभ्नोति खेदयति दानवान् दम्भोलिः पुंसि ' बहुलं ॥ ५ । १ । २ ॥ इत्योलि ॥ ८ ॥ भिनत्तीत्येवंशील भिदुरम् ॥ ९ ॥ भिनत्तीति भिदुः पुंसि "पृभिदि " ॥ (उणा-७२९) ॥ इति कुः ॥ १० ॥ १४ ॥ विशेषेणाऽऽदधाति मर्म वैस्मानां व्याधाम "अर्त्तीरि " ॥ (उणा-३३८) ॥ इति म ॥ ११ ॥ कोशति सङ्कोचीकरोति भयवस्त्वाद् गिरीन् कुलिशं पुंक्लीबलिङ्ग कुलिकनि ॥ (उणा-५३५) ॥ इति किश कुलिन कुलपर्वतान् श्यति पक्षच्छेदेन तनूकरोतीति वा कुत्सित श्यति तस्योक्षरीमिति वा ॥ १२ ॥

भस्यार्चिरतिमी

भस वज्रस्य अर्चिर्ज्वाला अतिशयेन बिभेत्यस्या अतिमी स्त्रीलिङ्ग ॥ १ ॥

स्फूर्जथुर्ध्वनि ।

वज्रस्य ध्वनि स्फूर्जनं स्फूर्जथु पुंसि द्वितोऽथुः ॥५।१।८२॥ इत्यथु ॥१॥

स्वर्वैद्यावश्विनीपुत्रावश्विनौ वडवासुतौ ॥ ९५ ॥
नासिक्यावर्कजौ दस्रौ नासत्यावब्धिजौ यमौ ।

स्वर्गस्य वैद्यौ स्वर्वैद्यौ ॥ १ ॥ अश्विन्याः पुत्रौ अश्विनीपुत्रौ, यौगिकत्वात् आश्विनेयौ ॥ २ ॥ अश्वो विद्यतेऽनयोरश्विनौ सदाऽश्वारूढत्वादित्यर्थः ॥ ३ ॥ वडवायाः सुतौ वडवासुतौ ॥ ४ ॥ ९५ ॥ नासिकाभवत्वेन नासिक्यवर्णसदृशौ नासिक्यौ, अश्विन्या नासिकारन्ध्रयो रवे रेतःपातात् उत्पन्नाविति प्रसिद्धिः ॥ ५ ॥ अर्काज्जातौ अर्कजौ ॥ ६ ॥ दस्यतो हरतो रोगान् दस्रौ "भीवृधि" ॥ (उणा-३८७) ॥ इति र ॥ ७ नाऽसत्यं साधू नासत्यौ, नाऽसत्याविति वा, नखादित्वात् साधु ॥ ८ ॥ अब्धेर्जातौ अब्धिजौ ॥ ९ ॥ यमौ युग्मरूपौ ॥ १० ॥ नित्यद्विवचनान्ता इमे ॥

शेषश्चात्र—नासिक्ययोस्तु नासत्यदस्रौ प्रवरवाहनौ ।
गदान्तकौ यज्ञवहौ ॥

विश्वकर्मा पुनस्त्वष्टा विश्वकृद् देववर्धकि ॥ ९६ ॥

विश्वं करोति विश्वकर्मा, मन् ॥१॥ त्वक्षति त्वष्टा "त्वष्टृक्षतृवृद्धिप्रादयः"॥ (उणा-८६५) ॥ २ ॥ विश्वं करोति विश्वकृत् ॥ ३ ॥ देवानां वर्धकिः देववर्धकिः ॥ ४ ॥ ९६ ॥

स्त्रियां स्वर्गिवध्वोऽप्सरसः स्वर्वेश्या उर्वशीमुखाः ।

स्वर्गोऽस्त्येषां स्वर्गिणो, तेषां वध्वः स्वर्वध्वः, स्वर्गिवध्वः, यौगिकत्वात् स्वर्गस्त्रियः, सुरस्त्रियः ॥ १॥२ ॥ आप्यन्ते पुण्यैरप्सरसः "आपोपासाप्सरादयश्च" ॥ (उणा-९६४) ॥ इत्यस्, आपोऽप्सरायेष्वव, अप सरन्ति स्मेति वा समुद्रजातत्वात्, वा बहुवचनान्तः स्त्रीलिङ्गोऽयम्, तेनाऽप्सरा इत्यपि ॥ ३ ॥ स्वर्गस्य वेश्याः स्वर्वेश्या, स्वरिति स्वर्गिणोऽप्युपलक्षणम्, तेन देवगणिका इत्यपि ॥ ४ ॥ ऊरू अश्नुते नारायणस्योरूद्भवत्वात् उर्वशी, पृषोदरादित्वात् ह्रस्वः, यदाक्षणम्—ऊरूद्भवा नरसखस्य मुनेः सुरस्त्रीमुखग्रहणात् प्रभावत्याद्याः ।

यदूचाहि—

अथ ब्रह्मणोऽग्निकुण्डात् समुत्पन्ना प्रभावती ।
वेदितलाद् वेदिवती यमात् पुनः सुलोचना ॥ १ ॥
उर्वशी तु हरेः सव्यमूरुं भित्त्वा विनिर्गता ।
रम्भा तु ब्रह्मणो वक्त्रान्मिश्रकेशा तु तत्करात् ॥ २ ॥
शिरसस्तु महाश्वेता स्वहा काकलिसा वसा ।
मरीचिसूचिका चैव विद्युत्पर्णा तिलोत्तमा ॥ ३ ॥
अद्रिका लक्षणा क्षेमा दिव्या रामा मनोरमा ।

हेमा सुगन्धा सुवपुः सुबाहुः सुमता सिता ॥ ४ ॥
शारद्वती पुण्डरीका सुरसा सुव्रतापि च ।
सुमाता कामला हंसपादी च सुमुखीति च ॥ ५ ॥
मेनका सहजन्या च पर्णिनी पुञ्जिकास्थला ।
ऋतुस्थला घृताची च विश्वाचीत्यप्सरःस्त्रियः ॥ ६ ॥

हाहादयस्तु गन्धर्वा गान्धर्वा देवगायनाः ॥ १७ ॥

गानप्रारम्भे हाहाकरणात् हाहा पुंसि, गन्धर्वविशेषस्य नामेदम् हाहा आदिर्येषां ते हाहादयः, आदिशब्दात् हूहूस्तुम्बुरुश्चित्ररथो विश्वावसुर्वसुरुचिरित्यादयः । हाहाहूहूरिति पुल्लिङ्गमेकमखण्डं नामेत्येके । गन्धर्वौ च हाहाहूहूरिति तु रूप्यम् । अव्ययावित्येके, महाप्रस्थाने — हसौ हाहाहूहू च द्वौ वृषणाश्व तुम्बुरुः । गन्धयन्ते हिंसन्ति दुःखं गन्धर्वाः “गन्धेरर्व्‌ चान्तः” ॥ (उणा–५०८) ॥ इति वः, गौर्ध्रियते वाक् सप्तस्वरसपमा तिष्ठत्यत्रेति वा ॥ १ ॥ गन्धर्वा एव गान्धर्वाः ॥ २ ॥ देवानां गायना देवगायनाः ॥ ३ ॥ १७ ॥

यमः कृतान्तः पितृदक्षिणाशाप्रेतात्पतिर्दण्डधरोऽर्कसूनुः ।
कीनाशमृत्यू समवर्तिकालौ शीर्णांघ्रिहर्यन्तकधर्मराजाः ॥१८॥
यमराजः श्राद्धदेवः शमनो महिषध्वजः ।
कालिन्दीसोदरश्चापि

यमयति यमः, यमलजातत्वाद् वा ॥ १ ॥ कृतोऽन्तोऽनेन कृतान्तः ॥ २ ॥ पितृशब्दात्, दक्षिणाशाशब्दात् प्रेतशब्दाच्च परः पतिः पितृपतिः दक्षिणाशापतिः प्रेतपतिः ॥ ३॥४॥५ ॥ दण्डमर्थं धरति दण्डधरः ॥ ६ ॥ अर्कस्य सूनुः अर्कसूनुः ॥ ७ ॥ क्नसति दीप्यते कीनाशः “क्नसेरीश्वातः” ॥ (उणा–५२४) ॥ इत्याश ॥ ८ ॥ म्रियतेऽनेन मृत्युः पुंसि “भुजिमृङ्भ्यां युक्त्युकौ” ॥ (उणा–८०५) ॥ इति त्युक् ॥ ९ ॥ शत्रौ रक्षे च समे वर्तत इत्येवंशीलः समवर्ती ॥१०॥ कलयति क्षिपत्यसून् कालः ॥ ११ ॥ शीर्णावंघ्री अस्य शीर्णांघ्रिः, शनैश्चरेणास्य शापाऽवसोपितौ पादौ दग्धौ इति हि प्रसिद्धिः ॥१२॥ हरति प्राणान् हरिः ॥ १३ ॥ अन्तयतीति अन्तकः ॥१४॥ धर्मस्य राजा धर्मराजः ॥१५॥१८॥ यमनेन राजते यमराजः यमराड् इत्यपि ॥१६॥ श्राद्धे देवः श्राद्धदेवः पितृपतित्वात् ॥ १७ ॥ शमयति शमनः ॥१८॥ महिषो ध्वजोऽस्य महिषध्वजः महिषवाहनत्वात् ॥१९॥ कलिन्द्या सोदरः कालिन्दीसोदरः ॥२०॥

शेषश्चात्र–यमे तु यमुनाभ्राता ।
महासत्त्वः पुराणान्तः कालकूटः ॥

राधुः । कम्पादोऽपि ॥ १४ ॥ कर्बुरवर्णत्वात् कर्बुर, कर्वति गच्छतीति वा ' बाहुसरि ' ॥ ( उणा–४२२ ) ॥ इत्युर ॥ १५ ॥ निर्ऋतिर्दिक्पालस्याऽपत्यं नैर्ऋत ॥ १६ ॥ असृक् पिबति असृक्प ॥ १७ ॥

शेषश्चात्र–अथ राक्षसे ।

पलप्रिय कसापुत्र कर्बुरो नरविष्वण ।
आशिरो हनुप शरुर्कविधुरो जलमोहित ॥ १ ॥
उद्बुर स्वप्नसमारो रक्तग्रीव प्रघाहिक ।
सन्ध्याबलो रात्रिबलस्त्रिशिरा समितीपद ॥ २ ॥

वरुणस्त्वर्णवमन्दिर प्रचेता ।
जलव्याद पतिपाशिमेघनादा
जलकान्तारः स्यात् परञ्जनश्च ॥ १०२ ॥

वृणाति बिभर्ति वरुण "कृवृदारिभ्य उनः" ॥ ( उणा १९६ ) ॥ इत्युन ॥ १ ॥ अर्णवो मन्दिरमस्याऽर्णवमन्दिर ॥ २ प्रकृष्टं चेतोऽस्य, प्रचेतयते वा प्रचेता ॥ ३ ॥ जलानामसौ पतिर्जलस्याद्पति जलपति, यादःपति, यौगिकत्वात् अपां नाथ, यादोनाथ इत्यादय ॥ ४ ॥ ५ ॥ पाशोऽस्याऽस्तीति पाशी, यौगिकत्वात् पाशपाणिरित्यादय ॥ ६ ॥ मेघवद् नादोऽस्य मेघनाद ॥ ७ ॥ जलमेव कान्तारमस्य जलकान्तार ॥ ८ ॥ परं जयति परञ्जन ' विद जयगम " ॥ ( उणा–२७५ ) ॥ इत्यादिशब्दात् निपात्यते ॥ ९ ॥

शेषश्चात्र—

वरुणे तु प्रतीचीशो दुन्दुभ्युग्रामसप्तता ॥ १०२॥

श्रीद सितोदरकुहेससखाः पिशाच–
कीच्छायसुशिशिरऐलविलैकपिङ्ग ।
पौलस्त्यवैश्रवणरत्नकरा कुबेर–
यक्षौ नृधर्मधनदौ नरवाहनश्च ॥ १०३ ॥
कैलासौका यक्षधननिधिर्किंपुरुषेश्वर ।

श्रियं ददाति श्रीद ॥ १ ॥ सितमुदर यस्य सितोदर कुत्सितत्वात् ॥ २ ॥ कुत्स्यते विस्मापयते कुह ॥ ३ ॥ ईशस्य रुद्रस्य सखा ईशसख ॥ ४ ॥ पिशाच्य सन्त्यस्य पिशाचकी " आतातीसारपिशाचात् कश्चान्त " ॥ ७ । २ । ११ ॥ इति इन् ॥ ५ ॥ इच्छया यस्यास्य इच्छावसु ॥ ६ ॥ त्रीणि शिरांस्यस्य त्रिशिरा ॥७॥ ईश्यतेऽसाविति ईश्वरिद् विभवा ' ईशरविद् इत्यश " ॥ ( उणा–

८७९ ) ॥ तस्याऽपत्यं ऐडविड , तस्मै ऐलविल , इडविड् धनदमातेत्यन्ये ॥ ८ ॥ एक पिङ्गमस्य एकपिङ्गः, पिङ्गलैकनेत्रत्वात् , अत एव भागुरिणा हर्यक्ष उक्त ॥ ९ ॥ पुलस्तेरपत्यं वृद्ध पौलस्त्य " गर्गादेर्यञ् " ॥ ६ । १ । ४२ ॥ इति यञ् ॥ १० ॥ विश्रवसोऽपत्यं वैश्रवण " णश्च विश्रवसो विश्लुक् च वा " ॥ ६ । १ । ६५ ॥ इति साधु ॥ ११ ॥ रत्नानि करोऽस्य रत्नकर ॥ १२ ॥ कुत्सितं बेर शरीरमस्य कुत्सितत्वात् कुबेर , कुम्बत इति वा " कुगुपतिकथि " ॥ ( उणा-४२१ ) ॥ इति बेर ॥ १३ ॥ किन्नरादिष्वन्येऽपि यक्षजातित्वाद् यक्ष ॥१४॥ मनुष्यस्येव धर्म श्मश्रुलत्वादिरस्य नृधर्मा " द्विपदाद् धर्मादन् "॥७।३।१४१ ॥ इत्यन् समासान्त, एवं मनुष्यधर्माऽपि ॥ १५ ॥ धन ददाति धनद ॥ १६ ॥ नरो वाहनमस्य नरवाहन ॥ १७ ॥ १०३ ॥ कैलास ओकोऽस्य कैलासौका ॥ १८ ॥ यक्षाणां, धनस्य, निधीनां, किंपुरुषाणां च ईश्वर यक्षेश्वर, धनेश्वरा, निधीश्वर , किंपुरुषेश्वर , यौगिकत्वाद् गुह्यकेश , वित्तेशः, निधानेश , किंनरेश । राजराजस्तु राज्ञां यक्षाणां राजेति यौगिकत्वाद् यक्षेशः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

शेषश्चात्र—

धनदे निधनाख्यः स्याद् महासत्त्व प्रमोदितः ।
रत्नगर्भ उत्तराशाऽधिपति सत्यसंगरः ॥
धनकेलि सुप्रसन्न परिविस्तः ॥

## विमान पुष्पक

श्रीदस्येति शेष । पुष्पस्य तुल्य पुष्पकं " तस्य तुल्ये कः संज्ञाप्रतिकृत्यो " ॥ ७ । १ । १०८ ॥ इति क ॥ १ ॥

## चैत्ररथं वनं

चित्ररथेन निर्वृत्त चैत्ररथं " तेन निर्वृते च " ॥ ६ । २ । ७१ ॥ इत्यण् ॥ १ ॥

## पुरी प्रभा ॥ १०४ ॥

## अलका वसोकसारा

प्रकर्षेण भाति प्रभा ॥ १ ॥ १०४ ॥ अलति भूषयति अलका " दृकृनृ " ॥ (उणा-२७ ) ॥ इत्यक, क्षिपकादित्वादित्वाभाव ॥ २ ॥ वसुयुक्तानि ओकांसि सारमस्यां वसोकसारा, पृषोदरादित्वात् सलोपः ॥ ३ ॥

शेषश्चात्र—अलका पुनः । वसुप्रभा वसुसारा ॥

## सुतोऽस्य नलकूबर ।

यतो नड· कूबर रथानयमाऽस्य नलकूबरः ॥ १ ॥

वित्तं रिक्थं स्वापतेयं राः सारं विभवो वसु ॥ १०५ ॥

द्युम्नं द्रव्यं पृक्थमृक्थं स्वमृणं द्रविणं धनम् ।

हिरण्यार्थौ

विद्यते लभ्यते वित्तं "वित्तं धनप्रतीतम्" ॥ ४ । २ । ८२ ॥ इति धनस्य सत्तामात्र ॥ १ ॥ रिच्यते विभज्यते रिक्थम् 'नीनूरमि" ॥ (उणा-२२७) ॥ इति थक् ॥ २ ॥ स्वपतौ साधु स्वापतेयम् "पथ्यतिथि" ॥ ७ । १ । १६ ॥ इत्येयण् ॥ ३ ॥ राति ददाति राः स्त्रीपुंसलिङ्गः 'रातेर्डैः" ॥ (उणा-८६६) ॥ इति डैः ॥ ४ ॥ सरति स्थानान्तर सारं क्लीबलिङ्ग, पुंस्यपि धनपाठ, यदाह सारोऽर्थो द्रविणं धनम् । सारे स्थिरार्थे पम् ॥ ५ ॥ विभवति विभवः ॥ ६ ॥ वसते छादयति, वसनीभवगृहे वा वसु क्लीबलिङ्गः ॥ ७ ॥ १०५ ॥ द्युमि मीयते द्युम्नं "द्युसुनिभ्यो मादो किम्" ॥ (उणा-२६६) ॥ इति मः ॥ ८ ॥ द्रुरुप्य द्रव्यं "द्रोमभ्ये' ॥ ७ । १ । ११५ ॥ इति य ; यथा-द्रुमन्धि भाविर्भं दारु उपक्रम्यमान विधिरूपस्य भवति, तथा धनमपि विनियुज्यमानं विविधेष्टमाल्याद्युपभोगफलं भवतीति द्रव्यमुच्यत ॥ ९ ॥ पृणक्ति सयुज्यते पृक्थं "नीनूरमि' ॥ (उणा-२२७) ॥ इति बहुवचनात् थक् ॥ १० ॥ एव ऋच्यते स्तूयते ऋक्थम् ॥ ११ ॥ स्यते क्षिप्यते स्व पुंक्लीबलिङ्ग 'अन्येष्व" ॥ (उणा-५१४) ॥ इति वान्ता निपात्यते, स्वनतीति वा ॥ १२ ॥ ऋच्यते स्तूयते ऋक्णं 'पृषीक" ॥ (उणा-१८१) ॥ इति बहुवचनात् क्णक् ॥ १३ ॥ द्रवति द्रविणम् "द्रुदक्षि" ॥ (उणा-१९४) ॥ इति इनः ॥ १४ ॥ धनति धन्यत्वायते धन पुंक्लीबलिङ्गः धन्यत इति वा पचादित्वाद् अच् ॥ १५ ॥ ह्रियते हिरण्य 'हिरण्यपर्जन्यादय" ॥ (उणा-३८०) ॥ इति साधु ॥ १६ ॥ अर्यतेऽसौ अर्थ 'उषिकुषिगार्तिभ्यस्थ" ॥ (उणा-२२५) ॥ इति थः, अर्थ्यत इति वा ॥ १७ ॥

निधानं तु कुनाभि शेवधिर्निधि ॥ १०६ ॥

निधीयते एतदिति निधानं, युग्यादित्वात् कर्मणि अनट् ॥ १ ॥ कौ पृथिव्या नाभिरिव कुनाभि पुंसि ॥ २ ॥ शेते शेवं स्याप्यधनं 'शीङापो ह्रस्वश्च वा" ॥ (उणा-५०६) ॥ इति व सन्धीयतेऽस्मिन्निति शेवधि पुंसि 'भ्याप्याद्याधारे' ॥ ५ । ३ । ८८ ॥ इति किः, पुंस्त्रीलिङ्गयोर्वाचस्पतिः, यदाह निधि शेवधिरस्त्रियाम् ॥ ३ ॥ निधीयते धीयते निधि पुंसि ॥ ४ ॥ १०६ ॥

निधिविशेषानाह—

महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ ।

मुकुन्दकुन्दनीलाश्च चर्चाश्च निधयो नव ॥ १०७ ॥

महापद्माकृतित्वात् महापद्म ॥ १ ॥ पद्माकृतित्वात् पद्म पुंसि, वाच-स्पतिस्तु– पद्मोऽस्त्रियाम्, इत्याह ॥ १ ॥ शङ्खाकारत्वात् शङ्ख ॥ १ ॥ मकराकारत्वात् मकर ॥ १ ॥ कच्छपाकारत्वात् कच्छपः ॥ १ ॥ मुकुन्दवर्णत्वाद् मुकुन्दः ॥ १ ॥ कुन्दवर्णत्वात् कुन्दः ॥ १ ॥ नीलवर्णत्वाद् नील ॥ १ ॥ चर्च्यत इति चर्चा पुंसि ॥ १ ॥ जैनसमये तु नैसर्पाद्या निधय, यदवोचाम त्रिषष्टिशलाकापुरुषचरिते–

नैसर्पः पाण्डुकश्चाथ पिङ्गलः सर्वरत्नकः ।
महापद्मः कालमहाकालौ माणवशङ्खकौ ॥ १ ॥
तेषामेवाभिधानैस्तु तदधिष्ठायका सुरा ।
पल्योपमायुषो नागकुमारास्तन्निवासिन ॥ २ ॥ १०७ ॥

यक्ष पुण्यजनो राजा गुह्यको वटवास्यपि ।

इज्यत इति यक्ष "मावावधमि" ॥ ( उणा–५६४ ) ॥ इति स यक्ष्यत इति वा ॥ १ ॥ पुण्यश्चासौ जनश्च पुण्यजन ॥ २ ॥ राजते राजा ॥ ३ । गुह्य वित्त करोति गुह्यक, गूहतीति वा "कीचक" ॥ ( उणा–३३ ) । इत्यादिशब्दाद् निपात्यते ॥ ४ ॥ वटे वसतीत्येवंशीलो वटवासी ॥ ५ ॥

किंनरस्तु किंपुरुषस्तुरङ्गवदनो मयु ॥ १०८ ॥

कुत्सितो नर, अश्वमुखत्वात् किंनरः "किं क्षेपे" ॥ ३ । १ । ११० । इति समासः ॥ १ ॥ एवं किंपुरुषः ॥ २ ॥ तुरगस्येव वदनमस्य तुरङ्गवदन ॥ ३ ॥ मिनोति मयु "मिवहिचरिभ्यदिभ्यो वा" ॥ ( उणा–७२६ ) ॥ इत्यु ॥ ४ ॥ १०८ ॥

शम्भुः शर्व स्थाणुरीशान ईशो
रुद्रोड्डीशौ वामदेवो वृषाङ्क ।
कण्ठेकाल शङ्करो नीलकण्ठ
श्रीकण्ठोग्रौ धूर्जटिर्भीमभर्गौ ॥ १०९ ॥
मृत्युञ्जय पञ्चमुखोऽष्टमूर्ति
श्मशानवेश्मा गिरिशो गिरीश ।
पण्ड कपर्दीश्वर ऊर्ध्वलिङ्ग–
एकत्रिदृग्भालदृगेकपाद ॥ ११० ॥
मृडोऽट्टहासी घनवाहनोऽहि–

त्र्यक्षो विरूपाक्षविषान्तकौ च ।
महाव्रती वह्निहिरण्यरेता
शिवोऽस्थिधन्वा पुरुषास्थिमाली ॥ १११ ॥
स्याद् व्योमकेश शिपिविष्टभैरवौ
दिक्कृत्तिवासा भवनीललोहितौ ।
सर्वज्ञनाट्यप्रियखण्डपर्शवो
महापरा देवनटेश्वरा हर ॥ ११२ ॥
पशुप्रमथभूतोमापति पिङ्गजटेक्षण ।
पिनाकशूलखट्वाङ्गगङ्गाऽहीन्दुकपालभृत् ॥ ११३ ॥
गजपूषपुरानङ्गकालान्धकमखाऽसुहृत् ।

स सुखं तत्र भवति शंभु "शंसखयविप्राद् भुवो डु" ॥ ५ । २ । ८४ ॥ इति डु ॥ १ ॥ शृणाति संहरति शर्व 'कटिकटि—' ॥ ( उणा— ५०५ ) ॥ इति व ॥ २ ॥ तिष्ठति शाश्वत स्थाणु ' अजिस्थाशरीभ्यो णु "॥ ( उणा–७६८ ) ॥ इति णु ॥ ३ ॥ ईष्टे इत्येवंशील ईशान ताच्छील्ये शान ॥ ४ ॥ ईष्टे ईश ॥ ५ ॥ रोदनाद् रुद्र "ऋज्यजि–" ॥ (उणा–३८८) ॥ इति रक् सोऽरोदीद् यदरोदीत् तद् रुद्रस्य रुद्रत्वम् " इति श्रुते, रोदयत्यरिस्त्रीणा " खरशुर-" ॥ ( उणा–३९६ ) इति निपात्यते ॥ ६ ॥ उड्डीशतन्त्रागमविशेषं जानाति उड्डीशः पृषोदरादित्वात् ॥ ७ ॥ वाम श्रेष्ठो देवो वामदेव, संसारवामत्वाद् वा ॥ ८ ॥ वृषोऽङ्क चिह्नमस्य वृषाङ्क, यौगिकत्वाद् वृषलाञ्छन इत्यादय ॥ ९ ॥ कण्ठे कालोऽस्य कण्ठे काल ' अमूर्धमस्तकात् स्वाङ्गादकामे " ॥ ३ । २ । २२ ॥ इति सप्तम्या अलुप् ॥ १० ॥ शं सुखं करोति शङ्कर "हेतुतच्छीलानुकूले- ॥ ५ । १ । १०३ ॥ इति ट ॥ ११ ॥ नीलः कण्ठोऽस्य नीलकण्ठ ॥ १२ ॥ श्री शोभा कण्ठेऽस्य श्रीकण्ठ तथाहि महाभारते–

इन्द्रेण वज्र पुरा क्षिप्त वज्रं श्रीकण्ठकाङ्क्षिणा ।
दग्ध्वा कण्ठं तु ते पार्थ । ततः श्रीकण्ठता मम ॥ १ ॥ १३ ॥

उच्यति क्षुधा समवैति ओषति पुरं दहतीति वा उग्रः ' खरशुर- ॥ ( उणा–३९६ ) ॥ इति रान्तो निपात्यते ॥ १४ ॥ धूम्रा जटास्तु अस्य धूर्जटि पृषोदरादित्वात् धूर्गङ्गा जटयो यस्य अस्येति वा ' धूर्म रूप च यत् तस्य तेन धूर्जटिरुच्यते ' इति वा ॥ १५ ॥ बिभ्यत्यस्माद् भैरवस्माद् भीमः ' भियः षोऽन्तश्च वा ॥ ( उणा–३४४ ) ॥ इति म ॥ १६ ॥ बिभर्ति धारयति भर्ग ' गम्यमि ' ॥ ( उणा–९२ ) ॥ इति ग, भज्यन्तेऽनेन भस्म

कालादयो वा ॥ १७ ॥ १०९ ॥ मृत्युं जयति मृत्युञ्जय "भृजि" ॥ ५। १। ११२ ॥ इत्यादिना सञ्ज्ञायां स्व ॥ १८ ॥ पञ्च मुखानि सद्योजातवामदेवाऽघोरतत्पुरुषेशानलक्षणानि अस्य पञ्चमुख ॥ १९ ॥ अष्टौ मूर्तय क्षितिजलपवनहुताशनयजमानाकाशसूर्यचन्द्रलक्षणा अस्य अष्टमूर्ति ॥ २० ॥ श्मशान वेश्माऽस्य श्मशानवेश्मा ॥ २१ ॥ गिरिरस्यास्ति गिरिशः "लोमपिच्छादेः शेलम्" ॥ ७। २। २८ ॥ इति श, गिरौ शेते, गिरिं श्यति उपभोगेन तनू करोतीति वा ॥ २२ ॥ गिरेरीशो गिरीश ॥ २३ ॥ ऋषिभि शापेन पातितलिङ्गत्वात् पञ्च, यद्वामनपुराणे—

ततस्त्वृषयो दृष्ट्वा भार्गवाङ्गिरसो मुने ।।
क्रोधभाजोऽब्रुवन् सर्वे लिङ्गोऽस्य पततां भुवि ॥ १ ॥ २४ ॥

कपर्दोऽस्याऽस्ति कपर्दी ॥ २५ ॥ ईष्टे इत्येवंशील ईश्वर "स्थेशभास" ॥ ५। २। ८१ ॥ इति वर ॥ २६ ॥ ऊर्ध्वं लिङ्गमस्य ऊर्ध्वलिङ्ग, नकुलीशमूर्तौ ॥ २७ ॥ एका तिलश्च दृक्षो यस्य स तथा एकदृक्, अर्धनारीश्वरमूर्तौ महेश्वरार्धस्य एकदृक्त्वात्, त्रिदृक् ललाटे नेत्रयोगात्, यौगिकत्वात् एकनेत्र, विषमनेत्र ॥ २८ ॥ २९ ॥ भाले दृगस्य भालदृग् ॥ ३० ॥ अर्धनारीश्वरमूर्तौ एकः पादोऽस्य एकपात् "सुसंख्यात्" ॥ ७। ३। १५० ॥ इति पादस्य पाद्भाव । एकत्रिदृगादीनां त्रयाणां द्वन्द्व ॥ ३१ ॥ ११० ॥ मृडति सुखयति मृडः ॥ ३२ ॥ अट्टहासोऽस्याऽस्ति अट्टहासी ॥ ३३ ॥ घना मेघा वाहनमस्य घनवाहन, यौगिकत्वात् अभ्रवाहनादयोऽपि ॥ ३४ ॥ अहि शेषनागो बुध्नेऽस्य भूमूर्तेः अहिर्बुध्न, पृषोदरादित्वाद् रेफागमः, द्वाभ्यां पृथक्पदाभ्यां प्रथमैकवचनान्ताभ्यां एक नामेत्यन्ये, विभक्त्यन्तरेऽपि यथा–"अहये बुध्नाय नमो बुध्नाय नमो नमोऽस्तु गणपतये"॥३५॥ विरूपाणि विषमत्वात् अक्षीण्यस्य विरूपाक्षः "सक्थ्यक्ष्णः स्वाङ्गे" ॥ ७। ३। १२६॥ इति टः ॥३६॥ विषमन्तयति विषान्तक, समुद्रमथने विषभक्षणात् ॥३७॥ महाव्रत कापालिकलिङ्ग विद्यतेऽस्य महाव्रती ॥ ३८ ॥ वह्निहिरण्यशब्दाभ्यां परो रेत शब्दः वह्निरेता वह्नौ रेतोऽस्येति कृत्वा, देव्या सोढुमशक्यत्वात् अग्नौ हि क्षिप्त रेत, अत एव अग्निभू कुमारः ॥ ३९ ॥ हिरण्यं रेतोऽस्य हिरण्यरेताः, अग्निमूर्तिना वसुना हिरण्यं प्रसूतमिति ॥ ४० ॥ शिवहेतुत्वात् शिवः, शेते वसति प्रलये जगदस्मिन्निति वा 'शीङ्पो ह्रस्वश्च वा" ॥ (उणा–५०६) ॥ इति व ॥ ४१ ॥ अस्थिमय धन्वाऽस्य अस्थिधन्वा ॥ ४२ ॥ पुरुषास्थीनि मल्लते धारयतीत्येवंशीलः पुरुषास्थिमाली ॥ ४३ ॥ १११ ॥ व्योम द्यौः के मूर्धनि शेते ऽस्य व्योमकेशः "दीर्घे द्यौः समवतस" इति श्रुते, गङ्गां धारयितु व्योमव्यापिनः केशा अस्येति वा ॥ ४४ ॥ शिविर्नाम राजा नारायणेन हत स भैश्वरस्याऽत्यन्तं प्रिय इति तस्याऽस्थीनि शिरसि धृतानि, अतः पिष्टोऽस्म्यादिरूपेण शिविरत्र शिपिविष्ट, पृषोदरादित्वात्; शिपिरिन्द्रलुप्तपातलेन विष्टो व्याप्त इति

लघिमा वशितेशित्वं प्राकाम्यं महिमाऽणिमा ।
यत्रकामावसायित्वं प्राप्तिरैश्वर्यमष्टधा ॥ ११६ ॥

लघोर्भावो लघिमा महानपि लघुर्भूत्वा इषीकतूल इव आकाशे विहरति ॥ १ ॥ वशिनो भावो वशिता भूतानि पृथिव्यादीनि भौतिकानि गोघटादीनि तेषु वशी स्वतन्त्रो भवति तेषां स्ववश्यः, तत्कारणतन्मात्रपृथिव्यादिपरमाणुवशी कारात् तत्कार्यवशीकारः तेन तानि यथाऽवस्थापयति तथाऽवतिष्ठन्ते इत्यर्थः ॥१॥ इट् इत्येवमीश इशी इशिनो भाव इशित्वं, तेषां भूतभौतिकानां विजितमूलप्रकृतिः सन् य उत्पादो यो विनाशो यश्च यथावदवयवसंस्थानं तेषामीष्टे ॥ १ ॥ प्रकृष्टः कामोऽस्य प्रकामस्तद्भावः प्राकाम्यं इच्छानभिघातः नास्य भूतस्वरूपैर्मूर्त्यादिभिरिच्छाऽभिहन्यते भूमावुन्मज्जति निमज्जति यथोदके ॥ १ ॥ महतो भावो महिमा अल्पोऽपि नागनगनगरगगनपरिमाणो भवति ॥ १ ॥ अणोर्भावोऽणिमा महानपि भवत्यणुः ॥ १ ॥ यत्र कामस्तत्राऽवसातीत्यवशीलो यत्रकामावसायी तद्भावस्तत्त्वं सत्यसङ्कल्पता विजितगुणार्थतत्त्वो हि यथायथं तथा सङ्कल्पयति, तत्तदर्थं प्रयोजनाय कल्पते विषमप्यमृतकार्ये सङ्कल्प्य भोजयन् जीवयतीति ॥ १ ॥ प्रापणं प्राप्तिः सर्वे भावाः संनिहिता भवन्ति तस्य, तद्यथा—भूमिष्ठ एवाङ्गुल्यग्रेण चन्द्रमसं स्पृशति ॥१॥ इत्यैश्वर्यमष्टप्रकारं भवति ॥ ११६ ॥

गौरी काली पार्वती मातृमाता-
ऽपर्णा रुद्राण्यम्बिका त्र्यम्बकोमा ।
दुर्गा चण्डी सिंहयाना मृडानी
कात्यायन्यौ दक्षजाऽऽर्या कुमारी ॥ ११७ ॥
सती शिवा महादेवी शर्वाणी सर्वमङ्गला ।
भवानी कृष्णमेनाकस्वसा मेनाद्रिजेश्वरा ॥ ११८ ॥
निशुम्भशुम्भमहिषमथनी भूतनायिका ।

गौरवर्णत्वाद् गौरी ॥ १ ॥ संहारमूर्तौ कृष्णवर्णत्वात् काली ॥ २ ॥ पर्वतस्यापत्यं पार्वती ॥ ३ ॥ मातॄणां ब्राह्म्यादीनां माता मातृमाता ॥ ४ ॥ न विद्यन्ते पर्णान्यस्या अपर्णा तपसि पर्णानामप्यनशनात् ॥ ५ ॥ रुद्रस्य भार्या रुद्राणी 'इन्द्रवरुण' ॥ ४ । १ । ४९ ॥ इत्यादिना ङीप्, आनुगागमः ॥ ६ ॥ अम्बैव अम्बिका जगन्मातृत्वात् ॥ ७ ॥ त्रीण्यम्बकानि नेत्राण्यस्य त्र्यम्बकः ॥ ८ ॥ भवतीति उमा "अवतेर्हस्वश्च वा" ॥ ( उणा–१४२ ) ॥ उ इति मा, उ मति मात्रा तपसः निषिद्धेति वा ॥ ९ ॥ दुःखेन गन्तुं शक्यतेऽस्यां दुर्गा 'सुदुरोरधिकरणे' ॥ ५ । १ । ११२ ॥ इति वान्तो निपात्यते ॥ १ ॥ चण्डी, कोपनत्वात् यथा

दोणादे " ॥ २ । ४ । ३१ ॥ इति ङी ॥ ११ ॥ सिंहो यानमस्या सिंहयाना, यौगिकत्वात् सिंहवाहनाऽपि ॥ १२ ॥ मृडस्य भार्या मृडानी ॥ १३ ॥ कतस्या ऽपत्य वृद्धं कात्यायनी, गर्गादित्वाद् यञि " लोहितादिशकलान्तात् " ॥ २ । ४ । ६८ ॥ इति ङी , टायन् चाऽन्त ॥ १४ ॥ दक्षाज्जाता दक्षजा, यौगिकत्वाद् दाक्षायणी ॥ १५ ॥ अयत इत्यार्या ॥ १६ ॥ कुमारी, अवस्थाभेदात ॥ १७ ॥ ११७ ॥ सतीति पूर्वजन्मनि दक्षपुत्रीत्वे नाम, दक्षजेतिवत् यद् वामनपुराणे—

प्राग्वस्त्वया समाख्याता मृता दक्षात्मजा सती ।
सा जाता हिमवत्पुत्रीत्येव मे वक्तुमर्हसि ॥ १ ॥

सत्यशीलत्वात् सती ॥१८॥ शिवा, श्वत श्रेयस्करीत्वात्, पुयोगे तु शिवस्य स्त्री शिवी ॥१९॥ महादेवस्य भार्या महादेवी ॥२०॥ शर्वस्य भार्या शर्वाणी ॥२१॥ सर्वाणि मङ्गलान्यस्या सर्वमङ्गला ॥ २२ ॥ भवस्य भार्या भवानी ॥ २३ ॥ कृष्णमेना कयो स्वसा कृष्णस्वसा, नन्दपुत्रीत्वात् मेनाकस्वसा हिमाद्रिपुत्रीत्वात् ॥२४॥२५॥ मेनाऽद्रिभ्यां जाता मेनाद्रिजा मेनाजा, अद्रिजा ॥ २६ ॥ २७ ॥ इष्ट इत्येवशीला ईश्वरा " स्थेश " ॥ ५ । २ । ८१ ॥ इति वर , ईश्वरीति तु " अश्नोतेरीच्चादे " ॥ ( उणा–४४२ ) ॥ इति वरटि ङ्यो सिद्धम , ईश्वरस्य भार्येति वा ॥ २८ ॥ ११८ ॥ निशुम्भ शुम्भ महिष मथति निशुम्भमथनी, शुम्भमथनी, महिषमर्दनी ॥ २९ ॥ ३० ॥ ३१ ॥ भूतानां नायिका भूतनायिका ॥ ३२ ॥

शेषश्चात्र—

गौतमी कौशिकी कृष्णा तामसी बाभ्रवी जया ।
कालरात्रिर्महामाया भ्रामरी यादवी वरा ।
बर्हिध्वजा शूलधरा परमब्रह्मचारिणी ॥ १ ॥
अमोघा विन्ध्यनिलया षष्ठी कान्तारवासिनी ।
जाङ्गुली बदरीवासा वरदा कृष्णपिङ्गला ॥ २ ॥
दृषद्वतीन्द्रभगिनी प्रगल्भा रेवती तथा ।
महाविद्या सिंहिकाली रक्तदन्त्येकपाटला ॥ ३ ॥
एकपर्णा बहुभुजा नन्दपुत्री महाजया ।
भद्रकाली महाकाली योगिनी गणनायिका ॥ ४ ॥
हासा भीमा प्रकूष्माण्डी नदिनी वारुणी हिमा ।
भाम्ला विजया क्षेमा मानस्तोका कुशावती ॥ ५ ॥
चारणा च पितृगणा स्कन्दमाता धनाञ्जनी ।
गान्धर्वी कर्बुरा गार्गी सावित्री ब्रह्मचारिणी ॥ ६ ॥
कोटिश्रीमन्दरावासा केशी मलयवासिनी ।
कात्यायनी विशालाक्षी किराती गोकुलोद्भवा ॥ ७ ॥

लम्बनसी नारायणी घोरा शाकम्भरीश्वरी ।
प्रवीणकर्णी मुण्डा च नीलवर्णोग्रधारिणी ॥ ८ ॥
अष्टादशभुजा पौत्री शिवदूती यमस्वसा ।
सुनन्दा विकचा लम्बा प्रयन्ती नकुला कुला ॥ ९ ॥
विलक्षा नन्दिनी नन्दा मन्दयन्ती निरञ्जना ।
कालञ्जरी हासमुखी विकराला कराालिका ॥ १० ॥
विरजा पुरसा जारी बहुपुत्रा कुलेश्वरी ।
ईन्द्री कालदमनी दधुरा कुलदेवता ॥ ११ ॥
गौरी कुब्जा महारौद्री कालरूमा महानिशा ।
वत्सदवत्सला पुत्री हीरी क्षेमङ्करी प्रभा ॥ १२ ॥
मारी हैमवती चापि गोत्रा शिखरवासिनी ॥

तस्या सिंहो मनस्तालः

तस्या गौर्या , सिंहो वाहन मनस्ताडयति कम्पयति मनस्तालः ॥ १ ॥

सख्यौ तु विजया जया ॥ ११९ ॥

गौर्या सख्यौ, विजयते विजया ॥ १ ॥ जयति जया ॥ १ ॥ ११९ ॥

चामुण्डा चर्चिका चर्ममुण्डा मार्जारकर्णिका ।
कर्णमोटी महागन्धा भैरवी च कपालिनी ॥ १२० ॥

चमत्यत्ति प्रलये जगत् चामुण्डा 'चिचण्डेरुण्ड' ॥ ( उणा—१७६ ) ॥ इत्यादिशब्दात् साधु चण्डमुण्डदैत्यमारणाद् वा यदाह—

यस्माच्चण्डं च मुण्डं च गृहीत्वा त्वमुपागता ।
चामुण्डेति ततो लोके ख्याता देवी भविष्यसि ॥ १ ॥ १ ॥

चर्च्यते पूज्यते चर्चा चर्चैव चर्चिका ॥ २ ॥ चर्म मुण्डेऽस्या चर्ममुण्डा ॥ ३ ॥ मार्जार कर्णिकाऽस्याः मार्जारवत् कर्णावस्या इति वा मार्जारकर्णिका ॥ ४ ॥ कर्णान् मोटयति दैत्यानां कर्णमोटी ॥ ५ ॥ महान् गन्धोऽस्या महागन्धा दैत्यासृग्विस्रत्वात् ॥ ६ ॥ भैरवस्य भार्या भैरवी ॥ ७ ॥ कपालमस्त्यस्या कपालिनी ॥ ८ ॥

क्षेपमात्र—

चामुण्डायां महाचण्डी चण्डमुण्डाऽपि ॥ १२० ॥

हेरम्बो गणाधिपेश पर्शुपाणिर्विनायक ।
द्वैमातुरो गजास्यैकदन्तौ लम्बोदराखुगौ ॥ १२१ ॥

प्रस्तुहे रम्बते शब्दायते हेरम्ब, पृषोदरादित्वात् देश्योऽपि बहुषु संस्कृते

प्रयुक्तत्वाद् निपद्द ॥ १ ॥ गणानां विघ्नानां चेशो गणेश , विघ्नेश , यौगिकत्वात् प्रमथाधिप , विघ्नराज इत्यादय ॥ २ ॥ ३ ॥ पशु पाणावस्य पशुपाणि यौगिकत्वात् परशुधर इत्यादय ॥ ४ ॥ विगतो नायको नियन्ताऽस्य विनायक , यद् वामनपुराणे–

नायकेन मया देवि ' विनोऽभूतोऽपि पुत्रक ।
यस्माज्जातस्ततो नाम्ना भविष्यति विनायक ॥ १ ॥

अन्येषां विनेता वा ॥ ५ ॥ द्वयोर्मात्रोरपत्यं द्वैमातुर " सख्यासंभद्राद् मातुर्मातुर् च " ॥ ६ । १ । ६६ ॥ इत्यण् ॥ ६ ॥ गजस्येवाऽऽस्यमस्य गजास्य ॥ ७ ॥ गुहोत्पाटितदन्तत्वात् एको दक्षिणो दन्तोऽस्य एकदन्त ॥ ८ ॥ लम्बमुदरमस्य लम्बोदर ॥ ९ ॥ आखुना गच्छति आखुग , यौगिकत्वाद् मूषिकरथोऽपि ॥ १० ॥

शेषश्चात्र— अथाखुगे ।

पृथिगम पृश्निभ्यो द्विशरीरस्त्रिधातुक ।
हस्तिमल्लो विषाणान्त ॥ १२१ ॥

स्कन्द स्वामी महासेन सेनानी शिखिवाहन ।
पाण्मातुरो ब्रह्मचारी गङ्गोमाकृत्तिकासुत ॥ १२२ ॥
द्वादशाक्षो महातेजा कुमार षण्मुखो गुह ।
विशाख शक्तिभृत् क्रौञ्चतारकारि शराग्निभू ॥ १२३ ॥

स्कन्दत्यरीन् स्कन्द , स्कन्नं शुष्कं रेतोऽस्य वा ॥ १ ॥ स्वमस्याऽस्तीति स्वामी " स्वाद् मिन्नीशे ' ॥ ७ । २ । ४९ ॥ इति मिन् दीर्घश्च ॥ २ ॥ महती सेनाऽस्य महासेन ॥ ३ ॥ सेनां नयति सेनानी ॥ ४ ॥ शिखी वाहनमस्य शिखिवाहन यौगिकत्वाद् मयूररथ इत्यादय ॥ ५ ॥ षण्णां मातृणामपत्यं षाण्मातुर ॥ ६ ॥ ब्रह्म चरतीत्येवंशीलो ब्रह्मचारी ॥ ७ ॥ गङ्गाया , उमाया , कृत्तिकानां च सुत गङ्गासुत उमासुत कृत्तिकासुत , यौगिकत्वात् गाङ्गेय पार्वतीनन्दन बाहुलेय इत्यादय ॥ ८ ॥ ९ ॥ १० ॥ १२२ ॥ द्वादशाऽक्षीणि अस्य द्वादशाक्षः षण्मुखत्वात् ॥ ११ ॥ महत् तेजोऽस्य महातेजा ॥ १२ ॥ कामयते मन्ये कुमार " कमेरत उच " ॥ ( उणा–४०९ ) ॥ इत्यार , कुत्सितो ब्रह्मचारित्वाद् मार स्मरोऽस्येति वा ॥ १३ ॥ षड् मुखान्यस्य षण्मुखः अग्नि पर्वतीनां षण्णां स्तनपानत्वात् ॥ १४ ॥ गूहति सेनां गुह ॥ १ ॥ विशाखासु जातो विशाख भगुसम्प्रादेरण् " ॥ ६ । ३ । ८९ ॥ इत्यण् तस्य " बहुलमनुराधा– ' ॥ ६ । ३ । १०७ ॥ इति लुप् ॥ १६ ॥ शक्तिमायुधं बिभर्ति शक्तिभृत् , यौगिकत्वात् शक्तिपाणिरित्यादय ॥ १७ ॥ क्रौञ्चस्य गिरेः,

कपाली जृम्भको लिम्पः स्थूलोऽकर्णविकर्णको ।
लम्बकर्णो महाग्रीवो हस्तिकर्णः प्रमर्दनः ॥ ५ ॥
ज्वालाजिह्वो धमधमः सहासः क्षेमकः पुसः ।
भैरवको ग्राहकः सिद्धो भीरुण्डो मकराननः ॥ ६ ॥
पिण्डितार्धो महाकुण्डो नखारिरहिलोचनः ।
कूणकुञ्चो महाजानुः कोटकोटिः शिवङ्करः ॥ ७ ॥
वेतालो लोमवेतालस्तामसः सुमहाकपिः ।
उत्तुङ्गो गृध्रजम्बूकः कण्ठानककलानकौ ।
धमग्रीवो मलोन्मादो ज्वालावक्त्रो विहुण्डनः ।
हृदया धत्तुरः पाण्डुमुण्डिरित्यादयोऽपरे ॥ ९ ॥ १२४ ॥

द्रुहिणो विरञ्चिर्द्रुघणो विरिञ्चः
परमेष्ठ्यजोऽष्टश्रवणः स्वयम्भूः ।
कमनः कविः सात्त्विकवेदगर्भौ
स्थविरः शतानन्दपितामहौ कः ॥ १२५ ॥
धाता विधाता विधिवेधसौ ध्रुवः
पुराणगो हंसगविश्वरेतसौ ।
प्रजापतिर्ब्रह्म चतुर्मुखो भवा-
न्तकृद् जगत्कर्तृसरोरुहासनौ ॥ १२६ ॥
शम्भुः शतधृतिः स्रष्टा सुरज्येष्ठो विरिञ्चनः ।
हिरण्यगर्भो लोकेशो नाभिपद्मात्मभूरपि ॥ १२७ ॥

द्रुघ्यत्यसुरेभ्यो द्रुहिणः "द्रुहुद किद्" ॥ (उणा–१९८) ॥ इतीण ॥ १ ॥ विरिञ्चे सूते विरिञ्चिः "वौ रिचे स्वराद् नोऽन्तश्च" ॥ ( उणा–६१७ ) ॥ इति इः ॥ २ ॥ द्रुहन्यतेऽनेन द्रुघणः कुठारः, द्रुघण इव द्रुघणः, संसारच्छेदकत्वात् ॥ ३ ॥ विरिञ्चे सूते, विविधैर्हंसै रिच्यते उज्झते वा विरिञ्चः पृषोदरादित्वात् साधुः ॥ ४ ॥ परमे पदे तिष्ठतीति परमेष्ठी "परमात् किद्" ॥ ( उणा–६२८ ) ॥ इतीणि "भीरु-ष्ठानादयः" ॥२।३।३३॥ इति षत्वम्, सप्तम्या अलुप् च ॥ ५ ॥ न जायत इति अजः ॥ ६ ॥ अष्टौ श्रवणान्यस्य, चतुर्मुखत्वात् अष्टश्रवणः ॥ ७ ॥ स्वयं भवति स्वयम्भूः ॥ ८ ॥ कामयतेऽभिलष्यति सृष्टिं कमनः ॥ ९ ॥ कवते वेदान् कविः ॥ १० ॥ सत्त्वानि प्रयोजनमस्य सात्त्विकः ॥ ११ ॥ वेदा गर्भेऽस्य वेदगर्भः ॥१२॥ स्थविरः, पुराणपुरुषत्वात् ॥ १३ ॥ शतमानन्दानामस्य शतानन्दः ॥ १४ ॥ पितॄणामपि पिता पितामहः "पित्रोडामहट्" ॥६।२।६२॥१५॥ कायतीति कः ॥१६॥

कृष्णवर्णत्वात् कृष्णः ॥ २७ ॥ विकुण्ठाया इदमपत्यं वैकुण्ठः, यद् विष्णुपुराणे—

चाक्षुषे चान्तरे देवो वैकुण्ठः पुरुषोत्तमः ।
विकुण्ठायामसौ जज्ञे वैकुण्ठैर्दैवतैः सह ॥ १ ॥

विकुण्ठेरादिवराह्या अपत्यमिति वा विकुण्ठितासिंहादिविक्रमो वा, संहितासु तथा दर्शनात् ॥ २८ ॥ पद्मे शेते पद्मेशयः "शयवासिवासेष्वकालात्" ॥ ३।२।२५ ॥ इति सप्तम्या अलुक् ॥ २९ ॥ पद्मं नाभावस्य पद्मनाभः "नाभेर्नाम्नि" ॥ ७।३। १२४ ॥ इत्यच् समासान्तः ॥ ३० ॥ वृषो धर्मः कपिर्वराहस्ताद्रूप्याद् वृषाकपिः, यत् पुराणम्—

कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते ।
तस्माद् वृषाकपिं प्राह काश्यपो मां प्रजापतिः ॥ १ ॥

वृषं दानवमाकम्पितवान् वा पृषोदरादित्वात् ॥ ३१ ॥ मायाः लक्ष्म्याः धवो भर्ता माधवः मधोरपत्यं वा ॥ ३२ ॥ वसुदेवस्याऽपत्यं वासुदेवः, वृष्णित्वाद् अण् ॥ ३३ ॥ विश्वं बिभर्ति विश्वम्भरः "संज्ञायां भृतॄवृजि" ॥५।१।११२॥ इति खच् ॥ ३४ ॥ श्रियं धरति श्रीधरः ॥ ३५ ॥ विश्वं रूपमस्य विश्वरूपः ॥ ३६ ॥ १२९ ॥ दाम उदरेऽस्य दामोदरः बाल्ये हि चापल्याद् दाम्ना बद्धोऽभूत् ॥ ३७ ॥ शूरस्याऽपत्यं वृद्धं शौरिः, बाह्वादित्वाद् इञ् ॥ ३८ ॥ सना भवः सनातनः अव्ययत्वात् तनट् ॥ ३९ ॥ विष्णाति दैत्यान् विष्णुः "पुषाद्रपि" ॥ (उणा—३२९) ॥ इति नुः ॥ ४० ॥ पीतमम्बरमस्य पीताम्बरः ॥ ४१ ॥ मार्जयति पापं मार्जः, मां लक्ष्मीमर्जयतीति वा ॥ ४२ ॥ जयति दैत्यान् जिनः ॥ ४३ ॥ कुं पृथ्वीं मोदयति कुमोदकः ॥ ४४ ॥ त्रयो विविधाः क्रमाः सृष्टिस्थितिप्रलयलक्षणाः सङ्क्रमोऽस्य त्रिविक्रमः त्रिषु लोकेषु विक्रमः पादविन्यासोऽस्येति वा ॥ ४५ ॥ जहाति मुञ्चति पादाङ्गुष्ठाद् गङ्गामिति जह्नुः "हो जह् च" ॥ (उणा—७८०) ॥ इति नुः ॥४६॥ चत्वारो भुजा अस्य चतुर्भुजः ॥ ४७ ॥ पुनर्वसोर्जातः पुनर्वसुः "बहुलमनुराधा" ॥६।३।१०७॥ इति भाऽणो लुप् पुनर्वसुरस्येति वा ॥ ४८ ॥ शतमावर्ता अस्य शतावर्तः ॥ ४९ ॥ गदस्याऽग्रजो गदाग्रजः ॥ ५० ॥ स्वतो भवति स्वभूः ॥ ५१॥१३०॥ मुञ्जवन्-केशयुक्तत्वात् मुञ्जकेशी, यत् पुराणम्—

स घस्त्रेभसाऽऽविष्टो नारायणाभिमुख्यया ।
बभूव मुञ्जवर्णश्च ततोऽसौ मुञ्जकेशवान् ॥ १ ॥ ५२ ॥

वनमालाऽस्त्यस्य वनमाली शिखादित्वादिन् ॥ ५३ ॥ पुण्डरीके इवाऽक्षिणी अस्य पुण्डरीकाक्षः ॥ ५४ ॥ बिभर्ति विश्वं बभ्रुः हनिया ॥ (उणा—७२२) ॥ इति कुः, द्वित्वं च ॥ ५५ ॥ मायाभरा बिन्दवो लाञ्छनमस्य धाम बिन्दुः ॥ ५६ ॥ विधति सृजति वेधाः ॥ ५७ ॥ पृश्नि शृङ्गमस्य पृश्निशृङ्गः ॥५८॥ धरणीं धरति धरणीधरः, यौगिकत्वात् महीधरादयः ॥ ५९ ॥ आत्मनो भवति

मदनो जराभीरुरनङ्गमन्मथौ
कमनः कलाकेलिरनन्यजोऽङ्गजः ।
मधुदीपमारौ मधुसारथिः स्मरो
विषमायुधो दर्पककामहृच्छयाः ॥ १४१ ॥
प्रद्युम्नः श्रीनन्दनश्च कन्दर्पः पुष्पकेतनः ।

मदयति मदनः ॥ १ ॥ जराया भीरुः जराभीरुः ॥ २ ॥ न विद्यतेऽङ्गमस्य अनङ्गः ॥ ३ ॥ मथ्नाति चित्तं रागिणां मन्मथः "कमिमथिभ्यां मन्मनौ च" ॥ (उणा–१२) ॥ इति अः, द्विर्वचनस्य च मनादेशः, मनो मथ्नातीति वा, पृषोदरादित्वात्, मननं मन् चेतना, मनो मथ्नः मन्मथ इति वा ॥ ४ ॥ कामयते शृङ्गारं कमनः "रम्यादिभ्यः कर्तरि" ॥ ५।३।१२६ ॥ इत्यनट् ॥ ५ ॥ कलासु केलिरस्य कलाकेलिः ॥ ६ ॥ न मनसोऽन्यस्माज्जायते अनन्यजः ॥ ७ ॥ अङ्गाज्जायते अङ्गजः ॥ ८ ॥ मधौ वसन्ते दीप्यते मधुदीपः ॥ ९ ॥ मारयति मारः ॥ १० ॥ मधुः सारथिरस्य मधुसारथिः ॥ ११ ॥ स्मरन्त्यनेन स्मरः "पुन्नाम्नि घः" ॥ ५।३।१३० ॥ १२ ॥ विषमाणि आयुधान्यस्य विषमायुधः, पञ्चेषुत्वात् ॥ १३ ॥ दर्पयति दर्पकः ॥ १४ ॥ कामयतेऽनेन कामः "व्यञ्जनाद् घञ्" ॥५।३।१३२॥ कामोऽस्त्यस्य वा ॥ १५ ॥ हृदि शेते हृच्छयः, यौगिकत्वाद् मनसिशयः ॥ १६ ॥ १४१ ॥ प्रकृष्टं द्युम्नं बलमस्य प्रद्युम्नः ॥ १७ ॥ श्रिया लक्ष्म्या नन्दनः श्रीनन्दनः, रुक्मिण्याः श्रियोऽवतारत्वात् ॥ १८ ॥ कं अव्ययं कुत्सायाम् कः दर्पोऽस्य कन्दर्पः ॥ १९ ॥ पुष्पाणि केतनमस्य पुष्पकेतनः, यौगिकत्वात् पुष्पध्वजः ॥ २० ॥

शेषश्चात्र–

कामे तु यौवनोद्भेदः शिखिमुरुर्महोत्सवः ।
शमान्तकः सर्वभन्वी रागरज्जुः प्रकर्षकः ॥ १ ॥
मनोदाही मधमथः ॥

कन्दर्पेऽस्मो शरसोऽपि ॥

पुष्पाण्यस्येषुचापास्त्राणि

अस्य कामस्य पुष्पाणि इषुर्बाणः, चापं धनुः अस्त्रमायुधम्, तेन पुष्पेषुः, कुसुमबाणः पुष्पचापः, कुसुमधन्वा पुष्पास्त्रः, कुसुमायुधः कामः स्यात्; इषुचापयोः सत्यप्यस्त्रत्वे भेदेन ग्रहणम् लोके तथाप्यवहारात् ॥

अरी शंबरशूर्पकौ ॥ १४२ ॥

अरिः शम्बरः शृणोतीति कृत्वा, शूर्पयति पर्यायाणि मिमीते शूर्पकश्च तेन शम्बरारिः, शूर्पकारिः ॥ १४२ ॥

तन्त्रायत्तवशाधीनच्छन्दवन्त परात् परे ॥ २० ॥

नाथो नियन्ताऽस्त्यस्य नाथवान् ॥ १ ॥ निहन्यते निघ्न स्यादित्वात् के "हनो घ्नि घ" ॥ २।१।११२॥ इति घ्नादेश ॥ २ ॥ गृह्यते गृह्य "पदास्वैरि बाह्यापक्ष्ये ग्रह" ॥५।१।४४॥ इति क्यप् स्वार्थे के गृह्यक ॥३॥ परशब्दात् परे तन्त्रादय तेन परस्य तन्त्र आयत्त परतन्त्र, परस्यायत्त परायत्तः, परस्य वश परवश, परस्याधीन पराधीन, परस्य च्छन्दोऽस्य परच्छन्द, परो नियन्ताऽस्त्यस्य परवान् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ २० ॥

शेषश्चात्र—परतन्त्रे वशायत्तावधीनोऽपि ।

लक्ष्मीवान् लक्ष्मण श्रील

लक्ष्मीरस्त्यस्य लक्ष्मीवान्, लक्ष्मण "लक्ष्म्या अन" ॥ ७।२।३२ ॥ इ सन ॥ १ ॥ २ ॥ श्रिय लाति श्रील, श्रीरस्यास्तीति वा सिध्मादित्वाद् ल, कपिलकादित्वाद् रस्य लत्वम्, श्रीमान् इत्यपि ॥ ३ ॥

इभ्य आढ्यो धनीश्वर ।

ऋद्धे

इभमर्हति इभ्य "दण्डादेर्य" ॥ ६।४।१७८ ॥ इति य ॥ १ ॥ आ ध्यायन्ति तामेति आढ्य, पृषोदरादित्वात् आढौकत इति वा "शिक्यास्याढ्य" ॥ (उणा–३६४) ॥ इति यान्तो निपात्यते ॥ २ ॥ धनमस्यास्तीति धनी, अतिशायने इन् ॥ ३ ॥ ईष्ट इत्येवशील ईश्वर ॥ ४ ॥ ऋध्यति स्म ऋद्ध समृद्ध तत्र ॥ ५ ॥

विभूति संपत्तिर्लक्ष्मी श्रीऋद्धिसंपद ॥ २१ ॥

विभवनं विभूति ॥ १ ॥ संपदन संपत्ति ॥ २ ॥ लक्ष्यते लक्ष्मी ॥ ३ ॥ श्रयणशीला श्री ॥ ४ ॥ अर्धन ऋद्धि ॥ ५ ॥ संपदन संपद् ॥ ६ ॥ २१ ॥

दरिद्रो दुर्विधो दु स्थो दुर्गतो नि स्वकीकटौ ।

अकिञ्चन

दरिद्राति दरिद्र ॥१॥ कुत्सा विधा प्रकारो भोजन वा अस्य दुर्विध ॥ २ ॥ दु खेन तिष्ठति दु स्थः ॥ ३ ॥ दु खेन गच्छति दुर्गत ॥ ४ ॥ निर्गत स्वमस्य नि स्व ॥ ५ ॥ ककते कीकट. "कपटकीकटादयः" ॥ (उणा–१४४) ॥ इति साधु ॥ ६ ॥ नास्ति किंचनाऽस्य अकिंचन ॥ ७ ॥

शेषश्चात्र—अथ दुर्गते ।

क्षुद्रो दीनश्च नीकष ॥

अधिपस्त्वीशो नेता परिवृढोऽधिभूः ॥ २२ ॥
पतीन्द्रस्वामिनाथार्यो प्रभुर्भर्तेश्वरो विभुः ।
ईशितेन्द्रो नायकश्च

अधिपातीति अधिपः ॥ १ ॥ ईष्टे ईशः ॥ २ ॥ नयति नियुङ्क्ते नेता ॥३॥ परिवर्हति परिवृहति वा परिवृढः “ प्रभुत्वविरिब्ध ” ॥४।४।७०॥ इति साधु ॥४॥ अधि उपरि भवति अधिभूः ॥ ५ ॥ २२ ॥ पातीति पतिः ' पातेर्डतिः ” ॥ (उणा-६५९) ॥ इति डतिः ॥६॥ इन्दनाद् इन्द्रः ' ऋज्रेन्द्र ” ॥ (उणा-१८७) ॥ इति रः ॥ ७ ॥ स्वमस्यास्तीति स्वामी ' स्वाद् मिनीशे ' ॥ ७।२।४९ ॥ इति मिन् दीर्घश्च ॥ ८ ॥ नाथति ईष्टे नाथः ॥९॥ अर्यते सेव्यते अर्यः ' स्वामिवैश्येऽर्य ” ॥ ५।१।३३ ॥ इति साधु ॥ १० ॥ प्रभवति प्रभुः ' विप्रसम्भ्यो द्रुवो डुः ' ॥ ५।२।८४ ॥ इति डुः ॥ ११ ॥ बिभर्ति पुष्णाति भर्ता ॥ १२ ॥ ईशनशील ईश्वरः ॥ १३ ॥ विभवति विभुः ॥ १४ ॥ ईष्टे ईशिता ॥ १५ ॥ एति स्वामित्वमिव “ चीगृधी ” ॥ (उणा १६१) ॥ इति मक् ॥ १६ ॥ नयति नायकः ॥ १७ ॥

नियोज्यः परिचारकः ॥ २३ ॥
डिङ्गरः किङ्करो भृत्यश्चेटो गोप्यः पराचितः ।
दासः प्रेष्यः परिस्कन्दो भुजिष्यपरिकर्मिणौ ॥ २४ ॥
परान्नः परपिण्डादः परजातः परैधितः ।

नियोक्तुं शक्यो नियोज्यः ॥१॥ परिचरति परिचारकः, प्रतिचरोऽपि ॥२॥२३॥ डिम्यते क्षिप्यते डिङ्गरः ' जठरकर ” ॥ (उणा-४०२) ॥ इत्यादिशब्दाद् निपात्यते ॥३॥ किं करोमीत्याज्ञां प्रतीक्षते किङ्करः ' कियत्तद्बहोरः ” ॥५।१।१०१॥ इति अः ॥ ४ ॥ भरणीयो भृत्यः ' भृगोऽसंज्ञायाम् ' ॥ ५ । १ । ४५ ॥ इति क्यप् ॥ ५ ॥ चेटति चेटः ॥ ६ ॥ गोपनीयो गोप्यः ॥ ७ ॥ परेराचीयते बध्यते पराचितः ॥ ८ ॥ दासते मुखं स्वामिनेऽपि दासः ॥ ९ ॥ प्रेषणीयः प्रेष्यः ॥ १० ॥ परिस्कन्दते आक्रम्य नियुज्यते परिस्कन्दः ॥ ११ ॥ भुङ्क्ते स्वाम्युच्छिष्टं भुजिष्यः ' रुचिभुजिभ्यां किष्यः ' ॥ (उणा—३८४) ॥ इति किष्यः ॥ १२ ॥ परितः कर्माऽस्यास्ति परिकर्मी व्रीह्यादित्वादिन् ॥ १३ ॥ २४ ॥ परस्याऽन्नमस्य परान्नः ॥ १४ ॥ परस्य पिण्डमत्ति परपिण्डादः ॥ १५ ॥ परेभ्यो जातः परजातः ॥ १६ ॥ परैरेध्यते वर्ध्यते परैधितः ॥ १७ ॥ पराचितादयश्चत्वारः पृथगेकार्था इत्यन्ये ॥

भृतके भृतिभुग् वैतनिकः कर्मकरोऽपि च ॥ २५ ॥

भ्रियते स्म स्वार्थे कः भृतकः ॥ १ ॥ भृतिर्वेतनं भुङ्क्ते भृतिभुक् ॥ २ ॥

वेतनेन जीवति वैतनिक "वेतनादेर्जीवति" ॥ ६ । ४ । १५ ॥ इतीकण् ॥ ३ ॥ कर्म करोति कर्मकर "भृतौ कर्मण" ॥ ५।१।१०४ ॥ इति टः ॥ ४ ॥ २५ ॥

स निर्भृति कर्मकार

स भृतको निर्वेतन कर्म कुर्वन् कर्मकार ॥ १ ॥

भृति स्याद् निष्क्रय पण ।
कर्मण्या वेतन मूल्यं निर्वेशो भरणं विधा ॥ २६ ॥
भर्मण्या भर्म भृत्या च

भ्रियतेऽनया भृति ॥ १ ॥ निष्क्रयणं निष्क्रय ॥ २ ॥ पण्यते आभाष्यते पण "पणेर्माने" ॥ ५ । ३ । ३२ ॥ इत्यल् ॥ ३ ॥ कर्मणि साधुः कर्मण्या ॥ ४ ॥ वीयतेऽयते वेतन "वीपतिपतिभ्यस्तन" ॥ (उणा-२९२) ॥ इति तन ॥ ५ ॥ मूलेन आनाम्य मूल्यं "इयपथ" ॥ ७ । १ । ११ ॥ इति य ॥ ६ ॥ निर्विश्यते भुज्यते निर्वेश ॥ ७ ॥ भ्रियतेऽनेन भरणम् ॥ ८ ॥ विधीयते ऽनया विधा ॥ ९ ॥ २६ ॥ भर्मणि साधुर्भर्मण्या ॥ १० ॥ भ्रियतेऽनेन भर्म "मन्" ॥ (उणा- ९११) ॥ इति मन् ॥ ११ ॥ भ्रियतेऽनया भृत्या "भृगो नाम्नि" ॥ ५ । ३ । ९८ ॥ इति क्यप् ॥ १२ ॥

भोगस्तु गणिकाभृति ।

भुज्यते भोग, , गणिकाया भृतिर्वेतनम् ॥ १ ॥
शेषश्चात्र- भाटिस्तु गणिकाभृतौ ॥

खलपू स्याद् बहुकर

खलं पुनाति खलपूः ॥ १ ॥ बहु करोति बहुकरः संमार्जक , बहुधान्यार्जक- इत्यन्ये ॥ २ ॥

भारवाहस्तु भारिक ॥ २७ ॥

भारं वहति भारवाह ॥ १ ॥ भारोऽस्त्यस्य भारिक ॥ २ ॥ २७ ॥

वार्तावहे वैवधिक

वृत्तिर्जीविकाऽस्त्यस्यां वार्ता अमायाम् , वार्ताया वहो वार्तावहः, तत्र ॥ १ ॥ वीवधो भार पर्याहारो वा तेन हरति वैवधिक-, विवधवीवधिकावपि; "विव धवीवधाद् वा" ॥ ६ । ४ । २५ ॥ इतीकण् ॥ २ ॥

भारे विवधवीवधौ ।

विवध्यते विवध "य जनवध" ॥ ४ । ३ । ५४ ॥ इति घञि वृद्धेरभाव , घञि उपसर्गस्य दीर्घत्वे वीवध ॥ २ ॥ ३ ॥

काच शिक्य तदालम्ब

कच्यते बध्यतेऽनेन काचः ॥ १ ॥ शक्नोति वोढु शिक्यम् " शिक्यास्या ढ्य " ॥ (उणा–३१४) ॥ इति यान्तो निपात्यते। तस्य भारस्याऽऽलम्बन तदाल म्बन तदालम्बो यत्र रज्जुपञ्जरे वोढव्यमास्ते ॥ २ ॥

भारयष्टिर्विहङ्गिका ॥ २८ ॥

भारोद्वहनार्था चतुरश्रिका यष्टिर्भारयष्टि शिक्याधार स्कन्धमात्रः लगुड इति इमिश्रः विहङ्गप्रतिकृतिशम्यायिमयी विहङ्गिका या भिस्यामो लम्बमाना ध्मा- प्यते, प्रमाथके च सचार्यते । विहङ्गमस्यके ॥ १ ॥ २८ ॥

शूरश्चारभटो वीरो विक्रान्तश्च

शूरयते शूर ॥ १ ॥ चारेण गमनेन भटति युद्धमाकाङ्क्षति चारभटः ॥ २ ॥ अजति क्षिपति शत्रून् वीर "स्फायि" ॥ ( उणा–१८८ ) ॥ इति रक्, वीरयत इति वा ॥ ३ ॥ विक्रमति उत्सहते स्म विक्रान्त ॥ ४ ॥

अथ कातर ।

दरितश्चकितो भीतो भीरुभीरुकभीलुका ॥ २९ ॥

कम्पते कातर 'मानिकम्भ्यां तर ॥ (उणा–४३७) ॥ इति तर ईषत्तरति वा कातर ॥१॥ दरः सजातोऽस्य दरित ॥२॥ चकति बिभेति स्म चकित ॥३॥ बिभेति स्म भीत ॥ ४ ॥ बिभेतीत्येवशीलो भीरु, भीरुक भीलुकः ' भियो क्रुक्लुक- न्' ॥५।२।१७४॥ इति साधव ॥५॥६॥७॥ अधीरे कातर " इत्यमर ॥२९॥

येयत्रास्त्र—

त्रस्नुत्रस्तौ तु चकिते ॥

विहस्तव्याकुलौ व्यग्रे

विगतो किंकर्तव्यतामूढत्वाद् हस्तोऽस्य विहस्त ॥ १ ॥ विशेषेणाकुलो व्याकुलः ॥ २ ॥ विगतमग्रमस्य व्यग्रस्तत्र विशेषेण अगति वा ॥ ३ ॥

कान्दिशीको भयद्रुते ।

कां दिशं यामि इत्याकुल कान्दिशीक, पृषोदरादित्वात्साधु, भयेन द्रुतः पलायितो भयद्रुत तत्र ॥ १ ॥

उत्पिञ्जलसमुत्पिञ्जपिञ्जला भृशमाकुले ॥ ३० ॥

उत्पिञ्जयतीति उत्पिञ्जलः ॥१॥ समुत्पिञ्जयति समुत्पिञ्जः ॥ २ ॥ पिञ्ज- यति पिञ्जल भृशमत्यर्थमाकुले ॥ ३ ॥ ३० ॥

महेच्छे तूद्भटोदारोदात्तोदीर्णमहाशया ।

महामना महात्मा च

महती इच्छा अस्य महेच्छस्तत्र ॥ १ ॥ उद्भटति उद्भटस्सुभटः ॥ २ ॥ साधुभिरुदर्यते गम्यते उदारः ॥ ३ ॥ उत्कर्षेणादीयते गम्यते उदात्तः ॥ ४ ॥ उदीर्यते स्म उदीर्णः ॥ ५ ॥ महानाशयोऽस्य महाशयः ॥ ६ ॥ महद् मनोऽस्य महामनाः ॥ ७ ॥ महान् आत्माऽस्य महात्मा ॥ ८ ॥

कृपणस्तु मितम्पचः ॥ ३१ ॥

कीनाशस्तद्धनः क्षुद्रकदर्यदृढमुष्टयः ।

किम्पचानः

कल्प्यते कृपणः " कृपृवृकृपि " ॥ ( उणा–१८८ ) ॥ इति अणक् ॥ १ ॥ मितं पचति मितम्पचः " परिमाणार्थमितनखात् पचः " ॥ ५ । १ । १०६ ॥ इति ख. ॥२॥३१॥ क्नाति दीप्यते तृष्णया कीनाशः " क्लेरीशश्च " ॥ ( उणा–५३४ ) ॥ इत्याशः ॥ ३ ॥ तदेव धनमस्य तद्धनः ॥ ४ ॥ क्षुध्यतेऽस्मात् क्षुद्रः "ऋज्यजि" ॥ ( उणा–३८८ ) ॥ इति रक् ॥ ५ ॥ कुत्सितोऽर्यः स्वामी कदर्यः ॥ ६ ॥ दृढा मुष्टिरस्य दृढमुष्टिः ॥ ७ ॥ किञ्चित् पचति किम्पचानः "मुमुचान" ॥ ( उणा–२७८ ) ॥ इति बहुवचनादानान्तो निपात्यते ॥ ८ ॥

दयालुस्तु कृपालुः करुणापरः ॥ ३२ ॥

सूरतः

दयत इत्येवंशीलो दयालुः "शीङ्श्रद्धानिद्रा" ॥ ५ । २ । ३७ ॥ इत्यालुः ॥ १ ॥ कृपाऽस्त्यस्य कृपालुः " कृपाहृदयादालुः " ॥ ७ । २ । ४२ ॥ इत्यालुः ॥ २ ॥ करुणायां परः करुणापरः ॥३॥३२॥ सुष्ठु रमते कृपायां सूरतः "सुवपित" ॥ ( उणा–२०४ ) ॥ इति तान्तो निपात्यते ॥ ४ ॥

अथ दया शूकः कारुण्यं करुणा घृणा ।

कृपाऽनुकम्पाऽनुक्रोशः

दयन्तेऽनया दया, भिदादित्वादङ् ॥ १ ॥ श्यायन्ति गच्छन्ति परदुःखप्रहाणेच्छामनेन शूकः पुंक्लीबलिङ्गः ' शुशुषिपिशुशोदीर्घश्च ' ॥ ( उणा–२४ ) ॥ इति कः ॥ २ ॥ करुणस्य भावः कारुण्यम्, करुणैव वा भेषजादित्वात् स्वार्थे ट्यण् ॥३॥ किरति चित्तं करुणा ' ऋकृवृ ' ॥ ( उणा–१९६ ) ॥ इत्युणः ॥ ४ ॥ घ्रियन्तेऽनया घृणा घृण्यन्तेऽनयेति वा ॥ ५ ॥ कल्पनं कृपा ' मृगयेच्छा "॥५।३।१०१॥

इति साधुः ॥ ६ ॥ अनुकम्पनं अनुकम्पा ॥ ७ ॥ अनुक्रोशन्ति समदुःखा भवन्त्यनेन अनुक्रोशः ॥ ८ ॥

हिंस्रे शरारुघातुकौ ॥ ३३ ॥

हिंसनशीलो हिंस्रः " स्म्यजसहिंस " ॥ ५।३।७९ ॥ इति रः तत्र ॥ १ ॥ शृणातीत्येवंशील शरारुः " शृवन्देरारु " ॥ ५।२।३५ ॥ इत्यारु ॥ २ ॥ हन्तीति घातुकः " लषपतपद " ॥५।२।४०॥ इत्युकण् ॥ ३ ॥ ३३ ॥

व्यापादनं विशरणं प्रमयः प्रमापणं
निर्ग्रन्थनं प्रमथनं क्रथनं निबर्हणम् ।
निस्तर्हणं विशसनं क्षणनं परासनं
प्रोज्ज्वासनं प्रशमनं प्रतिघातनं वधः ॥ ३४ ॥
प्रवासनोद्वासनघातनिर्वा-
सनानि संज्ञपनिशुम्भहिंसा ।
निर्वापणालम्भनिसूदनानि
निर्यातनोन्मन्थसमापनानि ॥ ३५ ॥
अपासनं वर्जनमारपिञ्जा
निष्कारणकायविशारणानि ।

अत्र गत्यर्थाः अपि धातव उपसर्गवशात् हिंसार्था ज्ञेयाः अकर्मकास्तु णिचा सकर्मकाः, व्यापादनमिति णिजन्तात् पदेर्णिग्यमद् ॥ १ ॥ शॄश् हिंसायां विशरणम् ॥२॥ मीञ्श् हिंसायामस्मि प्रमयः पुल्लिङ्गः' क्वचित् प्रमयात् इति' इत्यमरशेषः ॥ ३ ॥ मीनातेरेव स्वार्थे णिचि " मिनातीनोऽस्वत्सनि " ॥४।२।८॥ इत्यात्वेऽनटि च प्रमापणम् ॥ ४ ॥ ग्रन्थङ् कौटिल्ये निर्ग्रन्थनम् ॥ ५ ॥ मथे विलोडने प्रमथनम् ॥ ६ ॥ क्रथे कौशस्य क्रथनम् ॥ ७ ॥ निपूर्वात् बृहेर्बर्हेर्वा निबर्हणम् ॥ ८ ॥ तृहेर्हिंसार्थस्य निष्पूर्वस्य स्तृहेर्वा निपूर्वस्य निस्तर्हणम् ॥ ९ ॥ शसू हिंसायां विशसनम् ॥ १० ॥ क्षणूग् हिंसायां क्षणनम् ॥ ११ ॥ परापूर्वस्यास्यते परासनम् ॥ १२ ॥ जसण् हिंसायां प्रोज्जासनम् ॥ १३ ॥ शमेः प्रशमनम् ॥ १४ ॥ हन्तेः स्वार्थणिजन्तस्य प्रतिघातनम् ॥ १५ ॥ हननं वधः हनो वा वध् च " ॥ ५।३।४६ ॥ इत्यल् ॥ १६ ॥ १७ ॥ प्रवसतः प्रयुक्तिः प्रवासनम्, एवमुद्वासनम् ॥ १७ ॥ १८ ॥ हननं घातः ॥ १९ ॥ निर्वसतः प्रयुक्तिर्निर्वासनम् ॥ २० ॥ संज्ञपनं संज्ञप्तिः " ज्ञपिरेति " ॥ ५।३।९४ ॥ इति क्तिः ॥२१॥ निशुम्भनं निशुम्भः ॥ २२ ॥ हिंसनं हिंसा ॥ २३ ॥ वै ओवै शोषणे इत्यस्य निष्पूर्वस्य णिगि

निर्वापणम् ॥ २४ ॥ आलम्भनमालम्भ ॥ २५ ॥ षूदि क्षरणे निसूदनम् ॥२६॥ निष्पूर्वस्य यतणो णिचि निर्यातनम् ॥ २७ ॥ उन्मन्थातेर्घञि उन्मन्थ ॥ २८ ॥ सपूर्वस्य आप्नोते समापनम् ॥ २९ ॥ ३५ ॥ अपादस्यतेरपासनम् ॥ ३० ॥ व र्ज्यते वर्जनम् ॥ ३१ ॥ मृष् हिंसायां स्वार्थणिचि अलि च मार ॥ ३२ ॥ पिशुण् हिंसादौ अलि पिञ्ज ॥ ३३ ॥ कृष् हिंसायाम् स्वार्थणिचि निष्कारणम् ॥३४॥ क्रथण् हिंसायां घञि क्राथ ॥ ३५ ॥ शृष् हिंसायां स्वार्थणिचि विशारणम् ॥३६॥

स्यु कर्तने कल्पनवर्धने च
छेदश्च

कृत्यते कर्तनम्, तत्र ॥१॥ कल्प्यते कल्पनम् ॥२॥ वर्ध्यते वर्धनम् ॥ ३ ॥ छेदन छेद ॥ ४ ॥

घातोद्यत आततायी ॥ २६ ॥

घातोद्यतो वधोद्युक्त सनद्ध सन् यो वधार्थमुद्यतः स आतत, तादृश सन् एति वधार्थं धावत्याततायी, आवर्तं पलायमान वा तयते आततायी, वध उपलक्षण यत्स्मृति —

"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापह ।
क्षेत्रदारहरश्चैव षडेते आततायिन " ॥ १ ॥ २६ ॥

स शैर्षच्छेदिक शीर्षच्छेद्यो यो वधमर्हति ।

शीर्षच्छेदमर्हति शैर्षच्छेदिकः "तमर्हति" ॥ ६ । ४ । १७७ ॥ इती-कण् ॥ १ ॥ शीर्षच्छेद्य "शीर्षच्छेदाद् यो वा" ॥६।४।१८४॥ इति य ॥ २ ॥

प्रमीत उपसम्पन्न परेतप्रेतसंस्थिता ॥ २७ ॥
नामाशेष्यमशा शेषो व्यापन्नोपगतौ मृत ।
परासु

प्रमीयते स्म प्रमीत ॥ १ ॥ उपसम्पद्यते स्म उपसम्पन्न ॥ २ परैति लोका न्तरे परेतः ॥ ३ ॥ प्रैति स्म प्रेत ॥ ४ ॥ संतिष्ठते स्म संस्थित ॥ ५ ॥ २७ ॥ नामालेख्ययश शब्देभ्यः पर शेषः सेन नामशेष, आलेख्यशेष, यशःशेषः, नामैव शेषमस्येत्यादि कृत्वा ॥ ६ ॥ ७ ॥ ८ ॥ व्यापद्यते स्म व्यापन्नः ॥ ९ ॥ उपगच्छति स्म उपगतः ॥ १० ॥ म्रियते स्म मृतः ॥ ११ ॥ परागता असवः प्राणा अस्य परासुः ॥ १२ ॥

तदहे दान तदर्थमौर्ध्वदेहिकम् ॥ २८ ॥

तस्य मृतस्य अहनि दिवसे, तमुद्दिश्य दानं पिण्डोदकादि, ऊर्ध्वं देहाद् भवमौ

र्मदैहिकम्, अध्यात्मादित्वादिकण्, एकदेशविकृतत्वादूर्ध्वदैहिकम्, अनुशतिकादि पाठमताभयणे तु उभयपदवृद्धौ और्ध्वदैहिकमपि ॥ १ ॥ २८ ॥

मृतस्नानमपस्नानं

मृते स्नान मृतस्नानम्, अपकृष्ट स्नानमपस्नानम् ॥ १ ॥

निवाप पितृतर्पणम् ।

नितरामुप्यत दीयते निवापः, पितॄणां तर्पणम् पितृतर्पणम् ॥ १ ॥

चितिश्चित्याचितास्त्रुल्या

चीयते चिति ॥ १ ॥ चितेव चित्या स्वार्थिकत्वात् यः ॥२॥ चीयते चिता ॥ ३ ॥ एते प्रेतदाहार्थे अग्न्याधाने वर्तन्ते ॥

कुणपः शवमस्त्रियाम् ॥ २९ ॥

अर्ज्यते कुणपः "अर्जेर्णुच् च" ॥ ( उणा ७१२ ) ॥ इति उः ॥ १ ॥ प्राज्जलयति भज्जर्ति प्रभाति प्राज्जल प्राप्यते अभिगम्यते इति वा ॥ २ ॥ अज्जोऽस्त्यस्य अज्जस ॥ ३ ॥ २९ ॥

दक्षिणे सरलोदारौ

दक्षते दक्षिण ' द्रुदक्षिभ्यामिनन् इनः" ॥ ( उणा–१९४ ) ॥ इति इन, तत्र ॥ १ ॥ सरति सरल ' मृपिकन्दि ' ॥ ( उणा–४६५ ) इत्यल ॥ २ ॥ उद्यते उदार ॥ ३ ॥

शठस्तु निकृतोऽनृजु ।

शठ कैतवे च शठति शठ शाम्यतीति वा 'शमेर्ढश्च वा' ॥ ( उणा– १६५ ) ॥ इति ठ एकदेशविकृतत्वात् शण्ठोऽपि ॥ १ ॥ निकृणोति हिनस्ति नि कृत ॥ २ ॥ न ऋजु अनृजु ॥ ३ ॥

क्रूरे नृशंसनिस्त्रिंशपापा

कृन्ततीति क्रूर' कृते क्रूरश्च' ॥ ( उणा–१६५ ) ॥ इति र तत्र ॥ १ ॥ नृन् शंसति हिनस्ति नृशंस ॥ २ ॥ निस्त्रिंश इव घातुकत्वात् निस्त्रिंशः ॥ ३ ॥ पापमस्यास्ति पाप ॥ ४ ॥

धूर्तस्तु वञ्चक ॥ ४० ॥

व्यसक कुहको दाण्डाजिनिको मायिजालिकौ ।

धूर्वति हिनस्ति धूर्त धीरी ' ॥ ( उणा–२०१ ) इति तः किन् ॥ १ ॥

वञ्चयते वञ्चक ॥ २ ॥ ४० ॥ व्यसयति स्छलयति व्यसक , विगतावसौ यस्य व्यस , तत्तुल्यो वा ॥ ३ ॥ कुहयत विस्मापयते कुहक , कुहकमिन्द्रजाल वा य स्यास्ति ॥ ४ ॥ दण्डश्च अजिन च दम्भोपलक्षणत्वात् दण्डाजिन दम्भ , तेन अन्वेष्ट "दाण्डाजिनिका " ॥ ७।१।१७१ ॥ इत्यादिना निपात्यते ॥ ५ ॥ मा याऽस्ति अस्य मायी, व्रीह्यादित्वात् इन्, मायाविमायिकावपि ॥ ६ ॥ आलेन चरति आलिक ॥ ७ ॥

मायां तु शठता शाठ्य कुसृतिर्निकृतिश्च सा ॥ ४१ ॥

माति अनया माया ' स्याछामासा " ॥ ( उणा–३५७ ) इति यः ॥ १ ॥ शठस्य भाव शठता शाठ्यम् ॥२॥३॥ कुत्सिता सृतिर्हिसार्थ कुसृति ॥ ४ ॥ नि कृष्ट कृति निकृति ॥ ५ ॥ ४१ ॥

कपटं कैतव दम्भ कूट छद्मोपधिश्छलम् ।

व्यपदेशो मिषं लक्ष्य निभ व्याज

कम्पयत्यनेन कपटं पुंक्लीबलिङ्ग ' कपटकीकटादयः " ॥ ( उणा–१४४ ) ॥ इति साधु , के मूर्ध्नि पटमिवाच्छादकमिति वा ॥ १ ॥ कितवस्य कर्म कैतवं, युवा दित्वादण् ॥ २ ॥ दम्भनं दम्भ ॥ ३ ॥ कूटयति दहति अनेन कूटं पुंक्ली बलिङ्ग ॥ ४ ॥ छाद्यते रूपमनेन छद्म " छदेरिस्मन्त्रट्क्वौ " ॥ ४ । २ । ३३ ॥ इति मनि ह्रस्वः ॥ ५ ॥ उपधीयते स्फटिकस्येव सिन्दूरमुपधिः, उपधा अपि ॥ ६ ॥ छ्यति छिनत्त्यनेन छलम् " छोर्डग् गादिश्च ' ॥ ( उणा–४७१ ) ॥ इति कित्कलः ॥ ७ ॥ व्यपदिश्यते व्यपदेशोऽन्यरूपस्य तद्रूप्यम् ॥ ८ ॥ क्रीडार्थे वचनेन मद् मिषति मिषम् ॥ ९ ॥ स इव लक्ष्यतेऽनेन लक्ष्यं पुंक्लीबलिङ्ग ॥ १० ॥ नितरां तदिव भाति निभम् ॥ ११ ॥ व्याजन्ति विक्षिपन्त्यनेन व्याजः स्वरूपाच्छादनम् , यदाहुस्यम्– "व्याजव्याजमुपेत्य चेतसि किम् " ॥ १२ ॥ मायादय कपटादयश्च एकार्था इत्येके, कपटादयो व्यपदेशादयश्च भिन्नार्था इत्यमर ॥

अथ कुक्कुटि ॥ ४२ ॥

कुहना दम्भचर्या च

कुक्कुट इव आचरति कुक्कुटति दम्भेन निभृतं चरति, कुक्कुटनं कुक्कुटिः ' स्वरेभ्य इ ' ॥ (उणा–६०६) ॥१॥४२॥ कुहयतेऽनया कुहना, दम्भेन परविस्मा पनार्थं मिथ्याकल्पना ॥ २ ॥ दम्भेन चरण " समजनिषद् ॥ ५।३।९९ ॥ इति क्यप् ॥ ३ ॥

वञ्चन तु प्रतारणम् ।

व्यलीकमतिसंधान

वञ्च्यते वञ्चनम् ॥ १ ॥ प्रतार्यते प्रतारणम् ॥ २ ॥ विशिष्टमलीकमत्र व्यलीकम् ॥ ३ ॥ अति संधीयतेऽतिसंधानम् ॥ ४ ॥

साधौ सभ्यार्यसज्जना ॥ ४३ ॥

साध्नोति कार्याणीति साधुः "कृवापाजि" ॥ (उणा–१) ॥ इति उण्, तत्र ॥ १ ॥ सभायां साधुः सभ्यः ॥ २ ॥ अर्यतेऽभिगम्यते आर्यः ॥ ३ ॥ सत् शोभनं जनयति सज्जनः, सञ्चासौ जनश्चेति वा सज्जनः ॥ ४ ॥ ४३ ॥

दोषैकदृक् पुरोभागी

दोषे एव एकस्मिन् दृग् ज्ञानं यस्य स दोषैकदृक् । यत्कोश—दोषैकग्राहि हृदयः पुरोभागीति कथ्यते ॥ १ ॥ पुरोऽग्रं सर्वतः भजतीत्येवंशीलः पुरोभागी "सुप्यजातौ" ॥ ५ । २ । ५० ॥ इति णिनिः ॥ २ ॥

कर्णेजपस्तु दुर्जन ।

पिशुन सूचको नीचो द्विजिह्वो मत्सरी खल ॥ ४४ ॥

कर्णे जपति सूचयति कर्णेजपः "शोकापनुदतुन्दपरिमृज" ॥५।१।१४२॥ इति के निपात्यते ॥ १ ॥ दुष्टो जनो दुष्टं जनयति वा दुर्जनः ॥ २ ॥ पिंशति एकदेशेन सूचयति पिशुनः "पिशिमिथिक्षुधिभ्यः कित्" ॥ (उणा–२९०) ॥ इत्युनः, पिशुनमवतीति वा, अपिशुनमति वा पृषोदरादित्वात्, अपिस्मति नयतीति नीचः ॥ ३ ॥ सूचयतीति सूचकः ॥ ४ ॥ निकृष्टमञ्चति नीचः "न्युङ्क्वा मये–" ॥ (उणा १००१) ॥ इति के व्यवस्थाने च "अच्च् प्राग्दीर्घश्च" ॥ २ । १ । १०४ ॥ इति साधुः ॥ ५ ॥ द्वे जिह्वे वचने यस्य द्विजिह्वः ॥ ६ ॥ मत्सरोऽस्यास्ति मत्सरी ॥ ७ ॥ खलति साधुत्वम् खलः पुंसीयलिङ्गः, बाहुलकादिह अस्मिन् "खलिबल्याहनिभ्यो किच्" ॥ (उणा ४७२) ॥ इत्यच्, खलति संचिनोति पापम्, खलति गुणेभ्य इति वा खं धर्म्यं लातीति वा ॥ ८ ॥

क्षेपकात्र—अथ कुक्षमवलो खले ॥ ४४ ॥

व्यसनार्तस्तूपरक्त

व्यस्यति श्रेयोमार्गाद् व्यसनं तेन आर्तः व्यसनार्तः "ऋते तृतीयासमासे" ॥ १ । २ । ८ ॥ इत्यार् ॥ १ ॥ उपरज्यते स्म उपरक्तः ॥ २ ॥

चोरस्तु प्रतिरोधक ।

दस्यु पाटच्चर स्तेनस्तस्कर पारिपन्थिक ॥ ४५ ॥

परिमोषिपरास्कन्दिचैकागारिकमलिम्लुचा ।

चोरयति चोरः, प्रज्ञाद्यणि चौरोऽपि ॥ १ ॥ प्रतिरुणद्धि प्रतिरोधकः ॥ २ ॥

दसति उपक्षणोति दस्युः, "यजिशुन्धिदसिहिदसि" ॥ (उणा ८०१) ॥ इति युः ॥ ३ ॥ पाटयन्नरति पाटच्चरः, पृषोदरादित्वात्, पटच्चरे जीर्णवस्त्रे भवो वा पाटच्चरः, पटच्चोर इत्येके ॥ ४ ॥ स्तेनयति स्तेनः पुल्लीबलिङ्गः ॥ ५ ॥ तद् करोतीति तस्करः, वर्चस्कादित्वात् साधुः ॥ ६ ॥ परिपन्थं तिष्ठति हन्ति वा पारिपन्थिकः "परिपन्थात् तिष्ठति च" ॥६।४।३२॥ इति इकण् ॥७॥४५॥ परिमुष्णातीत्येवंशीलः परिमोषी ॥ ८ ॥ परानास्कन्दति परास्कन्दी ॥ ९ ॥ एकमसहायमगारं प्रयोजनमस्य ऐकागारिकः "एकागाराच्चौरे" ॥ ६।४।११८ ॥ इति इकण् ॥१०॥ मालिन म्लोचति मलिम्लुचः ॥ ११ ॥

शेषश्चात्र—चौरे तु चोरडो रात्रिचरः ॥

य पश्यतो हरेदर्थं स चौरः पश्यतोहरः ॥ ४६ ॥

"पश्यद्वाग्दिशो हरयुक्तिपण्डे" ॥३।२।३२॥ इति षष्ठ्या अलुप् ॥१॥४६॥

चौर्यं तु चौरिका स्तेयं

चौरस्य भावः कर्म वा चौर्यम्, राजादित्वात् ट्यण् ॥ १ ॥ चोरायकर्म चौरिका स्त्रीक्लीबलिङ्गः ॥ २ ॥ स्तेनस्य भावः स्तेयं "स्तेनाद् नलुक् च" ॥७।१।६४॥ इति यः, राजादित्वात् ट्यणि स्तैन्यमपि ॥ ३ ॥

लोप्त्रं स्वपहृतं धनम् ।

लुप्यते लोप्त्रं चौर्यधनं "लुयामा" ॥ (उणा–४५१) ॥ इति त्रः ॥ १ ॥

यद्भाविष्यो दैवपरः

यद् भविष्यति तद् भवत्विसेवमाचष्टे यद्भविष्यः ॥ १ ॥ दैवपरो दैववादी दैवप्रमाणकः ॥ २ ॥

अथाऽऽलस्यः शीतकोऽलसः ॥ ४७ ॥

मन्दस्तुन्दपरिमृजोऽनुष्णः

आलस्यमस्त्यस्य आलस्यः, अभ्रादित्वादः ॥१॥ शीतं मन्दं करोतीति शीतकः "शीताच्च कारिणि" ॥७।१।१८६॥ इति कः ॥ २ ॥ न लसत्यलसः, अलतीति वा "तप्याणि" ॥ (उणा ५६९) ॥ इसस ॥३॥४७॥ मन्दते स्वपितीव मन्दः, अत एव मदि जाड्ये इति चान्द्रो धातुः, मन्यते वा "शाशपिमनि" ॥ (उणा–२१७) ॥ इति दः ॥ ४ ॥ तुन्दं परिमार्ष्टि तुन्दपरिमृजः "शोकापनुदतुन्दपरिमृज" ॥ ५।१।१४३ ॥ इति कः ॥ ५ ॥ न उष्णः अनुष्णः ॥ ६ ॥

दक्षस्तु पेशलः ।

पटूष्णोष्णकसूत्थानचतुराश्च

दक्षते शीघ्रं करोति दक्षः ॥ १ ॥ पिंशत्येकदेशेन सर्वं करोति पेशलः "मृदिकन्दि" ॥ ( उणा ४६५ ) इत्यलच् ॥ २ ॥ पटति पटुः ॥ ३ ॥ सूपाति ददातीति सूत्थः "पृषोदरा" ॥ ( उणा १८३ ) ॥ इति णक् ॥ ४ ॥ उष्णं क्षिप्रं करोति इत्युष्णकः "शीताच्च कारिणि" ॥७।१।१८६॥ इति कः ॥ ५ ॥ सुष्ठु उत्थानमुद्योगोऽस्य सूत्थानः ॥ ६ ॥ चतते कर्म चतुरः ॥ ७ ॥

अथ तत्पर ॥ ४८ ॥

आसक्तः प्रवणः प्रह्वः प्रसितश्च परायणः ।

तत्परमस्य तत्परस्ताभिधे ॥१॥४८॥ आसजति स्म आसक्तः ॥ २ ॥ प्रकर्षेण वनति सम्भजते प्रवणः ॥ ३ ॥ प्रह्वयते कार्यं स्पर्धते प्रह्वः "उपसर्गादातो डोऽश्य" ॥ ५।१।५६ ॥ इति डः ॥ ४ ॥ प्रसिनोति स्म प्रसितः ॥ ५ ॥ परं कार्यं पारमयते परायणः ॥ ६ ॥

दातोदार

ददाति दाता ॥ १ ॥ उदयते उदारः ॥ २ ॥

स्थूललक्षदानशौण्डौ बहुप्रदे ॥ ४९ ॥

स्थूलं लक्षयति आलोचयति ददाति इति यावत् स्थूललक्षः ॥ १ ॥ दाने प्रसक्तः शौण्ड इव दानशौण्डः ॥ २ ॥ बहु प्रददते बहुप्रदः, तत्र ॥ ३ ॥ ४९ ॥

दानमुत्सर्जनं त्यागः प्रदेशनविसर्जने ।

विहायितं वितरणं स्पर्शनं प्रतिपादनम् ॥ ५० ॥

विश्राणनं निर्वपणमपवर्जनमंहतिः ।

दीयते दानम् ॥ १ ॥ उत्सृज्यते उत्सर्जनम् ॥ ॥ २ ॥ त्यजनं त्यागः ॥ ३ ॥ प्रदिश्यते प्रदेशनम् प्रादेशनमपि ॥ ४ ॥ विसृज्यते विसर्जनम् ॥ ५ ॥ हिनोतेर्ण्यन्तस्य क्ते विहायितम् ॥ ६ ॥ वितीर्यते वितरणम् ॥ ७ ॥ स्पृश्यते स्पर्शनं दानमुपचारात्, पुष्पादौ गन्धादिकं स्पृष्ट्वा हि दीयते ॥ ८ ॥ प्रतिपाद्यते प्रतिपादनम् ॥९॥५०॥ विश्राण्यते विश्राणनम् ॥१०॥ निरुप्यते निर्वपणम् निवापणमपि ॥ ११ ॥ अपवृज्यतेऽपवर्जनम् ॥१२॥ हन्यते दौर्गत्यमनया अंहतिः स्त्री क्तिन् 'हन्तेरंह च" ॥ ( उणा ६५४ ) ॥ इत्यतिः; स्त्वत, उत्सर्गपर्यायाश्चैते दानार्थाः ॥ १३ ॥

अर्थव्ययज्ञः सुकलः

अर्थव्ययं जानाति अर्थव्ययज्ञो दाता भोक्ता च शोभना कलाऽस्य सुकलः ॥ १ ॥

याचकस्तु वनीपक ॥ ५१ ॥
मार्गणोऽर्थी याचनकस्तर्कुक

याचते याचकः ॥ १ ॥ वनुते याचते वनीपक "कीचकपेचक-" ॥ (उणा ३३ ) ॥ इत्यादिशब्दादयकान्तो निपात्यते ॥२॥५१॥ मार्गति मार्गणः ॥ ३ ॥ अर्थनशीलोऽर्थी, अर्थोऽस्यास्तीति वा "अर्थार्थान्ताद्भावात्" ॥७।२।८॥ इतीन् ॥ ४ ॥ याचते याचन स्वार्थे के याचनकः ॥ ५ ॥ चरते तर्कुक "कञ्चुकांशुक-" ॥(उणा-५७ ) ॥ इत्युकान्तो निपात्यते ॥ ६ ॥

अथार्थनैषणा ।
अर्दना प्रणयो याच्ञा याचनाध्येषणा सनि ॥ ५२ ॥

अर्थनमर्थना ॥ १ ॥ एषणमेषणा "इषोऽनिच्छायाम्" ॥ ५।३।११२ ॥ इत्यन ॥ २ ॥ अर्दनमर्दना ॥ ३ ॥ प्रणयन प्रणयः ॥ ४ ॥ याचनं याच्ञा "मृगयेच्छायाच्ञा" ॥५।३।१०१॥ इति साधु ॥ ५ ॥ याचे स्वार्थेण्यन्तस्याऽने याचना ॥ ६ ॥ अध्येषणमध्येषणा "पर्यधेर्वा" ॥ ५।३।११३ ॥ इत्यन ॥ ७ ॥ सन्यते सनि "पदिपठि" ॥ ( उणा ६०७ ) ॥ इति इ , स्त्रीक्लीबोऽयं, पुंस्यपि वैजयन्ती, यदाह—'भिक्षा च सनिरस्त्री स्यात्' इति । 'सनिस्त्वध्येषणा' इति गुर्वादे क्वचिदर्थे प्रार्थनया नियोजनमित्यमर उपयगाह ॥ ८ ॥ ५२ ॥

शेषश्चात्र–

याच्ञा तु भिक्षणा । अभिशस्तिर्मार्गणा च ॥

उत्पतिष्णुस्तूत्पतिता

उत्पतति ऊर्ध्वं गच्छतीत्येवंशील उत्पतिष्णुः "उदः पचिपतिपदिमदे" ॥ ५।२।२९ ॥ इतीष्णु ॥ १ ॥ २ ॥

अलङ्करिष्णुस्तु मण्डन ।

अलंकरोतीत्येवशीलोऽलङ्करिष्णुः "भ्राज्यलङ्कृग्" ॥५।२।२८॥ इतीष्णु ॥१॥ मण्डयति तच्छीलो मण्डन "भूषाक्रोधार्थ" ॥५।२।४२॥ इत्यनः ॥ २ ॥

भविष्णुर्भविता भूष्णु

भवतीत्येवशीलो भविष्णु इष्णु ॥ १ ॥ भवतीति भविता ॥ २ ॥ भवतीत्येवशीलो भूष्णुः "भूजे ष्णुक्" ॥५।२।३०॥ इति ष्णुक् ॥ ३ ॥

समौ वर्तिष्णुवर्तनौ ॥ ५३ ॥

इष्णुः ॥ १ ॥ "इङित" ॥ ५।२।४४ ॥ इत्यनश्च ॥ २ ॥ ५३ ॥

विसृत्वरो विसृमर प्रसारी च विसारिणि ।

विसरतीत्येवंशीलो विसृत्वर: " सृजिण् " ॥ ५।२।७७ ॥ इति क्विप् द्वरप् ॥१॥ विसृमर: " सृघस्यद: "॥५।२।७३॥ इति मरक् ॥ २ ॥ प्रसारी " विपरि प्रात् सर्ते " ॥ ५।२।५५ ॥ इति घिनण् तत्र ॥ ३ ॥ ४ ॥

लज्जाशीलोऽपत्रपिष्णु

लज्जाशीलमस्य लज्जाशील: लज्जालु: ॥ १ ॥ अपत्रपते अपत्रपिष्णु, इष्णु: ॥ २ ॥

सहिष्णु क्षमिता क्षमी ॥ ५४ ॥

तितिक्षु सहन क्षन्ता

सहे: शीलाद्यर्थे इष्णौ सहिष्णु ॥ १ ॥ क्षमेस्तृनीटि च क्षमिता ॥ २ ॥ " शमष्टकात् " ॥५।२।४९॥ इति घिनणि क्षमी ॥ ३ ॥ ५४ ॥ तिजे गुप्तिज " ॥३।४।५॥ इति सनि ' सन्भिक्षा ' ॥ ५।२।३३ ॥ इत्युप्रत्यये च तितिक्षु: ॥४॥ सहेरने सहन ॥ ५ ॥ क्षमेरौदित्त्वात् वेट्त्वे क्षन्ता ॥ ६ ॥

तितिक्षा सहनं क्षमा ।

तितिक्षणं तितिक्षा ॥ १ ॥ सहावे सहनम् ॥ २ ॥ क्षमणं क्षमा ' षितो ऽङ् " ॥ ५।३।१०७ ॥ इत्यङ्, क्षान्तिरित्यपि ॥ ३ ॥

ईर्ष्यालु कुहन

ईर्ष्यति ईर्ष्यालु " स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलु: " ॥ (उणा-८२१) ॥ इत्यालु: ॥ १ ॥ कुहयते विस्मापयते कुहन: ॥ २ ॥

अक्षान्तिरीर्ष्या

ईर्ष्यणमीर्ष्या भावे परसंपन्नासहने स्त्री । कश्चित्तु परोत्कर्षासहनं मात्सर्यमीर्ष्या मन्यते यथा-" न ईर्ष्यु परविरोधु " इति ॥ १ ॥ १ ॥

क्रोधी तु रोषण ॥ ५५ ॥

अमर्षण क्रोधनश्च

कुप्यति क्रोधी ॥ १ ॥ रुष्यतीत्येवंशीलो रोषण: ॥ २ ॥ ५५ ॥ न मृष्यति अमर्षण: ॥ ३ ॥ कुप्यति क्रोधन: भूषाक्रोधार्थ ' ॥ ५।२।४२ ॥ इत्यन:, कोपनोऽपि ॥ ४ ॥

चण्डस्त्वत्यन्तकोपन ।

चडुङ् कोपे चण्डते चण्ड:, चण्डति साम्यायते वा ' पञ्चमाड: ॥ ( उणा-१६८ ) ॥ इति ड: ॥ १ ॥

बुभुक्षित स्यात् क्षुधितो जिघत्सुरशनायित ॥ ५६ ॥

बुभुक्षा सञ्जाताऽस्य बुभुक्षित , तारकादित्वादित ॥ १ ॥ क्षुध्यति क्षुधित क्षुत् सञ्जाताऽस्य वा ॥ २ ॥ अत्तुमिच्छुः जिघत्सु ॥ ३ ॥ अशनमिच्छति आत्मन इति "अमाव्ययात्-" ॥३।४।२३॥ इति क्यनि "क्षुत्तृड्गर्ध"॥४।३।११३ इत्यात्वम्, तत क्तेऽशनायित ॥ ४ ॥ ॥ ५६ ॥

क्षुद्बुभुक्षायामशनाया जिघत्सा रोचको रुचि ।

भोक्तुमिच्छा बुभुक्षा, तस्याम् ॥ १ ॥ अशनेच्छा अशनाया ॥ २ ॥ अत्तुमिच्छा जिघत्सा "घस्लृ सनद्यतनी" ॥ ४।४।१७ ॥ इति सन्यदेर्घसादेश ॥३ रोचनम्, रोचतेऽस्मिन्निति वा रोचक पुक्लीवलिङ्ग "नाम्नि पुंसि च"॥५।३।१२१ इति णक ॥ ४ ॥ एव रुचि, स्त्रीलिङ्गः "भाम्युपान्त्य" ॥ (उणा-६०९) इति कि ॥ ५ ॥

शेषश्चात्र–बुभुक्षायां क्षुधाक्षुधौ ॥

पिपासुस्तृषितस्तृष्णक्

पातुमिच्छु पिपासु, पिपासितोऽपि ॥ १ ॥ तृष्यति तृषित ञ्यनुबन्धत्वात् वर्तति क्त, तृट् सञ्जाताऽस्य वा तर्षितोऽपि ॥ २ ॥ तृष्यतीत्येवंशील तृष्णक् "तृषि धृषि" ॥ ५।२।८० ॥ इति नजिङ् ॥ ३ ॥

तृष्णा तर्षोऽपलासिका ॥ ५७ ॥

पिपासा तृट् तृषोदन्या धीति पाने

तर्षणं तृष्णा "मृगयेच्छा" ॥ ५ । ३ । १०१ ॥ इति नङ् ॥१॥ घञि तर्षः ॥ २ ॥ अपकृष्ट लसत्यनया अपलासिका "नाम्नि पुंसि च"॥५।३।१२१॥ इति णक ॥ ३ ॥ ५७ ॥ पातुमिच्छा पिपासा ॥ ४ ॥ तषण तृट्, तृषा ॥५॥६॥ उदकेच्छा उदन्या क्यनि "क्षुत्तृड्गर्ध" ॥४।३।११३ ॥ इत्युदकस्योदन् ॥ ७ ॥ तृषे पाने धयन धीतिः ॥ ८ ॥ पीयते पानं, तत्र ॥ ९ ॥

अथ शोषणम् ।

रसादानं

शुष्यते शोषणम् ॥ १ ॥ रसानामादान रसादानम् ॥ २ ॥

भक्षकस्तु घस्मरोऽद्मर आशित ॥ ५८ ॥

भक्षयति भक्षकः ॥ १ ॥ घसतीत्येवंशीलो घस्मरः, अत्ति अद्मरः "सृघस्यदो" ॥५।२।७३ ॥ इति मरक् ॥ २ ॥ ३ ॥ आ समन्तात् अश्नाति आशितः, आशिरोऽपि ॥ ४ ॥ ५८ ॥

भक्तमन्नं कूरमन्धो भिस्सा दीदिविरोदन ।

अशनं जीवनकं च याजो वाज प्रसादनम् ॥ ५९ ॥

भज्यते भक्तम् ॥१॥ अनित्यनेन अन्न "प्यामापम्यानि "॥ (उणा–२५८) ॥ इति न, मद्यते वा ॥ २ ॥ कौत्यनेन कूरं पुल्लीबलिङ्गः, "खरकुर" ॥ (उणा–१९६) ॥ इति रान्तो निपात्यते ॥ ३ ॥ अपते अन्ध 'अदेरन्ध् च वा" ॥ (उणा–९६२) ॥ इत्यस् ॥ ४ ॥ अभिप्सायते भक्ष्यते भिस्सा, पृषोदरादित्वात् साधु ॥ ५ ॥ दीप्यन्त्यनेन दीदिवि पुल्लिङ्गः, स्त्रियामपि वैजयन्ती, यदाह— " भिस्सा स्त्री दीदिविर्न पम्" न पष्ठ इत्यर्थ, "छविछिवि" ॥ (उणा–७०६)॥ इति ण्यन्तो निपात्यते ॥ ६ ॥ उयाति स्त्रियस्योदन ' उन्देनलुक् च " ॥ (उणा–२७१) ॥ इत्यन ॥ ७ ॥ अत्यते एतावित्यपन पुल्लीबलिङ्गौ भुग्माविस्वा एनद् ॥ ८ ॥ जीव्यतेऽनेन अनठि स्वार्थे के जीवनकम् ॥ ९ ॥ इज्यतेऽनेन याज, धमि "यजेर्यज्ञाङ्गे" ॥४।१।११४ ॥ इति गत्वाभाव ॥ १० ॥ वज्यते वाज ॥ ११ ॥ प्रसाद्यतेऽनेनास्मा प्रसादनम् ॥ १२ ॥ ५९ ॥

भिस्सटा दग्धिका

कुत्सिता भिस्सा भिस्सटा स्त्रीसमुदोपाः, यथा–गोदनभिस्सटा, सर्पटी, मामटी, वधूटीत्यादि ॥ १ ॥ कुत्सिता दग्धा दग्धिका ॥ २ ॥

सर्वरसाग्र मण्डं

सर्वरसानां द्रव्यम्याणामग्र मुख्यं मण्डयति मण्ड पुल्लीबलिङ्ग ॥ १ ॥

अत्र तु ।

दधिजे मस्तु

अत्र तु मण्डे, दधिसंभवे मस्यति परिणमते मस्तु क्लीबलिङ्ग "हसिमृग्मिभि" ॥ (उणा–७७३) ॥ इति तुन् ॥ १ ॥

मण्डोऽत्ये नि स्रावाचाममासरा ॥ ६० ॥

मण्डे भक्तसमुद्भवे नि स्राव्यते निःस्रावः ॥ १ ॥ आचाम्यते आचाम ॥ २ ॥ मीयते मासरः "मीज्यजिमा" ॥ (उणा–४३९) ॥ इति सर ॥ ३ ॥

शेषश्चात्र—

भक्तमण्डे तु प्रस्रावप्रस्रावाच्छोद्मास्रवा ॥ ६० ॥

श्राणा विलेपी तरला यवागूरुष्णिकाऽपि च ।

श्रायते स्म श्राणा "व्यञ्जनान्तस्थातः" ॥ ४।२।७१ ॥ इति नत्वम् ॥ १ ॥ विलिम्पति विलेपी विलेप्यापि ॥ २ ॥ तरला लेपरसात्वपलम स्त्री क्लीबलिङ्ग ॥३॥ यूयते पिप्पल्यादिना यवागू स्त्रीलिङ्गः "ओरागूः" ॥ (उणा–८५०)

इति आगू ॥४॥ उष्णादमेरनिरोद्धृता उष्णिका "उष्णात्" ॥ ७ । १ । १८५॥ इति सज्ञायां कः ॥ ५ ॥

सूप स्यात्प्रहितं सूद

सुन्वन्त्येन सूप "सुसूकुस्तुप्युस्त्वादेस्प" ॥ (उणा-२९७) ॥ इति प· पुस्ययम्, क्लीबेऽपि वैजयन्ती, यदाह-'सूपोऽस्त्री प्रहितं सूद' इति ॥१॥ प्रकर्षेण हित प्रहितम् ॥ २ ॥ सूयते सूद ॥ ३ ॥

व्यञ्जनं तु घृतादिकम् ॥ ६१ ॥

व्यज्यन्ते रसविशेषा अत्र व्यञ्जनम् ॥ १ ॥ ६१ ॥

तुल्यौ तिलान्ने कृसरत्रिसरौ

तिलैर्मिश्रमन्न तिलान्नं तत्र क्रियते पर्वणीति कृसरः "कृधूतन्यृपिभ्य किन्" ॥ (उणा ४४०)॥ इति सर ॥ १ ॥ त्रीन् सरति त्रिसरः, पुस्त्रीलिङ्गौ, क्लीबेऽपि वैजयन्ती, यदाह—'तिलतन्दुलमाषैस्तु कृसरा त्रिसरा त्रयी' इति ॥ २ ॥

अथ पिष्टक ।

पूपोऽपूप

पिष्टस्य विकार पिष्टकः "नाम्नि कः" ॥६।२।५४॥ इति क पुक्लीबलिङ्ग, पिष्ट एव वा स्वार्थे क ॥ १ ॥ पूयते पूप "क्षुत्रुपिपूभ्य किन्" ॥ (उणा—३०१) ॥ इति प ॥ २ ॥ अश्नुते अपूप "अश ऊपः पश्च" ॥ (उणा-३१२) ॥ इत्यूपः, 'अम्निरूप्यते' इति नैरुक्ता ॥ ३ ॥

शेषश्चात्र—अपूपे पारिखोल ॥

पूलिका तु पोलिकापोलिपूपिका ॥ ६२ ॥

पूपली

पूलति सहता भवति पूलिका ॥ १ ॥ पोलति वर्धते पोलिका ॥ २ ॥ पोल्य ते वर्ध्यते पोलि "स्वरेभ्य इः" ॥ (उणा—६०६) ॥ इति इ ङ्यां तु पोली ॥ ३ ॥ ह्रस्वः पूपः पूपिका ॥४॥६२॥ पूयते पूपली "मुरस्पोरल" ॥ (उणा—४७४) ॥ इत्यले निपात्यते ॥ ५ ॥

अथेषत्पक्वे स्युरभ्यूषाभ्योषपौलय ।

ईषत्पक्व इषद्भृष्टम्, तत्र, अभ्यूषति भजत्यभ्यूष ॥ १ ॥ अभ्यूष्यते पच्यते अभ्योषः ॥ २ ॥ पोलति वर्धते पोलि, पृषोदरादित्वात् ॥ ३ ॥

निष्ठान तु तेमन स्यात्

निविशति अभ्यवनेन निष्ठानं, पुंक्लीबलिङ्ग । यद्वाचस्पति –'तेमने तु निष्ठानो-ऽस्त्री, ॥ १ ॥ तिम्यत्यार्द्रीभवत्यनेन तेमनमुपसेचनं क्लोपनाख्यम् ॥ २ ॥

करम्भो दधिसक्तव ॥ ६२ ॥

करोति तृप्तिं करम्भ ' कृकसेरम्भ " ॥ (उणा–३२६) ॥ इत्यम्भ, केन रम्यते मील्यते वा, दध्युपसिक्ताः सक्तव ॥१॥

शेषश्चात्र–अथ करम्भो दधिसक्तुषु ॥ ६३ ॥

घृतपूरो घृतवर पिष्टपूरश्च घार्तिक ।

घृतेन पूर्यते घृतपूर क्षीराज्य समितापिण्डो घृतेन भृत ॥ १ ॥ घृतेन वरो घृतवर ॥ २ ॥ पिष्टेन पूर्यते पिष्टपूर ॥३॥ घृतेन संसृष्टे घार्तिक, "संसृष्टे" ॥६।४।५॥ इतीकण् ॥ ४ ॥

चमसी पिष्टवर्ति स्याद्

चम्यते चमसी " तप्यमि ' ॥ (उणा–५६९) ॥ इत्यस । गौडस्तु ' चम स: पिष्टवर्ति स्यात् ' इति पुंस्याह ॥ १ ॥ मुद्गादीनां पिष्टस्य वर्ति पिष्टवर्ति ॥२॥

वटकस्त्ववसेकिम ॥ ६४ ॥

वट्यते वेष्ट्यते वटक ' बहुलम् ' ॥५।१।२ ॥ इत्यकट्, यद्वा–वटति वट:, तत स्वार्थे क:, पुंक्लीबलिङ्ग: ॥ १ ॥ अवसेकेन निर्वृत्तो अवसेकिम " भावादिम " ॥ ६।४।२१ ॥ इतीम, मत्स्यविशेष: ॥ २ ॥

शेषश्चात्र—

इण्डेरिका तु वटिका शष्कुली स्वर्णकोलिका ।

पर्पटस्तु समराला घृताम्बी तु घृतौपणी ॥ १ ॥

समिताखण्डाज्यकृतो मोदको लड्डुकश्च स ।

एलामरिचादियुत: स पुन: सिंहकेसर: ॥ २ ॥ ६४ ॥

भृष्टा यवा पुनर्धाना

धीयन्ते धाना, स्त्रियां बहुवचनान्तोऽयम् "ध्याधा ॥ (उणा २५८) ॥ इति न: ॥ १ ॥

धानाचूर्णं तु सक्तव ।

षचि सेचने सच्यन्ते सक्तव: पुंक्लीबलिङ्ग एकवचनान्तोऽप्ययम् 'इसिमस्म मि ' ॥ (उणा–७७३) ॥ इति तुन् ॥ १ ॥

पृथुकश्चिपटस्तुल्यौ

पृथुत्वात् पृथुक' आर्द्रं भृष्टं सस्यम् , तद्धि पाकात् पृथुर्भवति प्रथते वा ''कञ्चुकांशुक ''॥ (उणा–५७) ॥ इत्युके निपात्यते ॥१ ॥ चिपिटीभवनाच्चिपिट-, चिपिटक इत्यमरः ॥ २ ॥

लाजा स्यु पुनरक्षता ॥ ६५ ॥

लाज्यन्ते भज्यन्ते लाजा , पुल्लीलिङ्ग', बहुवचनान्तश्च ॥ १ ॥ न क्षण्यन्ते अक्षता , पुंल्लीयलिङ्ग , पुरस्य बहुवचनान्त ॥ २ ॥ ६५ ॥

शेषश्चात्र—

लाजेषु मरुओद्घूपक्षटिकापरिवारका ॥

गोधूमचूर्णे समिता

समीक्रियते समिता ॥ १ ॥

यवक्षोदे तु चिक्कस ।

चीयते चिक्कस , पुल्लीयलिङ्ग ' फनसतामरसादय' '' ॥ (उणा–५७१) ॥ इत्यसे निपात्यते, चिक्कसति वा । कौशिकस्तु–चिक्क इति व्यसने पठत्तस्मादसमिच्छति ॥ १ ॥

गुड इक्षुरसक्वाथ

गूयते क्ष्यते गुडः, ''कुगुगुनी ''॥ (उणा–१७०) ॥ इति डः कित्, गुडति रक्षति वा ॥ १ ॥

शर्करा तु सितोपला ॥ ६६ ॥

सिता च

शीर्यते शर्करा ' किशृश्वभ्य' कर '' ॥ (उणा–४३५) ॥ इति कर ॥ १ ॥ सितोपल स्फटिकस्तत्सदृशत्वात् सितोपला ॥२॥६६॥ सीयते बध्यते सिता ॥३॥

मधुधूलिस्तु खण्ड

मधुनः क्षौद्रस्य धूलिरिव मधुरत्वाद् मधुधूलिः ॥ १ ॥ खडङ् मन्थे, खण्ड्यते खण्डः, पुल्लीवलिङ्ग ॥ २ ॥

तद्विकृती पुन ।

मत्स्यण्डी फाणित चापि

तस्य खण्डस्य विकार , मदं स्यन्दते मत्स्यण्डी सामान्यशर्करा, पृषोदरादित्वात् मत्स्यान् अमति हन्ति मत्स्याण्डीति केचित् , यद् धन्वन्तरिः— 'शाकरोत्था तु मीमाण्डी श्वेता मत्स्याण्डिका सिता'' इति । ''मत्स्यण्डिका खण्डसिता

कोप गुणवरारा" इति तु वाग्भटः ॥ १ ॥ फाण्यते प्रस्रवात् फाणितं खण्डश्चोतः, पुंस्त्रीबाल्डिङ्गोऽयम्, मङ्गावस्पति —' फाणितमस्त्रियाम् ' ॥ १ ॥

रसालायां तु मार्जिता ॥ ६७ ॥

शिखरिणी

रसमवति रसाला तत्र ॥ १ ॥ मार्ज्यते मार्जिता, मर्जिताऽपि ॥ २ ॥ ६७ ॥ शिखरमस्त्यस्या शिखरिणी ॥ ३ ॥

अथ यूर्यूषो रस

यौतीत्येवंशीलो यू: पुंलिङ्ग, भ्राजादित्वात् क्विपि साधु यद् वैजयन्ती— 'यूषोऽस्त्री यू: पुमान् रसे"॥ १ ॥ यूयते मिश्रीक्रियते यूष, पुंस्त्रीलिङ्गः योऽस्य वा ' ॥ (उणा–५४१) ॥ इति च, यूषति हिनस्ति रुजं वा ॥ २ ॥ रस्यते रसो मुद्गादीनाम् ॥ ३ ॥

दुग्धं तु सोमजम् ।

गोरस क्षीरमूधस्य स्तन्यं पुंसवनं पय ॥ ६८ ॥

दुह्यते दुग्धम् ॥ १ ॥ सोमरसाभ्रात सोमजम् ॥ २ ॥ गोर्धेन्वा रसो गोरसः ॥ ३ ॥ घस्यते क्षीरम् पुंक्लीबलिङ्ग । 'घसिवशि- ' ॥ ( उणा—४१९ ) ॥ इति किर्दरे, गमहन "॥४।२।४४॥ इत्युपान्त्यलोपे च "घस्वसः' ॥२।३।३६॥ इति षस्य षत्वम् ॥ ४ ॥ ऊधसि भवमूधस्यम् ॥ ५ ॥ स्तने भवं स्तन्यम् देहांशत्वाद् य ॥ ६ ॥ पुमि सूयतेऽनेन पुंसवनम् ॥ ७ ॥ पीयते पय "पाहाकृभ्यो पयश्च' ॥ (उणा–९५३) ॥ इत्यस् ॥ ८ ॥ ६८ ॥

शेषश्चात्र—

दुग्धे योग्य बालसात्म्य जीवनीय रसोत्तमम् ।
सर मध्य मनुष्यद्भ भारोष्ण तु पयोऽमृतम् ॥

पयस्यं घृतदध्यादि

पयसो विकारः पयस्यम् पयोद्रोर्यः" ॥ ६ । २ । ३५ ॥ इति य आदिशब्दान्नवनीतादि ॥ १ ॥

पेयूषोऽभिनवं पय ।

पीयते पेयूष कोरयूषादय- ॥ ( उणा–५६१ ) ॥ इत्यूषान्तो निपात्यते । वैजयन्ती तु– " आ सप्ताहात् तु पेयूष ततो मोरटमोरके इति क्षीर माह । पीयूषमित्यपि नवप्रसूतगवीक्षीरं कथितं सर्वाभिनवम् ॥ १ ॥

उभे क्षीरस्य विकृती किलाटी कूर्चिकाऽपि च ॥ ६९ ॥

किरति क्षुधं किलाटी, पुंस्त्रीलिङ्गः "किरो लश्च वा" ॥ (उणा–१४७) ॥ इत्याटः ॥१॥ कूर्चस्तन्मस्तु तदस्त्यस्याः कूर्चिका, कूर्चति कूर्चिका इत्यके ॥११६९॥

पायसं परमान्नं च क्षैरेयी

पयसि संस्कृतं पायसं, पुंक्लीबलिङ्गः "संस्कृते भक्ष्ये" ॥६।२।१४०॥ इत्यण् ॥ १ ॥ परमं च तदन्नं च परमान्नम् ॥ २ ॥ क्षीरे संस्कृता क्षैरेयी "क्षीराद्यण्" ॥६।२।१४२॥ इत्येयण् ॥ ३ ॥

क्षीरजं दधि ।

गोरसश्च

क्षीराज्जातं क्षीरजम् ॥ १ ॥ दधते बलिपुष्टतां दधि, क्लीबलिङ्गः, "पदिपठि-" (उणा–६०७) इति इः ॥ २ ॥ ३ ॥

शेषश्चात्र—

दध्नि श्रीघनमङ्गल्ये ॥

तद्घनं द्रप्सं पत्रलमित्यपि ॥ ७० ॥

दृप्यतेऽनेन द्रप्सं "मावा" ॥ (उणा–५६४) ॥ इति बहुवचनात् सः, ततः "स्पृशादिसृपो वा" ॥४।४।११२॥ इत्यकारागमः, द्रप्स्यमित्यपि ॥ १ ॥ पत्रं लाति पत्रलम्, पत्रमस्यास्तीति वा, सिध्मादित्वात् लः ॥ २ ॥ ७० ॥

घृतं हविष्यमाज्यं च हविराघारसर्पिषी ।

घरति घृतं, पुंक्लीबलिङ्गः "घीरी" ॥ (उणा–२०१) ॥ इत्यादिना तः किच् ॥ १ ॥ हविषे हितं हविष्यम् "उवर्णयुगादेः" ॥७।१।३०॥ इति यः ॥ २ ॥ आ अज्यतेऽनेन आज्यम् "कृत्याभिधे" ॥५।१।३९॥ इति क्यपि निपात्यते ॥ ३ ॥ हूयते हविः, क्लीबलिङ्गः ॥ ४ ॥ आघारयति आघारः ॥ ५ ॥ सर्पति सर्पिः, क्लीबलिङ्गः "रुच्यर्चि" ॥ (उणा–९८९) ॥ इति इस् ॥ ६ ॥

ह्योगोदोहोद्भवं हैयङ्गवीनं

ह्योगोदोहस्य विकारो हैयङ्गवीनं "ह्योगोदोहादीनञ् हियङ्गुश्चास्य" ॥६।२।५५॥ इति ईनञ्, प्रस्तावात् घृतं लभ्यते । अन्ये नवनीतमित्याहुः ॥ १ ॥

शरजं पुनः ॥ ७१ ॥

दधिसारं तक्रसारं नवनीतं नवोद्धृतम् ।

शराज्जातं शरजम् ॥ १ ॥ ७१ ॥ दध्नः सारं दधिसारम् ॥ २ ॥ तक्रस्य सारं तक्रसारम् ॥ ३ ॥ दध्नो मथितात् नवं तत्कालं नीतमुद्धृतं च नवनीतम्, नवोद्धृतम् ॥ ४ ॥ ५ ॥

दण्डाहते कालशेयघोलारिष्टानि गोरसः ॥ ७२ ॥

रसायनं

मन्थदण्डेनाऽऽहतं दण्डाहतम् तत्र ॥ १ ॥ कलश्यां मन्थन्यां भवं कालशेयं 'दृतिकुक्षिकलशि" ॥६।३।१३०॥ इत्येयण् ॥ २ ॥ घुन्यते मथा घोलः 'पिच्छो लकोल" ॥ (उणा-४९५) ॥ इत्योल निपात्यते ॥ ३ ॥ न रेषति हिनस्ति अरिष्टम् सर्वरोगाजितत्वात् ॥ ४ ॥ गोर्धेन्वा रसो गोरसः ॥ ५ ॥ ७२ ॥ अस्मा दीन् रसानयते रसायनम् ॥ ६ ॥

अथाऽर्धाम्बूदश्वित्

अर्धमम्बु जलं यत्र अर्धाम्बु उदकेन श्वयति उदश्वित् क्लीबलिङ्ग 'उदकाच्छ्वेर्वित्" ॥ (उणा-८८८) ॥ इति इत् 'नाम्युत्तरपदस्य च"॥३।२। १०७॥ इत्युदकस्योद ॥ १ ॥

श्वेतं समोदकम् ।

श्वेतते श्वेतम् श्वेतरसमित्यपि समसुदकं यत्र समोदकम् ॥ १ ॥

तक्रं पुन पादजलं

तकति हुतं गच्छति तक्रं पुन्क्लीबलिङ्ग "स्फायि-" ॥(उणा-३८८)॥ इति किद् र पादेन तुर्याशेन जलं यत्र पादजलम् ॥ १ ॥

शेषश्चात्र—

तक्रे कट्वरसारणे ।

अर्धोम्बं परमरस ॥

मथितं वारिवर्जितम् ॥ ७३ ॥

दध्ना मथनमात्रसाध्यं मथितम् ॥ १ ॥ ७३ ॥

सार्पिष्कं दाधिकं सर्पिर्दधिभ्यां संस्कृत क्रमात् ।

सर्पिषा संस्कृत सार्पिष्कम् , दध्ना संस्कृतं दाधिकम् "संस्कृते" ॥ ६ । ४ । ३ ॥ इतीकण् ॥ १ ॥ १ ॥

लवणोदकाभ्यां दकलावणिकं

उदकलवणाभ्यां संस्कृतं दकलावणिकं ,बाहुलकादुत्तरपदवृद्धिः ॥ १ ॥

उदाश्विति ॥ ७४ ॥

औदश्वितमौदश्वित्कं

उदश्विति संस्कृतं औदश्वितम्, औदश्वित्कं 'वोदश्वित' ॥ ६।४।१४ ॥ इतीकण्, पक्षेऽण् ॥ १ ॥ २ ॥ ७४ ॥

लवणे स्यात् तु लावणम् ।

लवणे संस्कृतं लावणम् "सस्कृते भक्ष्ये" ॥६।२।१४०॥ इत्यण् ॥ १ ॥

पैठरोख्ये उखासिद्धे

उखायां स्थाल्यां सिद्धे संस्कृते पिठरे संस्कृतं पैठरम् ॥१॥ उखायां संस्कृतमु ख्यम् ' शूलोखाद् यः " ॥६।२।१४१॥ इति यः ॥ २ ॥

प्रयस्तं तु सुसंस्कृतम् ॥ ७५ ॥

परिव्ययपाकादिना प्रयत्नसाध्यं प्रयस्तम्, सुष्ठु संस्कृतम् ॥ १ ॥ ७५ ॥

पक्के राद्धं च सिद्धं च

पच्यते स्म पक्वम्, तत्र, अतएव 'विनाऽम्बुना' इति वचनादिहाऽम्बुनेति लभ्यते ॥ १ ॥ राध्यति स्म राद्धम् ॥ २ ॥ सिध्यति स्म सिद्धम् ॥ ३ ॥

भृष्टं पक्कं विनाऽम्बुना ।

भृज्ज्यते स्म भृष्टम्, अम्भसा विना पक्वम् ॥ १ ॥

भृष्टामिषं भटित्रं स्याद्भूतिर्भरूटकं च तत् ॥ ७६ ॥

भृष्टं यदङ्गारेषु विपक्वं मांसं तत्, भटत्यनेन भटित्रम् 'चन्थिवहि " ॥ (उणा-४५९) ॥ इतीत्रः ॥ १ ॥ भवति बलमनया भूतिः ॥ २ ॥ बिभर्ति बलं भरूटकम् ' कीचकपेचक-"॥ (उणा-३३) ॥ इत्यके निपात्यते ॥ ३ ॥ ७६ ॥

शूल्यं शूलाकृतं मांसं

शूले संस्कृतं शूल्यम् " शूलोखाद् यः " ॥६।२।१४१॥ इति यः ॥ १ ॥ शूलाक्रियते स्म पाकाय शूलाकृतम् ' शूलात् पाके " ॥७।२।१४२॥ इति डाच् । अन्ये तु सामान्यविशेषभावं परिहृत्य अनयोर्भटित्रेणैकार्थतामाहुः ॥ २ ॥

निष्क्वाथो रसकः समौ ।

निष्क्वाथो मांसस्य प्रक्वाथः ॥ १ ॥ रसः पिष्टमांसजस्तत्तुल्यो रसकः ॥२॥

प्रणीतमुपसपन्नं

प्रणीयते स्म प्रणीतं रूपरसादिनिष्पन्नमन्नम् ॥१॥ उपसपद्यते स्म उपसपन्नम् ॥२॥

स्निग्धे मसृणचिक्कणे ॥ ७७ ॥

स्निह्यति स्म स्निग्धः तत्र ॥ १ ॥ मस्यति मसृणः "भ्रूणतृण " ॥ (उणा-१८६) ॥ इति णे निपात्यते ॥ २ ॥ चीयते चिक्कणम् "चिक्कणकुक्कुण " ॥ (उणा-१९०) इति अणे निपात्यते चिगिरव्यक्तं कणति वा । कौशिकस्तु-चिक्क इत्यस्याणे चिक्कणमिच्छति ॥ ३ ॥ ७७ ॥

पिच्छिल तु विजिविल विज्जल विजिल च तत् ।

पिच्छा भाचामोऽस्यास्ति पिच्छिल "लोमपिच्छाद पेलम्" ॥ ७ । २ । २८ ॥ इतीलच् ॥ १ ॥ विमते चसति विजाविलम् विजिल च "स्थण्डिलक पिस-" ॥ ( उणा–४८४ ) ॥ इतीलान्तौ निपात्यते ॥ २ ॥ ३ ॥ विज् चल जल यत्र विज्जलम् विज्जिपिलमित्यपि ॥ ४ ॥

भावित तु वासितं स्यात्

भूष् अवकल्कने भाव्यत द्रव्यान्तरेण मिश्रीक्रियते स्म भावितम् ॥ १ ॥ वास्यते द्रव्यान्तरेण मिश्र्यते धूपपुष्पादिना वाऽधिवास्यते वासितम् यन्मुनि – धूपित वासित विदु ॥ २ ॥

तुल्ये समृष्टशोधिते ॥ ७८ ॥

समृज्यते स्म समृष्ट वालमक्षिकादिरहितम् ॥ १ ॥ शोध्यत स्म शोधितम् ॥ २ ॥ ७८ ॥

काञ्जिक काञ्जिकं घा याम्लारनाले तुपोदकम् ।

कुल्माषाभिपुतावन्तिसोमशुक्तानि कुञ्जलम् ॥ ७९ ॥

शुक्तं धातुघ्नमुक्षाह रक्षोघ्न कुण्डगोलकम् ।

महारस सुवीराम्ल सौवीर

कम्पयति दीपयति अग्निं कचते बध्नाति दोषान् वा काञ्जिकं 'कुपिकहदिक—' ॥ ( उणा–४५ ) ॥ इतीक निपात्यते काञ्च्यां पुरि भव वा ॥ १ ॥ यस्य जले पञ्जिकावत् काञ्जिक क जलमनक्तीति वा ॥ २ ॥ धान्यमम्लमति धान्याम्लम् ॥ ३ ॥ अरनालोऽरमत्र तत्समारनालम् ॥ ४ ॥ तुषाणामुदक तुषोदकम् ॥ ५ ॥ कुल्मापैर्यवादिभिरधक्षिभैरभिपूयते परिवास्यते स्म कुल्माषाभिपुत पक्वमपि तेन कुल्माषमभिपुतं चेति ॥ ६ ॥ अवन्तिषु सूयते अवन्तिसोमम् ॥ ७ ॥ शक्नोति निर्मलीकर्तुम् शोचति निमलीभवत्यनेन वा शुक्त 'पुतपित' ॥ (उणा–१०४ ) ॥ इति ते निपात्यते ॥ ८ ॥ कुत्स जाति कुञ्जलम् कुत्सितं जलमस्य वा पृषोदरादित्वात् ॥ ९ ॥ ७९ ॥ चक्ष्यते तुष्यत्यनेन शुक्त पुलीवक्षिण: "अकिर मिविकधिरचाऽस्य" ॥ ( उणा–२९३ ) ॥ इति र ॥ १० ॥ धातून् हन्ति धातुघ्न "अमिते" ॥ ५ । १ । ८३ ॥ इति टक् ॥ ११ ॥ उक्षत्यनेन उक्षाहम् ॥ १२ ॥ रक्षांसि हन्ति रक्षोघ्नम् तद्योगे आधिभौतिकबाधाभावात् ॥ १३ ॥ कुण्डं गुडति रक्षति अस्मै कुण्डगोलकम् ॥ १४ ॥ महान् रसोऽस्य महारसम् ॥ १५ ॥ सुवीरेष्वम्ल सुवीराम्लम् ॥ १६ ॥ सुवीरेषु प्रायो भव सौवीरम् ॥ १७ ॥

शेषश्चात्र—

कुल्माषाभिषुते पुन ।
पुष्टाम्मु मधुरा च ॥

म्रक्षण पुन ॥ ८० ॥
तैल स्नेहोऽभ्यञ्जन च

म्रक्ष्यतेऽनेन म्रक्षणम् ॥ १ ॥ ८० ॥ तिलानां विकारस्तैलम् , स्निह्यत्यनेन स्नेह , पुक्लीबलिङ्गौ ॥ २ ॥ ३ ॥ अभ्यज्यतेऽनेन अभ्यञ्जनम् ॥ ४ ॥

वेषवार उपस्कर ।

वेष व्याप्तिं वृणीते वेषवार कासमर्दत्रिकट्वादि ॥ १ ॥ शाकाद्युपस्क्रियतेऽनेन उपस्कर "पुनाम्नि" ॥ ५ । ३ । १३० ॥ इति घ ॥ २ ॥

तद्भेदानाह—

स्यात् तिन्तिडीक तु चुक्र वृक्षाम्लं चाम्लवेतसे ॥ ८१ ॥

तिम्यति आर्द्रीभवति तिन्तिडीक "सृणीकाऽस्तीक" ॥ ( उणा–५० ) ॥ इतीके निपात्यते, तिन्तिडिकोऽप्यत्र वा ॥ १ ॥ चकते तृप्यत्यनेन चुक्रम्, पुक्लीबलिङ्ग ॥ २ ॥ वृक्षस्याम्लं वृक्षाम्लम् ॥ ३ ॥ अम्लश्चासौ वेतसश्चेति नियासोऽम्लवेतस , तत्र ॥ ४ ॥ ८१ ॥

हरिद्रा काञ्चनी पीता निशाख्या वरवर्णिनी ।

हरिं पीत वर्ण द्राति गच्छति हरिद्रा ॥ १ ॥ काञ्चनवर्णत्वात् काञ्चनी ॥ २ ॥ पीता पीतवर्णेन ॥ ३ ॥ निशाख्येति रात्रिपर्याया ॥ ४ ॥ वरो वर्णोऽस्त्यस्या वरवर्णिनी ॥ ५ ॥

क्षव क्षुताभिजननो राजिका राजसर्षप ॥ ८२ ॥
असुरी कृष्णिका चासौ

क्षौत्यनेन क्षव ॥ १ ॥ क्षुतमभिजनयति क्षुताभिजनन ॥२॥ राजते राजिका ॥ ३ ॥ सर्षपाणां राजा राजसर्षप , राजदन्तादित्वात् पूर्वनिपात ॥ ४ ॥ ८२ ॥ अस्यते शाकादौ असुरी "वास्यसि" ॥ (उणा–४२३) ॥ इत्युर , असुरस्येव वा ॥ ५ ॥ कृष्णेव कृष्णिका वर्णेन ॥ ६ ॥

कुस्तुम्बुरु तु धान्यकम् ।
धन्या धन्याकं धान्याकं

कुत्सिता तुम्बुरु कुस्तुम्बुरुरोषधिजाति बक्सकादित्वात्, तत्फलमपि कुस्तुम्बुरु पुक्लीबलिङ्ग ॥ १ ॥ धान्यमिव धान्यकम् ॥ २ ॥ धने साधुधन्या ॥३॥ धन्यमकति धन्याकम् ॥ ४ ॥ धान्यमकति धान्याकम् ॥ ५ ॥

शेषश्चात्र—अथ स्यात् कृष्णमुरत्तका ॥

मरिचं कृष्णमूषणम् ॥ ८३ ॥
कोलकं वेल्लजं धर्मपत्तनं यवनप्रियम् ।

म्रियते श्लेष्माऽनेन मरिचं "मृकणिभ्यामीचः" ॥ (उणा-११७) ॥ इतीच् ॥ १ ॥ कृष्णं वर्णेन, कर्षति तैक्ष्ण्याद् वा ॥ २ ॥ ऊषति रुजति ऊषणम् ॥ ३ ॥ ८३ ॥ कोलति सस्त्यायति कोलकम् ॥ ४ ॥ वेल्ले वेलातटे जायते वेल्लजम्, वेला दन्त्यौष्ठ्यादिः ॥ ५ ॥ धर्मपत्तने भवं धर्मपत्तनम् ॥ ६ ॥ यवनानां प्रियं यवनप्रियम् ॥ ७ ॥

शेषश्चात्र—मरिचे तु द्वारवृत्तं मरीचं वल्लितं तथा ॥

शुण्ठी महौषधं विश्वा नागरं विश्वभेषजम् ॥ ८४ ॥

शुण्ठति शुष्यति शुण्ठिः "किकिचिकिंचि-" ॥ (उणा-६०८) ॥ इति किः, पक्षे ङीष् तु शुण्ठी ॥ १ ॥ महच्च तदौषधं च महौषधम् ॥ २ ॥ विशति दोषान् विश्वा, औणादिकः 'श्रीपृष्वीभ्यां' ॥ (उणा-५११) ॥ इति क्विः ॥ ३ ॥ नगराख्ये देशे भवं नागरम्, न न गिरति कफमिति वा नखादित्वात् ॥ ४ ॥ विश्वस्य भेषजं विश्वभेषजम् अनेकरोगापहित्वात् ॥ ५ ॥ ८४ ॥

वैदेही पिप्पली कृष्णोपकुल्या मागधी कणा ।

विदेहेषु भवा वैदेही ॥ १ ॥ पलत्यातुरं पिप्पली "पृपकिभ्यां डिद् पिप् च पूर्वस्य" ॥ (उणा-११) ॥ इत्यः ॥ २ ॥ कृष्णा वर्णेन कर्षति कफं वा ॥ ३ ॥ उपकोलति सस्त्यायति उपकुल्या "कुलश् च वा" ॥ (उणा-३६२) ॥ इति क्विप् ॥ ४ ॥ मगधेषु भवा मागधी ॥ ५ ॥ कणाः सन्त्यस्याः कणा ॥ ६ ॥

शेषश्चात्र—

पिप्पल्यामूषणा शौण्डी चपला तीक्ष्णतण्डुला ।
उपमा तण्डुलफला कोला च कृष्णतण्डुला ॥ १ ॥

तन्मूलं ग्रन्थिकं सर्वग्रन्थिकं चटिकाशिरः ॥ ८५ ॥

तन्मूलं पिप्पलीमूलम्, ग्रन्थिप्रतिकृतिः ग्रन्थिकम् ॥ १ ॥ सर्वे ग्रन्थयोऽत्र सर्वग्रन्थिकम् ॥ २ ॥ चटिकाशिरोरूपत्वात् चटिकाशिरः ॥ ३ ॥ ८५ ॥

त्रिकटु त्र्यूषणं व्योषं

त्रीणि कटूनि ऊषणानि च शुण्ठीमरिचपिप्पल्याख्यानि समाहृतानि त्रिकटु त्र्यूषणम् त्रिकटुकमपि ॥ १ ॥ २ ॥ विशेषेण ओषति दहति व्योषम् ॥ ३ ॥

अजाजी जीरकः कणा ।

अत्र स्वाभाविक मन्दाग्नित्वमजति क्षिपति अजाजी, लिङ्गादित्वादन्त्यि अजेर्वीर्न भवति ॥ १ ॥ जयति मन्दाग्नित्वं जीर "चिजि"॥(उणा–३९२)॥ इति रे दीर्घत्वम्, तत के, जीरक, पुल्लीबलिङ्ग ॥ २ ॥ कणा सन्त्यस्या कणा ॥ ३ ॥

शेषश्चात्र–जीरे जीरणजरणौ ॥

सहस्रवेधि बाल्हीकं जतुकं हिङ्गु रामठम् ॥ ८६ ॥

सहस्रं बहु वेधयति सहस्रवेधि ॥ १ ॥ बाल्हीके उदीच्यदेशे भव बाल्हीकम् ॥ २ ॥ जायते जतुक "कञ्चुकांशुक" ॥ (उणा–५७) ॥ इत्युके निपात्यते ॥ ३ ॥ हिनोति नासां हिङ्गु, पुल्लीबलिङ्ग "होर्हिन् च" ॥ (उणा–७६०) ॥ इति गुः ॥ ४ ॥ रमते उदीच्यदेशे भव रामठम् ॥ ५ ॥

शेषश्चात्र–

हिङ्गौ तु भूतनाशनम् ।
अगूढगन्धमत्युग्रम् ॥ ८६ ॥

न्याद स्वदनं खादनमशनं
निघसो वल्भनमभ्यवहार ।
जग्धिर्जक्षणभक्षणलेहा
मत्यवसायं घसिराहारः ॥ ८७ ॥
प्सानाऽवष्वाणाविष्वाणा भोजनं जेमनादने ।

न्यादन न्यादः "न्यादो नवा" ॥५।३।२४॥ इत्यलि निपात्यते ॥ १ ॥ स्वद्यते स्वदनम् ॥ २ ॥ खाद्यते खादनम् ॥ ३ ॥ अश्यतेऽशनम् ॥ ४ ॥ न्यदनं निघसः "घस्ल सनघतनी" ॥४।४।१७॥ इत्यलि अदेर्घस्ल ॥ ५ ॥ वल्भ्यते वल्भनम् ॥ ६ ॥ अभ्यवहरणमभ्यवहार ॥ ७ ॥ अदन जग्धिः "घपि कादो जग्ध्" ॥४।४।१६॥८॥ जक्ष्यते जक्षणम् ॥ ९ ॥ भक्ष्यते भक्षणम् ॥ १० ॥ लेहन लेहः ॥ ११ ॥ प्रत्यवसीयते प्रत्यवसानम् ॥ १२ ॥ घसन घसिः "पदिपठि" ॥ (उणा ६०७) ॥ इति इः ॥ १३ ॥ आहारणमाहार ॥ १४ ॥ ८७ ॥ प्सायते प्सानम् ॥१५॥ अवष्वणनमवष्वाण विष्वणनं विष्वाणः, "व्यवास्स्वनोऽशने" ॥२।३।४३॥ इति षत्वम् ॥ १६ ॥ १७ ॥ भुज्यते भोजनम् ॥ १८ ॥ जिम्यते जेमनम्, जमन च । यद् दुर्गः–'जमन भोजनं कथित' ॥ १९ ॥ अद्यते अदनम् ॥ २० ॥

चर्वणं चूर्णनं दन्तै

चर्व्यते चर्वणम् ॥ १ ॥

जिह्वाऽऽस्वादस्तु लेहनम् ॥ ८८ ॥

जिह्वया आस्वादन जिह्वाऽऽस्वादः, लिह्यते लेहनम् ॥ १ ॥ ८८ ॥

कल्यवर्त प्रातराश

कल्ये प्रभाते वर्त्तते कल्यवर्तं ॥ १ ॥ प्रातरशन प्रातराशः ॥ २ ॥

सग्धिस्तु सहभोजनम् ।

सह अग्धिर्भोजन सग्धि ; स्त्रीलिङ्ग, पृषोदरादित्वात् ॥ १ ॥ २ ॥

ग्रासो गुडेरक पिण्डो गडोल कवको गुडः ॥ ८९ ॥

गण्डोल कवल

ग्रसते ग्रासः ॥ १ ॥ गुड्यते गुडेर "कुगुपति" ॥ (उणा–४११) ॥ इति किदेर के गुडेरकः ॥ २ ॥ पिण्ड्यते पिण्डः, पुंस्त्रीलिङ्गः ॥ ३ ॥ गम्यते गडोलः 'पिञ्छोल-' ॥ (उणा–४९५) ॥ इत्योले निपात्यते ॥ ४ ॥ कौस्नेन कवक "वृकृ-" ॥ (उणा–२७) ॥ इत्यकः ॥ ५ ॥ गुडति गुडः; गूयते वा ॥ ६ ॥ ॥ ८९ ॥ गण्डति वदनैकदेशे भवति गण्डोलः "कटिपटि" ॥ (उणा–४९३) ॥ इत्योल ॥ ७ ॥ कौस्नेन कवलः, पुंक्लीबलिङ्गः, "कोर्वा" ॥ (उणा–४९९) ॥ इत्यलः ॥ ८ ॥

तृप्ते स्यादाघ्रातसुहिताऽऽशिता ।

तृप्यति तृप्तस्तत्र ॥ १ ॥ आघ्रायति स्म आघ्रातः, आघ्राणोऽपि ॥२ ॥ सुष्ठु दधाति स्म सुहित ॥ ३ ॥ आ अश्नाति स्म आशितः ॥ ४ ॥

तृप्ति सौहित्यमाघ्राणम्

तर्पण तृप्तिः ॥ १ ॥ सुहितस्य भावः सौहित्यम् ॥ २ ॥ आघ्रायते आघ्राणम् ॥ ३ ॥

अथ भुक्तसमुज्झिते ॥ ९० ॥

फेला पिण्डोलिफेली च

भुक्त च तत् समुज्झितं च भुक्तसमुज्झितं भुक्तोच्छिष्ट तत्र ॥ १ ॥ ९० ॥ फेल्यते त्यज्यते फेला "फेडः" ॥ ५ । ३ । १०६ ॥ इत्यः ॥ २ ॥ पिण्ड्यते पिण्डोलि बाहुलकादोलि । फेल्यते फेलि, स्त्रीलिङ्गो, "नाम्युपान्त्य" ॥ (उणा–६०९) ॥ इति किः ॥ ३ ॥ ४ ॥

स्वोदरपूरके पुन ।

कुक्षिम्भरिरात्मम्भरिरुदरम्भरिरप्यथ ॥ ९१ ॥

स्वमेवोदरं पूरयति यस्तत्र कुक्षिमात्मानमुदरमेव च बिभर्ति कुक्षिम्भरिः आत्मम्भरिः उदरम्भरिः कुक्ष्यात्मोदरात् भृग खि ॥ ५ । १ । ९० ॥ इति खिः ॥ १ ॥ २ ॥ ३ ॥ ९१ ॥

अज स्वाभाविक मन्दामित्यमजति क्षिपति अभाजी, लिहादित्सादचि अजेर्वीर्न भवति ॥ १ ॥ जयति मन्दामित्व जीर "चिजि"॥(उणा-३९२)॥ इति रे दीर्घत्वम्, ततः के, जीरका, पुंक्लीबलिङ्ग ॥ २ ॥ कणा सन्त्यस्याः कणा ॥ ३ ॥

शेषश्चात्र-जीरे जीरणजरणौ ॥

सहस्रवेधि वाल्हीकं जतुकं हिङ्गु रामठम् ॥ ८६ ॥

सहस्र बहु वेधयति सहस्रवेधि ॥ १ ॥ वाल्हीके उदीच्यदेशे भव वाल्हीकम् ॥ २ ॥ जायते जतुक "कञ्चुकांशुक" ॥ (उणा-५७) ॥ इत्युके निपात्यते ॥ ३ ॥ हिनोति नासां हिङ्गुः, पुंक्लीबलिङ्ग "हेर्हिन् च" ॥ ( उणा-७६० ) ॥ इति गुः ॥ ४ ॥ रमठे उदीच्यदेशे भव रामठम् ॥ ५ ॥

शेषश्चात्र-

हिङ्गौ तु भूतनाशनम् ।
अगूढगन्धमत्युग्रम् ॥ ८६ ॥

न्याद स्वदनं खादनमशन
निघसो वल्भनमभ्यवहार ।
जग्धिर्जक्षणभक्षणलेहा
मत्यवसाय घसिराहार ॥ ८७ ॥
प्सानाऽवष्वाणविष्वाणा भोजन जेमनादने ।

न्यादनं न्यादः "न्यादो नवा" ॥५।३।२४॥ इत्यलि निपात्यते ॥ १ ॥ स्वद्यते स्वदनम् ॥ २ ॥ खाद्यते खादनम् ॥ ३ ॥ अश्यतेऽशनम् ॥ ४ ॥ न्यदनं निघसः "घस्ल सनघच्नी" ॥४।४।१७॥ इत्यलि अदेर्घस्ल ॥ ५ ॥ वल्भ्यते वल्भनम् ॥ ६ ॥ अभ्यवहरणमभ्यवहारः ॥ ७ ॥ अदन जग्धिः "घपि चादो जग्ध्" ॥४।४।१६॥८॥ जक्ष्यते जक्षणम् ॥ ९ ॥ भक्ष्यते भक्षणम् ॥ १० ॥ लेहन लेहः ॥ ११ ॥ प्रत्यवसीयते प्रत्यवसानम् ॥ १२ ॥ घसनं घसिः "पदिपठि" ॥ (उणा ६०७) ॥ इति इः ॥ १३ ॥ आहारणमाहारः ॥ १४ ॥ ८७ ॥ प्सायते प्सानम् ॥१५॥ अवष्वणनमवष्वाणः, विष्वणनं विष्वाणः, "व्यवात्स्वनोऽशने" ॥२।३।४३॥ इति षत्वम् ॥ १६ ॥ १७ ॥ भुज्यते भोजनम् ॥ १८ ॥ जिम्यते जेमनम्, जमनं च । यद् दुर्गः-'जमन भोजन कथित' ॥ १९ ॥ अद्यते अदनम् ॥ २० ॥

चर्वणं चूर्णन दन्तै

चर्व्यते चर्वणम् ॥ १ ॥

जिह्वाऽऽस्वादस्तु लेहनम् ॥ ८८ ॥

जिह्वया आस्वादनं जिह्वाऽऽस्वादः, लिह्यते लेहनम् ॥ १ ॥ ८८ ॥

कल्यवर्त प्रातराश

कल्ये प्रभाते वर्त्तते कल्यवर्तः ॥ १ ॥ प्रातरशनं प्रातराशः ॥ २ ॥

सग्धिस्तु सहभोजनम् ।

सह अग्धिर्भोजनं सग्धिः स्त्रीलिङ्ग, पृषोदरादित्वात् ॥ १ ॥ २ ॥

ग्रासो गुडेरक पिण्डो गडोल कवको गुड ॥ ८९ ॥

गण्डोल कवल

ग्रसते ग्रास ॥ १ ॥ गुड्यते गुडेर "कुगुपाति" ॥ ( उणा–४२१ ) ॥ इति किरेरः, के गुडेरक ॥ २ ॥ पिण्ड्यते पिण्ड, पुंसीलिङ्ग ॥ ३ ॥ गड्यते गडोल "पिण्डोल-" ॥ ( उणा–४६५ ) ॥ इत्योले निपात्यते ॥ ४ ॥ कौत्स्येन कवक "वृकु-" ॥ ( उणा–२७ ) ॥ इत्यक ॥ ५ ॥ गुडति गुड, गूयते वा ॥ ६ ॥ ॥ ८९ ॥ गण्डति वदनैकदेशो भवति गण्डोल "कटिपटि" ॥ ( उणा–४९३ ) ॥ इत्योल ॥ ७ ॥ कौत्स्यनेन कवल, पुंसीलिङ्गः, "कोर्वा" ॥ ( उणा–४९९ ) ॥ इत्यल ॥ ८ ॥

तृप्ते स्त्वाघ्रातसुहिताऽऽशिता ।

तृप्यति तृप्तस्तत्र ॥ १ ॥ आघ्रायति स्म आघ्रातः, आघ्राणोऽपि ॥ २ ॥ सुष्ठु दधाति स्म सुहित ॥ ३ ॥ आ अश्नाति स्म आशितः ॥ ४ ॥

तृप्ति सौहित्यमाघ्राणम्

तर्पणं तृप्तिः ॥ १ ॥ सुहितस्य भावः सौहित्यम् ॥ २ ॥ आघ्रायते आघ्राणम् ॥ ३ ॥

भय भुक्तसमुज्झिते ॥ ९० ॥

फेला पिण्डोलिफेली च

भुक्तं च तत् समुज्झितं च भुक्तसमुज्झितं भुक्तोच्छिष्टं तत्र ॥ १ ॥ १० ॥ फेल्यते भज्यते फेला "फेल." ॥ ५ । ३ । १०६ ॥ इत्यः ॥ २ ॥ पिण्ड्यते पिण्डोलिः बाहुलकादोलिः । फेल्यते फेलिः, स्त्रीलिङ्गौ, "नाम्युपान्त्य" ॥ (उणा–६०९ ) ॥ इति किः ॥ ३ ॥ ४ ॥

स्वोदरपूरके पुन ।

कुक्षिम्भरिरात्मम्भरिरुदरम्भरिरप्ययम् ॥ ९१ ॥

स्वमेवोदरं पूरयति यस्तत्र कुक्षिमात्मानमुदरमेव च बिभर्ति कुक्षिम्भरिः आत्मम्भरिः; उदरम्भरिः कुक्ष्यात्मोदरात् भृगः खिः ॥ ५ । १ । ९० ॥ इति खि ॥ १ ॥ २ ॥ ३ ॥ ९१ ॥

आद्यून स्यादौदरिक विजिगीषाविवर्जिते ।

ईपदाम्यति स्म आद्यून "धुदिम्मने" ॥ ४ ॥ २ ॥ ७२ ॥ इति क्तस्य नत्वे "अनुनासिके च" ॥ ४ ॥ १ ॥ १०८ ॥ इति व ऊद् ॥ १ ॥ उदरे प्रसक्त औदरिक "उदरे त्विकणाद्यूने" ॥ ७ । १ । १८१ ॥ इतीकण् ॥ २ ॥

उदरपिशाच सर्वान्नीन सर्वान्नभक्षक ॥ ९२ ॥

उदरे पिशाच इव प्रसक्त उदरपिशाचः ॥ १ ॥ सर्वप्रकारमन्नं सर्वान्नं तदत्ति सर्वान्नीन "सर्वान्नमत्ति" ॥ ७ । १ । ९८ ॥ इति ईन ॥ २ ॥ सर्वान्नस्य भक्षयिता सर्वान्नभक्षक ॥ ३ ॥ ॥ ९२ ॥

शाष्कुल पिशिताशी

शष्कुली मांसोपलक्षण, साऽमत्ति शाष्कुल 'शॉष्कुल' इति मागुरि ॥ १ ॥ पिशिताशी मांसभक्षक ॥ २ ॥

उन्मदिष्णुस्तून्मादसयुत ।

उन्मादशील उन्मदिष्णु 'उद पचि" ॥ ५।२।२९ ॥ इतीष्णु ॥ १ ॥

गृध्नुस्तु गर्धनस्तृष्णक् लिप्सुर्लुब्धोऽभिलाषुक ॥९३॥

लोलुपो लोलुभ

गर्धनशीलो गृध्नु "त्रसिगृधि" ॥ ५।२।३२ ॥ इति क्नुः, "भूषा" ॥ ५।२।४२ ॥ इत्यने गर्धन ॥ १।२ ॥ तृष्णाशील तृष्णक् ॥ ३ ॥ लब्धुमिच्छु लिप्सु ॥ ४ ॥ लुभ्यति स्म लुब्धः ॥ ५ ॥ अभिलषणशीलोऽभिलाषुक ॥६॥९३॥ लुम्पतेर्लुभ्यतेश्च यङ्लुबन्तादचि लोलुप लोलुभ । एतौ पृथगर्थाविसेके ॥७॥८॥

शेषश्चात्र–लिप्सौ लालसलम्पटौ ।

लोल ॥

लोभस्तृष्णा लिप्सा वश स्पृहा ।

काङ्क्षाऽऽशंसागर्धवाञ्छाऽऽशेच्छेहातृड्मनोरथा ॥ ९४ ॥

कामोऽभिलाष

लोभन लोभः ॥ १ ॥ तर्षण तृष्णा ॥ २ ॥ लब्धुमिच्छा लिप्सा ॥ ३ ॥ वशनं वश "युवर्ण" ॥ ५।३।२८ ॥ इत्यल् ॥ ४ ॥ स्पृहण स्पृहा "भीषिभूषि" ॥ ५।३।१०९ ॥ इत्यङ् ॥ ५ ॥ काङ्क्षणं काङ्क्षा ॥ ६ ॥ आशसनमाशंसा ॥७॥ गर्धन गर्ध ॥ ८ ॥ वाञ्छन वाञ्छा ॥ ९ ॥ आ श्यति अनया आशा 'उपसर्गादात ॥५।३।११० ॥ इत्यङ् ॥१०॥ एषणमिच्छा "मृगयेच्छा" ॥५।३।१०१॥ इति साधु ॥ ११ ॥ ईहनमीहा "क्तट" ॥ ५।३।१०६ ॥ इत्यः, धमि इहो-

ऽपि ॥ १२ ॥ तर्पण तृद् ॥ १३ ॥ मन एव रथो दूरगामि यत्र मनोरथ मनो गवी च ॥१४॥९४॥ कमन काम, पुस्त्रीलिङ्ग ॥१५॥ अभिलषणमभिलाष ॥१६॥

शेषश्चात्र–लिप्सा तु धनाया ।
इच्छिरीप्सा तु कामना ॥

अभिध्या तु परस्वेहा

अभिचारेण ध्यानमभिध्या, परस्वविषया स्पृहा परस्वेहा, परस्वे विषम स्पृहेत्येके। दोषचिन्तापूर्वं परस्वे लिप्सेत्यर्थ । यत्कात्य –'विषमप्रार्थनाऽभिध्या'॥१॥

उद्धत पुन ।
अविनीत

उत्कण्ठ हन्ति गच्छति हिनस्ति वा उद्धत ॥ १ ॥ न विनीतोऽविनीत ॥२॥

विनीतस्तु निभृत प्रश्रितोऽपि च ॥ ९५ ॥

शास्त्रादिना विनीयते स्म विनीत ॥ १ ॥ निभृतोऽचपल ॥ २ ॥ प्रश्रयति स्म प्रश्रित ॥ ३ ॥ ९५ ॥

विधेये विनयस्थ स्यात्

विधातव्यो विधेयस्तत्र ॥ १ ॥ विनय शास्त्रज संस्कार इन्द्रियजयो वा तत्र तिष्ठति विनयस्थ ॥ २ ॥

आश्रवो वचने स्थित ।

आश्रृणोति वाक्यमाश्रव, वचनश्रवणे तत्पर ॥ १ ॥

वश्य प्रणेय

वशं गतो वश्य ' दृषपय ' ॥७।१।११॥ इति य ॥१॥ प्रणेतव्य प्रणेय ॥ २ ॥ विधेयादयः षडेकार्थाः इत्येके ।

धृष्टस्तु वियातो धृष्णुधृष्णजौ ॥ ९६ ॥

धृष्णोति प्रगल्भते धृष्ट धृषश्च ' ॥ ४।४।६६ ॥ इतीडभावः ॥१॥ विरुद्ध याति स्म वियात ॥ २ ॥ धर्षणशीलो धृष्णु ' त्रसिगृधि ' ॥५।२।३२॥ इति क्नु, तृषिधृषि " ॥ ५।२।८० ॥ इति नजिङि धृष्णज् ॥३॥४॥९६॥

वीक्षापन्नो विलक्ष

वीक्षं विस्मयमापन्नः प्राप्त वीक्षापन्न ॥१॥ विरुद्ध लक्ष्यते, विगतं लक्ष्यमस्य वा विलक्षः निष्प्रतिपत्तिरित्यर्थ ॥ २ ॥

अथाधृष्टे शालीनशारदौ ।

न शृणोति अशृण्वत्तत्र ॥ १ ॥ शालाप्रवेशनमर्हति शालीन "शालीनकौपीन" ॥ ६।४।१८५ ॥ इति निपात्यते ॥ २ ॥ शारदो नव इव सर्वत्र शारद, स्वल्पप्रतिभत्वात् ॥ ३ ॥

शुभंयु शुभसंयुक्त

शुभमिति विभक्त्यन्तप्रतिरूपकमव्ययं, शुभमस्याऽस्ति शुभंयु "ऊर्णाऽहम्" ॥ ७।२।१७ ॥ इति युस् ॥ १ ॥

स्यादहंयुरहंकृत ॥ ९७ ॥

अहमित्यव्ययम्, अहमस्याऽस्ति अहंयु ॥१॥ अहंकारी ॥२॥९७॥

कामुक कमिता कम्रोऽनुक कामयिताऽभिक ।

कामन कमरोऽभीक

कमनशील कामुक "शृकम" ॥ ५।२।४० ॥ इत्युकण्, तृनि कमिता, कामयिता च, "स्म्यजस" ॥ ५।२।७९ ॥ इति रे कम्रः ॥१॥२॥३॥४ ॥ अनु कामयते अनुक "अनो कमितरि" ॥ ७।१।१८८ ॥ इति क ॥ ५ ॥ अभि कामयतेऽभिक, अभीकश्च "अभेरीश्च वा" ॥७।१।१८९॥ इति के साधू ॥६॥७॥ "इक्तिः" ॥५।२।४४॥ इत्यने कामन, कमनोऽपि ॥ ८ ॥ काममते कमरः "सृपिच्छवादि" ॥ (उणा–३९७) इत्यरः ॥ ९ ॥

पञ्चभद्रस्तु विप्लुत ॥९८॥

व्यसनी

पञ्च भद्राणि कल्याणानि अस्य पञ्चभद्रोऽभद्रः; विपरीतलक्षणया भद्रमुक्तवत् ॥ १ ॥ विप्लवते स्म विप्लुत ॥२॥९८॥ द्यूतपरस्त्रीप्रमुखाणि व्यसनान्यस्य सन्ति व्यसनी ॥ ३ ॥

हर्षमाणस्तु प्रमना हृष्टमानस ।

विकुर्वाण

हर्षति इत्येवंशीलो हर्षमाण "वय:शक्ति" ॥ ५ । २ । २४ ॥ इति शान ॥ १ ॥ प्रहृष्ट मनोऽस्य प्रमनाः ॥ २ ॥ हृष्ट मानसमस्य हृष्टमानस ॥ ३ ॥ हर्षात् विकार याति विकुर्वाणः ॥ ४ ॥

विचेतास्तु दुरन्तर्विपरो मनाः ॥ ९९ ॥

विरुद्ध चेतोऽस्य विचेताः ॥ १ ॥ दुरन्तर्विभ्यः परो मन:शब्द दुर्मनाः, अन्तर्मना ; विमनाः; दुष्टमन्तर्लीन विरुद्ध च मनोऽस्येति कृत्वा ॥ २॥३॥४॥९९ ॥

मत्ते शौण्डोत्कटक्षीबा

मदेन माद्यति स्म मत्तस्तत्र ॥ १ ॥ शुण्डा मदिरा तस्यां भवः शौण्डः; शुण्डाऽस्त्यस्य वा ज्योत्स्नादित्वादण् ॥ २ ॥ उत्किरति उत्कटः "अप्रोगे" ॥ ७ । १ । १२५ ॥ इति कटः; उत्कान्तकटीप्रत्ययादयो वा ॥ ३ ॥ क्षीबते क्षीबः "अनुपसर्गाः" ॥ ४ । २ । ८० ॥ इति क्ते निपात्यते ॥ ४ ॥

उत्कन्तूत्सुक उन्मना ।

उत्कण्ठित

उद्गतं मनोऽस्य उत्कः "उत्सुको" ॥ ७।१।१९२ ॥ इति कः ॥१॥ उद्गतं मनोऽस्य उत्सुकः "उत्सुकोऽन्मनसि" ॥ ७।१।१९२ ॥ इति कः ॥ २ ॥ उद्गतं मनोऽस्य उन्मनाः ॥ ३ ॥ उत्कण्ठा सञ्जाताऽस्योत्कण्ठितः ॥ ४ ॥ 'इष्टार्थोद्युक्त उत्सुकः' इत्यमरः पृथगाह ।

अभिशस्ते तु वाच्यक्षारितदूषिताः ॥ १०० ॥

अभिशस्यते स्माभिशस्तस्तत्र ॥ १ ॥ वचनीयो वाच्यः ॥ २ ॥ क्षार्यते सरूपाचास्यते स्म क्षारितोऽक्षीकोत्तमपातकव्यपदेशः; आक्षारितोऽपि ॥ ३ ॥ दूष्यते स्म दूषितः, मैथुने प्रतीक्षेप ॥ ४ ॥ १०० ॥

गुणैः प्रतीते स्वाहतलक्षणः कृतलक्षण ।

आहतान्युद्घोषितानि लक्षणान्यस्य आहतलक्षणः ॥ १ ॥ कृता प्रसिद्धा लक्षणरूपा गुणा अस्य कृतलक्षणः ॥ २ ॥

निर्लक्षणस्तु पाण्डुरपृष्ठ

निर्गतानि लक्षणान्यस्य निर्लक्षणः ॥ १ ॥ पाण्डुरं निर्लक्षणं पृष्ठमस्य पाण्डुरपृष्ठः ॥ २ ॥

संकसुकोऽस्थिरे ॥ १०१ ॥

संकसति संकसुकः "सविभ्यां कसेः" ॥ (उणा-५२) ॥ इत्युकः ॥१॥ अस्थिरव्यपदेशस्तत्र ॥ २ ॥ १०१ ॥

तूष्णीशीलस्तु तूष्णीक

तूष्णींभावः शीलमस्य तूष्णीकः "तूष्णीकः" ॥ ६ । ४ । ६१ ॥ इति के निपात्यते ॥ १ ॥ २ ॥

विषयोऽनिष्टदुष्षधी ।

विरुद्धं यदि कामयते विषयः; अनिष्टा दुष्टा च धीर्यस्य स तथा ॥ १ ॥

मत्तो निगदितो नद्ध कीलितो यन्त्रित सित ॥ १०२ ॥

सदानित सयतश्च

बध्यते स्म बद्ध ॥१॥ निगद्यते निगदित ॥२॥ नह्यते स्म नद्ध ॥ ३ ॥ कील्यते स्म कीलित ॥ ४ ॥ यन्त्र्यते यन्त्रित ॥ ५ ॥ सीयते स्म सित ॥६॥ १०२ ॥ सदान्यते स्म सदानितः ॥ ७ ॥ संयम्यते सयत ॥ ८ ॥

स्यादुद्दान तु बन्धनम् ।

'दोंच् छेदने' 'देङ् पालने' वा उद्दीयते उद्दानम् ॥ १ ॥ बध्यतेऽनेन बन्धनम् ॥ २ ॥

मनोहतः प्रतिहत्त प्रतिबद्धो हतश्च स ॥ १०३ ॥

मनसि हतो मनोहत ॥१॥ प्रतिहन्यते स्म प्रतिहतः ॥२॥ प्रतेबन्धि प्रवृत्त निवारणार्थ, प्रतिबध्यते स्म प्रतिबद्ध ॥३॥ हन्यते स्म हतः ॥४॥१०३॥

प्रतिक्षिप्तोऽधिक्षिप्त

प्रतिक्षिप्यते स्म प्रतिक्षिप्त ॥ १ ॥ एवमधिक्षिप्त ॥ २ ॥

अवकृष्टनिष्कासितौ समौ ।

अवकृष्यते दूरीक्रियते स्म अवकृष्टः ॥ १ ॥ निष्कास्यते स्म निष्कासितः, निस्सारित इत्यर्थः ॥ २ ॥

आत्तगन्धेऽभिभूत

आत्तो गृहीतो गन्धोऽभिमानोऽस्य आत्तगन्धस्तत्र ॥ १ ॥ अभिभूयते स्माऽभिभूतः ॥ २ ॥

अपध्वस्ते न्यक्कृतधिक्कृतौ ॥१०४॥

अपध्वस्यते स्म अपध्वस्तस्तत्र ॥ १ ॥ न्यक्क्रियते स्म न्यक्कृत ॥ २ ॥ धिक्क्रियते स्म धिक्कृत ॥ ३ ॥ आत्तगन्धादय पश्चाप्येकार्था इत्येके ॥ १०४ ॥

निकृतस्तु विप्रकृत

निक्रियते स्म्नीक्रियते स्म निकृत ॥ १ ॥ एव विप्रकृत ॥ २ ॥

न्यक्कारस्तु तिरस्क्रिया ।

परिभावो विप्रकार परापर्यभितो भव ॥ १०५ ॥

अत्याकारो निकारश्च

*न्यक्करण न्यक्कार ॥ १ ॥ तिरस्करण तिरस्क्रिया ॥ २ ॥* परिभवन परिभावो बाहुलकाद् घञ् ॥ ३ ॥ विप्रकरण विप्रकार ॥ ४ ॥ परापर्यभिभ्यः परो

भव—पराभवः, परिभवः, अभिभव ॥ ५ ॥ ६ ॥ ७ ॥ १०५ ॥ अत्याकरण अत्याकारः ॥ ८ ॥ निकरण निकारः ॥ ९ ॥

विप्रलब्धस्तु वञ्चित ।

विप्रलभ्यते स्म विप्रलब्ध ॥ १ ॥ वञ्च्यते स्म वञ्चितः ॥ २ ॥

स्वप्नक् शयालुर्निद्रालु

स्वापशील स्वप्नक् "सृपितृषि" ॥ ५ । २ । ८० ॥ इति नजिङ् ॥ १ ॥ शयनशील शयालुः निद्राशीलस्वभावो निद्रालु "शीङ्श्रद्धा" ॥५।२।३७॥ इत्यालु ॥ २ ॥ ३ ॥

घूर्णिते प्रचलायित ॥ १०६ ॥

घूर्णते स्म घूर्णितस्तत्र ॥ १ ॥ प्रचला निद्राविशेषो यस्यामुपविष्टोऽपि घूर्णते, अप्रचलवान् प्रचलावान् भवति स्म प्रचलायितः, लोहितादित्वात् क्यषि क्तः प्रचला- इवाचरितो वा ॥ २ ॥ १०६ ॥

निद्राण शयित सुप्त

निद्राति स्म निद्राण ॥१॥ शेते स्म शयित ॥२॥ स्वपिति स्म सुप्तः ॥३॥

जागरूकस्तु जागरी ।

जागरणशीलो जागरूक "जागुः" ॥५।२।४८॥ इत्यूक, जागरिताऽपि ॥१॥ जागरोऽस्यास्य जागरी ॥ २ ॥

जागर्या स्याज्जागरणं जागरा जागरोऽपि च ॥ १०७ ॥

जागर्यते जागर्या, जागरा "जागुरश्च" ॥५।३।१०४॥ इत्यः, घनि जागरः "जागुर्भिणवि" ॥४।३।५२॥ इति नियमादत्र वृद्ध्यभाव ॥४॥१०७॥

विष्वगञ्चति विष्वद्र्यङ्

विष्वक् सर्वतोऽर्थेऽव्ययम् "सर्वादिविष्वग्" ॥३।२।१२२॥ इति अद्री विष्वद्र्यङ् ॥ १ ॥

देवद्र्यङ् देवमञ्चति ।

स्पष्टम् ॥ १ ॥

सहाञ्चति तु सध्र्यङ् स्यात् ।

"सहसमः" ॥३।२।१२३॥ इति सध्र्यादेशे सध्र्यङ् ॥ १ ॥

---

१ अथ तास्म्यमध्योऽपि ' इति श्रीदेवसागरगणयः

तिर्यङ् पुनस्तिरोऽञ्चति ॥ १०८ ॥

"तिरसस्तिर्यति" ॥३।२।१२४॥ इति तिरो तिर्यङ् ॥१॥१०८॥

संशयालुः संशयिता

संशयशील संशयालुः "शीङ्" ॥५।२।३७॥ इत्यालुः, सांशयिकोऽपि॥२॥

गृहयालुर्ग्रहीतरि ।

गृहयते इत्येवंशीलो गृहयालुः ॥ २ ॥

पतयालुः पातुकः स्यात्

पतयतीत्येवंशीलः पतयालुः ॥ १॥, पतनशीलः पातुकः "लषपत" ॥५।२।४१॥ इत्युकण् ॥ २ ॥

समौ रोचिष्णुरोचनौ ॥ १०९ ॥

इष्णुः, अनश्च ॥ १॥२॥१०९ ॥

दक्षिणार्हस्तु दक्षिण्यो दक्षिणीयः

दक्षिणामर्हतीति दक्षिणार्हः ॥१॥ दक्षिण्यः, दक्षिणीयः "दक्षिणाकडङ्गर" ॥६।४।१८१॥ इति यः, ईयश्च ॥२॥३॥

अथ दण्डितः ।

दापितः साधितः

दण्ड्यते स्म दण्डितः ॥ १ ॥ दाप्यते स्म दापितः ॥ २ ॥ एवं साधितः ॥३॥

अर्च्यस्तु प्रतीक्ष्यः

अर्चनीयोऽर्च्यः पूज्यः ॥ १ ॥ प्रतीक्षणीयो गुरुत्वात् प्रतीक्ष्यः ॥ २ ॥

पूजितेऽर्हितः ॥ ११० ॥

नमस्यितो नमसितोऽपचितार्चितोऽर्चितः ।

पूज्यते पूजितः, तत्र ॥ १ ॥ अर्ह्यतेऽर्हितः ॥ २॥११० ॥ नमस्क्रियते नमस्यितः, नमसितः "नमोवरिवः" ॥३।४।३७॥ इति क्यन्, तस्य क्ते "क्यो वा" ॥४।३।८१॥ इति वा लुक् ॥३॥४॥ अपचाय्यतेऽपचितः "अपचितः" ॥४।४।७७॥ इति क्ते निपात्यते, अपचायितोऽपि ॥५॥ अर्च्यतेऽर्चितः ॥६॥ अर्च्यतेऽर्चितः ॥७॥

पूजाऽर्हणासपर्याऽर्चा

पूजनं पूजा, "भीषिभूषि" ॥ ५।३।१०९ ॥ इत्यङ् ॥ १ ॥ अर्हणादीनां

---

१ "दप् दाने इत्यादिधातोर्दापित इति पाठ इति कलिङ्गपुरुषोत्तमौ" इति व्युत्पत्तिरत्नाकरे ।

इति द्वयरप् ॥ २ ॥ पुमांस चलमति पुंश्चली ॥ ३ ॥ कर्षति मनश्चर्षणि " कृषेश्च चादेः " ॥ ( उणा–६४१ ) ॥ इति अणि, कस्य चत्वं च, ङयां चर्षणी ॥ ४ ॥ बध्नाति चित्तं बन्धकी "दृकृ–" ॥(उणा–२७)॥ इत्यक ॥ ५ ॥ न विनीता अविनीता ॥ ६ ॥ पांसुर्मालिन्यहेतुरस्त्यस्याः पांसुला, सिध्मादित्वाद् लः ॥७॥१९२॥ स्वयमीरितुं शीलमस्याः स्वैरिणी " स्वैरस्वैर्यक्षौहिण्याम् " ॥ १।२।१५ ॥ इत्यैत्वम् ॥ ८ ॥ कोलति कुलटा " कुलिविलिभ्यां कित् " ॥ ( उणा १४३ ) ॥ इत्यटः कुलान्यटति शीलं भेत्तु वा पृषोदरादित्वात्, कुत्सितं लटति इति वा ॥ ९ ॥

शेषश्चात्र–

कुलटायां तु दुःश्मश्री बन्धुरा कलकूणिका ।
धर्षणी लञ्छनी खण्डशीला मदननालिका ॥
त्रिलोचना मनोहारी ॥

याति या प्रियं साऽभिसारिका ।

मदनेन मदेन वा या श्लिष्टा प्रियमभिसरति, अभिसारयति वा सा अभिसारिका, यद्भरत —

" हित्वा लज्जाभये श्लिष्टा मदेन मदनेन वा ।
अभिसारयते कान्तं सा भवेदभिसारिका" ॥१॥१॥

वयस्यालिः सखी सध्रीची

वयसा तुल्या वयस्या " तुल्यपथ " ॥७।१।११॥ इति य ॥ १ ॥ अलती आलिः " कृशृकुटि " ॥ ( उणा ६१९ ) ॥ इति णिदिः ॥ २ ॥ सनुते सखी " सनेर्डखिः " ॥ ( उणा–६२५ ) ॥ " नारीसखी–" ॥ २।४।७६ ॥ इति ङीः ॥ ३ ॥ सहाञ्चति सध्रीची " अचः " ॥ २।४।३ ॥ इति ङी ॥ ४ ॥

अशिश्वी तु शिशुं विना ॥ १९३ ॥

नास्ति शिशुरस्या अशिश्वी "अशिशोः" ॥२।४।८॥ इति ङी ॥१॥१९३॥

पतिवत्नी जीवत्पतिः

पतिरस्त्यस्याः पतिवत्नी ' पतिवत्न्यन्तर्वत्न्यौ भार्यागर्भिण्योः " ॥२।४।५३॥ इति रूपं साधुः ॥१॥ जीवन् पतिरस्या जीवत्पतिः, जीवत्पत्नी अपि ॥ २ ॥

विश्वस्ता विधवा समे ।

विश्वसिति स्म विश्वस्ता ॥ १ ॥ विगतो धवो भर्ता अस्या विधवा ॥ २ ॥

निर्वीरा निष्पतिसुता

निर्गतौ वीरौ पतिपुत्रौ अस्या निर्वीरा, अवीराऽपि ॥ १ ॥

**जीवतोका तु जीवसूः ॥ १९४ ॥**

जीवतोकमपत्यमस्या जीवतोका ॥ १ ॥ जीवा जीवन्ती सूः प्रसूतिरस्या जीवसूः ॥ २ ॥ १९४ ॥

**नश्यत्प्रसूतिका निन्दुः**

नश्यन्ती म्रियमाणा प्रसूतिर्यस्याः सा तथा, निन्दत्यात्मानं निन्दुः "मृगय्वा" (उणा ७१६) ॥ इति बहुवचनाद् उः ॥ १ ॥

**सत्वसुर्नरमालिनी ।**

सह स्मश्रुणा वर्तते सश्मश्रुः नरत्वं गच्छे धारयति नरमालिनी ॥ १ ॥

शेषश्चात्र– पालिः सश्मश्रुयोषिति ॥

**कात्यायनी त्वर्धवृद्धा काषायवसनाऽधवा ॥ १९५ ॥**

कतस्यापत्यमिव कात्यायनी कात्यायन्याकारत्वात्, त्रिलक्षणेयम् अर्धं वयो अस्या अर्धवृद्धा, कषायेन रक्तं काषायं वसनमस्या काषायवसना, नास्ति धवो अस्या अधवा रण्डेत्यर्थः ॥ १ ॥ १९५ ॥

**श्रवणा भिक्षुकी मुण्डा**

शृणोति श्रवणा, श्रमणाऽपि च ॥ १ ॥ भिक्षणशीला भिक्षुः के, ङ्यां च भिक्षुकी ॥ २ ॥ मुण्ड्यते मुण्डा ॥ ३ ॥

शेषश्चात्र– श्रवणायां भिक्षुणी स्यात् ॥

**पोटा तु स्त्री नृलक्षणा ।**

पुष्यते पुंस्त्वेन पोटा स्त्री नृलक्षणा श्मश्रुमत्यस्पृष्टस्तना नृलक्षणा ॥ १ ॥

**साधारणस्त्री गणिका वेश्या पण्यपणाङ्गना ॥१९६ ॥**
**भुजिष्या लञ्जिका रूपाऽऽजीवा**

साधारणा बहूनां स्त्री च साधारणस्त्री ॥१॥ गण्यते ... गणिका ... रत्यस्या वा ॥ २ ॥ वेशे वेश्यावाटे भवा वेश्या दिगादित्वाद् य वेशेन शोभते ॥ ३ ॥ पण्येन पणेन चाङ्गना पण्याङ्गना पणाङ्गना ॥४॥५॥ १९६ ॥ भुज्यते ... भुजिभुजिभ्यां किष्यः ' ॥ ( उणा २८४ ) ॥६॥ लज्जति मर्त्यमते ... ॥ ७ ॥ रूपेणाऽऽजीवति रूपाजीवा ॥८॥

... शेषश्चात्र– वेश्यायां तु खगालिका ।

वारवाणिः क्षमश्रेष्ठा क्षमा ॥

वारवधूः पुनः ।

सा वारमुख्या

सा वेश्या वारे सेवाक्रमे नियुक्ता वधूः स्त्री वारवधूः ॥ १ ॥ वारे सेवाक्रमे मुख्या वारमुख्या ॥ २ ॥

अथ चुन्दी कुट्टनी शम्भली समाः ॥१९७॥

चुद हावकरणे चुदति चुन्दी पृषोदरादित्वात्, देश्योऽयमित्यन्ये ॥ १ ॥ कुट्टयति कुट्टनी "रम्यादिभ्यः कर्तरि" ॥५।३।१२६ ॥ इत्यनट् ॥ २ ॥ शं श्रेयो भक्ते हिनस्ति शम्भली, शम्भं श्रेयोयुक्तं शाति वा ॥ ३ ॥ १९७ ॥

पोटा वोटा च चेटी च दासी च कुटहारिका ।

पुटति अधमेन श्लिष्यति पोटा, अचादित्वात् वत्वे वोटा ॥ १ ॥ २ ॥ चेटति चेटी ॥ ३ ॥ दासते दस्यते वा दासी ॥ ४ ॥ कुटं घटं हरति कुटहारिका ॥ ५ ॥
शेषश्चात्र–चेट्यां गणेरुका ॥

भद्रा कुम्भदासी च ॥

नग्ना तु कोटवी

न नस्ते "दिननग्न" ॥ (उणा २६८) ॥ इति ने निपातनात् नग्ना, विवस्त्रा योषित् मुक्तकेशीत्यागम, नग्निकाऽपि ॥ १ ॥ कोटेन कुब्जावस्थात् कुटिलत्वेन वेति याति कोटवी "क्वचित्" ॥५।१।१७१ ॥ इति डः, कुटतीति वा "कैरवभैरव" ॥ (उणा ५१९) ॥ इति निपात्यते ॥ २ ॥

वृद्धा पलिक्नी

पलिता पलिक्नी "क्न: पलिता–" ॥२।४।३७॥ इति ङ्यां साधुः ॥१॥

अथ रजस्वला ॥ १९८ ॥

पुष्पवत्यधिरात्रेयी स्त्रीधर्मिणी मलिन्यवी ।

उदक्या ऋतुमती च

रजोऽस्त्यस्या रजस्वला, कृष्यादित्वाद् वलच् ॥ १ ॥ १९८ ॥ मतौ पुष्पवती "पुष्पिता" इति माला ॥२॥ अवति भूमाविसाधिः "तृस्तम्भ–" ॥ (उणा–६११) ॥ इति इः, अथादेशः न धीयते मनोऽस्यामिति वा ॥ ३ ॥ आत्रायते आत्रेयी "य एचातः" ॥ ५।१।२८ ॥ गौरादित्वात् ङी, अत्रेरपत्यमित्येके ॥ ४ ॥ स्त्रीधर्मो रजोऽस्त्यस्याः स्त्रीधर्मिणी ॥ ५ ॥ मलोऽस्त्यस्या मलिनी, गौरादित्वाद् रजस्वलायां ङी ॥६॥ अव्यते रक्षते अवीः "मृस्तृतन्त्रि–" ॥ (उणा–७११) ॥

इति ईः ॥७॥ उदके भवा उदक्या " माम्न्युदकात् " ॥ ४।३।१२५ ॥ इति यः, उदकमर्हतीति वा दण्डादित्वाद् यः ॥ ८ ॥ ऋतु रजोऽस्या अस्ति ऋतुमती ॥९॥

पुष्पहीना तु निष्कला ॥ १९९ ॥

निर्गता कला यस्या निष्कला, निष्क्रान्ता कलाभ्योऽष्टादिभ्य इति वा ॥१॥१९९॥

राका तु सरजा कन्या

गुरुभ्यो कन्यां राति ददाति राका "भीण–" ॥(उणा–२७)॥ इति कः ॥१॥

स्त्रीधर्मः पुष्पमार्तवम् ।

रजः

स्त्रीणां धर्मः स्त्रीधर्मः ॥१॥ पुष्पमिवेन वरागमिति पुष्पं, पुष्पं फलमिवोत्पाद वा ॥२॥ ऋतुरेव आर्तवम्, ऋतु स्त्रीरजोऽत्र ऋतौ गर्भग्रहणकाले भवं वा, ऋतुः प्राप्तोऽस्य वा " ऋत्वणादिभ्योऽण् " ॥५।४।१२५॥३॥ रज्यतेऽनेन रजः स्त्रीलिङ्गः " मिथिरञ्ज्यु–" ॥ ( उणा–९७१ ) ॥ इति किरस् ॥ ४ ॥

तत्कालस्तु ऋतुः

तस्य रजसः कालः समयस्तत्कालः, इयर्ति ऋतुः पुंलिङ्गः "अञ्ज्यर्तेः कित्" ॥ ( उणा–७७७ ) ॥ इति तुन् ॥ १ ॥

सुरतं मोहनं रतम् ॥ २०० ॥

संवेशनं सम्प्रयोगः समोगश्च रहो रतिः ।

ग्राम्यधर्मो निधुवनं कामकेलिः पशुक्रिया ॥ २०१ ॥

व्यवायो मैथुनं

सुष्ठु रमन्तेऽत्र, शोभनं रतं वा सुरतम् ॥ १ ॥ मुह्यन्तीन्द्रियाण्यत्र मोहनम् ॥ २ ॥ रमणं रतम् ॥ ३ ॥ २०० ॥ संविशन्त्यस्मिन्नत्र संवेशनम् ॥ ४ ॥ संप्रयोजनं सम्प्रयोगः ॥ ५ ॥ संभुज्यते सुखमत्र समोगः ॥ ६ ॥ रहसि जायमानत्वाद् रहः ॥ ७ ॥ रमणं रतिः ॥ ८ ॥ ग्राम्याणामविवेकिनां धर्मो ग्राम्यधर्मः ॥ ९ ॥ निधूयन्तेऽङ्गान्यत्र निधुवनम् ॥१०॥ कामस्य केलिः कामकेलिः ॥११॥ पशूनां क्रिया चेष्टा पशुक्रिया पशुधर्मोऽपि ॥ १२ ॥ २०१ ॥ व्यवायनं व्यवायः ॥ १३ ॥ मिथुनस्य स्त्रीपुंसयोः कर्म मैथुनं, युवादित्वादण् ॥ १४ ॥

स्त्रीपुंसौ द्वन्द्वं मिथुनं च तत् ।

स्त्री च पुमांश्च स्त्रीपुंसौ, 'स्त्रियाः पुंसो द्वन्द्वाच्च' ॥ ५।४।७७ ॥ इत्यच्समासान्तः ॥ १ ॥ द्वौ द्वौ द्वन्द्वं 'द्वन्द्वं वा' ॥ ८।१।१५ ॥ इति निपात्यते ॥२॥ मेथन्ते

सगच्छते मिथुनम् " पिशिमिथि–" ॥ ( उणा–२९० ) ॥ इति किथुन ॥ १ ॥

अन्तर्वत्नी गुर्विणी स्याद्गर्भवत्युदरिण्यपि ॥ २०२ ॥

आपन्नसत्त्वा गुर्वी च

अन्तर्विद्यतेऽस्यामन्तर्वत्नी " पतियत्न्यन्तर्वत्न्यौ " ॥ २।४।५१ ॥ इति कर्षा साधु ॥ १ ॥ गुरुर्गर्भोऽस्त्यस्या गुर्विणी, भिक्षादित्यादिनि पृषोदरादित्वात् साधु " भ्यादेर्नामिनो–" ॥२।१।६१॥ इति दीर्घस्यामित्यस्येन ज्ञापितत्वात्, भयस्य गुर्वे ति गर्भपालनायेति वा ॥ २ ॥ गर्भोऽस्त्यस्या गर्भवती, एवमुदरिणी ॥३॥४॥२०२॥ आपन्नं गृहीतं सत्त्वं गर्भोऽनया आपन्नसत्त्वा ॥५॥ गुर्वी गर्भवत्त्वात् ॥ ६ ॥

श्रद्धालुर्दोहृदाऽन्विता ।

श्रद्धाशीला श्रद्धालु "शीङ्श्रद्धा" ॥ ५।२।३७ ॥ इत्यालु ॥ १ ॥ दोहदं गर्भिण्या अभिलाषस्तेनाऽन्विता ॥ २ ॥

विजाता च प्रजाता च जाताऽपत्या प्रसूतिका ॥ २०३ ॥

विजायते स्म विजाता, एवं प्रजाता ॥ १ ॥ २ ॥ जातमपत्यमस्या जाताऽपत्या ॥३॥ प्रसूते स्म प्रसूता सैव प्रसूतिका, प्रजाता सूतिरस्या वा ॥ ४॥२०३ ॥

गर्भस्तु गरभो भ्रूणो दोहदलक्षणं च स ।

गीर्यते गर्भः " गृवृरमि " ॥ (उणा ३२७ ) ॥ इति भ ॥ १ ॥ "कृशॄ" ( उणा ३२९ ) ॥ इत्यभे गरभ ॥ २ ॥ भ्रियते कुक्षौ भ्रूण " भ्रूणतृण " ॥ ( उणा १८६ ) ॥ इति णे निपात्यते ॥ ३ ॥ दोहदो लक्षणं चिह्नमस्य दोहदलक्षणं क्लीवलिङ्ग ॥ ४ ॥

गर्भाशयो जरायूल्वे

गर्भ आशेतेऽत्र गर्भाशयः ॥ १ ॥ जरामेति जरायुः, पुंलिङ्गः "कृवापाजि" ( उणा १ ) ॥ इत्युण् ॥ २ ॥ अकल्याणोति उल्वं पुंक्लीबलिङ्गः, "दास्यलेल्वात" ॥ ( उणा ३१९ ) ॥ इति व ॥ ३ ॥

कललोल्बे पुन समे ॥ २०४ ॥

कलमति कललं शुक्रशोणितसमवायः " मृदिकन्दि " ॥ ( उणा ४६५ ) ॥ इत्यल , के लस्तीति वा; अथल्वमुल्बं पुंक्लीबलिङ्गौ ॥१॥२॥२०४॥

दोहदं दौर्हृदं श्रद्धा लालसा

द्वे हृदये यस्य दोहदं पुंक्लीबलिङ्ग पृषोदरादित्वात्, दोहमिच्छापूरणं ददाति वा ॥१॥ अभिप्रायान्तरेण दुष्टं हृदयं दुर्हृदयं तस्य भावः कर्म वा दौर्हृदं, युवादित्वादण्,

धातुस्तस्माद् "हृद्गगसिन्धौ" ॥ ७।३।२५ ॥ इत्युत्तरपदस्य च वृद्धिः ॥ २ ॥ धयाने धदा ॥ ३ ॥ सर्वो ससन लालसा पुंस्त्रीलिङ्ग । अमरस्तु "दोहदमिच्छाम्, इच्छातिरेकं तु लालसाम्" आह ॥ ४ ॥

सूतिमासि तु वैजनन

सूते प्रसवस्य मासस्तत्र "दशमे मासि सूते वै" इति श्रुतेः,

"नवमे दशमे वाऽपि प्रबलैः सूतिमारुतैः ।
निःसार्यते बाण इव यन्त्रच्छिद्रेण स ज्वरः" ॥ १ ॥

इति स्मृतेश्च नवमो दशमो वा मासः । विजनने भवो वैजनन ॥ १ ॥

विजनन प्रसव

विजन्यते विजननम् ॥ १ ॥ प्रसवन प्रसव ॥ २ ॥

नन्दन पुत्र ॥ २०५ ॥

उद्वहोऽङ्गात्मज सूनुस्तनयो दारक सुत ।

पुत्र

नन्दयति नन्दन "नन्द्यादिभ्यः" ॥ ३।१।१३४ ॥ इत्यन ॥ १ ॥ २०५ ॥ उद्वहत्युद्वह ॥ २ ॥ अङ्गादात्मनश्च जायतेऽङ्गज आत्मज "अजाते-" ॥३।२।१०१॥ इति ड ॥ ३ ॥ ४ ॥ सूयते सूनुः "सुवः कित्" ॥(उणा-३२८)॥ इति नु ॥ ५ ॥ तनोति कुल तनयः "कृग्रुवलि-" ॥ (उणा-३९५) ॥ इत्ययः ॥ ६ ॥ दारयति दुःखं दारकः ॥ ७ ॥ सुनोति सुतः "सुसितनि" ॥ (उणा-३०१) ॥ इति क्त् त ॥ ८ ॥ पुनाति, पवते वा पितृपंक्तिमिति पुत्राद्यो निपातनात् पुत्र यदाहु – "पूरीति नरकस्याख्या दुःखं च नरकं विदुः" इति, पुन्नाम्नो नरकात् त्रायते इति वा । यन्मनुः—

"पुन्नाम्नो नरकाद् यस्मात् पितरं त्रायते सुतः ।
तस्मात् पुत्र इति प्रोक्त स्वयमेव स्वयम्भुवा" ॥१॥ इति ।

"आतोऽनुपसर्गे कः" ॥ ३ । २ । ३ ॥ ९ ॥

शेषश्चात्र– पुत्रे तु कुलधारकः ॥
सन्तानादौ द्वितीयश्च ॥

दुहितरि स्त्रीत्वे

यन्त्यात्य शब्दाः स्त्रीत्वे वर्तमाना दुह्यतेऽनया मातापिता दुहिता "नप्तृनेष्टृ" ॥ (उणा ८६५) ॥ इति साधु, तस्यां दुहितरि वर्तन्ते तेन नन्दनादिभ्य आप्" ॥ ४।१।४॥ इत्यापि नन्दना ॥ १ ॥ उद्वहा ॥ २ ॥ अङ्गजा ॥ ३ ॥ आत्मजा

॥ ४ ॥ सूनु ॥ ५ ॥ तनया ॥६॥ दारिका ॥७॥ सुता ॥ ८ ॥ पुत्राद् गौरादित्वाद् ङ्यां पुत्रीति ॥ ९ ॥

शेषश्चात्र– पुम्यां धीदा समर्थुका ।
देहसंचारिणी चापि ॥

तोकापत्यप्रसूतय ॥ २०६ ॥

तुक् प्रजोभयो

उभयो – पुत्रे, दुहितरि च, तौति हिनस्ति दु खं तोक "भीम्"॥ (उणा २९) ॥ इति क ॥ १ ॥ न पतन्ति येन जातेन पूर्वजास्तदपत्य "नमो हरितपतेः" ॥ (उणा ३५८) ॥ इति य ॥ २ ॥ प्रसूयतेऽसौ प्रसूति ॥ ३ ॥ २०६॥ तौतीति तुक् "तो किच्" ॥ (उणा ८६९) ॥ ४ ॥ प्रजायते प्रजा ॥ ५ ॥

शेषश्चात्र– अपत्ये सन्तानसन्तती ॥

भ्रात्रीयो भ्रातृव्यो भ्रातुरात्मजे ।

भ्रातुरपत्यं भ्रात्रीयः "ईयः स्वसुश्च" ॥ ६ । १ । ८९ ॥ इतीय ॥ १ ॥ "भ्रातुर्व्यः" ॥ ६ । १ । ८८ ॥ इति व्ये भ्रातृव्य ॥ २ ॥

स्वस्रीयो भागिनेयश्च जामेय कुतपश्च स ॥ २०७ ॥

स्वसुरपत्यं स्वस्रीयः "ईय स्वसुश्च" ॥ ६ । १ । ८९ ॥ १ ॥ भगिन्या अपत्यं भागिनेयः "ङ्याप्त्यूङः"॥६। १ । ७० ॥ इत्येयण् ॥ २ ॥ जामेरपत्यं जामेयः "इतोऽनिञः" ॥ ६ । १ । ७२ ॥ इत्येयण् ॥ ३ ॥ कुत्स सौत्र, कुतयति कुतपः "भुजिकुति" ॥ (उणा ३०५) ॥ इति किदप ॥ ४ ॥ २०७ ॥

नप्ता पौत्र पुत्रपुत्र

नमति पूर्वजेभ्यो नप्ता "नमे प् च" ॥ (उणा ८६२) ॥ इति तृः ॥ १ ॥ पुत्रस्यापत्यमनन्तरं पौत्र "पुनर्भूपुत्र" ॥ ६ । १ । ३९ ॥ इत्यम् ॥ २ ॥

दौहित्रो दुहितु सुत ।

दुहितुरपत्यं दौहित्रः "पुनर्भूपुत्र" ॥ ६।१।३९ ॥ इत्यम् ॥१॥

शेषश्चात्र– नप्ता तु दुहितु पुत्रे ॥

प्रतिनप्ता प्रपौत्र स्यात्

प्रतिजातो नप्तुः प्रतिनप्ता ॥ १ ॥ प्रजात पौत्रात् प्रपौत्रः पौत्रापत्यम्, आदिपुरुषाच्चतुर्थ ॥२॥

तत्पुत्रस्तु परम्पर ॥ २०८ ॥

तस्य प्रपौत्रस्य पुत्रस्तत्पुत्रः, परात्परतरः परम्परः पृषोदरादित्वात्, परम्परा अस्यास्तीति वा ॥१॥ २०८ ॥

पैतृष्वसेयः स्यात् पैतृष्वस्रीयस्तुक् पितृष्वसुः ।

पितृष्वसुरपत्यं पैतृष्वसेयः, पैतृष्वस्रीयः "मातृपित्रादेर्डेयणीयणौ" ॥६।१।९०॥ पितृष्वसुस्तुक् अपत्यम् ॥१॥२॥

मातृष्वस्रीयस्तुग् मातृष्वसुर्मातृष्वसेयवत् ॥ २०९ ॥

मातृष्वसुः सुतोऽपत्यं मातृष्वस्रीयः, मातृष्वसेयः ॥ १ ॥ २ ॥ २०९ ॥

विमातृजो वैमात्रेयः

विरुद्धा माता विमाता तस्या जातो विमातृजः, विमातुरपत्यं वैमात्रेयः, शुभ्रादित्वादेयण् ॥ १ ॥

द्वैमातुरो द्विमातृजः ।

द्वयोर्मात्रोरपत्यं द्वैमातुरः "सङ्ख्यासम्भद्रान्मातुर्मातुर्च" ॥६।१।६६॥ इत्यण्, द्वाभ्यां जातो द्विमातृजः ॥ १ ॥

सत्यास्तु तनये सांमातुरवद् भाद्रमातुरः ॥ २१० ॥

संमताया मातुरपत्यं सांमातुरः, एवं भाद्रमातुरः "सङ्ख्यासंभद्रा" ॥ ६।१।६६ ॥ इत्यण् ॥ १ ॥ २ ॥ २१० ॥

सौभागिनेयकानीनौ सुभगाकन्ययोः सुतौ ।

सुभगाया अपत्यं सौभागिनेयः "कल्याण्यादेरिन् चान्तस्य" ॥६।१।७७॥ इत्येयण् ॥ १ ॥ कन्याया अपत्यं कानीनः "कन्यात्रिवेण्याः कनीनत्रिवणं च" ॥६।१।६२॥ इत्यण् ॥ १ ॥

पौनर्भवपारस्त्रैणेयौ पुनर्भूपरस्त्रियोः ॥ २११ ॥

पुनर्भ्वा अपत्यं पौनर्भवः "पुनर्भूपुत्र–" ॥ ६।१।३९ ॥ इत्यण् ॥ १ ॥ परस्त्रिया अपत्यं पारस्त्रैणेयः "कल्याण्यादेः–" ॥ ६।१।७७ ॥ इत्येयण् ॥१॥२११॥

दास्या दासेरदासेयौ

क्षुद्र इत्येव, दास्या अपत्यं दासेरः "क्षुद्राभ्य एरण् वा" ॥६।१।८०॥ पक्षे एयणि दासेयः ॥ १ ॥ २ ॥

नाटेरस्तु नटीसुतः ।

नट्या अपत्यं नाटेरः 'क्षुद्रा–' ॥६।१।८०॥ इत्येरण् । नाटेयोऽपि ॥ १ ॥

बन्धुलो बान्धकिनेयः कौलटेरोऽसतीसुतः ॥ २१२ ॥

बन्धून् ख्याति बन्धुल ॥१॥ बन्धक्या अपत्य बान्धकिनेय "कल्याण्यादे-" ॥६।१।७७॥ इत्येयण् ॥ २ ॥ अत्र कुलटा असती, तदपत्यं कौलटेर "क्षुद्रा-" ॥६।१।८०॥ इत्येरण् ॥ १ ॥ २१२ ॥

स तु कौलटिनेय, स्याद् यो भिक्षुकसतीसुत ।

भिक्षार्थिनी कुलान्यटति कुलटा भिक्षुकसती तस्या अपत्यं कौलटिनेयः "कुलट्या वा" ॥६।१।७८॥ इत्येयण्, इन् चान्तस्य ॥१॥

द्वावप्येतौ कौलटेयौ

एतौ- असतीभिक्षुकसत्यो सुतौ ॥ १ ॥

क्षेत्रजो देवरादिज ॥ २१३ ॥

क्षेत्रे जात क्षेत्रजः, यन्मनु -

"यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य वा ।
स्वधर्मेण नियुक्तायां स पुत्र क्षेत्रज स्मृत " ॥१॥१॥२९३॥

स्वजाते त्वौरसोरस्यौ

उरसा कृत औरस, उरस्य "उरसो याणौ" ॥६।३।१९६॥ यन्मनु-

"स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद् हि यम् ।
तमौरस विजानीयात् पुत्र प्राथमकल्पिकम्" ॥ १ ॥ २ ॥

मृते भर्तरि जारज ।

गोलक

जाराज्जातो जारज, गुप्यते लज्जावशाद् गोप्यते यमि स्वे च गोल, के गोलकः ॥ १ ॥

अथाऽमृते कुण्ड

अमृते जीवति भर्तरि जाराज्जात, कुण्ड्यते दह्यतेऽनेन कुलं कुण्ड, यत्स्मृति -

"परदार्यो प्रजायेते द्वौ सुतौ कुण्डगोलकौ ।
पत्यौ जीवति कुण्डश्च मृते भर्तरि गोलक" ॥ १ ॥ इति ॥ १ ॥

भ्राता तु स्यात् सहोदर ॥ २१४ ॥
समानोदर्यसोदर्यसगर्भसहजा अपि ।
सोदरश्च

भ्राजतेऽनेन भ्राता "भ्राभिभ्राजेर्लृक् च" ॥ (उणा-८५९) ॥ इति तृः ॥१॥ सह तुल्यमुदरमस्य सहोदरः ॥ २ ॥ २१४ ॥ समाने उदरे जात समानो-

र्य सोदर्ये "सोदर्यसमानोदर्यौ" ॥६।३।११२॥ इति यान्तौ निपात्येते ॥३॥४॥ समानो गर्भोऽस्य सगर्भः "समानस्य–" ॥ ३।२।१४९ ॥ इति सभाव । 'सगर्भः" इत्यमरः ॥ ५ ॥ सह जायते सहज ॥ ६ ॥ समानमुदरमस्य सोदर ॥ ७ ॥

स तु ज्येष्ठ स्यात् पित्र्य पूर्वजाऽग्रज ॥ २१५ ॥

स तु भ्राता, द्वयोर्मध्ये प्रकृष्टो वृद्धो ज्येष्ठः ॥ १ ॥ पितुरागतः पित्र्यः " पितुर्यो वा " ॥ ६।३।१५१ ॥ इति यः ॥ २ ॥ पूर्वं जात पूर्वजः ॥ ३ ॥ अग्रे जातोऽग्रजः 'क्वचित्'॥५।१।१७१॥ इति ड, यौगिकत्वादग्रिमाऽपि ॥४॥३१५॥

जघन्यजे यविष्ठ स्यात् कनिष्ठोऽवरजोऽनुज ।

स यवीयान् कनीयांश्च

जघन्यज पश्चाज्जातस्तत्र ॥ १ ॥ अतिशयेन युवाऽल्पो वा यविष्ठ, कनिष्ठः "गुणाङ्गा–" ॥७।३।९॥ इतीष्ठे "अल्पयूनो कन्वा" ॥७।४।३३॥ इति कना देशः ॥ २ ॥ ३ ॥ अवरे जातोऽवरजः ॥४॥ अनुजातोऽनुज ॥५॥ अतिशयेन युवा यवीयान्, कनीयान् ॥ ६ ॥ ७ ॥

शेषश्चात्र– स्यात् कनिष्ठे तु कन्यसः ॥

पितृव्यस्त्याल्मातुला ॥ २१६ ॥

पितु पत्न्याश्च मातुश्च भ्रातर

पितुर्भ्राता पितृव्यः " पितुर्भ्रातृव्यङ्कुलं भ्रातरि " ॥६।२।६२॥ इति व्यापु ॥ १ ॥ पत्न्या भ्राता, स्यायति स्यालः " स्यामाङ्स्या " ॥ (उणा–४६२) ॥ इति लः ॥ १ ॥ मातुर्भ्राता मातुलः ॥ १ ॥ २१६ ॥

देवृदेवरौ ।

देवा चावरजे पत्यु

पत्युर्भर्तुरनुजे दीव्यतीति देवा "दिव ऋः" ॥ (उणा–८५२)॥१॥ देवन देवरः 'कश्चिदटि' ॥ (उणा–३९७) ॥ इत्वर ॥ २ ॥ "बहुलम्" ॥५।१।२॥ इत्यनि देवा ॥ ३ ॥

जामिस्तु भगिनी स्वसा ॥ २१७ ॥

जमति अश्नीत जामि "कमिजमि" ॥ (उणा–६१८) ॥ इति मिः ॥ १ ॥ भगः कल्याणमस्त्यस्या भगिनी ॥ २ ॥ सुष्ठु अस्यते स्वसा "सोरसे" ॥ (उणा–८४२) ॥ इति ऋः ॥ ३ ॥ २१७ ॥

शेषश्चात्र– ज्येष्ठभगिन्यां तु वीरभवन्ती ॥

ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनीत्यपि ।

पत्युः स्वसा न नन्दयति वधूं ननान्दा "यतिननन्दिभ्यां दीर्घश्च" ॥ (उणा–८५६) ॥ इति ऋ., नखादित्वान्नञोऽदभावः मातुलत्वाद् दीर्घत्वाभावे ननन्दा ॥ १ ॥ २ ॥ नन्दति नन्दयति वा अपत्यं नन्दिनी ॥ ३ ॥

पत्न्यास्तु भगिनी ज्येष्ठा ज्येष्ठश्वश्रूः कुली च सा ॥२१८॥

ज्येष्ठा चासौ श्वश्रूश्च ज्येष्ठश्वश्रूः ॥ १ ॥ कोलति कुली ॥ २ ॥ २१८ ॥

कनिष्ठा श्यालिका हाली यन्त्रणी केलिकुञ्चिका ।

पत्न्याः कनिष्ठभगिनी श्यालेव श्यालिका ॥ १ ॥ हलति हाली, ज्वलादित्वाद् णे ङी ॥ २ ॥ यन्त्रयति यन्त्रणी ॥ ३ ॥ केल्यां कुचति कुटिलीभवति केलिकुञ्चिका ॥ ४ ॥

केलिर्द्रव परीहास क्रीडा लीला च नर्म च ॥ २१९ ॥
देवन कूर्दन खेला ललन वर्करोऽपि च ।

केलनं केलिः, पुंस्त्रीलिङ्गः "किलिपिलि" ॥ ( उणा–६०८ ) ॥ इति इः ॥ १ ॥ द्रवति हृदयमनेन द्रवः ॥ २ ॥ परिहसनं परिहासः "घञ्युपसर्गस्य" ॥३।२।८६॥ इति दीर्घत्वे परीहासः ॥ ३ ॥ क्रीडनं क्रीडा 'केलिपरिष्वङ्गिस्त्रीलिङ्गम्' इति केचित् ॥४॥ लसनं लीला भिदादित्वादङि निपात्यते ॥ ५ ॥ नृणाति विनमति नर्म क्लीबलिङ्गः "नम्" ॥ ( उणा–९११ ) ॥ इति मन् ॥ ६ ॥ २१९ ॥ दीव्यते देवनम् ॥ ७ ॥ कूर्द्यते कूर्दनम् ॥ ८ ॥ खेलनं खेला ॥ ९ ॥ लल्यते ललनम् ॥ १० ॥ वृणोत्यनेन वर्करः "किवृभ्यां करः" ॥ (उणा–४३५) ॥ खेलाकूर्दनशब्दौ केलिपरिष्वङ्गिस्त्रे हलायुधे विशेषानाभिधानादस्माभिः केलिपर्यायत्वेनोक्तौ ॥ ११ ॥

शेषश्चात्र– स्यात्तु नर्मणि ॥

सुखोत्सवो रागरसो विनोदोऽपि किलोऽपि च ।

वप्ता तु जनकस्तातो बीजी जनयिता पिता ॥ २२० ॥

वपति बीजं वप्ता ॥ १ ॥ जनयति जनकः, जायतेऽस्माद् वा "दृकृ–" ॥ (उणा–२७) ॥ इत्यकः ॥ २ ॥ तनोति सन्ततिं तातः "सुसितनि–" ॥ (उणा–२०३)॥ इति कित्, तो दीर्घत्वं च, यद्वा तनोति ततः, ततः स्वार्थेऽण् ॥३॥ बीजमस्त्यस्य बीजी ॥ ४ ॥ जनयति जनयिता ॥५॥ पाति रक्षति पिता "पातेरिच्"; ॥ ( उणा–८५८ ) ॥ इति तृः ॥ ६ ॥ २२० ॥

शेषश्चात्र– वप्यो जनित्रो रेतोधास्तातो ॥

पितामहस्तस्य पिता

तस्य पितुः पिता पितामहः "पितृव्यमातुलमातामहपितामहाः" ॥ ४।२।३६ ॥ १ ॥

तत्पिता प्रपितामहः ।

तस्य पितामहस्य पिता, प्रकृष्टः पितामहात् प्रपितामहः ॥ १ ॥

मातुर्मातामहाद्येवम्

एवमित्यमुना प्रकारेण, मातुः पिता मातामहः, तस्य पिता प्रमातामहः ॥ १ ॥

माताऽम्बा जननी प्रसूः ॥ २२१ ॥

सवित्री जनयित्री च

मान्यते माता "मानिभ्राजिभ्यां डित् च" ॥ (उणा–८५९) ॥ इति तृः ॥ १ ॥ अमति याति वात्सल्यमम्बा "शम्यमेर्बिन्" ॥ (उणा–३१८) ॥ इति बः, अम्बते शब्दायतीति वा ॥ २ ॥ जायतेऽस्यामिति जननी ॥ ३ ॥ प्रसूते प्रसूः ॥ ४॥२२१ ॥ सूते सवित्री ॥ ५ ॥ जनयति जनयित्री "या जनित्री त्रिलोकस्याः" इति स्वन्त भाषितम्यपत्वात् ॥ ६ ॥

शेषश्चात्र– शामी तु मातरि ॥

कुमिला तु बहुप्रसूः ।

अपत्यानि भूयस्त्वात् कुमीनिव जाति जनयति कुमिला । बहून्यपत्यानि प्रसूते बहुप्रसूः ॥१॥

धात्री तु स्यादुपमाता

धयन्ति तामिति धात्री स्तनदायिनी "धात्री" ॥५।२।९१॥ इति प्रति निपात्यते ॥ १ ॥ उपमाता उपचरिता वा मातोपमाता ॥ २ ॥

वीरमाता तु वीरसूः ॥ २२२ ॥

वीरं सूते वीरसूः ॥ १ ॥ २२२ ॥

श्वश्रूर्माता पतिपत्न्योः

पत्युः पत्न्याश्च माता श्वशुरस्य भार्या श्वश्रूः "नारीसखी–" ॥२।४।७६॥ इत्यूङि निपात्यते ॥ १ ॥

श्वशुरस्तु तयोः पिता ।

तयोरिति पत्युः पत्न्याश्च पिता सुशोभनमश्नुते, अश्नाति वा श्वशुरः "श्वशुर-कुक्कुर–" ॥ (उणा ४२६) ॥ इत्युरे निपात्यते ॥ १ ॥

पितरस्तु पितुर्वंश्याः

पितुर्वंश्या भवाः पूर्वपुरुषाः, पान्ति रक्षन्तीति पितरः ॥ १ ॥

मातुर्मातामहाः कुले ॥ २२३ ॥

*मातुः कुले वंशे भवाः पूर्वपुरुषाः मातामहाः ॥ १ ॥*

पितरौ मातापितरौ मातरपितरौ पिता च माता च ।

पिता च माता च द्वौ पितरौ "पिता मात्रा वा" ॥ ३ । १ । १२२ ॥ १ ॥ इत्येकशेषः "आ द्वन्द्वे" ॥ ३ । २ । ३९ ॥ इत्यात्वे मातापितरौ ॥२॥ "मातरपितरं वा" ॥ ३ । २ । ४७ ॥ इति निपातनाद् मातरपितरौ ॥ ३ ॥

श्वश्रूश्वशुरौ श्वशुरौ

श्वशुरश्च श्वश्रूश्च द्वौ श्वशुरौ "श्वशुरः श्वश्र्वा वा" ॥ ३ । १ । १२३ ॥ इत्येकशेषः ॥ १ ॥ २ ॥

पुत्रौ पुत्रश्च दुहिता च ॥ २२४ ॥

"भ्रातृपुत्राः स्वसृदुहितृभिः" ॥ ३ । १ । १२१ ॥ इत्येकशेषः ॥१॥२२४॥

भ्राता च भगिनी चापि भ्रातरौ

स्पष्टम् ॥ १ ॥

अथ बान्धवः ।

स्वो ज्ञातिः स्वजनो बन्धुः सगोत्रश्च

बन्धुरेव बान्धवः, प्रज्ञादित्वादण् ॥ १ ॥ असत्यस्यजाति स्वः "प्रह्वाह्वा–" ॥ (उणा–५१४) ॥ इति निपात्यते ॥ २ ॥ ज्ञायते ज्ञातिः पुल्लिङ्गः "प्लुञ्ज्ञा–" ॥ (उणा–६४९) ॥ इति तिः ॥३॥ स्व आत्मीयश्चासौ जनश्च स्वजनः ॥४॥ बध्नाति स्नेहं बन्धुः "भृमृतृ–" ॥ (उणा–७१६) ॥ इत्युः ॥ ५ ॥ समानं गोत्रमस्य सगोत्रः "समानस्य धर्मादिषु" ॥३।२।१४९॥ इति समासः ॥ ६ ॥

निजः पुनः ॥ २२५ ॥

आत्मीयः स्वः स्वकीयश्च

निजातो निजः "क्वचित्" ॥५।१।१७१॥ इति डः ॥ १ ॥ २२५ ॥ आत्मनोऽयमात्मीयः "दोरीयः" ॥ ६।३।३२ ॥ २ ॥ अस्यति परं स्वः ॥ ३ ॥ स्वस्यायं स्वकीयः, गहादित्वादीयः ॥ ४ ॥

सपिण्डास्तु सनाभयः ।

समानः पिण्डः एषां सपिण्डाः, मत्स्यस्मृतिः–"सपिण्डता तु पुरुषे सप्तमे विनिवर्तते, सप्तमादूर्ध्वं सगोत्राः" ॥१॥ समा नाभिर्मूलं येषां ते सनाभयः "समानस्य"– ॥ ३।२।१४९ ॥ इति सत्वम् ॥ २ ॥

तृतीयाप्रकृतिः पण्डः षण्ढः क्लीबो नपुंसकम् ॥ २२६ ॥

स्त्रीपुंसाभ्यां तृतीया प्रकृतिर्लिङ्गमत्र तृतीयाप्रकृति स्त्रीलिङ्ग॰ " तादिताककोपान्त्य–" ॥ ३।२।५४ ॥ इति पुंवद्भावाभाव ॥ १ ॥ पण्डते गच्छति उभयम्भ्यञ्जनतो पण्ड॰, पनायति स्त्रीपुंसाविति वा 'पञ्चमाद्" ॥(उणा–१६८)॥ पण्डुरपि ॥ २ ॥ शमति षण्ढः " शमिषमिभ्यां– " ॥ (उणा–१७९) ॥ इति द्वे बाहुलकात् सत्वाभाव ' शण्ड॰ ' इत्यमर 'षण्ठः' इत्यन्ये ॥ ३ ॥ क्लीबते क्लीबः ॥ ४ ॥ पुंसण् अभिमर्दने, न पुंसयति नपुंसक, पुंक्लीबलिङ्गौ " नञः पुंसेः " ॥ ( उणा–३२ ) ॥ इत्येके नयादित्वात् अत् न भवति, न स्त्री न पुमान् इति वा, नक्षत्रादित्वात्॥५॥२२६॥

इन्द्रियायतनमङ्गविग्रहौ क्षेत्रगात्रतनुभूघनास्तनूः ।

मूर्तिमत्करणकायमूर्तयो वेरसंहननदेहसंचराः ॥ २२७ ॥

घनो बन्धः पुरं पिण्डो वपुः पुद्गलवर्ष्मणी ।

कलेवरं शरीरं

इन्द्रियाणामायतनमिन्द्रियायतनम् ॥ १ ॥ अमति पुरुषमङ्गम् "गम्यमि–" ॥ (उणा–९२ )॥ इति गः अङ्गतीति वा ॥ २ ॥ विगृह्यते रोगादिभिरिति विग्रहः ॥ ३ ॥ क्षयस्थानस्य क्षेत्रम् " हुयामा– " ॥ ( उणा–४५१ ) ॥ इति त्र ॥ ४ ॥ गच्छति गात्रम् ' गमेरा च " ॥ ( उणा–४५३ ) ॥ इति त्रः ॥ ५ ॥ तन्यते तनु॰, स्त्रीलिङ्ग "भृमृतृ–" ॥ ( उणा–७१६ ) ॥ इत्यु ॥ ६ ॥ तुभ्या तुपिम्या घनो भूघन॰ ॥ ७ ॥ तन्यते तनूः स्त्रीलिङ्ग "कृषिचमि–"॥(उणा–८२९)॥ इत्यू ॥ ८ ॥ मूर्ति काठिन्यमस्त्यस्य मूर्तिमत् ॥९॥ क्रियतेऽनेन करणम् ॥१०॥ चीयतेऽस्मौ कायः "चितिदेहा–" ॥ ५।३।७९ ॥ इति घञ् कश्च च ॥ ११ ॥ मूर्च्छत्यनया मूर्ति ॥ १२ ॥ वेति प्रजायते वेरं, पुंक्लीबलिङ्ग "चरक्षुर–"॥(उणा–३९६)॥ इति रे साधुः ॥१३॥ संहन्यन्तेऽङ्गान्यत्र संहननम् ॥ १४ ॥ धातुभिर्दिह्यते देह , पुंक्लीबलिङ्ग ॥१५॥ संचरत्यनेन संचरः 'गोचरसंचर "॥५।३।१३१॥ इति घ ॥१६॥२२७॥ धातुभिर्हन्यते घन ' मूर्तिनिचिताभ्र घनः" ॥ ५।३।३७ ॥ इत्यल निपात्यते ॥१७॥ बध्यते धातुभिर्भूतैर्बन्ध॰ ॥ १८ ॥ पुरति पुरम् ॥ १९ ॥ धातुभिः पिण्ड्यते पिण्ड॰, पुंक्लीबलिङ्ग ॥२० ॥ उप्यते वपु॰, क्लीबलिङ्ग "स्वर्ति " ॥(उणा–९९७ ) ॥ इत्युस् ॥ २१ ॥ पचते पुद्गलः "मुरलो–" ॥ ( उणा–४७४ ) ॥ इत्युले निपात्यते, पूरण-गलनधर्मत्वाद्वा, पृषोदरादित्वात् ॥ २२ ॥ वृष्यते सिच्यते, वर्षति मलान् वा वर्ष्म, क्लीबलिङ्ग "मन्" ॥ ( उणा–९११ ) ॥ इति मन् ॥२३॥ कलति मायति कलेवरम् " कलेरेवरा–" ॥ (उणा–४४५) ॥ इत्येवरः, कले कलेवरम् ॥२४॥ शीर्यते शरीर॰, पुंक्लीबलिङ्ग "कृशृपृ–" ॥ ( उणा–४१८ ) ॥ इतीर ॥ २५ ॥

शेषश्चात्र–

देहे सिनं प्रजनुकश्चग्रु शासा पञ्जरकम् ।
व्याधिस्थानं च ॥

अस्मिन्नजीवे कुणपः शवः ॥ २२८ ॥

मृतकं

अस्मिन् शरीरेऽजीवे जीवनिर्मुक्ते कुणति शब्दायते कुणपः "क्षुजिकृति–" ॥ (उणा–३०५) ॥ इति किदपः, कुणं क्वणं पाति रक्षति वा, धनञ्जयाख्यस्य वायोः शवे समवात् ॥१॥ शवति यात्यस्माज्जीवः शवः, पुक्लीबलिङ्गो ॥ २॥२२८ ॥ म्रियते स्म मृतः, के मृतकम् ॥ ३ ॥

रुण्डकबन्धौ त्वपशीर्षे क्रियायुजि ।

अपगतं छिन्नत्वात् शीर्षमस्यापशीर्षं वपुस्तत्र क्रियायुक्ते नृत्यतीत्यर्थः, रुण्यते मन्यते रुण्डः "पिचण्डे–" ॥ (उणा–१७६) ॥ इति निपात्यते ॥ १ ॥ कुवते शब्द्यते कबन्धः, पुक्लीबलिङ्गः "कोरन्धः" ॥ (उणा–२५७) ॥ इत्यन्धः, कस्य शिरसो बन्धोऽस्तेति वा, केन बध्यत इति वा, पृषोदरादित्वात् ॥ २ ॥

वयांसि तु दशा प्रायाः

वयन्ति शरीरस्य विचन्ति क्रमेण गच्छन्ति वयांसि ॥ १ ॥ बाल्यादीनि दस्यन्ते दशाः, स्त्रीलिङ्गः, स्वादित्वात् कः ॥ २ ॥ प्रकर्षेणाऽयन्ते प्रायाः, पुंलिङ्गः ॥३॥

सामुद्रं देहलक्षणम् ॥ २२९ ॥

समुद्रे शरीरे भवं सामुद्रम् ॥ १ ॥ देहस्य लक्षणं चक्रध्वजादि ॥ २२९ ॥

एकदेशे प्रतीकोऽङ्गावयवाऽपघना अपि ।

शरीरस्य एकश्चासौ देशश्च एकदेशस्तत्र प्राति शरीरमिति प्रतीकः "सृणीक–स्तीक–" ॥ (उणा–५०) ॥ इतीके निपात्यते ॥ १ ॥ अङ्गस्येकदेशत्वमङ्गम् ॥ २ ॥ अवयौत्यवयवः ॥ ३ ॥ अपहन्यतेऽनेनेत्यपघनः "निघोद्घ–" ॥५।३।३६॥ इत्यलि निपात्यते ॥ ४ ॥

शेषश्चात्र– देहैकदेशे गात्रम् ॥

उत्तमाङ्गं शिरो मूर्धा मौलिर्मुण्डं कमस्तके ॥ २३० ॥

वराङ्गं करणत्राणं शीर्षं मस्तिकमित्यपि ।

उत्तमं च तदङ्गं चोत्तमाङ्गम् ॥ १ ॥ श्रणाति विमुक्तमिति शिरः, क्लीबलिङ्गः "मिथिरञ्जि" ॥ (उणा–९७१) ॥ इति किदस् ॥ २ ॥ मूर्च्छन्त्यस्मिन्नाहताः

म्नायते इति मूर्धा, पुंलिङ्ग "श्वन्मातरि–" ॥ ( उणा–१०२ ) ॥ इत्यनि निपात्यते ॥ ३ ॥ मूयते बध्यते मुकुटादिभिरनेनेति मौलि, पुंस्त्रीलिङ्ग "भूमूभ्यां–" ॥ ( उणा–७०१ ) ॥ इति लिण् ॥ ४ ॥ मुण्ड्यते प्रतिज्ञायते मुण्ड, पुंस्त्रीलिङ्ग "कृगृदु–" ॥ ( उणा–१७० ) ॥ इति किद् ड, मुण्ड्यते वा ॥ ५ ॥ कायति क "कचित्" ॥ ५ । १ । १७१ ॥ इति ड ॥ ६ ॥ मस्यति परिणमते तस्य "दम्यमि" ॥ ( उणा २०० ) ॥ इति ते मस्त, स्वार्थे के मस्तक, पुंस्त्रीलिङ्ग मसे "इण्यादि" ॥ ( उणा ७७ ) ॥ इति तकन् वा ॥७॥ २३०॥ वरमङ्ग वराङ्गम् ॥ ८ ॥ करणानीन्द्रियाणि त्रायन्तेऽनेनेति करणत्राणम् ॥ ९ ॥ शीर्यते यस्मात् जरसा शीर्षे "कृजिरिपि" ॥ ( उणा ५६७ ) ॥ इति किद् ख ॥ १० ॥ मस्तिष्क "कुशिक–" ॥ ( उणा ४५ ) ॥ इति इके निपात्यते ॥ ११ ॥

तज्जा केशास्तीर्थवाकाश्चिकुरा कुन्तला कचा ॥ २३१ ॥

बाला स्यु

तस्मिन् शिरसि जातास्तज्जा शिरसिजा, क्लिश्यत एभि केशाः "क्लिशः के च" ॥ ( उणा–५३० ) ॥ इति शः, के शेरत इति वा ॥१॥ तीर्थे उप्यन्त उपसम्यन्ते तीर्थवाका ॥ २ ॥ चकमन्ते प्रतिहन्यन्ते चिकुरा "मकुर" ॥ ( उणा ४२६ ) ॥ इत्युरे निपात्यते, चिकुरास्तु प्राप्ते कस्य हासेषात्, चकुरोऽपीति बुधैः यथाह– "कुन्तला मुर्धजास्तस्माच्चिकुराश्चिकुरा" इति ॥ ३ ॥ कनन्ति दीप्यन्ते कुन्तला "मुरकोरल–" ॥ ( उणा ४७४ ) ॥ इत्यले निपात्यते, कुन्ताकार लान्ति वा ॥ ४ ॥ कच्यन्ते कचाः ॥ ५ ॥ २३१ ॥ बल्यन्ते बाला, पुंस्त्रीलिङ्ग, बलन्ति वा ज्वलादित्वाद् ण ॥ ६ ॥

शेषश्चात्र– कचे पुनः ।

वृजिनो वेल्लिताग्रोऽस्य ॥

तत्परा पाशो रचना भार उच्चय ।

हस्त पक्ष कलापश्च केशभूयस्त्ववाचका ॥ २३२ ॥

तेभ्य केशादिशब्देभ्य परा पाशादय शब्दाः केशभूयस्त्वं वदन्ति यथा केशपाशः ॥ १ ॥ केशरचना ॥ २ ॥ केशभार ॥ ३ ॥ केशोच्चयः ॥ ४ ॥ केशहस्तः ॥ ५ ॥ केशपक्षः ॥ ६ ॥ केशकलाप इति ॥ ७ ॥ मयूरव्यंसकादित्वादेभि कर्मधारयः ॥ २३२ ॥

अलकस्तु कर्कराल खङ्गरश्चूर्णकुन्तल ।

अलमति भूषयत्यलक पुंस्त्रीलिङ्गः "वृकृगृ" ॥ ( उणा–२७ ) ॥ इत्यक ॥ १ ॥ कर्करत्वेन कठोरत्वेन अलति कर्करालः ॥ २ ॥ खमिन्द्रियं गारयति खङ्गर, पृषोदरादित्वात् ॥३॥ चूर्णाकारः कुन्तलश्चूर्णकुन्तल कुटिलकेश ॥ ४ ॥

स तु भाले भ्रमरकः कुरुलो भ्रमरालकः ॥ २३३ ॥

स ललकों भाले ललाटे भ्रमरप्रतिकृतिर्भ्रमरकः, पुल्लिङ्गः ॥१॥ कु ईषल्लुठति कुरुलः, पृषोदरादित्वात्, यन्नान्यम् "कुरुलाललम्बूलेषे" इति ॥ २ ॥ भ्रमराकृतिरलको भ्रमरालकः ॥ ३ ॥ २३३ ॥

धम्मिल्लः संयताः केशाः

ऊर्ध्वं मिलति धम्मिल्लः, पृषोदरादित्वात्, धर्मे चीत्रस "मिल्लच्छल्ल–"॥ ( उणा–४६४ ) ॥ इति निपातनाद् वा ॥ १ ॥

शेषश्चात्र– धम्मिल्ले मौलिजूटकौ ॥

केशवेषे कबरी

केशानां वेषे रचनायां कूयते कबरी "ऋच्छिचटि–" ॥ ( उणा–३९७ ) ॥ इत्यरे " भाजगोण " ॥ २।४।३० ॥ इति ङी, कं वृणोतीति वा ॥ १ ॥

शेषश्चात्र– कर्बरी तु कबर्यां स्यात् ॥

अथ ।

वेणिः प्रवेणी

वीयते वेणिः, स्त्रीलिङ्गः "कषायी–" ॥ ( उणा–६३४ ) ॥ इति णिः॥१॥ प्रकृष्टा वेणिः प्रवेणी ॥ २ ॥

शीर्षण्यशिरस्यौ विशदे कचे ॥ २३४ ॥

शिरसि भवः शिरस्यः, शीर्षण्यः " दिगादि– " ॥ ६।३।१२४ ॥ इति ये " केशे वा " ॥३।२।१०२॥ इति शीर्षभावेशः, पक्षे शिरस्यः ॥ १ ॥ २ ॥ विशदे अन्योन्यासंपृक्ते स्नानादिनिर्मले वा ॥ २३४ ॥

शेषश्चात्र– प्रलोमन्यो विशदे कचे ॥

केशेषु वर्त्म सीमन्तः

सिनोति केशाननेन सीमन्तः " सीमन्तहेमन्त " ॥ ( उणा–२२२ ) ॥ इत्यन्ते निपात्यते, सीम्नोऽन्त इति वा पृषोदरादित्वात् ॥ १ ॥

पलितं पाण्डुरः कचः ।

पलति याति श्वेतत्वं पाकात् पलितं, पुल्लीबलिङ्गः "पृषत्पलितं–" ॥ ( उणा–२१० ) ॥ इति तः ॥ १ ॥

चूडा केशी केशपाशी शिखा शिखण्डिका समाः ॥२३५॥

चोल्यते चूडा, भिदादित्वादङि निपात्यते ॥ १ ॥ के शेते केशी " क्वचित् "

॥५।१।१७१॥ इति के शी ॥ २ ॥ केशान् पाशयतीति केशपाशी ॥ ३ ॥ श्यत्येनां शिखा " स्वतेरिच् वा " ॥ ( उणा–८५ ) ॥ इति ख ॥ ४ ॥ शिखण्डतुल्या शिखण्डिका ॥ ५ ॥ २३५ ॥

सा बालानां काकपक्षः शिखण्डकशिखाण्डकौ ।

काकपक्ष इव काकपक्षः ॥ १ ॥ शिरसि खण्ड्यते, शिखिवद् अयते वा शिखण्डः, पृषोदरादित्वात्, के शिखण्डकः ॥ २ ॥ शिरो मण्डयति शिखाण्डकः, पृषोदरादित्वात् ॥ ३ ॥

तुण्डमास्यं मुखं वक्त्रं लपनं वदनानने ॥ २३६ ॥

तुण्ड्यतेऽनेन, तुण्डं तुणति कुटिलीभवति वा " कृगृशु " ॥ (उणा–१७०) ॥ इति किद् डः ॥ १ ॥ अस्यत्यनेन वर्णमास्यं " स्थिवास्य " ॥ ( उणा ३६४ ) ॥ इति ये निपात्यते ॥ २ ॥ मखते मुखं, पुंक्लीबलिङ्गः " महेरुच्चास्य वा " ॥ ( उणा–८९ ) ॥ इति खे साधुः ॥ ३ ॥ उच्यतेऽनेनेति वक्त्रं " हुयामा " ॥ ( उणा ४५१ ) ॥ इति त्रः, मुषितानि खान्यमेति वा पृषोदरादित्वात् ॥ ४ ॥ लप्यतेऽनेनेति लपनम् ॥ ५ ॥ वदत्यनेनेति वदनम् ॥ ६ ॥ आ समन्तादनित्यनेनाऽऽननम् ॥ ७ ॥ २३६ ॥

शेषश्चात्र– मुखे दन्तालयस्तेर घन वर घनोन्नमम् ॥

भाले गोध्यलिकालीकललाटानि

भल्यते परिभाष्यते शुभाऽशुभमत्र भालं पुंक्लीबलिङ्गः, तत्र ॥ १ ॥ गुध्यते पद्यादिना वेष्ट्यते गोधिः, स्त्रीलिङ्गः " किलिपिलि– " ॥ ( उणा–६०८ ) ॥ इति इः ॥ २ ॥ अल्यते भूष्यते तिलकादिभिरलिकं " कीकल्यलि– " ॥ ( उणा–३८ ) ॥ इतीकः " स्यमिकषि " ॥ ( उणा ४६ ) ॥ इतीकेऽलीकम् ॥ ३ ॥ ४ ॥ ललते ऽत्राऽऽभरणे ललाटम् " ललिषु " ॥ ( उणा–१४५ ) ॥ इत्याटः ॥ ५ ॥

श्रुतौ श्रवः ।

शब्दाधिष्ठानपैञ्जूषमहानादध्वनिग्रहाः ॥ २३७ ॥

कर्णः श्रोत्रं श्रवणं च

श्रूयतेऽनया श्रुतिः, श्र्यादित्वात् क्तिः, तत्र ॥ १ ॥ शृणोति श्रवः, क्लीबलिङ्गः ' असू " ॥(उणा–९५२)॥ इत्यस् ॥२॥ शब्दोऽधितिष्ठत्यत्र शब्दाधिष्ठानम् ॥ ३ ॥ पिञ्जूषः कर्णमलः सोऽत्रास्ति ज्योत्स्नादित्वादणि पैञ्जूषः, पुंक्लीबलिङ्गः यद्वाचस्पतिः– श्रवः पैञ्जूषमस्त्रियाम् ॥ ४ ॥ महान् नादो निर्घोषोऽत्रेति महानादः ॥ ५ ॥ ध्वनिर्गृह्यतेऽनेन ध्वनिग्रहः, शब्दग्रहोऽपि ॥ ६ ॥ २३७ ॥ कर्ण्यतेऽनेन कर्णः,

किरत्यनेन वा " इणुवि " ॥ ( उणा १८२ ) ॥ इति णः ॥ ७ ॥ धूयतेऽनेन श्रोत्र " हुयामा " ॥ ( उणा ४७१ ) ॥ इति त्र ॥ ८ ॥ अनति श्रवर्ण, पुंक्ली बलिङ्ग ॥ ९ ॥

वेष्टन कर्णशष्कुली ।

वेष्टयतेऽनेन वेष्टन कर्णशष्कुली ॥ १ ॥ शष्कलेस्यनया भोग्यु शष्कुली कर्णस्य शष्कुली कर्णशष्कुली ॥ २ ॥

पालिस्तु कर्णलतिका

पाल्यते पालि , स्त्रीलिङ्गः " स्वरेभ्य इः " ॥ ( उणा ६०६ ) ॥ १ ॥ कर्णस्य लतेव कर्णलतिका ॥ २ ॥

शेषश्चात्र– कर्णप्रान्तस्तु धारा स्यात् कर्णमूलं तु चीलकम् ॥

शङ्खो भालश्रवोऽन्तरे ॥ २३८ ॥

शाम्यन्त्यत्राऽऽहते प्राणा इति शङ्ख, पुल्लीबलिङ्ग " शमिमानिभ्यां खः" ॥ ( उणा–८४) ॥ १ ॥ २३८ ॥

चक्षुरक्षीक्षण नेत्र नयन दृष्टिरम्बकम् ।

लोचन दर्शन दृक् च

चष्टे शुभाशुभ स्फुरणाच्चक्षुः " चक्षेः शिद्वा " ॥ ( उणा १००१ ) ॥ इस्युस् , अश्नुतेऽक्षि, क्लीबलिङ्गो " पुषिप्लुषि " ॥ ( उणा–७०७ ) ॥ इति किरिस ॥१॥ २ ॥ ईक्ष्यतेऽनेनेक्षणम् ॥ ३ ॥ नीयतेऽनेन दृश्यमिति नेत्रं, पुल्लीबलिङ्ग " नीदाम्न् " ॥ ५ ।२।८८ ॥ इति त्रट् ॥ ४ ॥ अनति नयनम् ॥ ५ ॥ दृश्यतेऽनया दृष्टि ॥ ६ ॥ अम्बतेऽम्बकम् ॥ ७ ॥ लोच्यतेऽनेन लोचन, विलोचनमपि ॥ ८ ॥ दृश्यतेऽनेन दर्शनम् ॥ ९ ॥ पश्यति, दृश्यतेऽनया वा दृक्, स्त्रीलिङ्ग ॥१०॥

शेषश्चात्र— अक्षिण रूपग्राहो देवदीपः ॥

तच्चारा तु कनीनिका ॥ २३९ ॥

तस्याऽक्ष्णः, तरयति समस्तारा, पुंस्त्रीलिङ्ग , के तारकाऽपि, तच्छब्दोऽत्रापि परामर्शी नक्षत्रभ्यवच्छेदार्थः ॥ १ ॥ कनति दीप्यते कनीनिका " कनेरीनक " ॥ ( उणा ७३ ) ॥ २ ॥ २३९ ॥

वाम तु नयनं सौम्यं

सोमो देवताऽस्य सौम्य " कसोमाट्ट्यण् " ॥ ६ ।२।१०७ ॥ १ ॥

मानसीय तु दक्षिणम् ।

मानोरिद मानवीय "दोरीयः" ॥ ६ । १ । ३२ ॥ १ ॥

असौम्येऽक्षण्यनक्षि स्यात्

सोमदेवताकत्वेन लक्षणया सौम्यमविकृतं न सौम्यमसौम्यं तत्राक्षणि, विकृतमक्षि अनक्षि नञ् विरोधे, अनर्थवत् ॥ १ ॥

ईक्षणं तु निशामनम् ॥ २४० ॥

निभालनं निशमनं निध्यानमवलोकनम् ।

दर्शनं द्योतनं निर्वर्णनं च

ईक्ष्यत ईक्षणम् ॥ १ ॥ शमिण् आलोचने, निशामनम् ॥ २ ॥ २४० ॥ निभाल्यते निभालनम् ॥ ३ ॥ निशाम्यते निशमनं "शमोऽदर्शने" ॥ ४ । २।१२८ ॥ इत्यत्र दर्शने एव ह्रस्व इति मताश्रयणात् ह्रस्वः ॥ ४ ॥ निध्यायते निध्यानम् ॥ ५ ॥ अवलोक्यतेऽवलोकनम् ॥ ६ ॥ दृश्यते दर्शनम् ॥ ७ ॥ द्योत्यते द्योतनम् ॥ ८ ॥ निर्वर्ण्यते निर्वर्णनम् ॥ ९ ॥

अथार्धवीक्षणम् ॥ २४१ ॥

अपाङ्गदर्शनं काक्षः कटाक्षोऽक्षिविकूणितम् ।

अर्धं वीक्षणमस्यार्धवीक्षणम् ॥ १ ॥ अपाङ्गेन दर्शनमपाङ्गदर्शनम् ॥ २ ॥ ईषद् विकूणितत्वात् अक्ष्णोऽत्र काक्षः "अक्ष्णे" ॥ ६ । ३ । १२६ ॥ इति कादेशः "सक्थ्यक्ष्णः" ॥ ५।४।११३ ॥ इति टच् समासान्तः ॥ ३ ॥ कटस्य कपोलस्याऽक्षि कटाक्षः "संकटाभ्याम्" ॥ ५ । ४ । ८६ ॥ इत्यत् समासान्तः ॥ ४ ॥ अक्ष्णोर्विकूणनमक्षिविकूणितम् ॥ ५ ॥

स्यादुन्मीलनमुन्मेषः

उन्मील्यते उन्मीलनम् ॥ १ ॥ उन्मेषणमुन्मेषः ॥ २ ॥

निमेषस्तु निमीलनम् ॥ २४२ ॥

निमेषणं निमेषः ॥ १ ॥ निमील्यते निमीलनम् ॥ २ ॥ २४२ ॥

अक्ष्णोर्बाह्यान्तावपाङ्गौ

नेत्रयोरुपान्तप्रदेशौ अपाङ्गावपाङ्गौ ॥ १ ॥

भ्रूरूर्ध्वे रोमपद्धतिः ।

अक्ष्णोरुपरि रोमराजिराभाति, भ्राम्यतीति भ्रूः, "भ्रमेश्च डूः" (उणा— ८४१) ॥ इति भ्रूः ॥ १ ॥

सकोपभ्रूविकारे स्याद् भ्रुकुटिर्भ्रूपरा कुटि ॥ २४३ ॥

भ्रादिभ्य परा कुटिः भ्रुव कुटनं कुटिलीकरण भ्रुकुटि, भ्रकुटि "कृगृकुटि ॥ (उणा– ६१९) ॥ इति इः, ततो " भ्रुवोऽच्च कुसकुट्योः " ॥ २।४।१०' इत्यत्व, ह्रस्वत्व च ॥ १ ॥ २ ॥ भ्रूकुटिभ्रूकुटी तु मतान्तराभयेण, यदाह "अथ भ्रकुटिर्भ्रुकुटिभ्रुकुटिभ्रकुटि स्त्रियः" इति ॥ ३ ॥ ४ ॥ २४३ ॥

कूर्चं कूर्पं भ्रुवोर्मध्ये

कीर्यते कूर्चं, पुक्लीबलिङ्ग "कूर्चचूर्ण" ॥ ( ॥ उणा ११३ ) ॥ इति निपात्यते ॥ १ ॥ कीयते कूर्पं " कृशृशब्प कर्पान्तस " ॥ ( उणा २९८ ) इति प ॥ २ ॥

पक्ष्म स्याद् नेत्ररोमणि ।

पक्ष्यते विस्तीर्यते पक्ष्म, पुक्लीबलिङ्ग "सात्मभात्मन्," ॥ (उणा ९१६) इति मनि निपात्यते ॥ १ ॥

गन्धज्ञा नासिका नासा घ्राण घोणा विकूणिका ॥ २४४ ॥

नक्र नर्कुटकं शिङ्घिनी

गन्धं जानाति गन्धज्ञा ॥ १ ॥ नस्यते कुटिलीक्रियते नासिका "नसिवदि ॥ (उणा ४०) ॥ इति णिदिक, नासत इति वा णकः ॥ २ ॥ घमि, भवि नासा ॥ ३ ॥ जिघ्रत्यनेन घ्राणम् ॥४॥ घुणति गन्धार्थे घोणा ॥ ५ ॥ विकूणयति विकूणिका ॥ ६ ॥ २४४ ॥ न क्रामति वायुरस्मिन् नक्रं "नम क्रमिगमि" (उणा–४)॥ इति डप्रत्यये नखादित्वात् साधु, क्लीबलिङ्गोऽयम् । वाचस्पतिस्तु "नक्रं नासा विकूणिका" इति पुस्याह ॥ ७ ॥ नुदति पवनोऽत्र नकुट " नर्कुटकुकुट ॥ (उणा १५५) ॥ इत्युटे निपात्यते, के नर्कुटकम् ॥८॥ शिङ्घत्यनया शिङ्घिनी ॥९॥

शेषश्चात्र नासा तु गन्धहृत् ॥

नसा गन्धवहा नस्या नासक्यं गन्धनालिका ॥

ओष्ठोऽधरो रदच्छद ।

दन्तवस्त्र च

उष्यते तीक्ष्णाहारेण ओष्ठ "वनिकाणि" ॥ (उणा १६०) ॥ इति ठ ॥ १ ॥ अवति लोमानमधर, अयमधस्तमोष्ठमाचीति कश्चित् ॥ २ ॥ रदानां छदो रदच्छदः ॥ ३ ॥ दन्तानां वस्त्रमिव दन्तवस्त्र पुक्लीबलिङ्ग ॥ ३ ॥

शेषश्चात्र ओष्ठे तु दशनोच्छिष्टो रदालेपी च वाग्दलम् ।

तत्प्रान्तौ सृक्कणी

तस्यौष्ठस्य प्रान्तौ सृक्वतो स्यातां सृक्वणी "सृजेः सृक्‌सको च" ॥ ( उणा १०७ ) ॥ इति क्वनिप् 'सृक्विणी' इत्यमर ॥ १ ॥

असिकं स्यात् ॥ २४५ ॥

अधरस्याऽधोभागोऽस्यतेऽसिक "कीकसि-" ॥ ( उणा २८ ) ॥ इति बहुवचनादिक ॥ १ ॥ २४५ ॥

असिकाधस्तु चिबुकं

चीयते चिबुकं हन्वग्रसन्धिः "कम्बुकाम्बुक-" ॥ ( उणा ५७ ) ॥ इत्युके निपात्यते ॥ १ ॥

स्याद् गल्लः सृक्कणः परः ।

गल्यतेऽनेन गल्लः "शमादयः" ॥ ( उणा ४६२ ) ॥ इति बहुवचनात् ॥ १ ॥

गल्लात् परः कपोलश्च

कपि- चोल, कम्पते कपोलः "कपिपटि " ॥ ( उणा ४६३ ) ॥ इत्योलः ॥ १ ॥

परो गण्डः कपोलतः ॥ २४६ ॥

कपोलात् परो गण्डति गण्डः ; पश्चाद्‌यस्त्वमोऽस्याविवक्षत्वादेकार्थो इत्येके॥१॥२४६॥

ततो हनुः

ततो गण्डात् परो हन्त्याहारं हनुः, पुंस्त्रीलिङ्ग "हन्तेः"॥ (उणा-७६१) ॥ इति उण् बाहुलकाद् नलोपः ॥ १ ॥

श्मश्रु कूर्चमास्यलोम च मासुरी ।

श्मनि मुखैकदेशे शेते श्मश्रु क्लीबलिङ्ग "श्मनि शीङो डित्" ॥ (उणा-८१०)॥ इति रु ॥ १ ॥ कीर्यते कूर्चं पुंक्लीबलिङ्ग ॥२॥ आस्यैकदेशे लोम आस्यलोम॥३॥ मस्यति परिणमते मासुरी "मद्गुर" ॥ (उणा-४२६) ॥ इत्युरे निपात्यते ॥ ४ ॥

शेषश्चात्र– श्मश्रुणि व्यञ्जनं कोठः ॥

दाढिका दंष्ट्रिका

दाढाप्रकृतिर्दाढिका ॥ १ ॥ एवं दंष्ट्रिका, दाढिकाऽपि ॥ २ ॥

दाढा दंष्ट्रा जम्भ

दाति खण्डयति दाढा "बहुलम्" ॥५।१।२॥ इति डः ॥ १ ॥ दशतेऽनया दंष्ट्रा 'दंशेस्त्र' ॥५।२।९०॥ इति त्र ॥ २ ॥ जायते जम्भः "गृदृरमि" ॥ ( उणा-३२७ ) ॥ इति भ ॥ ३ ॥

द्विजा रदा ॥ २४७ ॥

रदना दशना दन्ता दंशखादनमल्लकाः ।

द्विर्जायन्ते द्विजाः ॥ १ ॥ रदन्ति विलिखन्ति रदाः ॥२॥२४७॥ रद्यते-ऽमीभिरिति रदनाः ॥ ३ ॥ दश्यतेऽमीभिर्दशना " दशनाऽवोढे " ॥४।२।५४॥ इत्यनटि निपात्यते ॥ ४ ॥ दाम्यन्त्यम्लभक्षणाद् दन्ताः " दम्यमि " ॥ ( उणा-२०० ) ॥ इति तः ॥५॥ दश्यतेऽमीभिर्दंशाः " व्यञ्जनाद् घञ् " ॥५।३।१३२॥ ॥ ६ ॥ खादन्त्येभिः खादनाः ॥ ७ ॥ मल्लन्ते धारयन्ति दार्ढ्यं मल्लाः, के मल्लकाः ॥ ८ ॥

शेषश्चात्र–दन्ते मुखखुरो दालुः ॥

राजदन्तौ तु मध्यस्थावुपरिश्रेणिकौ क्वचित् ॥२४८॥

दन्तानां राजानौ राजदन्तौ दन्तपङ्क्तेरुभयतश्च द्वौ द्वौ मध्यभूतौ । क्वचिदिति मतान्तरे– उपरि न त्वधः श्रेणिः पङ्क्तिययोरुपरिश्रेणिकौ, वैजयन्तीकारस्तु– 'मध्य दन्ता राजदन्ता दंष्ट्रा तत्पार्श्वयोर्द्वयोः' इति चतुरो राजदन्तानाह ॥ १ ॥ २४८ ॥

रसज्ञा रसना जिह्वा लोला

रसान् मधुरादीन् जानाति रसज्ञा ॥ १ ॥ रस्यतेऽनया रसना, स्त्रीक्लीबलिङ्ग "ध्वसिरसि " ॥ ( उणा–२६६ ) ॥ इत्यन ॥ २ ॥ लेढि रसान् जिह्वा "लिहेर्जिह् च" ॥ (उणा–५११) ॥ इति वः ॥ ३ ॥ लोलतीति लोला ॥ ४ ॥

शेषश्चात्र– जिह्वा तु रसिका रस्ना रसला रसमातृका ।

रसा काकुर्ललना च ॥

तालु तु काकुदम् ।

तरत्याहारोऽत्रेति तालु, क्लीबलिङ्ग "भ्रतृ " ॥ (उणा–७२७) ॥ इति णिदु रत्वं च रस्य ॥ १ ॥ ककते जिह्वाऽत्र काकुदं "ककेर्णिद्" ॥ (उणा–२४३) ॥ इति णिदुदः, काकु ददातीति वा ॥ २ ॥

शेषश्चात्र– वक्त्रदलं तु तालुनि ॥

सुधास्रवा घण्टिका च लम्बिका गलशुण्डिका ॥२४९॥

सुधाममृतकल्पां स्रवति सुधास्रवा ॥ १ ॥ घण्टाप्रतिकृतिर्घण्टिका ॥ २ ॥ लम्बते लम्बिका ॥ ३ ॥ गलस्य शुण्डेव गलशुण्डिका ॥४॥२४९॥

कन्धरा धमनिर्ग्रीवा शिरोधिश्च शिरोधरा ।

कं शिरो धारयति कन्धरा "धारेधर्" ॥५।१।११३॥ इति खो, धरादेशश्च ॥१॥ धमे र्ध्मौऽस्य धम्यतेऽनयेति "पदिपठि "॥ (उणा–६०७) ॥ इत्यनौ धमनिः,

स्त्रीलिङ्गः ॥ २ ॥ गृणाति गिरति ग्रसति वा ग्रीवा "ग्रहादा" ॥ (उणा-५१४) ॥ इति वे निपात्यते ॥ ३ ॥ शिरो धीयतेऽस्यां शिरोधिः, स्त्रीलिङ्ग 'व्याप्यादाधारे' ॥५।३।९८॥ इति किः ॥ ४ ॥ शिरो धारयति शिरोधरा ॥ ५ ॥

सा त्रिरेखा कम्बुग्रीवा

सा ग्रीवा रेखात्रयाङ्किता शङ्खाकृतिका कम्बुग्रीवा ॥ १ ॥

अवटुर्घाटा कृकाटिका ॥ २५० ॥

अवत्यवटुः, पुंस्त्रीलिङ्गः "अन्यर्तिगृभ्योऽटुः" ॥ (उणा-७६२) ॥ १ ॥ हन्त्यस्यां (?) घाटा "घटघाटा" ॥ (उणा-१४१) ॥ इति निपात्यते ॥२॥ कृक कण्ठमभ्यस्यति कृकाटिका ग्रीवापश्चाद्भागः ॥३॥२५०॥

शेषश्चात्र—अवटुः तु शिरःपीठम् ॥

कृकस्तु कन्धरामध्य

क्रियतेऽसौ कृकः "कृगो वा" ॥ (उणा-२३) ॥ इति किरकः ॥ १ ॥

कृकपार्श्वौ तु वीतनौ ।

वेति गच्छतस्तनयोरपान इति वीतनौ "वीपति" ॥ (उणा-२६२) ॥ इति तने बाहुलकाद् गुणाभावः ॥ १ ॥

ग्रीवाधमन्यौ प्राग् नीले

ग्रीवायाः प्राग्भागे धमन्यौ नाड्यौ नीलवर्णत्वान्नीले ॥ १ ॥

पश्चान्मन्ये कलम्बिके ॥ २५१ ॥

ग्रीवायाः पश्चाद् भागे धमन्यौ नाड्यौ मन्यतेऽनयोरपाम इति मन्ये, स्त्रीलिङ्गः 'स्याम' ॥ (उणा-३५७) ॥ इति यः ॥ १ ॥ के शिरसि लम्बेते कलम्बिके ॥ २॥२५१ ॥

गलो निगरण कण्ठ

गिरत्यनेन "पुंनाम्नि" ॥५।३।१३०॥ इति घे लत्वे च गलः गिरतीति वा ॥ १ ॥ निगरत्यनेनेति निगरणः ॥ २ ॥ कणयति शब्दायते कण्ठः कण्ठते वा पुल्लिङ्गोऽयम् । वाचस्पतिस्तु– 'ग्रीवामूले तु कण्ठोऽस्त्री' इति क्लीबेऽप्याह ॥ ३ ॥

काकलकस्तु तन्मणि ।

तस्य कण्ठस्य मणिः कु ईषत्कल, काकलः, के काकलकः ॥ १ ॥

असो भुजशिर स्कन्ध

असते भारेणांसः, पुंलीबलिङ्गः 'मावावद्याम' ॥ (उणा-५६४) ॥

इति घः ॥ १ ॥ भुजस्य बाहोः शिर इव भुजशिरः, भुजशिखरमपि ॥२॥ स्कद्यते भारेण स्कन्धः "स्कन्धमिभ्यां" ॥ (उणा–२५१) ॥ इति धे बाहुल्यकाद् दलोपः ॥ ३ ॥

जत्रु सन्धिरस्यांसयोः ॥ २५२ ॥

वक्षःस्कन्धगतसन्धेरन्तरं जायते उद्भिद्यमाऽस्यीति जत्रु, क्लीबलिङ्गः ' जनिह निशयर्तेस्त्र च" ॥ (उणा–८०९) ॥ इति रुः ॥ १ ॥ २५२ ॥

भुजो बाहुः प्रवेष्टो दोर्बाहा

भुज्यतेऽनेन भुजः "भुजन्युब्ज–" ॥ ४।१।१२०॥ इति घमि निपात्यते ॥ १ ॥ वहति बाहुः, पुंस्त्रीलिङ्गो 'मिवहि–'॥ (उणा–७२६) ॥ इति णिदुः ॥२॥ प्रवेष्टे प्रवेष्टः ॥ ३ ॥ दाम्यति दोः, पुंक्लीबलिङ्गः "यमिदमिभ्यां डोस्" ॥ (उणा–१००५) ॥ ४ ॥ वाहृङ् प्रयत्ने वाहते प्रयतते वाहा ॥ ५ ॥

अथ भुजकोटरः ।

दोर्मूलं खण्डिकः कक्षा

भुजस्य कोटरो भुजकोटरः, पुंक्लीबलिङ्गः ॥ १ ॥ दोष्णोर्मूलं दोर्मूलम् ॥ २ ॥ खण्डमस्याऽस्ति खण्डिकः ॥ ३ ॥ कष्यते कक्षा, पुंस्त्रीलिङ्गः "मावा" ॥ (उणा–५६४) ॥ इति सः ॥ ४ ॥

पार्श्वं स्यादेतयोरधः ॥ २५३ ॥

एतयोः कक्षयोरधस्तात् पर्शूनां समूहः पार्श्वं, पुंक्लीबलिङ्गः "पर्श्वा ण्णः" ॥६।२।२०॥१॥२५३॥

कफोणिस्तु भुजामध्यं कफणिः कूर्परश्च सः ।

कं फणति गच्छति कफोणिः स्त्रीलिङ्गः, पृषोदरादित्वात्, कफणिरपि ॥१॥ भुजयोर्मध्यं भुजामध्यम् ॥ २ ॥ कं फणति कफणिः स्त्रीलिङ्गः "कूर्परः कफणिन पुम्" इति पुंस्यपि वैजयन्ती ॥ ३ ॥ कल्पते कुरति वा कूर्परः "अठरककर" ॥ (उणा–४०३) ॥ कूर्परे निपात्यते, कुर्परोऽपि ।

शेषश्चात्र– कफोणौ रत्नपृष्ठकम् ॥ ४ ॥

बाहूपबाहुसन्धिश्च ॥

अधस्तस्याऽऽमणिबन्धात् स्यात् प्रकोष्ठः कलाचिका ॥२५४॥

तस्य कूर्परस्य मणिबन्धपर्यन्तम् प्रकृष्णाति प्रकोष्ठः, उपबाहु "कुषेर्वा" ॥ (उणा–१६४) ॥ इति ठः ॥ १ ॥ कलमञ्चति, आप्नोति वा पृषोदरादित्वात् कलाचिका ॥ २ ॥ २५४ ॥

प्रगण्ड कूर्परांसान्त

कूर्परांससमर्थ्यं प्रगण्यते, प्रगण्ड्यते वा प्रगण्डः ॥ १ ॥

पञ्चशाख शय शम ।

हस्त पाणि कर

पञ्च अङ्गुलिलक्षणाः शाखा अस्य पञ्चशाखः ॥ १ ॥ शेतेऽस्मिन् सर्वं शयः ॥ २ ॥ शाम्यति शमः ॥ ३ ॥ हसत्यनेन हस्तः पुंक्लीबलिङ्गः ‘ दम्यमि ” ॥ ( उणा–२०० ) ॥ इति त, हसादिसुखे दीयते वा ॥ ४ ॥ पण्यतेऽनेन पाणि पुंलिङ्गः “ कमिवमि ” ॥ ( उणा–६१८ ) ॥ इति णिदि ॥ ५ ॥ कुर्वन्त्यनेन, कार्यते वा कर ॥ ६ ॥

शेषश्चात्र–हस्ते भुजदल सलः ॥

अस्यादौ मणिबन्धो मणिश्च स ॥ २५५ ॥

अस्य पाणेरादौ मूले मणेर्बन्धोऽत्र मणिबन्धः पाणिप्रकोष्ठसन्धिः ॥ १ ॥ मणति मणिः, पुंस्त्रीलिङ्गः ‘पणिपठि-” ॥ ( उणा–६०७ ) इती ॥ २ ॥ २५५ ॥

करभोऽस्मादाकनिष्ठ

अस्माद् मणिबन्धात् कनिष्ठां यावत् करे भाति करभः ॥ १ ॥

करशाखाङ्गुली समे ।

अङ्गुरी च

करस्य शाखेव करशाखा ॥१॥ अङ्गत्यङ्गुरिः “ मसस्थि ” ॥ (उणा–६९९)॥ अङ्गुरिः, लत्वे ङ्यां चाङ्गुली ॥२॥३॥

अङ्गुष्ठोऽङ्गुष्ठ

अङ्ग शरीरावयवं स्थाति अङ्गुष्ठः ॥ १ ॥ अङ्गौ तिष्ठत्यङ्गुष्ठः “ गोऽम्बा ” ॥२।३।३०॥ इति षत्वम् ॥ २ ॥

तर्जिनी तु प्रदेशिनी ॥ २५६ ॥

तर्ज्यतेऽनया तर्जनी ॥ १ ॥ प्रदिशति प्रदेशिनी ॥ २ ॥ २५६ ॥

ज्येष्ठा तु मध्यमा मध्या

अतिवृद्धा ज्येष्ठा ॥ १ ॥ मध्ये जाता मध्यमा “मध्यान्मः”॥६।३।७६॥२॥ मध्ये भूतत्वाद् मध्या ॥ ३ ॥

सावित्री स्यादनामिका ।

सविता देवताऽस्याः सावित्री ॥ १ ॥ नामग्रहणाऽयोग्याऽनामा, सैव अनामिका, ब्रह्मणोऽनया शिरश्छेदात्, अत एवाऽस्यां पवित्रकं क्रियते ॥ २ ॥

फनीनिका तु कनिष्ठा

कनति दीप्यते कनीनिका ॥ १ ॥ अत्यल्पा कनिष्ठा ॥ २ ॥

अपहस्तो हस्तपृष्ठतः ॥ २५७ ॥

हस्तपृष्ठेऽवकृष्टो हस्तोऽपहस्तः ॥१॥२५७॥

कामाङ्कुशो महाराजः करजो नखरो नखः ।

करशूको भुजाकण्टः पुनर्भवपुनर्नवौ ॥ २५८ ॥

कामस्याङ्कुश इव कामाङ्कुशः ॥ १ ॥ महाराज इव शोभनत्वाद् महाराजः ॥ २ ॥ कराज्जातः करजः, यौगिकत्वात् पाणिजकररुहादयः ॥ ३ ॥ न खं राति नखरस्त्रिलिङ्गः, नखादित्वात् नञोऽद्भावाभावः, न खन्यते वा "जठर" ॥(उणा ४०३)॥ इत्यरे निपात्यते ॥ ४ ॥ नास्ति खमस्य नखः, पुंक्लीबलिङ्गः, न खन्यते वा "नम क्रमि" ॥ ( उणा–४ ) ॥ इति डः, नखादित्वाद् नञोऽदभावः, नखति गच्छतीति वा ॥ ५ ॥ करस्य शूक इव करशूकः ॥ ६ ॥ भुजायां कण्ट इव भुजाकण्टः ॥ ७ ॥ पुनर्भवति पुनर्भवः ॥ ८ ॥ पुनरपि नवः पुनर्नवः ॥९॥२५८॥

प्रदेशिन्यादिभिः सार्धमङ्गुष्ठे वितते सति ।

प्रादेशतालगोकर्णवितस्तयो यथाक्रमम् ॥ २५९ ॥

प्रदेशिन्या सार्धमङ्गुष्ठे प्रसारिते प्रादिश्यते प्रादेशः ॥ १ ॥ मध्यमया तते ऽङ्गुष्ठे ताल्यते तालः ॥ १ ॥ अनामिकया ततेऽङ्गुष्ठे गोकर्णाकृतिर्गोकर्णः ॥ १ ॥ कनिष्ठया युतेऽङ्गुष्ठे वितस्यतीति वितस्तिर्द्वादशाङ्गुलः, पुंस्त्रीलिङ्गः "त्सृप्रा–" ॥(उणा ६४६ ) ॥ इति तिः ॥ १ ॥ २५९ ॥

प्रसारिताङ्गुलौ पाणौ चपेटः प्रतलस्तलः ।

प्रहस्तस्तालिका तालः

चप्यतेऽनेन चपेटः, पुस्त्रीलिङ्गः "चपेरेटः" ॥ (उणा १५८) ॥ १ ॥ प्रगतं तलमस्य प्रतलः ॥ २ ॥ तलति तलः ॥ ३ ॥ प्रसृतो हस्तः प्रहस्तः ॥ ४ ॥ ताल्यति तालिका ॥ ५ तलति तालः ॥ ६ ॥

सिंहतलस्तु तौ युतौ ॥ २६० ॥

तौ प्रसारिताङ्गुलवामदक्षिणौ पाणी सिंहस्येव तलः सिंहतलः सिंहो हि मिलिताभ्यां चपेटाभ्यां हन्ति, सहतं सर्वं तलतीति वा । संहततालकम् इत्येके ॥१॥२६०॥

संपिण्डिताङ्गुलिः पाणिर्मुष्टिर्मुस्तुर्मुचुट्यपि ।

संग्राहश्च

मुष्णाति मुष्टिः "कृसुषि" ॥ (उणा-६५१) ॥ इति क्तिः ॥ १ ॥ मुसलति खण्डयति मुस्तुः "बहुलम्" ॥५।१।२॥ इति तुक्, पुंस्त्रीलिङ्गो, यदुक्तमन्वी "भवीषे मुष्टिमुस्तू द्वौ समाहो मुस्तुटिः स्त्रियाम्" इति ॥ २ ॥ मुहुस्तुटति मुस्तुटिः, पृषोदरादित्वात् यथा मुस्तुटी, मुष्णातेर्बाहुलकात् क्रिमुटिः ॥ ३ ॥ संगृह्यते संग्राहः "समो मुष्टौ" ॥ ५।३।५८ ॥ इति घञ् ॥ ४ ॥

अर्धमुष्टिस्तु खटकः

मुष्टेरर्धमर्धमुष्टिः, खटति खटकः "दृकृ-" ॥ (उणा-२७) ॥ इति बहुवचनादकः ॥ १ ॥

कुब्जितः पुनः ॥ २६१ ॥

पाणिः प्रसृतः प्रसृतिः

कुब्जित आकुञ्चिताङ्गुलिः पाणिः प्रस्रियते स्म प्रसृतः ॥ १ ॥ प्रसियते प्रसृतिः "स्त्रियां क्तिः" ॥ ५ । ३ । ९१ ॥ २ ॥

तौ युतौ पुनरञ्जलिः ।

तौ प्रसृतौ वामदक्षिणौ पार्श्वमिलितौ, अञ्जलस्वनेनाञ्जलिरौणादिकः पुंलिङ्गः "पाण्यब्जिरञ्जलामालिः" ॥ (उणा-७०२) ॥ अज्यते अञ्जनेनेति नैरुक्ताः, माल्ये तु- "पताकाभ्यो तु हस्ताभ्यां सम्पादञ्जलिः स्मृतः" ॥ १ ॥

प्रसृते तु द्रवाधारे गण्डूषश्चुलुकश्चलुः ॥ २६२ ॥

गण्डयति गण्डूषः "कालिकषि" ॥ (उणा-५६०) ॥ इत्यूषः ॥ १ ॥ चुलुम्पः सौत्रः, चुलुम्पतीति चुलुकः, पुंस्त्रीलिङ्गो "कम्बुकोलुक-" ॥ (उणा-५७) ॥ इत्युके निपात्यते ॥ २ ॥ चलति चलुः, पुंलिङ्गः "चवट्" ॥ (उणा-७१६) ॥ इति बहुवचनादुः, के चलुकोऽपि ॥ ३॥२६२ ॥

हस्तः प्रामाणिको मध्ये मध्यमाङ्गुलिकूर्परम् ।

मध्यमाङ्गुलिकूर्परान्तरे प्रामाणिकश्चतुर्विंशत्यङ्गुलप्रमाणमात्रः हस्तः, यदाह- "हस्तोऽङ्गुलचतुर्विंशत्या चतुरन्वितया" इति ॥ १ ॥

बद्धमुष्टिरसौ रत्निः

असौ हस्तो बद्धेन मुष्टिना, रमन्ते मात्र अस्मिन् रत्निः पुंस्त्रीलिङ्गः ॥ १ ॥

अरत्निर्निष्कनिष्ठिकः ॥ २६३ ॥

निष्क्रान्ता कनिष्ठा अस्मिन् निष्कनिष्ठिको हस्तः इयर्ति प्रमाणतामरत्निः पुंस्त्रीलिङ्गः "ऋतेरत्निः" ॥ (उणा-६८२) ॥ न रत्निरिति वा ॥ १॥२६३ ॥

व्यामव्यायामन्यग्रोधास्तिर्यग्बाहू प्रसारितौ ।

तिर्यक्प्रसारितौ बाहू बाहुदण्डौ व्यामीयते रज्ज्वादयनेन व्याम', वक्षो भुजा वेति, व्ययति वा " अर्तीरि " ॥ ( उणा–३३८ ) ॥ इति मः ॥ १ ॥ विशिष्ट आयामोऽत्रेति व्यायामः ॥ २ ॥ न्यग् रुणद्धि न्यग्रोध ॥ ३ ॥

शेषश्चात्र– अथ व्यामे वियाम स्याद् बाहुचापस्तनूनल' ॥

ऊर्ध्वीकृतभुजापाणि नरमान तु पौरुषम् ॥ २६४ ॥

ऊर्ध्वीकृतभुजो पाणिर्नरो मान यस्य तत्तथा, पुरुष' प्रमाणमस्य पौरुष, वाच्यलिङ्ग' "हस्तिपुरुषाद्वाऽण्" ॥ ७।१।१४१॥ "पुरुषोर्ध्वमानं पौरुषम्" इत्यके द्वादशाङ्गुल पौरुषं छायामानम् ॥१॥२६४॥

दघ्नद्वयसमात्रास्तु जान्वादेस्तत्तदुन्मिते ।

जान्वादे परतो दघ्नादय प्रत्ययास्ते नरजान्वादिनोन्मिते वर्तन्ते यथा–जानुः प्रमाणमस्य जानुदघ्न, जानुद्वयस, जानुमात्र जलमित्यादिः एव पुरुषदघ्नमित्यादि ॥

रीढक पृष्ठवश स्यात्

रिह सौत्रोऽविकत्थनादौ रिह्यते स्म रीढा, के रीढक' ॥ १ ॥ पृष्ठस्य वश' पृष्ठवश ॥ २ ॥

पृष्ठ तु चरम तनो ॥ २६५ ॥

तनो पश्चाद्भाग पृष्यते सिच्यते पृष्ठ " पीविशि " ॥ ( उणा–१६१ ) ॥ इति कित् ठ , पश्चान्मात्रेऽप्युपचारात् ॥१॥२६५॥

पूर्वभाग उपस्थोऽङ्क क्रोड उत्सङ्ग इत्यपि ।

शरीरस्य पूर्वभागे उपतिष्ठन्तेऽत्रोपस्थ ॥ १ ॥ अङ्कति तमित्यङ्कः ॥२॥ क्रियते क्रोड " विहडकक्रोड " ॥ ( उणा–१७२ ) ॥ इत्यके निपात्यते ॥ ३ ॥ सत्कर्षेण सजत्यत्रोत्सङ्ग' ॥ ४ ॥

क्रोडोरी हृदयस्थान वक्षो वत्सो भुजान्तरम् ॥ २६६ ॥

करोति क्रोडा, स्त्रीक्लीबलिङ्ग ॥ १ ॥ अर्यते गम्यते उर' क्लीबलिङ्ग' " अर्तेरुराशौ च " ॥ ( उणा–९६७ ) ॥ इत्यस् , कण्ड्वादावुरस्यतीति वा क्विप् ॥ २ ॥ हृदयस्य बुद्ध्यो स्थान हृदयस्थानम् ॥ ३ ॥ वक्ष रोषे सपत्नीरोषविषय स्याद् वक्षतीति वक्ष', क्लीबलिङ्ग " अस् " ॥ ( उणा–९५२ ) ॥ इत्यस् ॥ ४ ॥ वदत्यनेन वत्स , पुंक्लीबलिङ्गः " मावावद्य " ॥ ( उणा–५६४ ) ॥ इति स' ॥ ५ ॥ भुजयोरन्तर भुजान्तरम् ॥६॥२६६॥

स्तनान्तर हृद् हृदय

स्तनयोरन्तरं स्तनान्तरम् ॥ १ ॥ हरति मनो हृद् नपुंसकः, "मद्रुस्म्" ॥ ५।१।२ ॥ इति द्रुह् ॥२॥ "गमहृदय " ॥ ( उणा-३७० ) ॥ इत्यये निपातनाद् हृदयम् ॥ ३ ॥

शेषश्चात्र– हृदयस्थे मर्मचरे गुणाधिष्ठानक त्रसम् ॥

स्तनौ कुचौ पयोधरौ ।

उरोजौ च

स्तनतः पीयमानौ स्तनौ ॥ १ ॥ कुचतः सङ्कुचतः कुचौ ॥ २ ॥ पयो दुग्धं धरत पयोधरौ ॥ ३ ॥ उरसि जाताबुरोजौ, वीप्सिकत्वादुरसिज-वक्षोजादय ॥४॥

शेषश्चात्र– स्तनौ तु धरण्यौ ॥

चूचुकं तु स्तनाद् वृन्त-शिखा मुखा ॥ २६७ ॥

चूष्यते बालेन चूचुकं पुंक्लीबलिङ्ग 'कञ्चुका-' ॥ (उणा-५७) ॥ इत्युके निपात्यते, बालेन पीयमानं चूषितसम्पर्कं कामति वा ॥ १ ॥ स्तनसम्बन्धस्पर्शे वृन्ता-इव स्तनवृन्तम्, स्तनशिखा स्तनमुखं स्तनाग्रमित्यर्थः ॥ २ ॥ ३ ॥ ४ ॥ २६७ ॥

शेषश्चात्र– अथ तयोः पिप्पलमेचकौ ॥

तुन्दं तुन्दिर्गर्भकुक्षी पिचण्डो जठरोदरे ।

तुन्दते पूर्यते तुन्दं 'स्फायितञ्चि वञ्च्या' ॥ (उणा-२४०) ॥इति द ॥१॥ तुन्दम्स्येनां तुन्दिः, स्त्रीलिङ्ग ' नाम्युपान्त्य- " ॥ ( उणा-६०९ ) ॥ इति कि, बाहुलकाद् नोऽन्त्याय ॥ २ गिरत्याहार गर्भः " गृवृरमि-" ( उणा-३२७ ) इति भः ॥ ३ ॥ कुष्णात्याहार " प्लुषिकुषि-" ॥ ( उणा-७०७ ) ॥ इति क्सि ऐ कुक्षिः पुंलिङ्गः, गौडस्तु– "उदरं कुक्षिरक्लीबे" इति स्त्रियामप्याह । वाचस्पतिस्तु– "कुक्षिस्तु जठराधारे" इति जठराद् पृथगाह ॥ ४ ॥ पचत्यन्नमपि, चमत्याहारमिति वा पिचण्ड "पिचण्डैरण्ड" ॥ ( उणा-१७६ ) ॥ इत्यण्डे निपात्यते ॥ ५ ॥ जमत्याहारं जठर, पुंक्लीबलिङ्गः "जठर " ॥ ( उणा ४०२ ) ॥ इत्यरे निपात्यते ॥६॥ उदरत्यन्नमत्र "मद्रुन्दि " ॥ ( उणा-३९९ ) ॥ इति किदरे उदरं क्लीबलिङ्ग, वैजयन्तीकारस्तु "जठर चोदरं न ना" इत्याह निःलिङ्गोऽयमिति बुद्धिसागरः । उदरिवर्तीति वा ॥ ७ ॥

शेषश्चात्र– जठरे मलूको रोमलताधारः ॥

कालखण्ड कालखञ्ज कालेय कालक यकृत् ॥ २६८ ॥

दक्षिणे

हृदयस्य दक्षिणपार्श्वे कालस्य मांसस्य खण्डं कालखण्डं कृष्णमांसपिण्डः ॥ १ ॥ कालमपि भित्त सत् खञ्जमति कालखञ्जम् ॥ २ ॥ कु इंषद् क्षीयते क्षिप्यते

हृदयेन कालेयम् " य एणात " ॥ ५।१।२८ ॥ कलिर्देवताऽस्येति वा ॥ ३ ॥, कालमेव कालकम् ॥ ४ ॥ हृग्यसेऽनेन यकृत् क्लीबलिङ्ग "यजे क च" ॥(उणा– ८९२ )॥ इति ऋत् प्रत्यय ॥ ५ ॥ यम करोतीति वा ॥ २६८ ॥

तिलक क्लोम

हृदयस्य दक्षिणपार्श्वे तिलति तिलकमुदर्यो जलाधारः "मुधुन्दि–" ॥(उणा– २९)॥ इति किद्कः ॥१॥ क्लाम्यति क्लोम, क्लीबलिङ्ग "सारमभारमन्–"॥ (उणा– ३१६ ) ॥ इति मनि निपात्यते ॥ २ ॥

शेषश्चात्र– अथ क्लोमनि स्यात्ताम्ब्य क्लपुप क्लेमम् ॥

वामे तु रक्तफेनज ।

पुप्पस स्यात्

हृदयस्य वामपार्श्वे रक्तफेनाज्जातो रक्तफेनजः ॥ १ ॥ पुप्यतीति पुप्पसः "फनस–" ॥ ( उणा–५७३ ) ॥ इत्यसे निपात्यते ॥ २ ॥

अथ प्लीहा गुल्म

हृदयस्य वामभागे प्लेहते प्लीहा " श्वन्मातरि– " ॥ ( उणा–९०२ ) ॥ इत्यनि निपात्यते ॥१॥ गुप्यते रक्ष्यते गुल्म , पुंक्लीबलिङ्गः "स्तमभीप्म–"॥(उणा– ३४६ ) ॥ इति मे निपात्यते ॥ २ ॥

अन्त्र तु पुरीतति ॥ २६९ ॥

अमत्यनेनान्त्र " हुयामा–" ॥ ( उणा–४५१ ) ॥ इति त्रः ॥ १ ॥ पूर्यते पुरीतत् "सम्बद्वेहत्–" ॥ (उणा–८८२) ॥ इति कति निपात्यते, पुरीं तनोति वा, क्लीबलिङ्गोऽयम्, वाचस्पतिस्तु– अन्त्र पुरीतदस्त्रियाम्, इति पुस्त्याह, तन्न ॥२॥ ॥ २६९ ॥

रोमावली रोमलता

रोम्णामावली रोमावली नाभिनिर्गता रोमराजि ॥ १ ॥ रोम्णां लतेव रोमलता ॥ २ ॥

नाभि स्यात् तुन्दकूपिका ।

नह्यते स्नायुभिरिति नाभि, पुंस्त्रीलिङ्ग "नहेर्भ च" ॥ ( उणा–६११ ) ॥ इति भिदि ॥ १ ॥ तुन्दे कूपीव तुन्दकूपिका ॥ २ ॥

शेषश्चात्र– अथ नाभौ पुतारिका सिरामूलम् ॥

नाभेरधो मूत्रपुटं वस्तिर्मूत्राशयोऽपि च ॥ २७० ॥

मूत्रस्य पुन्नाभाधारो मूत्रपुटम् ॥ १ ॥ वसत्यस्यां मूत्रे बस्ति, पुंस्त्रीलिङ्गः "वसि-" ॥ ( उणा-६४६ ) ॥ इति तिः, वस्यते इति वा " स्वरेभ्य इः " ॥ ( उणा-६०६ ) ॥२॥ मूत्रस्याऽऽशयो मूत्राशयः ॥ ३ ॥ २७० ॥

मध्योऽवलग्नं विलग्नं मध्यम

मध्यते बध्यते मेखलाऽत्र मध्यः ॥ १ ॥ अवलग्नमवलग्नम् ॥ २ ॥ विल-गति विलग्नमतिकृशत्वात् ॥ ३ ॥ मध्ये जातो मध्यम, एते पुंक्लीबलिङ्गाः ॥ ४ ॥

अथ कट कटि ।

श्रोणि कलत्रं कटीरं काञ्चीपद ककुद्मती ॥ २७१ ॥

कटत्याप्नोति कटः, पुंक्लीबलिङ्गः ॥ १ ॥ कट्यते आश्रियते कटिः, स्त्रीलिङ्गः " पदिपठि " ॥ ( उणा-६०७ ) ॥ इति इः ॥ २ ॥ श्रूयते किङ्किणीध्वनिरत्र श्रोणि, पुंस्त्रीलिङ्गः " श्रोणा " ॥ ( उणा-६१४ ) ॥ इति निः श्रोण्यते संहन्यते इति वा ॥ ३ ॥ कलति मायत्यनेन कलत्रम् ॥ ४ ॥ कट्यते कटीरं ' कृशृपृ-' ॥ ( उणा-४१८ ) ॥ इतीरः ॥ ५ ॥ काञ्च्याः पदं स्थानं काञ्चीपदम् ॥ ६ ॥ ककुद् पश्चानि सन्त्यस्यामस्याः ककुद्मती ॥ ७ ॥ २७१ ॥

नितम्बारोहौ स्त्रीकट्या पश्चात्

स्त्रीकट्याः पश्चाद्भाग, नितरां तनोति श्रियं नितम्बः " खर्जिपिञ्जादिभ्यो ब " ॥ ( उणा-११७ ) ॥ १ ॥ आरोहति, आरुह्यते वाऽऽरोहः ॥ २ ॥

जघनमग्रत ।

स्त्रीकटेरग्रभाग, हन्यते जघनं ' हन्तेर्घत्वं च " ॥ ( उणा-२७१ ) ॥ इत्यन ॥ १ ॥

त्रिकं पश्चाद्

पृष्ठवंशस्याऽधस्ताद्रुर्वो सन्धौ, त्रिसङ्ख्याविशिष्टं ' संख्याऽऽख्याते ' ॥५।४।१२ ॥ इति कः ॥ १ ॥

( सत्पार्श्वकूपकौ तु कुकुन्दरे ॥ २७२ ॥

तस्य त्रिकस्य पार्श्वे गर्तौ कुत्सितं कुन्दते आप्नोते कुकुन्दरे, क्लीबलिङ्गोऽयं "अदूर ॥ ( उणा-४०२ ) ॥ इत्यरे निपात्यते भागुरिस्तु- कुकुन्दरौ समाख्यातौ जघनकूपकौ इति पुंस्त्वाह । मद्गुरकुकुन्दुर ' ॥ ( उणा-४२६ ) ॥ इत्युरे कुकुन्दुरोऽपि ॥ १ ॥ २७२ ॥

शेषश्चात्र- कटीकूपौ तूलकिनौ रतागुहे ॥

हृदयेन कालेयम् "य एवात" ॥ ५।१।२८ ॥ कालिर्देवताऽस्येति वा ॥ ३ ॥ कालमेव कालकम् ॥ ४ ॥ इज्यतेऽनेन यकृत् क्लीबलिङ्गः "यजे क च" ॥(उणा–८९२ )॥ इति ऋत् प्रत्ययः ॥ ५ ॥ यम करोतीति वा ॥ २६८ ॥

तिलक क्लोम

हृदयस्य दक्षिणपार्श्वे तिष्ठति तिलकमुदर्यो जलाधारः "घुघुन्दि–" ॥(उणा–२९)॥ इति किदकः ॥१॥ क्लाम्यति क्लोम, क्लीबलिङ्गः "सात्मभ्रात्मन्–"॥ (उणा–९१६ ) ॥ इति मनि निपात्यते ॥ २ ॥

शेषश्चात्र– अथ क्लोमनि स्यात्ताण्ड्यं क्लपुर्य क्लोमम् ॥

वामे तु रक्तफेनज ।

पुप्फस· स्यात्

हृदयस्य वामपार्श्वे रक्तफेनाज्जातो रक्तफेनजः ॥ १ ॥ पुष्यतीति पुप्फसः "फनस–" ॥ ( उणा–५७३ ) ॥ इत्यसे निपात्यते ॥ २ ॥

अथ प्लीहा गुल्म

हृदयस्य वाममागे प्लेहते प्लीहा " श्वन्मातरि– " ॥ ( उणा–९०२ ) ॥ इत्यनि निपात्यते ॥१॥ गुप्यते रक्ष्यते गुल्म , पुक्लीबलिङ्गः "स्नमभीष्म–"॥(उणा–३४६ ) ॥ इति मे निपात्यते ॥ २ ॥

अन्त्र तु पुरीतति ॥ २६९ ॥

अमत्यनेनान्त्र " हुयामा–" ॥ ( उणा–४५१ ) ॥ इति त्रः ॥ १ ॥ पूर्यते पुरीतत् "सश्चद्वेहत्–" ॥ (उणा–८८२) ॥ इति कति निपात्यते, पुरीं तनोति वा, क्लीबलिङ्गोऽयम्, वाचस्पतिस्तु– अन्त्र पुरीतदस्त्रियाम्, इति पुंस्यप्याह, तत्र ॥२॥ ॥ २६९ ॥

रोमावली रोमलता

रोम्णामावली रोमावली नाभिनिर्गता रोमराजिः ॥ १ ॥ रोम्णां लतेव रोमलता ॥ २ ॥

नाभि स्यात् तुन्दकूपिका ।

नह्यते स्नायुभिरिति नाभिः, पुस्त्रीलिङ्गः "नहेभ च" ॥ ( उणा–६२१ ) ॥ इति णिदिः ॥ १ ॥ तुन्दे कूपीव तुन्दकूपिका ॥ २ ॥

शेषश्चात्र– अथ नाभौ पुत्तारिका सिरामूलम् ॥

नाभेरधो मूत्रपुट बस्तिर्मूत्राशयोऽपि च ॥ २७० ॥

परश्वधः प्रहरणमस्य पारश्वधिकः पारश्वध परश्वधाद्‌ ठञ्‌ ॥४।४।५८॥ इत्यण्‌ पक्षे ठकण्‌ ॥ १ ॥ २ ॥ ४३४ ॥

स्यान्नैस्त्रिंशिकमात्तीकयाष्टीकाम्तदायुधा ।

निस्त्रिंशः प्रहरणमस्य नैस्त्रिंशिकः 'प्रहरणम्‌ ॥ ४।४।५७ ॥ इति ठक्‌ ॥ १ ॥ शक्तियष्टिभ्य प्रहरणमस्य शाक्तीकः, याष्टीक शक्तियष्ट्योरीकक्‌ ॥४।४।५९॥१॥१॥

तूणी धनुर्भृद्‌ धानुष्क स्यात

तूणमस्त्यस्य तूणी, निपङ्गयपि ॥ १ ॥ धनुर्बिभर्ति धनुभृत्‌ यौगिकत्वात्‌ धनुर्धरः धन्वी, धनुष्मानित्याद्य ॥ २ ॥ धनु प्रहरणमस्य धानुष्क 'प्रहरणम्‌" ॥ ४।४।५७ ॥ इतीकण्‌ धनुषा जीवतीति वा वेतनादित्वादिकम्‌ ॥ ३ ॥

काण्डीरस्तु काण्डवान्‌ ॥ ४३५ ॥

काण्डानि सन्त्यस्य काण्डीर "काण्डाण्डभाण्डादीरः" ॥ ७।२।३८ ॥ १ ॥ मतौ काण्डवान्‌ ॥ २ ॥ ४३५ ॥

कृतहस्त कृतपुङ्ख सुप्रयुक्तशरो हि य ।

कृतौ सिद्धौ हस्तावस्य कृतहस्तः ॥ १ ॥ कृता पुङ्खा अनेन कृतपुङ्खः ॥ २ ॥ सुष्ठु प्रयुक्तो व्यापारित शरोऽनेन सुप्रयुक्तशरः ॥

शीघ्रवेधी लघुहस्त

शीघ्रमनवच्छेदेन वेधयति लक्ष्य भिनत्ति शीघ्रवेधी ॥ १ ॥ लघुलाघवयुक्तो हस्तोऽस्य लघुहस्त ॥ २ ॥

अपराद्धेपुस्तु लक्ष्यत ॥ ४३६ ॥

च्युतेषु

अपराद्धा लक्ष्यलक्षा इषवो बाणा अस्य अपराद्धेषु लक्ष्याच्च्युतेषुप्रक्षेपण ॥ १ ॥ ४३६ ॥

दूरवेधी तु दूरापाती

दूराद्‌ वेधयति लक्ष्य भिनत्ति दूरवेधी ॥ १ ॥ दूरादापातयति दूरापाती ॥ २ ॥

आयुधं पुन ।

हेति प्रहरण शस्त्रमस्त्र

आयुध्यन्तेऽनेनायुधं पुंक्लीबलिङ्ग, ध्वजादित्वात्कः ॥ १ ॥ हन्यते अनया हेति 'सातिहेति-' ॥ ५।३।९४ ॥ इति क्तौ निपात्यते ॥ १ ॥ प्रहरन्त्यनेन प्रहरणम्‌ ॥ २ ॥ शस्यतेऽनेन शस्त्रं स्त्रीक्लीबलिङ्ग 'नीदाम्न्‌ ॥ ५।२।८८ इति त्रट्‌ ॥ ४ ॥ अस्यते अस्त्रं "त्रट्‌ ॥ ( उणा–४४६ ) ॥ इति त्रट्‌ ॥ ५ ॥

तद् चतुर्विधम् ॥ ४३७ ॥

तदायुधं पाणिमुक्तादिभेदात् चतुर्धेति ॥ ४३७ ॥

चातुर्विध्यमेव दर्शयति–

मुक्तं द्विधा पाणियन्त्रमुक्तं शक्तिशरादिकम् ।

अमुक्तं शस्त्रिकादि स्याद् यष्ट्याद्य तु द्वयात्मकम् ॥ ४३८ ॥

मुच्यते क्षिप्यते मुक्तं द्विप्रकारकं क्रमात् यथा पाणिमुक्तं शक्तिप्रभृतिकम् ॥ १ ॥ यन्त्रमुक्तं शरादिकम् ॥ २ ॥ अमुक्तं हस्तस्थितमेव यथा शस्त्रिकादि ॥ ३ ॥ द्वयात्मकमिति मुक्तामुक्तात्मकं यथा यष्ट्यादि ॥ ४ ॥ ४३८ ॥

धनुश्चापोऽस्त्रमिष्वासः कोदण्डं धन्व कार्मुकम् ।

द्रुणाऽऽसौ

धन्यतेऽर्थ्यते, धमति शब्दायते ज्याघातेन वा धनुः "ऋर्ति–" ॥ (उणा–९९७) ॥ इत्युस्, क्लिबनिर्देशात् 'भृमृतृ–" ॥ (उणा–७१६) ॥ इत्युप्रत्यये धनुः उकारान्तोऽपि, द्वावपि पुंक्लीबलिङ्गौ "कृषिचमि–" ॥ (उणा–८२९) ॥ इत्यूप्रत्यये स्त्रीलिङ्गो धनूरपि ॥ १ ॥ चपस्य वेणोर्विकारश्चापः पुंक्लीबलिङ्गः ॥ २ ॥ अस्यन्ते बाणा अनेन अस्त्रम् ॥ ३ ॥ इषवोऽस्यन्तेऽनेनेति इष्वासः, शरासनमपि ॥ ४ ॥ 'कुदिः सौत्रः' कुद्यतेऽनेन कोदण्डं "पिचण्डैरण्ड–" ॥ (उणा–१७६) ॥ इत्यण्डे निपात्यते, कोपाद् दण्डयत्यनेन वा पृषोदरादित्वात्, पुंक्लीबलिङ्गावेतौ ॥ ५ ॥ 'धनु गतौ' "उदित स्वराद्–" ॥ ४।४।९८ ॥ इति नागमे धन्वति धन्व क्लीबलिङ्गः, "उक्षि तक्ष्य–" ॥ (उणा–९००) ॥ इत्यन्, धनति वा "मन्वन्–" ॥ ५।१।१४७ ॥ इति वन् ॥ ६ ॥ कर्मणे शक्तं कार्मुकं "योगकर्मभ्यां–" ॥ ६।४।९५ ॥ इत्युकञ् ॥ ७ ॥ द्रुणाति हिनस्ति द्रुणं, द्रवति याति शरोऽनेन वा "द्रोर्वा" ॥ (उणा–१८४) ॥ इति किद् णः ॥ ८ ॥ अस्यन्ते बाणा अनेनाऽऽसः पुंक्लीबलिङ्गः ॥ ९ ॥

लस्तकोऽस्याऽन्तः

अस्य धनुषोऽन्तर्मध्यं ग्रहणस्थानं लसति श्लिष्यति करोऽत्र लस्तकः "कीचकपेचक–" ॥ (उणा–३३) ॥ इत्यके निपात्यते ॥ १ ॥

अग्र त्वर्तिरटन्यपि ॥ ४३९ ॥

अस्य धनुषोऽग्रं कोटिः अर्यतेऽनया अर्तिः इत्यादित्वात् क्तिः ॥ १ ॥ अटन्त्यटनिः "सदिवृत्य–" ॥ (उणा–६८०) ॥ इत्यनिः, ङ्यामटनी ॥ २ ॥ ४३९ ॥

मौर्वी जीवा गुणो गव्या शिञ्जा बाणासनं द्रुणा ।

शिञ्जिनी ज्या च

मूर्वा ज्यातृणविशेषस्तस्य विकारो मौर्वी ॥ ३ ॥ जीवत्यनया जीवा ॥ ४ ॥ गुण्यतेऽभ्यस्यते गुणः ॥ ५ ॥ गोभ्यो बाणेभ्यो हिता गव्या स्त्रीत्वमविवक्षितम्, 'गोः स्वरे च'' ॥४।१।२७॥ इति यः ॥ ६ ॥ शिञ्जे शब्दायते शिञ्जा ॥ ७ ॥ बाणाः अस्यन्तेऽनेन बाणासनम् ॥ ८ ॥ द्रुणति हिनस्ति द्रुणा द्रुघणमया शर इति वा ॥ ९ ॥ शिङ्क्ते शिञ्जिनी ॥ १० ॥ जिनाति ज्या ''अन्येभ्य'' ॥५।१।१७१॥ इति डः ॥ ११ ॥

गोधा तु तल ज्याघातवारणम् ॥ ४४० ॥

गुध्यते वेष्ट्यतेऽनया गोधा, भिदादित्वादङ् साधुः ॥ १ ॥ तलति तलं क्लीबलिङ्ग स्त्रियामपि, वैजयन्तीकारस्तु पठति– ''गोधा तला च तलवौ''। चर्मादि मय ज्याप्रहारनिवारणम् ॥ २ ॥ ४४० ॥

स्थानान्यालीढवैशाखप्रत्यालीढानि मण्डलम् ।

समपाद च

तिष्ठन्त्येभिरिति स्थानानि, धनुर्धारिणां स्थितिविशेषाः । आलीढं धनु आलीढम् ॥१॥ विशाखस्य स्कन्दस्येदं वैशाखम् ॥१॥ प्रतिलोममालीढं प्रत्यालीढम् ॥ १ ॥ मण्डलाकृतित्वाद् मण्डलम् ॥ १ ॥ समौ पादावत्र समपादम् ॥ १ ॥

धनुर्वेदः—

अग्रतो वामपाद तु तीर्यग् वैशाखकुञ्चितम् ।
आलीढं तु प्रकर्तव्य हस्तद्वयसविस्तरम् ॥ १ ॥
पादौ सविस्तरौ कार्यौ समहस्तप्रमाणतः ।
वैशाखस्थानके वत्स ! कूटलक्ष्यस्य वेधने ॥ २ ॥
प्रत्यालीढे तु कर्तव्य सव्यस्तीर्यगोऽकुञ्चितः ।
तिर्यग्वामः पुरस्तत्र दूरपाते विशिष्यते ॥ ३ ॥
समपादे समौ पादौ निष्कम्पौ च सुसंहतौ ।
मण्डले मण्डलाकारौ बाह्यतीर्यौ विशेषतः ॥ ४ ॥

एते क्लीबलिङ्गाः, वैजयन्तीकारस्तु 'तत्र वैशाखमस्त्रियाम्' इत्याह ॥

वेध्य तु लक्षं लक्ष्य शरव्यकम् ॥ ४४१ ॥

वेध्यते वेध्यम् ॥ १ ॥ लक्ष्यते लक्षं ''गुधर्ये'' ॥ ५ । २ । २८ ॥ इत्यद् च एवात ''॥ ५ । १ । २८ ॥ इति मे लक्ष्यम् ॥ २ ॥ ३ ॥ शृणाति शरु-हिंस, शरवे हितं शरव्य 'तस्मै हिते' ॥ ७ । १ । ३५ ॥ इति यः, एते क्लीबलिङ्गाः, वैजयन्ती तु 'वेध्य शरव्य न नरि' इत्याह ॥ ४ ॥ ४४१ ॥

शेषश्चात्र-वेध्ये निमित्तम् ॥

बाणे पृषत्कविशिखौ खगगार्ध्रपक्षौ
काण्डाशुगप्रदरसायकपत्रवाहाः ।
पत्रीष्वजिह्मगशिलीमुखकङ्कपत्र-
रोपाः कलम्बशरमार्गणचित्रपुङ्खाः ॥ ४४२ ॥

बणन्त्यस्मिन् पुङ्खा इति बाणः पुंक्लीबलिङ्गः, "व्यञ्जनाद् घञ्" ॥ ५ । ३ । १३२ ॥ तत्र ॥ १ ॥ वपति सिञ्चति पृषत्कः "निष्कतुरुष्क-" ॥ ( उणा-२६ ) ॥ इति के निपात्यते, पुङ्खादीनां पृथक् पदकमस्येति नैरुक्ताः, यद्यजुर्वेदः-"पुङ्खः शरस्तथा शल्यं पक्षश्चायुजस्त्रीनि पद्" इति ॥ २ ॥ विशेषेण श्यति विशिखः "श्यतेरिच्च वा" ॥ ( उणा-८५ ) ॥ इति खः, विविधा शिखा अस्येति वा ॥३॥ खे गच्छति खगः ॥ ४ ॥ गृध्रपक्षस्यायं गार्ध्रपक्षः ॥ ५ ॥ कणत्यनेनाऽऽहतः काण्डः पुंक्लीबलिङ्गः, "कण्याणि" ॥ ( उणा-१६९ ) ॥ इति णिद् डः ॥ ६ ॥ आशु गच्छत्याऽऽशुगः ॥ ७ ॥ प्रदीर्यतेऽनेन प्रदरः ॥ ८ ॥ स्यत्यन्तं नयति सायकः ॥ ९ ॥ पत्राणि वहति पत्रवाहः ॥ १० ॥ पत्राण्यस्य सन्ति पत्री ॥११॥ इष्यति गच्छति इषुस्त्रिलिङ्गः," पृका" ॥(उणा-७२९)॥ किदुः ॥१२॥ अजिह्मसृजु गच्छति अजिह्मगः ॥ १३ ॥ शिलीव मुखमस्य शिलीमुखः ॥ १४ ॥ कङ्कस्य पत्राण्यत्र कङ्कपत्रः ॥ १५ ॥ रोप्यते क्षेप्ते भिद्यन्यते रोपः ॥ १६ ॥ कडति माद्यति कडम्बः, "कुकडि" ॥ ( उणा-३२१ ) ॥ इत्यम्बः, लत्वे कलम्बः, के शिरसि कृतलम्बानो लम्बत इति वा ॥ १७ ॥ शृणाति शीर्यते वाऽनेन शरः पुंक्लीबलिङ्गः ॥ १८ ॥ मार्गयति मार्गणः नन्द्यादित्वादनः ॥१९॥ चित्रा पुङ्खा अस्य चित्रपुङ्खः ॥२०॥४४२॥

शेषश्चात्र-

बाणे तु कङ्कहा समभेदम ॥
तीरस्य तीरस्त्वथ कादम्बोऽऽप्यथकम्पनः ।

प्रक्ष्वेडनः सर्वलौहो नाराच एषणश्च सः ।

प्रक्ष्वेडते प्रक्ष्वेडनः ॥ १ ॥ लोहस्य विकारो लौहः, सर्वस्याऽसौ लौहश्च सर्वलौहः ॥२॥नरमयति नराची, नराच्यास्तुल्यो नाराचः प्राकरादेरण् ॥७।१।११८॥,नराच्येव वा प्रज्ञादित्वात् स्वार्थेऽण्, नारं नरसमूहमयतीति वा ॥३॥ इष्यतेऽनेन एषणः ॥४॥

शेषश्चात्र-

नाराचे लोहनालोऽस्त्रसायकः

निरस्त प्रहित

तूण्यते तूणीर,,"गम्भीरा "॥(उणा-४२९)॥ इतीरे निपात्यते ॥३॥ उपासज्यन्तेऽत्र बाणा उपासङ्ग ॥ ४ ॥ शराणामाश्रय ॥ ५ ॥ ४४५ ॥ शरा धीयन्तेऽत्र शरधि पुलिङ्गः, यौगिकत्वादिषुधिर्बाणिधिरित्यादय ॥६॥ कल्यन्ते बाणा अनेन कलाप ॥७॥

अथ चन्द्रहास

करवालनिस्त्रिंशकृपाणखड्गा ।

तरवारिकौक्षेयकमण्डलाग्रा-

असिरृष्टिरिष्टी

चन्द्रवत् हास प्रभाऽस्य चन्द्रहास ॥१॥ कर पाल्यति करपाल, अपादित्वाद् लत्वे करवाल, करे वालो बन्धनमस्येति वा ॥ २ ॥ निष्क्रान्तस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंश "समव्ययात् सङ्ख्यायाश्च "॥७।३।१२३॥३॥ कल्प्यते कृपाणः"कृपिविपि " ॥(उणा-१९१)॥ इत्याणक् ॥४॥ खडति भिनत्ति खड्गः "गम्यमि " ॥(उणा-९२)॥ इति गः ॥५॥ तर तरत् प्लवमान धारयत्र तरवारि पुलिङ्ग ॥६॥ कुक्षौ भवो जातः कौक्षेयक, कङ्कुक्षिनिजीर्णेनाऽयसा निर्मितत्वात् "कुक्षकुक्षि " ॥६।३।१२॥ इत्ये यकम् ॥७॥ मण्डलाकारमग्रमस्य मण्डलाग्र ॥८॥ अस्यतेऽसि पुंलिङ्गः "पदिपठि " ॥(उणा-६०७)॥ इतीः ॥ ९ ॥ ऋच्छति पार्षि गच्छति ऋष्टि स्वरादि ॥१०॥ रेषति हिनस्ति रिष्टिः "रमुषि "॥(उणा-६५१)॥ इति कित् ति ,पुस्त्रीलिङ्गावेतौ॥११॥

शेषश्चात्र- असिस्तु सायकः ।

भीगर्भो विजयः खड्गो व्यवहार प्रजाकरः ।

धर्मपालोऽक्षरो दक्षस्तीक्ष्णकर्म्मा दुरासद ॥

प्रसङ्गो रत्नतनयो मनुष्येष्ट शिवङ्कर ।

करपालो विशसनस्तीक्ष्णधारा विषाग्रज ॥

धर्मप्रचारो धाराङ्गो धाराधारकलाभिको ।

चन्द्रभासस्य शास

त्सरुरस्य मुष्टि ॥ ४४६ ॥

अस खड्गस्य मुष्टिग्रहणस्थाने मुष्टिः, त्सरत्यनेन त्सरु पुलिङ्ग,' मृगय्वादि '' ॥(उणा-७१६)॥ इत्यु , खड्गस्येत्युपलक्षणम्, तेनान्यस्याऽपि मुष्टिस्त्सरुरुच्यते ।, यदगर- "त्सरु खड्गादिमुष्टौ स्याद्" इति ॥ १ ॥ ४४६ ॥

प्रत्याकार परीवार कोश खड्गपिधानकम् ।

प्रतिरूप आकारोऽस्य प्रत्याकार ॥ १ ॥ परिव्रियतेऽनेन परिवार , "पञ्युप सगस्य-" ॥३।२।८६॥ इति दीर्घात्व परीवारः ॥ २ ॥ कुश्यते इति कोशस्त्रिलिङ्ग । खड्गः पिधीयतेऽनेन खड्गपिधानम् , स्वार्थे के खड्गपिधानकम् ॥ ३ ॥

अजुर्नं फलकं चर्म खेटकाऽऽवरणस्फुरा ॥ ४४७ ॥

'अद्ङ् अभियोगे' अद्यतेऽनेन अङ्गुनं ॥१॥ फलति विशीर्यते फलकम्, के फलकं फलकमपि, पुल्लीबलिङ्गः ॥ २ ॥ चर्म्मचर्मत्वात् ॥ ३ ॥ खेटयत्युत्त्रासयति खेटं पुल्लीबलिङ्ग, के खेटक ॥ ४ ॥ आव्रियते अपरनेन आवरणं ॥ ५ ॥ स्फुरति च यति स्फुरः, स्फुरकोऽपि ॥ ६ ॥ ४४७ ॥

अस्य मुष्टिस्तु सग्राहः

अस्य फलकस्य मुष्टिग्रहणस्थानं मुष्टि, सग्रह्यतेऽनेन सग्राहः "समो मुष्टौ" ॥ ५ । ३ । ५८ ॥ इति घञ् ॥ १ ॥

क्षुरी छुरी कृपाणिका ।

क्षस्त्र्यसेर्धेनुपुत्र्यौ च

क्षुरति विलनति क्षुरी, क्षुरिकाऽपि ॥ १ ॥ छुरति छिनत्ति छुरी ॥ २ ॥ कल्पते कृपाणी, के कृपाणिका ॥ ३ ॥ असमतेऽनया असी "भीदाम्नृ-" ॥ ५ । २ । ८८ ॥ इति नट् ॥ ४ ॥ असिधेन्वात् धेनु-पुत्र्यौ, धिन्वितार्थप्रदानित्वादसिरस्या धेनुरसिधेनुः असेः पुत्रीव ह्रस्वत्वादसिपुत्री ॥ ५ ॥ ६ ॥

शेषश्चात्र—अथ क्षुर्मञ्जी कोशशायिका ॥

पत्र च धेनुका ।

पत्रपालस्तु साऽऽयता ॥ ४४८ ॥

सा छुरिका आयता दीर्घा । पत्रेण पालयति रक्षति पत्रपालः ॥१॥४४८॥

शेषश्चात्र—पत्रपाले तु कुम्भातृका ।

कुरन्ती पत्रफला च

दण्डो यष्टिश्च लगुड

दण्डयत्यनेन दण्डः पुल्लीबलिङ्गः, "पचमगु-" ॥ (सभा–१६८) ॥ इति ड ॥ १ ॥ इज्यतेऽनया यष्टि पुल्लीलिङ्गः, 'यजुस्व ' ॥ ( सभा–६४६ ) ॥ इति ति ॥ २ ॥ लगति प्रहारोऽनेन लगुडः "कमेरड-" ॥ ( सभा–१७७) ॥ ३ ॥

स्यादीली करवालिका ।

ईल्यते ईली, एकधारोऽसिस्तुल्यकायुधम् ॥१॥ करस्य करवालः करवालिका, दृश्यालिकेत्यन्ये । "मुसलः खड्गः कथितम्" इति व्याडिः, स चारणाभिर्देशानुपाठात् २॥

भिन्दिपाले सृग

भिन्दतः पालयति भिन्दिपालो नाम हस्तक्षेप्यो महाफलो दीर्घदण्ड भा ।

युधविशेषः, पृषोदरादित्वात् साधुत्वञ्च ॥ १ ॥ सज्यते सग, स्यादित्वात् के न्यङ्क्वादित्वाद् गत्वं ॥ २ ॥

कुन्ते प्रास

कुणति कुन्तस्तत्र ॥ १ ॥ प्रास्यते प्रास, हस्तधार्यं शल्यः ॥ २ ॥

अथ द्रुघणो घन ॥ ४४९ ॥

मुद्गर स्यात्

द्रुहन्यतेऽनेन द्रुघण "व्ययोद्रो करणे" ॥ ५ । ३ । ३८ ॥ इत्यलि घनादेशस्ततोऽरीहणादिपाठात् णत्वम्, द्रु घणतीति प्रसते वा ॥ १ ॥ हन्यतेऽनेन घन, "मूर्तिनिचिता" ॥ ५ । ३ । ३७ ॥ इत्यलि साधु ॥ २ ॥ ४४९ ॥ मोदतेऽनेन मुद्गरः पुंलीलिङ्गः, "मुदिग्रुरिभ्याम्" ॥ (उणा–४०३) ॥ इति ढिदरो गोऽन्तश्च, मुदं गिरति प्रसते वा ॥ ३ ॥

कुठारस्तु परशु पर्शुपर्श्वधौ ।

परश्वध स्वधितिश्च

'कुठिः सौत्र' कोठति कुठारः पुंस्त्रीलिङ्गः, "तुषिकुठिभ्यां किद्" ॥ (उणा–४०८) ॥ इत्यार, कुठान् वृक्षान् इयर्तीति वा ॥ १ ॥ परान् शृणाति परशु "परात्भ्यां शृणातिभ्यां डित्" ॥ (उणा–७४२) इत्यु ॥ २ ॥ पृणाति पर्शुः "प्रः शु" ॥ (उणा–८१५) ॥ इति शु ॥ ३ ॥ पर्शुकाभिर्न भीयते पर्श्वधः, स्यादित्वात् कः ॥ ४ ॥ परान् शृणाति परश्वधः "परात् धो डित्" ॥ (उणा–२५५) ॥ इति वधः ॥ ५ ॥ स्वं धियति धारयति स्वधिति "तिक्कृतौ नाम्नि" ॥ ५ । १ । ७१ ॥ इति तिक्, परश्वादयः पुंलिङ्गा ॥ ६ ॥

परिघ परिघातनः ॥ ४५० ॥

परिहन्यतेऽनेन परिघः, लोहबद्धो लगुडः "परेर्घः" ॥ ५ ॥ ३ ॥ ४० ॥ इत्यलि घादेशः, लत्वे पलिघोऽपि ॥१॥ परिघात्यतेऽनेन परिघातनः ॥२॥४५०॥

सर्व्वला तोमरे

सर्व्वान् लाति सर्व्वला ॥ १ ॥ ताम्यत्यनेन तोमर पुंक्लीबलिङ्गः "जठर ककर-" ॥ (उणा–४०३) ॥ इत्यरे निपात्यते, तत्र ॥ २ ॥

शल्य शङ्कौ

शलत्यन्तर्विशति शल्यं पुंक्लीबलिङ्गः, "स्याछामा" ॥ (उणा–३५७) ॥ इति यः, अन्यत्रोपचारात् शल्यम् ॥१॥ शाम्यत्यनेन शङ्कु पुंलिङ्ग, "केशीशामि" ॥ (उणा–७४९) ॥ इति कुस्तत्र ॥ २ ॥

शूले त्रिशीर्षकम् ।

शृणाति हिनस्ति शूलं पुंक्लीबलिङ्ग, द्वे॥१॥ त्रीणि शीर्षाण्यस्य त्रिशीर्षकम् ॥२॥

शक्तिपट्टिसदुःस्फोटचक्राद्याः

शस्त्रजातयः ॥ ४५१ ॥

शक्नोति जेतुमनया शक्तिः ॥ १ ॥ पट्यते परातीन् पट्टिसः "पटिकीभ्याम्" (उणा–५७९) इति टिसः, अयं ताल्व्य इत्यन्ये ॥ १ ॥ दुःखं स्फोटयति दुःस्फोटः ॥ १ ॥ क्रियते प्रहारोऽनेन चक्रं पुंक्लीबलिङ्ग, आदिग्रहणात् शतघ्नी महाशिला-भुशुण्डी भिन्दिपाल वराहकर्णकप्रभृतयः ॥१॥४५१॥

क्षेपकात्र–

अथ शक्तिः कासूर्मेहाफला ॥
अस्त्राकाऽऽयता सा च पट्टिसस्तु क्षुरोपमः ।
लोहदण्डस्तीक्ष्णधारो दुःस्फोटशफलौ समौ ॥
चक्रं तु चक्रमप्रायमरसंचितमित्यपि ।
शतघ्नी तु चतुस्ताला लोहकण्टकसंचिता ॥
अथ कण्टकसच्छमा शताध्न्येव महाशिला ।
भुशुण्डी स्याद् दारुमयी वृत्तायःकीलसंचिता ॥
कणयो लोहमात्रोऽथ भिन्दिका तु कुन्तकः ।
वराहकर्णकोऽन्यश्च फलपत्रामके द्रुमम् ॥
मुनयोऽसमोक्षरं च

खुरली तु श्रमो योग्याऽभ्यासः

खरन्ति छिन्दन्त्यसौ खुरली, 'मुरकोरल–" ॥ (उणा–४७४) ॥ इत्यले निपात्यते॥१॥ श्राम्यत्यनेन श्रमः ॥२॥ योगे विनियोगान्वे साध्वी योग्या 'तत्र साधौ ॥४।४।९८॥ इति यः योगाय शक्नोति वा "योगकर्माभ्यां–" ॥६।४।९९॥ इति यः ॥ ३ ॥ अस्त्राणामभ्यसनमभ्यासः ॥४॥

क्षेपकात्र–शराभ्यास उपासनम् ॥

सद्भूः सखुरिका ।

तस्य श्रमस्य स्थापनाय भूः सद्भूः ॥ १ ॥ खन्यते खरी भिषपतेऽत्र खहुरः "मीमिसि " ॥ (उणा–४२७) ॥ इत्युरः, खरी खर्जुरः स्वार्थे के खुरिका ॥२॥

सर्वाभिसारः सर्वौघः

सर्वसंनहनं समा ॥ ४५२ ॥

सर्वेण सैन्येन अभिसरण सर्वाभिसार ॥ १ ॥ सर्वेषामोघो वहन सर्वौघ ॥ २ ॥ सर्वे सनह्यतेऽत्र सर्वसनहनम् ॥ ३ ॥ ४५२ ॥

लोहाभिसारो दशम्यां विधिर्नीराजनात् पर ।

अस्त्रभृतां राज्ञां यः शास्त्रतो विधि प्रस्थानात् प्राक् स । लोह शस्त्रमभिसार्यते प्रसार्यते प्रस्थास्यतेऽत्रेति लोहाभिसार , नीरस्य शान्त्युदकस्य अजन क्षेपोऽत्र नीराजनम् मन्त्रोक्त्या नि क्षेपवाहनादे राजन वा,तस्मात् परो विधि , मङ्गुरु–

"लोहाभिसारस्तु विधि परो नीराजनाद् नृपे
दशम्यां दर्शिते कार्ये" इति । अमरस्तु–

"लोहाभिसारोऽस्त्रभृतां राज्ञां नीराजनाविधि ।" इति मुवनीराजनामेव लोहाभिसारमाह ॥ १ ॥

प्रस्थानं गमन व्रज्याऽभिनिर्याण प्रयाणकम् ॥ ४५३ ॥
यात्रा

प्रस्थीयते स्थानाच्चल्यते प्रस्थानम्, ॥ १ ॥ गम्यते गमन ॥ २ ॥ व्रजन व्रज्या "आस्यटि" ॥ ५ । ३ । ९७ ॥ इति क्यप् ॥ ३ ॥ अभिनिर्यायते ऽभिनिर्याण ॥ ४ ॥ प्रयायते प्रयाणम्, स्वार्थे के प्रयाणकं ॥ ५ ॥ ४५३ ॥ यान्त्यस्यां यात्रा "हुयामा" ( उणा–४५१ ) इति त्र ॥ ६ ॥

अभिषेणनं तु स्यात्
सेनयाऽभिगमो रिपौ ।

सेनया रिपूनभियानमभिषेणन "णिज् बहुलं–" ॥ ३ । ४ । ४२ ॥ इति णिज्यऽनटि च "स्यासेनि" ॥ २ ॥ ३ ॥ ४० ॥ इति षत्वम् ॥ १ ॥

स्यात् सुहृद्बलमासार

आस्रियतेऽनेनेत्यासारोऽभ्यागच्छन्मित्रबलम् ॥ १ ॥

प्रचक्रं चलितं बलम् ॥ ४५४ ॥

प्रस्थितं चक्रं सैन्य प्रचक्रम्, चलित प्रयाणकस्थितम् ॥ १ ॥ ४५४ ॥

प्रसारस्तु प्रसरण तृणकाष्ठादिहेतवे ।

सैन्याद् बहिस्तृणकाष्ठाद्यर्थं प्रसरण गमनं प्रसार , यत्स्यम् निष्पवीवधाऽऽसार प्रसाराणा इव सर्जः ॥१॥ अमरस्तु–"स्यादासार प्रसरणम्" इत्याह, तथाऽपशास्त्रेण न सवदतीति नारतम् ॥

अभिक्रमो रणे यानमभीतस्य रिपून् प्रति ॥ ४५५ ॥

आभिमुख्येन अभिभूय, अरीनभि वा क्रमणमभिक्रम ॥ १ ॥ ४५५ ॥

सूतो वन्दी मङ्गलपाठक ॥ ४५८ ॥

सुनोति सूतः ॥ १ ॥ वन्दते स्तौति वन्दी, ग्रहादित्वाद् णिन् ॥ २ ॥ मङ्गलं पठतीति मङ्गलपाठक ॥ ३ ॥ ४५८ ॥

मागधो मगध

मगध एव मागध प्रज्ञादित्वादण् ॥ १ ॥ 'मगधः कण्ड्वादौ' मगध्यति याचते मगधः, यशोदीरणेन यो याचते, यदाहु – "मागधा स्तुतिवाचकाः" इति मह्लोऽपि ॥ २ ॥

सशप्तका युद्धाऽनिवर्त्तिन ।

सशपन्ति, पलायमानान् शपथं कुर्वन्ते वा सशप्ताः, के सशप्तका ॥ १ ॥ युद्धात निवर्त्तन्ते युद्धाऽनिवर्त्तिन ॥ २ ॥

नग्न स्तुतिव्रत

न वस्ते नग्न, कौपीनमात्रजरद्वस्त्रपरिधानात् "दिननम" ॥ ( उणा–२६८ ) ॥ इति मे निपात्यते, न विद्यन्ते ग्राः प्रियश्छन्दांसि वा अस्येति वा नग्ना दित्वामात्राऽद् भाव ॥ १ ॥ स्तुतिरेव व्रतमस्य स्तुतिव्रत ॥ २ ॥

तस्य ग्रन्थो भोगावली भवेत् ॥ ४५९ ॥

तस्य नग्नस्य भोगः सुख तद्धेतुत्वाद् भोगाः स्तुतयः, तासामावली भोगावली ॥ १ ॥ ४५९ ॥

प्राण स्थाम तर पराक्रमबलद्युम्नानि शौर्यौजसी

शुष्म शुष्म च शक्तिरूर्ज्जसहसी

प्राणन प्राणः ॥ १ ॥ तिष्ठन्त्यनेन स्थाम "मन्" ॥ ( उणा–९११ ) ॥ इति मन् ॥ २ ॥ तरन्त्यनेनापदं तरः ' अस्" ॥ (उणा–९५२) ॥ इत्यस्, क्लीब लिङ्गावेतौ ॥ ३ ॥ पराक्रमन्तेऽनेन पराक्रम ॥ ४ ॥ बलत्यनेन बलं पुंक्लीबलिङ्ग "वर्पादय क्लीवे" ॥ ५ । ३ । २९ ॥ इत्यस् ॥ ५ ॥ दिवि मीयते द्युम्नं "द्यु सुनिभ्यो मादो किद्" ॥ ( उणा–२६६ ) ॥ इति नः, प्रविणमपि ॥ ६ ॥ शूरस्य भाव शौर्यम् ॥ ७ ॥ ओषत्यरीननेन ओज क्लीबलिङ्ग, "उपेज् च" ॥ ( उणा–९५५ ) ॥ इत्यस् ॥ ८ ॥ शुष्यत्यनेनारि शुष्म "तिक्तिमिलि–" ॥(उणा–३४०)॥ इति किद् मः ॥ ९ ॥ "सात्मभात्मन्" ॥ ( उणा–९१६ ) ॥ इति मनि निपातनाद् शुष्म क्लीबलिङ्गः ॥ १० ॥ शक्यतेऽनया परो जेतु शक्ति ॥ ११ ॥ ऊर्जनमूर्जः पुंक्लीलिङ्ग, ऊर्गपि ॥ १२ ॥ सहते शत्रुमनेन सह क्लीबलिङ्गः, "अस्" ॥ ( उणा–९५२ ) ॥ इत्यस् ॥ १३ ॥

युद्धं तु सङ्ख्यं कलिः ।
समाप्तमाहवसम्प्रहारसमरा जन्यं युदायोधनं
सस्फोटं कलहो मृधं प्रहरणं संयद्रणो विग्रहः ॥ ४६० ॥
द्वन्द्वं समाघातसमाह्वयाभि-
सम्पातसमर्दसमित्प्रघाताः ।
आस्कन्दनाजिप्रधनान्यनीक-
मभ्यागमश्च प्रविदारणं च ॥ ४६१ ॥
समुदायः समुदयो राटिः समितिसङ्गरौ ।
अभ्यामर्दः सम्परायः समीकं साम्परायिकम् ॥ ४६२ ॥
आक्रन्दः संयुगं च

युध्यन्तेऽत्र युद्धम् ॥ १ ॥ सङ्ख्यन्तेऽत्र सङ्ख्यं पुंक्लीबलिङ्गः, 'घञो वार्त्ति-' ॥ ४ । ४ । ४ ॥ इति स्यापेत ॥ २ ॥ कल्यते क्षिप्यतेऽत्र कलिः पुंलिङ्गः, "पदिपठि-" ( उणा- ६०७ ) इति इः ॥ ३ ॥ सङ्ग्रामयन्त्यत्र सङ्ग्रामः ॥४॥ आहूयन्ते योद्धारोऽनेनेत्याहवः, "आङो युद्धे" ॥ ५ । १ । ४१ ॥ इत्यपि अस्यो व ॥ ५ ॥ सम्प्रहरन्त्यन्योन्यमत्रेति सम्प्रहारः ॥ ६ ॥ समियृते सङ्गच्छन्तेऽत्र समरः पुंक्लीबः "पुंनाम्नि-" ॥ ५ । ३ । १३० ॥ इति घः ॥ ७ ॥ जायते विद्वेषाज्जन्यं 'अघ्न्यगय-' ॥ ५ । १ । ७ ॥ इति यः पुंक्लीबलिङ्गावेतौ ॥ ८ ॥ युध्यन्तेऽस्यां युत् क्षुधादित्वात् क्विप् ॥ ९ ॥ आयुध्यन्तेऽस्मिन्नायोधनम् ॥ १० ॥ सस्फुटन्त्यत्र कातरहृदयानि सस्फोटः सस्फेठ इत्यन्ये सफेठ इति भरतः ॥ ११ ॥ कल्यते क्षिप्यतेऽत्र कलहः, 'कृपृकटि-' ॥ (उणा-५८९) ॥ इत्यहः कलं हीनबलं हन्तीति वा 'क्वचित्' ॥ ५ । १ । १७१ ॥ इति डः, कलं जहातीति वा "डपापो बहुलं-" ॥ २ । ४ । ९९ ॥ इति पूर्वस्य ह्रस्वः ॥ १२ ॥ 'मृधूङ् उन्दे' मर्धते प्राणिनैर्मृधं "नाम्युपान्त्य-" ॥ ५ । १ । ५४ ॥ इति कः ॥ १३ ॥ प्रहरन्त्यत्र प्रहरणम् ॥ १४ ॥ संयतन्ते संयच्छन्ति वाऽत्र संयत् स्त्रीलिङ्गः अमरस्तु- "स्त्रियां संयत्" इत्याह ॥१५॥ रणन्ति दुन्दुभयोऽत्र रणः पुंक्लीबलिङ्गः "पुंनाम्नि-" ॥ ५।३।१३० ॥ इति बाहुलकात् घः ॥१६॥ विगृह्णन्त्यत्र विग्रहः ॥ १७ ॥ ४६० ॥ द्वौ द्वौ युध्येतेऽत्र द्वन्द्वं पृषोदरादित्वात्, द्वन्द्यते वीरैरिति वा 'प्रज्ञाद्वा' ॥(उणा-५१४)॥ इति वे निपात्यते, 'समासकत्वद्युम्मेषु' इति मौजः ॥ १८ ॥ समाघ्नन्ति परस्परमत्र समाघातः ॥ १९ ॥ संहूयन्तेऽस्मिन्नामात्र समाह्वयः ॥ २० ॥ अभिसम्पतन्त्यत्र अभिसम्पातः ॥ २१ ॥ सम्मृद्नन्त्यत्र सम्मर्दः ॥ २२ ॥ संयन्ति सङ्गच्छन्तेऽत्र समित् 'कुत्सम्पदादि-' ॥ ५ । ३ । ११४ ॥ इति क्विप् ॥ २३ ॥

प्रकर्षेण ग्रन्त्यत्र प्रपात ॥ २४ ॥ आस्कन्दन्त्यत्र आस्कन्दनम् ॥ २५ ॥ अज न्त्यभिक्षिपन्त्यस्यामाजि स्त्रीलिङ्ग "पादाघ्याताजि-" ॥ ( उणा- ६२० ) ॥ इति णिदि ॥ २६ ॥ प्रधनति हन्ति प्रधन, धनिर्मरणार्थोऽत्र निधनवत् ॥२७॥ अनन्ति जीवन्ति सुभटा अनेन अनीक पुल्लीबलिङ्ग , अनीक सैन्यमस्त्यत्र वा, अभ्रादित्वा द ॥२८॥ अभ्यागच्छन्त्यस्मिन्नभ्यागम ॥२९॥ प्रविदार्यतेऽत्र प्रविदारणम्॥३०॥ ॥ ४६१ ॥ समुदयन्ते मिलन्त्यत्र समुदाय ॥ ३१ समुद्यन्त्यत्र समुद्यम ॥ ३२ ॥ रटन्ति कलहायन्तेऽस्यां राटि स्त्रीलिङ्ग , "कमिवमि-" ॥( उणा-६१८ )॥ इति बहुवचनाद् णिदि ॥ ३३ ॥ समयन्त्यस्यां समितिः, इन्नादित्वात् क्ति ॥ ३४ ॥ सङ्गिरन्ते मृणन्ति वाऽत्र सङ्गरः ॥ ३५ ॥ अभ्यामृद्नन्ति अस्मिन्नभ्यामर्द ॥३६॥ सम्परैति मृत्युरत्र सम्परायः, पुल्लीबलिङ्ग ॥ ३७ ॥ समीयतेऽत्र समीक "सृणी कास्तिक-" ॥ ( उणा-५० ) ॥ इति के निपात्यत ॥ ३८ ॥ सम्परायो मृत्यु प्रयो जनमस्य साम्परायिकम् ॥ ३९ ॥ ४६२ ॥ आक्रन्दन्त्यत्र कातरा आक्रन्द ॥४०॥ सयुज्यन्तेऽत्र सयुग पुल्लीबलिङ्ग ,स्यादित्वात् के न्यङ्क्वादित्वाद् गत्व, सङ्गता रथ युगा अत्रेति वा ॥ ४१ ॥

अथ नियुद्ध तद्भुजोद्भवम् ।

तत् युद्ध बाहुभिर्जनितम् , नियत युद्ध नियुद्धम् ॥ १ ॥

पटहाडम्बरौ तुल्यौ

पटे हन्यते स्म पटहो वाद्यविशेष', यद्वाचस्पति – "महासमरदर्शे तु पटहाड- म्बरावुभौ ॥ १ ॥ आडम्यते आडम्बर , "जठर-" ( उणा- ४०३ ) इत्यरे नि पात्यते पुल्लीबलिङ्गावेतौ ॥ २ ॥

तुमुल रणसङ्कुलम् ॥ ४६३ ॥

ताम्यन्त्यनेन तुमुल, "कुमुलतुमुल-" ॥ (उणा-४८७) ॥ इत्युले निपात्य ते ॥ १ ॥ रणेन सङ्कुल रणसङ्कुलम् ॥ २ ॥ ४६३ ॥

नासीरं त्वग्रयानं स्यात्

'णासृङ् शब्दे' नासते नासीरं "अम्बीरामीर-" ॥ (उणा-४०२) ॥ इतीरे निपात्यते, क्लीबलिङ्गोऽय, वैजयन्ती तु– "नासीरोऽस्त्री" इत्याह ॥ १ ॥ अग्रे यानमस्य अग्रयानम् ॥ २ ॥

अवमर्दस्तु पीडनम् ।

अवमर्दनमवमर्द ॥ १ ॥ पीड्यते पीडनम् ॥ २ ॥

१ प्रपातस्त्वभ्यवस्कन्दो धाट्यभ्यासादनं च स ॥ ४६४ ॥

प्रपतनं प्रपातः छलादाक्रमणमित्यर्थः ॥ १ ॥ अभ्यवस्कन्दनमभ्यवस्कन्दः, अवस्कन्दोऽपि ॥२॥ धावन्तोऽन्त्यस्यां धाटिः पृषोदरादित्वात्, अर्थां धाटी ॥३॥ अभ्यासाद्यतेऽभ्यासादनम् ॥ ४ ॥ ४६४ ॥

तद् रात्रौ सौप्तिकं

तदभ्यासादनं निशि सुप्तेषु भवं सौप्तिकम्, अध्यात्मादित्वादिकण् ॥ १ ॥

वीराशंसनं त्वाजिभीष्मभूः ।

वीरा आशंस्यन्तेऽत्र वीराशंसनम् ॥ १ ॥ आजेः सङ्ग्रामस्य भीष्माऽतिघोरा भूमिः "वीराशंसनी" इत्यमरः ॥

नियुद्धभूरक्षवाटः,

अक्षो मल्लानां युद्धस्य व्यवहारस्तस्य वाटोऽक्षवाटः ॥ १ ॥

मोहो मूर्च्छा च कश्मलम् ॥ ४६५ ॥

मोहनं मोहः प्रहारैः ॥ १ ॥ मूर्च्छनं मूर्च्छा ॥ २ ॥ 'कश शब्दे' कशति वैचित्त्यभावेन कश्मलं 'दधिकुटि–" (उणा– ५०२) इति मलः ॥ ३ ॥ ४६५ ॥

वृषे भाविनि या युद्धे पानं स्याद्वीरपाणकम् ।

वीराणां मद्यपानं वीरपाणं 'पानस्य भावकरणे' ॥ २ । ३ । ६९ ॥ इति णत्वम् ॥ १ ॥

पलायनमपयानं संदावद्रवविद्रवाः ॥ ४६६ ॥

अपक्रमः समुत्प्रेभ्यो द्रावः

पलायते पलायनम् ॥ १ ॥ अपसृत्य यायतेऽपयानम् ॥२॥ संदवनं संदावः, 'युद्रुस्रोः" ॥ ५ । ३ । ५९ ॥ इति घञ् ॥ ३ ॥ द्रवणं द्रवः ॥ ४ ॥ विद्रवणं विद्रवः ॥५॥४६६॥ अपक्रम्यत इत्यपक्रमः ॥६॥ समुत्प्रेभ्यः परो द्रावशब्दः, सन्द्रवणं संद्रावः "युद्रुस्रोः" ॥५।३।५९॥ इति घञ् ॥७॥ "ग्रुप्रो–" ॥५।३।५४॥ इति घञि उद्द्रावः ॥ ८ ॥ "प्रात्स्रुद्रुस्तोः" ॥ ५ । ३ । ६७ ॥ इति घञि प्रद्रावः, नशनमपि ॥ ९ ॥

अथ विजयो जयः ।

विजयनं विजयः ॥ १ ॥ जीयते जयः ॥ २ ॥

पराजयो रणे भङ्गः

पराजयनं पराजयः ॥ १ ॥

डमरे डिम्बविप्लवौ ॥ ४६७ ॥

दाम्यति डमरः लुण्ठ्यादि अशस्तकलह इत्येके "दमेर्णिद्वा दश्च डः–" (उणा–४०२) इत्यर तत्र ॥ १ ॥ डयन्तेऽस्माद् डिम्बः पुक्लीबलिङ्ग, डीनी भ्रमाति डिम्ब ॥ २ ॥ विप्लवन विप्लव ॥ ३ ॥ ४६७ ॥

शेषश्चात्र–

स्याच्छृगाली तु विप्लवे ।

वैरनिर्यातन वैरशुद्धिर्वैरप्रतिक्रिया ।

'यतण् निकारोपस्कारयो' निर्यात्यते शोध्यते निर्यातन वैरस्य नियातन वैर निर्यातनम् ॥१॥ वैरस्य शोधन वैरशुद्धिः ॥२॥ वैरस्य प्रतिकारो वैरप्रतिक्रिया ॥३॥

बलात्कारस्तु प्रसभ हठ,

बलादित्यव्यय हठार्थे' बलात् करण बलात्कारः ॥ १ ॥ प्रगता सभा अत्र प्रसभ, सभया युक्तायुक्तविचारो लक्ष्यते क्लीबलिङ्गोऽयम्, वैजयन्ती तु–"प्रसभोऽस्त्री बलात्कार" इति पुम्यप्याह ॥ २ ॥ हठति हठः ॥ ३ ॥

अथ स्खलित छलम् ॥ ४६८ ॥

स्खलन मार्गाचलनं स्खलितम् ॥ १ ॥ छयति छलम् ॥ २ ॥

पराभूतोऽभिभूतो भूतो जितो भग्न पराजित ।

परादिशब्देभ्य परो भूत पराभूत ॥१॥ परिभूत ॥२॥ अभिभूत ॥३॥ जीयते स्म जितः ॥४॥ भज्यते स्म भग्नः ॥ ५ ॥ पराजीयते स्म पराजितः ॥ ६ ॥

पलायितस्तु नष्ट स्याद् गृहीतदिक् तिरोहित ॥ ४६९ ॥

परायणम भयते पलायित, "उपसर्गस्यायौ" ॥ २ । ३ । १०० ॥ इति रस्य लत्वम् ॥ १ ॥ नश्यति स्म नष्टः ॥ २ ॥ गृहीता दिग् येन गृहीतदिक् ॥ ३ ॥ तिरोधत्ते स्म तिरोहितः ॥ ४ ॥ ४६९ ॥

जिताहवो जितकाशी

जित आहवोऽनेन जिताहवः ॥ १ ॥ जितेन काशते जितकाशी ॥ २ ॥

प्रस्कन्नपतितौ समौ ।

प्रस्कन्दते स्म प्रस्कन्नः ॥ १ ॥ पतति स्म पतितः ॥ २ ॥

चार कारा गुप्ती

चरन्त्यत्रेति चारः, के चारकोऽपि ॥ १ ॥ क्रियते कीर्यते याऽस्यां कारा भिदादित्वादङि साधु ॥ २ ॥ गुप्यतेऽस्यां गुप्तिर्बन्धनागारं तत्र ॥ ३ ॥

बन्द्यां प्रग्रहः प्रोपतो ग्रहः ॥ ४७० ॥

वन्दते स्तौति भयेन वन्दी, हठाहृत्य स्त्री, बलवतो हस्ते क्षिप्तो राजपुत्रादिश्च, यदाहुः– वन्दी स्यात् पणबन्धस्य ' इति अन्वि गौरादित्वात् ङीस्तत्र ॥ १ ॥ गृह्यते ग्रहः, के ग्रहक ॥ २ ॥ प्रोपशब्दाभ्यां परो ग्रह प्रग्रहः, उपग्रहः ॥३॥४॥४७०॥

चातुर्वर्ण्यं द्विजक्षत्रवैश्यशूद्रा नृणां भिद् ।

ब्राह्मण , क्षत्रिय , वैश्य शूद्रश्चेति वक्ष्यमाणा मनुष्याणां भिदो जातिविशेषाः, वर्ण्यन्ते इति वर्णाः , चत्वारो वर्णाश्चातुर्वर्ण्यं भषजादित्वात् स्वार्थे ष्यञ् ॥ १ ॥

, ब्रह्मचारी गृही वानप्रस्थो भिक्षुरिति क्रमात् ॥ ४७१ ॥

चत्वार आश्रमा

ब्रह्मचर्यादयोऽमी द्विजातीनां वक्ष्यमाणाश्चत्वारः आश्राम्यन्ति तपस्यन्त्येष्विति आश्रमा , तात्स्थ्यात् पुंसि पुंस्क्लीबलिङ्ग ॥ १ ॥ ४७१ ॥

तत्र वर्णी स्याद् ब्रह्मचारिणि ।

तेष्वाश्रमेषु आद्यो वर्णाख्यो ब्रह्मचर्यपर्यायं वर्णोऽस्ति अस्य वर्णी "वर्णाद् ब्रह्मचारिणि" ॥ ७ । २ । ६९ ॥ इतीन् ब्रह्म वेदाः, ब्रह्म तप , ब्रह्म ज्ञानं च शाश्वत तच्चरणशीलस्य ब्रह्मचारी तत्र ॥ १ ॥

ज्येष्ठाश्रमी गृहमेधी गृहस्थ स्नातको गृही ॥ ४७२ ॥

ज्येष्ठश्चासौ आश्रमी च ज्येष्ठाश्रमी,

यन्मनुः–

यस्मात्त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् ।
गृहस्थेनैव धार्यन्ते तस्माद् ज्येष्ठाश्रमो गृही ॥ १ ॥

गृहेण मधते गृहमेधी ॥ २ ॥ गृहे तिष्ठति गृहस्थ ॥ ३ ॥ वेदं समाप्य स्नात स्नातकः "स्नाताद्वेदसमाप्तौ " ॥ ७ । १ । २२ ॥ इति कः ॥ ४ ॥ गृहमस्यास्ति गृही ॥ ५ ॥ ४७२ ॥

वैखानसो वानप्रस्थ

विशेषेण खनति कन्दफलमूलानि वैखानसः 'फनस ' ॥ (उणा–५७३) ॥ इत्यसे निपात्यते ॥ १८ प्रतिष्ठन्तेऽत्र प्रस्थ वनस्य प्रस्थे भवो वानप्रस्थ ॥२॥

भिक्षु सांन्यासिको यति ।

कर्मन्दी रक्तवसन परिव्राजकतापसौ ॥ ४७३ ॥

पाराशरी पारिकाङ्क्षी मस्करी पारिरक्षक ।

भिक्षणशीलो भिक्षु ॥१॥ कर्मणां सन्यासः प्रयोजनमस्य सांन्यासिकः ॥२॥

यततेऽपवर्गाय यति ॥ ३ ॥ कर्मन्देन प्रोक्तं भिक्षुसूत्रं वेत्त्यधीते वा कर्मन्दी, "कृशाश्वकर्मन्दात्" ॥ ६ । ३ । १९० ॥ इतीन् ॥ ४ ॥ रक्तं वसनमस्य रक्तवसनः ॥ ५ ॥ परिव्रज्य सर्वं सन्यस्य व्रजति परिव्राजकः ॥ ६ ॥ तपः शीलमस्य तापस, "अदृस्थाच्छत्रादे–" ॥ ६ । ४ । ६० ॥ इत्यण् , तपोऽस्यास्तीति वा ज्योत्स्नादित्वादण्, तपस्व्यपि ॥ ७ । ४७३ ॥ पाराशर्येण प्रोक्तं भिक्षुसूत्रं वेत्त्यधीते वा पाराशरी, "शिलालिपाराशर्यान्नटभिक्षुसूत्रे" ॥ ६ । ३ । १८९ ॥ इति णिन् ॥ ८ ॥ परिकाङ्क्षति पारिकाङ्क्षी वाहुलकाद्दीर्घः ॥ ९ ॥ माकरणशीलो मस्करी स ह्याह-मा कृपत कर्माणि शान्तिर्व श्रेयसीति, वर्चस्कादित्वात् साधु ॥ १० ॥ *परिरक्षा प्रयोजनमस्य पारिरक्षिक* ॥ ११ ॥

स्थाण्डिल स्थण्डिलशायी य शेते स्थण्डिले व्रतात् ॥ ४७४ ॥

स्थण्डिल एव शेते स्थाण्डिल, "स्थण्डिलाच्छेते व्रती" ॥ ६ । २ । १३९ ॥ इत्यण् ॥ १ ॥ *स्थण्डिले शेते स्थण्डिलशायी, 'व्रताऽऽभीक्ष्ण्ये"* ॥५।१।१५७॥ इति णिन् ॥ २ ॥ ४७४ ॥

तप क्लेशसहो दान्त

तप क्लेशं सहते तप क्लेशसह , तपःक्लेशाऽनुद्विग्न ॥ १ ॥ दम्यते स्म दान्तः, "णौ दान्त–" ॥ ४ । ४ । ७४ ॥ इति क्ते साधु ॥ २ ॥

शान्त श्रान्तो जितेन्द्रिय ।

शाम्यति स्म शान्त ॥ १ ॥ श्राम्यति स्म श्रान्त ॥२॥ जितानीन्द्रियाण्यनेन जितेन्द्रिय ॥ ३ ॥

अवदानं कर्म्म शुद्ध

अवदीयतेऽनेन अवदानम् ॥ १ ॥ शुद्धं लोत्कर्षे कर्म चरितम् ॥ २ ॥

ब्राह्मणस्तु त्रयीमुखः ॥ ४७५ ॥

भूदेवो वाडवो विप्रो द्व्यग्राभ्या जातिजन्मजा ।

वर्णज्येष्ठ सूत्रकण्ठ षट्कर्मा मुखसम्भव ॥ ४७६ ॥

वेदगर्भ शमीगर्भ सावित्रो मैत्र एतस ॥

ब्रह्मणोऽपत्यं ब्राह्मण , "ङसोऽपत्ये" ॥ ६ । १ । २८ ॥ इत्यणि "जातौ' ॥७।४।५८॥ इत्यत्र अनपत्य एवेति नियमात् 'अवर्मणोऽमनो" ॥७।४।५९॥ इत्यन्त्यस्वरादिलोपो न भवति, ब्रह्म अवति वा पृषोदरादित्वात् ब्रह्माण्यमेदोपचारात् ॥ १ ॥ त्रयी ऋग्यजुः सामवेदा मुखेऽस्य त्रयीमुखः ॥ २ ॥ ४७५ ॥ भुवि देवो भूदेवः ॥ ३ ॥ वाडव इवाऽसह्यत्वाद् वाडव , वडवा ब्राह्मणी तदपत्यमिति

वा ॥४॥ विविध प्राति पूरयति विप्र , विशेषेण पातीति वा "ऋरभुर–" ॥(उणा–१८६)॥ इति रे निपात्यते ॥५॥ "मातुरग्रे विजनन द्वितीयं मौञ्जिबन्धनम्" इति स्मृतेः, द्वे जाती जन्मनी यस्य द्विजातिः ॥६॥ द्विजन्मा ॥७॥ द्विर्जातो द्विज ॥८॥ अग्रे आदौ, अग्रात् मुखात् वा जातेर्जन्म यस्य अग्र जाति ॥ ९ ॥ अग्रजन्मा ॥ १० ॥ अग्रे अग्रात् वा जातोऽग्रज ॥११॥ वर्णानां ज्येष्ठो वर्णज्येष्ठ ॥१२॥ सूत्रं यज्ञोपवीत कण्ठेऽस्य सूत्रकण्ठ ॥१३॥षड्-अध्ययनम्, अध्यापनम्, यजनम्, याजनम्, दानम्, प्रतिग्रहश्चेति कर्माण्यस्य षट्कर्मा॥१४॥ब्राह्मणो मुखात् सम्भवति मुखसम्भव यच्छ्रुति ' ब्राह्मणोऽस्य मुखमासीत्' इति॥१५॥४७६॥ वेदा गर्भेऽस्य वेदगर्भ ॥१६॥ शमीगर्भोऽग्नि स इव भस्मरत्वात् शमीगर्भः ॥१७॥ सावित्री देवताऽस्य सावित्र, सावित्र्यनुवचन विना मौञ्जीबन्धनाऽभावात्, यन्मनु –

' तत्र यद् ब्रह्मजन्मास्य मौञ्जीबन्धनचिह्नितम् ।

तत्राऽस्य माता सावित्री पिता त्वाचार्य उच्यते ॥" इति

॥ १८ ॥ मित्रो देवताऽस्य मैत्र ॥ १९ ॥ एतीत्येतस "इण: " ॥ (उणा–५८१) ॥ इति तस ॥ २० ॥

बटु पुनर्माणवक

बटति वेष्टयति मौञ्जी बटु "भृमृ "॥(उणा–७१६)॥ इत्यु ॥१॥ मनोरपत्यं कुत्सित मूढ माणव, "माणव कुत्सायाम्" ॥ ६।१।१५५ ॥ इत्यपि साधु, मणति शब्दायते इति वा ' मणिवसोर्णित्' ॥ (उणा–५११) ॥ इत्यव, के माणवक ॥२॥

## भिक्षा स्याद् ग्रासमात्रकम् ॥ ४७७ ॥

भिक्ष्यते भिक्षा, ग्रास इव ग्रासमात्रम्, यदाहु –

"ग्रासप्रमाण भिक्षा स्यादग्रग्रासचतुष्टयम् ।

अग्र चतुर्गुण प्राहुर्हन्तकारं द्विजोत्तमा ॥ इति ॥ १ ॥ ४७७ ॥

## उपनायस्तूपनयो बटूकरणमानय ।

उपनायमुपनायो मौञ्जीबन्धनम्, यन्मनु – 'गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्यो पनायनम् ॥ १ ॥ उपनयनमुपनयः ॥२॥ अबटुर्बटु क्रियतेऽनेन बटूकरणम् ॥३॥ आनयनमानय ॥ ४ ॥

## अग्नीन्धनं त्वग्निकार्यमाग्नीध्रा चाग्निकारिका ॥ ४७८ ॥

अग्निरिध्यतेऽस्मिन् आग्नीन्धनम् ॥ १ ॥ अग्ने कार्यमग्निकार्यम् ॥ २ ॥ अग्नि मिन्धेऽग्नीध् ऋत्विग्विशेष तस्येयमाग्नीध्रा "गृहेऽग्नीधो रण् धश्च " ॥ ६।३।१७८ ॥ इति रण्, प्रज्ञादित्वात् स्वार्थेऽणि आग्नीध्रीत्यपि ॥ ३ ॥ अग्नेः करणमग्निकारिका माष" ॥ ५।३।१२२ ॥ इति णक ॥ ४ ॥ ४७८ ॥

पालाशो दण्ड आषाढो व्रते

व्रते ब्रह्मचर्याश्रमकर्मणि, पलाशस्य विकारोऽवयवो वा पालाश, "प्राण्यौषधि–" ॥ ६।२।३१ ॥ इत्यण् ॥ १ ॥ दण्डो यष्टिः, आषाढा प्रयोजनमस्य आषाढः "विशाखाऽऽषाढाद् मन्थदण्डे" ॥ ६।४।१२० ॥ इत्यण् ॥ २ ॥

राम्भस्तु वैणव ।

व्रते दण्ड इत्येव, रम्भा वेणुपर्याय, रम्भाया विकारो राम्भ, "प्राण्यौषधि–" ॥६।२।३१॥ इत्यण् ॥ १ ॥ वेणोर्विकारो वैणव, 'प्रक्षादे' ॥६।२।५९॥ इत्यण् ॥ २ ॥

वैल्व सारस्वतो रौच्य

व्रते दण्ड इत्येव, बिल्वस्य विकारोऽवयवो वा वैल्व ॥ १ ॥ सारस्वती-रुच्य शब्दौ बिल्वपर्यायौ, सरस्वत्या विकार सारस्वत ॥ २ ॥ रुच्यस्य रौच्य ॥ ३ ॥

पैलवस्त्वौपरोधिक ॥ ४७९ ॥

व्रते दण्ड इत्येव, पीलोर्विकार पैलव ॥ १ ॥ समीपमागच्छतां दुष्टसत्त्वानां रोधो निवारण प्रयोजनमस्य इकणि, पृषोदरादित्वात् औपरोधिक ॥२॥४७९॥

आश्वत्थस्तु जितनेमि

व्रते दण्ड इत्येव, अश्वत्थस्य विकारोऽवयवो वाऽऽश्वत्थः ॥ १ ॥ क्षुद्रजन्तुघातेन जिता नेमिरनेन जितनेमिः ॥ २ ॥

औदुम्बर उलूखल ।

व्रते दण्ड इत्येव, उदुम्बरस्य विकारोऽवयवो वा औदुम्बर ॥ १ ॥ उदुम्बरपर्याय उलूखलशब्द, उलूखलस्य विकारोऽवयवो वा उलूखल, "प्राण्यौषधि" ॥६।२।३१॥ इत्यण् "लुब् बहुल पुष्पमूले" ॥६।२।५७॥ इति तस्य लुप् ॥ २ ॥

मनुस्तु– ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ ।
पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मत ॥ इत्याह ।

जटा सटा

व्रते तपसि जटा, तपस्विनां ग्रथितः केशसङ्घात ॥ १ ॥ सन्यते सटा "नमितनि–"॥ (उणा– १२९) ॥ इति टो न लुक् च, 'जट सङ्घाते' 'षट अवयवे' इत्यनयोर्वाऽच् ॥ २ ॥

वृषी पीठ

तपस्विनां पीठम्, मुमुन्तः सीदन्त्यस्यां वृषी, पृषोदरादित्वात् ष, गौरादित्वात् ङी वृसीमपि ॥ १ ॥ २ ॥

कुण्डिका तु कमण्डलु ॥ ४८० ॥

कुण्ड्यते कुण्डी 'भाजगोण' ॥ २।४।३० ॥ इति ङी, के कुण्डिका ॥ १ ॥ कं पानीयमानस्यऽत्र कमण्डलु पुर्ल्लिङ्गश्च "गुल्लुत्कुगलतुकमण्डलव" ॥ (उणा–८२४) ॥ इति साधु क जल मण्डे मध्ये स्याति वा ॥ २ ॥ ४८० ॥

श्रोत्रियश्छान्दस

छन्दोऽधीते श्रोत्रिय छन्दोऽधीते श्रोत्रश्च वा" ॥७।१।१७३ ॥ इतीय श्रोत्रादव्यय पक्षे " तद् वेत्य ' ॥ ६।२।११७ ॥ इत्यणि छान्दस ॥ १ ॥ २ ॥

यष्टा स्यादिष्य स्याद् मन्वे मती ।

याजको यजमानश्च

यजत यष्टा ॥ १ ॥ आविद्यति स्वाम्येन आदृत्य मखे यज्ञे मती सनि मम ॥ २ ॥ यजति याजकः ॥३॥ यजते यजमानः 'पूङ्यज शान "॥५।२।२३॥४॥

सोमयाजी तु दीक्षित ॥ ४८१ ॥

सोमेन यजति सोमयाजी ॥ १ ॥ दीक्षा सञ्जाताऽस्य दीक्षित ॥ २ ॥ ४८१ ॥

इज्याशीलो यायजूक

इज्या यजन शीलमस्य इज्याशील ॥ १ ॥ भृशं यजनशीलो यायजूक, "यजिजपि" ॥ ५।२।४७ ॥ इति यङन्तात् ऊकेल्क ॥ २ ॥

यज्वा स्यादासुतीबल ।

इष्टवान् यज्वा, "सुयजोर्ङ्वनिप्" ॥५।१।१७२॥१॥ आसुतिः सोमसवा नमस्त्यऽस्य आसुतीबल कृष्यादित्वात् बलच् बलच्यपित्रादे' ॥३।२।८२॥ इति दीर्घ ॥ १ ॥ २ ॥

सोमप सोमपीथी स्यात्

सोम पिबति सोमप ॥१॥ पान पीथी, 'नीनूर' ॥ (उणा–२१७) ॥ इति क्थन् म सोमपस्य पीथोऽस्त्यस्य सोमपीथी ॥ २ ॥

स्थपतिर्गी पतीष्टिकृत् ॥ ४८२ ॥

गीष्पतेर्बृहस्पते इष्टिं यज्ञं करोतीति गीष्पतीष्टिकृत्, बृहस्पतिसवेन इष्ट्वा स्थापयतीति स्थपति ॥ १ ॥ २ ॥ ४८२ ॥

सर्ववेदास्तु सर्वस्वदक्षिणं यज्ञमिष्टवान् ।

सर्व विदन्त्यस्मात् सर्ववेदा, असु' ॥(उणा–९५२)॥ इत्यस् ॥ १ ॥ सर्वस्व दक्षिणाऽत्र सर्वस्वदक्षिणयज्ञमिष्टवान् ॥ २ ॥

यजुर्विदध्वर्य्यु

यजुर्वेद वेत्ति यजुर्वित् ॥१॥ अध्वर याति अध्वयु ,"कषयुभुरणु" ॥ (उणा-७४६) ॥ इति निपात्यते ॥ २ ॥

ऋग्विद् होता

ऋग्वेद वेत्ति ऋग्वित् ॥१॥ जुहोतीति होता, "हृपृऋ" ॥ (उणा-८६१)॥ इति तृ ॥ २ ॥

उद्गाता तु सामवित् ॥ ४८३ ॥

सामान्युद्गायति उद्गाता, "हृपृऋ" ॥ (उणा-८६१) ॥ इति तृ ॥ १ ॥ सामवेद वेत्तीति सामवित् ॥ २ ॥ ४८३ ॥

यज्ञो योग सव सत्र स्तोमो मन्युर्मख क्रतु ।

सत्त्वर सप्ततन्तुश्च वितान बर्हिरध्वर ॥ ४८४ ॥

इज्यते यज्ञ, "यजिस्वपि" ॥ ५।३।८५ ॥ इति न ॥ १ ॥ यजि याग ॥ २ ॥ सुवते सोमोऽत्र सव ॥ ३ ॥ सीदन्त्यत्र देवा सत्रम्, "हुयामा" (उणा-४५१) ॥ इति त्र ॥ ३ ॥ स्तुवन्ति अत्र यज्वान स्तोम, "अर्तीरि" (उणा-३३८) ॥ इति मः, स्तोम्यते श्लाघ्यते वा ॥५॥ मन्यतेऽसौ मन्यु पुंलिङ्ग, "यजिशुन्धि" ॥ (उणा-८०१) ॥ इति युः ॥६॥ मखन्ते देवा अत्र मखः, 'मह रुद्रास्य वा" ॥ (उणा-८९) ॥ इति खो हस्वश्च, मखति धर्म्ममिति वा ॥ ७ ॥ क्रियते स्वर्गकामैः क्रतुः पुंलिङ्ग "कृत्लाभ्यां कित्" ॥ (उणा-७८०) ॥ इसतु ॥८॥ सत्स्तीर्यन्ते दर्भा अत्र सस्तरः, "पुनाम्नि" ॥ ५।३।१३० ॥ इति घः ॥९॥ पञ्चवन्धार्य सप्त तन्तवोऽत्र सप्ततन्तुः पुंलिङ्ग यद्वा सप्तसङ्ख्यास्तन्तवो मदा अस्य, यदाह– अग्निष्टोमादय सस्था भेदाः सप्तास्य तन्तव ' इति ॥१०॥ वितन्यते वितानं पुंक्लीबलिङ्ग ॥ ११ ॥ बृंहति वर्धते धर्म्मोऽत्र बर्हिः, क्लीबलिङ्गः ' बर्हिबृहेनलुक् च" ॥ (उणा-९९०) ॥ इतीस् ॥ १२ ॥ न ध्वरस्यध्वरः, अध्वानं रातीति वा ॥ १३ ॥ ४८४ ॥

अध्ययन ब्रह्मयज्ञ

अधीयतेऽध्ययनं स्वाध्यायः ॥ १ ॥ ब्रह्मणे यजन दान ब्रह्मयज्ञः ॥ २ ॥

स्याद् देवयज्ञ आहुति ।

होमो होत्र वषट्कार

देवेभ्यो यजनं देवयज्ञ ॥ १ ॥ आहूयतेऽसावमाबाहुति ॥ २ ॥ हूयते होमः, "अर्तीरि" ॥ (उणा-३३८) ॥ इति मः ॥३॥ "हुयामा" ॥ (उणा-

४५१) ॥ इति त्रै होत्रम् ॥ ४ ॥ वषट्करणं वषट्कारः ॥ ५ ॥

पितृयज्ञस्तु तर्पणम् ॥ ४८५ ॥

तच्छ्राद्धं पिण्डदानं च

पितृभ्यो यजनं पितृयज्ञः ॥ १ ॥ तर्प्यतेऽनेन तर्पणम् ॥ २ ॥ ४८५ ॥ श्रद्धा प्रयोजनमस्य श्राद्धं पुंक्लीबलिङ्गः, चूडादित्वादण् ॥ ३ ॥ पिण्डो दीयतेऽस्मिन् पिण्डदानम् ॥ ४ ॥

नृयज्ञोऽतिथिपूजनम् ।

नृभ्यो यजनं दानं नृयज्ञः ॥ १ ॥ अतिथयः पूज्यन्तेऽस्मिन्निति अतिथिपूजनम् ॥ २ ॥

भूतयज्ञो बलिः

भूतेभ्यो काकादिभ्यो यजनं भूतयज्ञः ॥१॥ बल्यतेऽनेनेति बलिः पुंलिङ्गः ॥२॥

उपसंहारमाह–

पञ्च महायज्ञा भवन्त्यमी ॥ ४८६ ॥

अमी ब्रह्मयज्ञादयः, यन्मनुः –

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ इति ॥ ४८६ ॥

पौर्णमासश्च दर्शश्च यज्ञौ पक्षान्तयोः पृथक् ।

शुक्लपक्षान्ते यज्ञः पूर्णमास्यां भवः पौर्णमासः, "सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्" ॥४।३।१६॥ ॥ १ ॥ कृष्णपक्षान्ते यज्ञः दर्शभवत्वाद् दर्शः, अमावास्य इत्यर्थः ॥ १ ॥

सौमिकी दीक्षणीयेष्टिः

सोमः प्रयोजनमस्याः सौमिकी ॥ १ ॥ दीक्षणीयस्य दीक्षाङ्गस्य इष्टिर्दीक्षणीयेष्टिः ॥ २ ॥

दीक्षा तु व्रतसंग्रहः ॥ ४८७ ॥

दीक्षणं दीक्षा ॥ १ ॥ व्रत धातोः नियमस्तस्य संग्रहः ॥ २ ॥ ४८७ ॥

धृतिः सुगहना कुम्भा

ध्रियतेऽनया धृतिः कण्टकशाखावरणं प्रक्षालनात् यज्ञवाटस्य सा सुगहना निश्चिता कुम्भ्यते आच्छाद्यतेऽनया कुम्भा, भिदिभ्यापि– ॥५।३।१०९॥ इति अङ् ॥ १ ॥

वेदी भूमिः परिष्कृता ।

परिष्कृता चतुरस्रमानार्थं भूषिता भूमिः ॥ १ ॥ विदन्त्येनां वेदी, " वि

दिव्येवा" ॥ ( उणा– ६१० ) ॥ इति इ, इयो वेदी ॥ २ ॥

स्थण्डिल चत्वर चान्या

अन्या यागार्थमसस्कृता भूमि 'स्थल स्थाने स्थलन्ति तिष्ठन्त्यत्र स्थण्डिल, "स्थण्डिलकपिल–" ॥ ( उणा– ४८४ ) ॥ इतीले निपात्यते ॥ १ ॥ चत्यते चत्वर 'क्वरुग्र–" ॥ ( उणा– ४४१ ) ॥ इति वरट् ॥ २ ॥

यूप स्याद् यज्ञकीलक ॥ ४८८ ॥

यूयते पशुरनेन यूप, "युसुकु" ॥ ( उणा–२९७ ) ॥ इति प कत्व च पुल्लिङ्गोऽयम्, वैजयन्ती तु– "यूपोऽस्त्री सम्कृतस्तम्भ" इति क्लीबेऽप्याह। यज्ञे पशुनिबन्धनाय कीलको यज्ञकीलकः ॥ १ ॥ ४८८ ॥

चषालो यूपकटके

तक्ष्णा घटितो यूपाग्रे कटकाकृति, चष्यते उत्कीर्यते चषाल पुल्लीवलिङ्ग, "चरकम्–" ॥ ( उणा– ४७७ ) ॥ इत्याल ॥ १ ॥

यूपकर्णो घृतावनी ।

यूपस्य कर्णो यूपकर्णः । घृतस्य अवनिर्निषेकस्थान घृतावनिस्तत्र ॥१॥

यूपाग्रभागे स्यात् तर्म

तरन्त्यनेन यूप तर्म, 'मन्" ॥ ( उणा– ९११ ) ॥ इति मन् क्लीबोऽयम्, वाचस्पतिस्तु– "यूपाग्र तर्म न स्त्रियाम्" इति पुंस्यप्याह ॥ १ ॥

अरणिर्निर्मन्थदारुणि ॥ ४८९ ॥

इयर्ति वह्निरस्मिन् अरणि पुल्लीलिङ्ग, "ऋस्रध–" ॥ (उणा– ६३८) ॥ इत्यणिः, अग्नेर्निर्मथनाय दारु काष्ठ तत्र ॥ १ ॥ ४८९ ॥

स्युर्दक्षिणाऽऽहवनीयगार्हपत्यास्त्रयोऽग्नय ।

दक्षिणे स्थाप्यत्वाद् दक्षिण ॥ १ ॥ आहोतव्य आहवनीय ॥ १ ॥ गृह पतिना सम्प्रयुक्तो गार्हपत्य, "हृयपद्य" ॥ ७।१।११ ॥ इति य निपात्यते ॥ १ ॥

इदमग्नित्रय त्रेता

इदमुक्तम्, अग्नि इता प्राप्ता त्रेता पृषोदरादित्वाद् एत्व ॥ १ ॥

प्रणीत संस्कृतोऽनल ॥ ४९० ॥

मन्त्रादिना संस्कृतोऽनल । प्रणीयते स्म प्रणीत ॥ १॥४९० ॥

स्रक् सामिधेनी धाय्या च समिदाधीयते यया ।

समिधामाधानी सामिधेनी ऋक्, 'समिध आधाने' ॥६।३।१६२॥ इति टेन्यण् ॥ १ ॥ धीयते समिदनया "धाय्यापाय्य" ॥ ५।१। २४ ॥ इति ध्यणि निपात्यते ॥ २ ॥

समिदिन्धनमेधैध्मतर्पणैधासि

समिध्यते वह्निरनया समित्, सम्पदादित्वात् क्विप् ॥१॥ इध्यतेऽनेन इन्धनम् ॥२॥ "इन्धनाऽब्जोद्दे" ॥४।२।५४॥ इति निपातनात् नलोपे घञि एध ॥३॥ "विलिमिलि–॥(उणा–३४०)॥ इति मे इध्मं क्लीबलिङ्गाऽव्ययम्, वक्ष्यन्ती तु– "होमेन्धनं स्यादि ध्मोऽस्त्री" इति पुंस्त्वमाह ॥४॥ तृप्यत्यग्निरनेन तर्पणम् ॥५॥ इध्यतेऽनेन एध क्ली बलिङ्ग, "मेन्धिभ्यां घादेधौ च" ॥ (उणा–९६८) ॥ इत्यस् ॥ ६ ॥

भस्म तु ॥ ४९१ ॥

स्याद् भूतिर्भसित रक्षा क्षार

भस भर्त्सनदीप्त्यो' सौत्रः भसित तदिति भस्म क्लीबलिङ्गः, "मन्" ॥ (उणा–९११) ॥ इति मन् ॥ १ ॥ ४९१ ॥ भूयतेऽनया भूति ॥ २ ॥ बम स्वि वह्निना भसितम् ॥ ३ ॥ रक्ष्यतेऽनया रक्षा ॥ ४ ॥ क्षरति क्षार, ज्वलादि त्वात् ण ॥ ५ ॥

पात्रं स्रुवादिक ।

पिबन्त्यनेन पात्र 'नीदाम्न्' ॥ ५।२।८८ ॥ इति त्रट् ॥ १ ॥

स्रुव स्रुक्

स्रवत्यस्मात् स्रुवः, 'भिगृपी' ॥(उणा–५११)॥ इति किद् वः ॥१॥ स्रवति हविरस्या स्रुक् स्त्रीलिङ्ग, "स्रोश्चिक्" ॥ (उणा–८७१) ॥ इति चिक् ॥ २ ॥

अधरा सोपभृत्

सा स्रुक् अधरा । उपभ्रियते उपभृत्, सम्पदादित्वात् क्विप् ॥ १ ॥

जुहू पुनरुत्तरा ॥ ४९२ ॥

जुहोत्यनया जुहू "दिद्युद्दद्" ॥ ५।२।८३ ॥ इति क्विपि साधुः ॥ १ ॥ ॥ ४९२ ॥

ध्रुवा तु सर्वसंज्ञार्थे यस्यामाज्यं निधीयते ।

ध्रुवति ध्रुवा "अच्" ॥५।१।४९॥ इत्यच् कुटादित्वात् गुणाभाव ॥१॥

योऽभिमन्त्र्य निहन्येत स स्यात् पशुरुपाकृत ॥ ४९३ ॥

उप आमन्त्र्य क्रियते हन्यते स्म उपाकृत ॥ १ ॥ ४९३ ॥

परम्पराक शसन प्रोक्षण च मखे वध ।

परम्परामकति परम्पराकम् ॥ १ ॥ शस्यते शसनम्, शमनमित्यन्ये ॥२॥ प्रोक्ष्यते प्रोक्षण लक्षणया वध, प्रोक्ष्य हि मखे पशुर्हन्यते ॥ ३ ॥

हिंसार्थ कर्माभिचार स्यात्

विपक्षादीनां हिंसानिमित्त कर्म उच्चाटनमारणादि, अभिभवितु चरणमभिचार ॥ १ ॥

यज्ञार्ह तु यज्ञियम् ॥ ४९४ ॥

यज्ञमर्हति यज्ञियम्, "यज्ञादिय" ॥ ६।४।१७९ ॥ १ ॥ ४९४ ॥

हवि सान्नाय्यम्

हूयते हवि क्लीबलिङ्ग ॥ १ ॥ सनीयते सांनाय्यम्, "धाय्यापाय्य" ॥ ५।१।२४ ॥ इति य्याणि निपात्यते ॥ २ ॥

आमिक्षा शृतोष्णक्षीरग दधि ।

क्षीरसार पयस्या च

आमृद्नाति चित्तम्, आमीयते क्षिप्यते दध्यत्रेति वा आमिक्षा "लाक्षाद्राक्षा" ॥ (उणा–५९७) ॥ इति निपात्यते, शृत पक्वमुष्ण यत्क्षीर तद्गत दधि ॥ १ ॥ क्षीरस्य सारो मण्ड इव क्षीरसार ॥ २ ॥ पयसो विकार पयस्या "पयोद्रोर्य" ॥ ६।२।३५ ॥ इति य ॥ ३ ॥

तन्मस्तुनि तु वाजिनम् ॥ ४९५ ॥

तस्या आमिक्षाया मस्तुनि मण्डे वजति वाजिनम्, "विपिनाजिना" (उणा–२८४) ॥ इति इने निपात्यते ॥ १ ॥ ४९५ ॥

हव्य सुरेभ्यो दातव्य

हूयते हव्यम्, अग्निमुखेन सुरेभ्यो दातव्यमोदनम् ॥ १ ॥

पितृभ्य कव्यमोदनम् ।

ब्राह्मणमुखेन पितृभ्यो दातव्यमोदनम्, कूयते काव्यायते पितृभि कव्यम् ॥१॥ उभयमप्युभयत्रेति मुनिः ।

आज्ये तु दधिसंयुक्ते पृषदाज्यं पृषातकम् ॥ ४९६ ॥

पृषद्भिर्दधिबिन्दुभिः सहितमाज्यं पृषदाज्यम्, दध्याज्यमित्यपि ॥१॥ पृषद्भिरश्यते पृषातकं, पृषोदरादित्वात् ॥ २ ॥ ४९६ ॥

दध्ना तु मधुसंपृक्तं मधुपर्को महोदयः ।

मधुनः पर्कः संपर्को मधुपर्कः ॥ १ ॥ महाभ्युदयोऽस्मात् महोदयः ॥ २ ॥

हविर्भ्री तु होमकुण्डं

हूयतेऽस्यां हविर्भ्री, 'भ्रन्दिकादि' ॥ ( उणा-४५९ ) ॥ स्त्रीत्वं ॥१॥ होमाय कुण्डं होमकुण्डम् ॥ २ ॥

हव्यपाके पुनश्चरुः ॥ ४९७ ॥

हव्यस्य पाको हव्यपाकः ॥१॥ चर्यते भक्ष्यते चरुः चर्ह होतव्यम्, यद्वा हव्यस्य पाकोऽत्र हव्यपाकः स्थाली, चरन्त्यस्माद् देवपितृभूतानीति चरुः पुंसि, 'भिधादि' ॥ ( उणा-७२६ ) ॥ चरुः ॥ २ ॥ ४९७ ॥

अमृतं यज्ञशेषे स्यात्

न म्रियतेऽनेन न मृतममृतम् ॥ १ ॥ यज्ञस्य शेषो यज्ञशेषस्तत्र ॥ १ ॥

विघसो भुक्तशेषके ।

विशिष्टमदनं विघसः ॥ १ ॥ भुक्तस्य शेषो भुक्तशेषस्तत्र ॥ २ ॥
यन्मनुः–विघसाशी भवेद् नित्यं नित्यं चामृतभोजनः ।
विघसो भुक्तशेषं स्याद् यज्ञशिष्टमथाऽमृतम् ॥

यज्ञान्तोऽवभृथः

यज्ञस्य अन्तः समाप्तिः यज्ञान्तः ॥ १ ॥ अवभ्रियते पूर्यतेऽनेन अवभृथः, "भृञ्जनिम्नसमिभृञ्भ्यः" ॥ ( उणा-२२९ ) ॥ इति किद् थः ॥ २ ॥

पूर्तं खाप्यादि

पूर्यते पूर्तं पुंक्लीबलिङ्गः ।
आह च–वापीकूपतडागानि देवतायतनानि च ।
अन्नप्रदानमारामाः पूर्तमार्थ्यैः प्रचक्षते ॥ १ ॥

इष्टं मखक्रिया ॥ ४९८ ॥

इज्यते इष्टम् ॥ १ ॥ मखस्य कर्म मखक्रिया यागादि ।
यदाह–एकाग्निकर्म हवनं त्रेतायां यच्च हूयते ।
अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते ॥ ४९८ ॥

इष्टापूर्तं तदुभय

तत् पूर्तमिष्टं च उभयमिष्टापूर्तं राजदन्तादित्वात् साधु ॥ १ ॥

बर्हिर्मुष्टिस्तु विष्टर ।

बर्हिषो दर्भाणां मुष्टिर्बर्हिर्मुष्टि, विस्तीर्यते विष्टर पुंक्लीबलिङ्ग, "वे स्त ॥ २।३।१२३ ॥ इति षत्व ॥ १ ॥

अग्निहोत्र्यग्निचित् चाऽऽहिताग्नौ

अग्निहोत्रमस्यास्त्यग्निहोत्री ॥ १ ॥ अग्निं चितवानग्निचित् "अग्नेश्चे ॥५।१।१६४॥ इति क्विप् ॥ आहितोऽग्निरनेनाऽऽहिताग्निस्तत्र, अग्न्याहितोऽपि॥२

अथाग्निरक्षणम् ॥ ४९९ ॥

अग्न्याधानमग्निहोत्र

अग्ने रक्षणमग्निरक्षणम् ॥१॥४९९॥ अग्निराधीयतेऽस्मिन् अग्न्याधानम्॥२॥ अग्निर्हूयतेऽत्रेति अग्निहोत्र ॥ ३ ॥

दर्वी तु घृतलेखनी ।

दृणाति हव्यं दर्वि, 'दृपॄवृभ्यो विः" ॥ ( उणा-७०४ ) ॥ ङ्यां दर्वी ॥१॥ घृत लिख्यतेऽनया घृतलेखनी ॥ २ ॥

होमाग्निस्तु महाज्वालो महावीर प्रवर्गवत् ॥ ५०० ॥

होमार्थमग्निर्होमाग्नि ॥ १ ॥ महती ज्वाला अस्य महाज्वाल ॥ २ ॥ वीरयते वीरोऽग्नि, महांश्चासौ वीरश्च महावीर ॥ ३ ॥ प्रवृज्यते पाप्मनेन प्रवर्ग ॥ ४ ॥ ॥ ५०० ॥

होमधूमस्तु निगण

होमे धूमो होमधूम ॥१॥ नितरां गण्यते निगण "युवर्ण- ॥ ५।३।२८ ॥ इत्यल् ॥ २ ॥

होमभस्म तु वैष्णुतम् ।

विशेषेण स्तूयते स्म विष्णुतोऽग्नि, तस्येदं वैष्णुतम् ॥ १ ॥

उपस्पर्शस्त्वाचमन

उपस्पृश्यतेऽद्भि स्मान्यस्मिन्नुपस्पर्श, यन्मनु:—

उपस्पृश्य द्विजो नित्यमन्नमद्यात् समाहित ।
भुक्त्वा चोपस्पृशेत् सम्यगद्भि खानि च संस्पृशेत् ॥ १ ॥

आचम्यतेऽम्भोऽत्र आचमन ॥ २ ॥

इष्टापूर्त तदुभय

तत् पूर्तमिष्टं च उभयमिष्टापूर्तं राजदन्तादित्वात् साधु ॥ १ ॥

बर्हिर्मुष्टिस्तु विष्टर ।

बर्हिषो दर्भाणां मुष्टिर्बर्हिर्मुष्टिः, विस्तीर्यते विष्टर पुंक्लीबलिङ्ग:, "वे स्त्र:" ॥ २।३।२३ ॥ इति षत्व ॥ १ ॥

अग्निहोत्र्यग्निचित् चाऽऽहिताग्नौ

अग्निहोत्रमस्यास्त्यग्निहोत्री ॥ १ ॥ अग्निं चितवानग्निचित् "अग्नेश्चे" ॥५।१।१६४॥ इति क्विप् ॥ आहितोऽग्निरनेनाऽऽहिताग्निस्तत्र, अग्न्याहितोऽपि॥२॥

अथाग्निरक्षणम् ॥ ४९९ ॥

अग्न्याधानमग्निहोत्र

अग्ने रक्षणमग्निरक्षणम् ॥१॥४९९॥ अग्निराधीयतेऽस्मिन् अग्न्याधानम्॥२॥ अग्निर्हूयतेऽस्मिन्निति अग्निहोत्र ॥ ३ ॥

दर्वी तु घृतलेखनी ।

दृणाति हव्यं दर्वि, "दृपॄवृभ्यो वि" ॥ ( उणा–७०४ ) ॥ ङ्यां दर्वी ॥१॥ घृत लिख्यतेऽनया घृतलेखनी ॥ २ ॥

होमाग्निस्तु महाज्वालो महावीर प्रवर्गवत् ॥ ५०० ॥

होमार्थमग्निर्होमाग्निः ॥ १ ॥ महती ज्वाला अस्य महाज्वाल ॥ २ ॥ वीरयते वीरोऽग्नि, महांश्चासौ वीरश्च महावीर ॥ ३ ॥ प्रवृज्यते पापमनेन प्रवर्ग ॥ ४ ॥ ॥ ५०० ॥

होमधूमस्तु निगण

होमे धूमो होमधूम ॥१॥ नितरां गण्यते निगण, "युवर्ण– ॥५।३।२८ ॥ इत्यल् ॥ २ ॥

होमभस्म तु वैष्टुतम् ।

विशेषेण स्तूयते स विष्टुतोऽग्नि, तस्येद वैष्टुतम् ॥ १ ॥

उपस्पर्शस्त्वाचमन

उपस्पृश्यतेऽद्भिः खान्यस्मिन्नुपस्पर्श, यन्मनु —

उपस्पृश्य द्विजो नित्यमन्नमद्यात् समाहित ।
भुक्त्वा चोपस्पृशेत् सम्यगद्भिः खानि च सस्पृशेत् ॥ १ ॥

आचम्यतेऽम्भोऽत्र आचमन ॥ २ ॥

धारासेकौ तु सेचने ॥ ५०१ ॥

धरणं धारः, सेचनं सेकः, सेचनं घृतादिनाऽग्नौ प्रोक्षणं तत्र॥१।२।३॥५०१॥

ब्रह्मासनं ध्यानयोगासने

ब्रह्मणि परमज्योतिष्यासनं स्थो ब्रह्मासनम्, ध्यानं तत् ब्रह्मण्येकाग्रता, योगश्चित्तवृत्तिनिरोधः, तयोरास्यतेऽनेन ध्यानयोगासनं तत्र ॥ १ ॥

अथ ब्रह्मवर्चसम् ।

वृत्ताध्ययनर्द्धि

ब्रह्मणः तपःस्वाध्यायादेर्वर्चस्तेजो ब्रह्मवर्चसं "ब्रह्महस्तिराजपल्याद्वर्चसः" ॥७।३।८३॥ इत्यच् समासान्तः ॥१॥ वृत्तस्याध्ययनस्य च ऋद्धिर्वृत्ताध्ययनर्द्धिः ॥२॥

पाठे स्याद् ब्रह्माञ्जलिरञ्जलिः । ॥ ५०२ ॥

वेदस्य पाठेऽध्ययनेऽञ्जलिः, ब्रह्मणे वेदाय अञ्जलिः ब्रह्माञ्जलिः ॥ १ ॥ यदाह– संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः ॥ ५०२ ॥

पाठे तु मुखनिष्क्रान्ता विप्रुषो ब्रह्मबिन्दवः ।

वेदपाठे मुखान्निर्गता जलकणाः, ब्रह्मणो वेदस्येव बिन्दवो ब्रह्मबिन्दवः ॥१॥

साकल्यवचनं पारायणं

साकल्येन कार्त्स्न्येन वचनमध्ययनं साकल्यवचनम् ॥ १ ॥ पारमयतेऽनेन पारायणम् ॥ २ ॥

कल्पे विधिक्रमौ ॥ ५०३ ॥

कल्प्यतेऽनेन विनियोगप्रकारेण कल्पस्तत्र ॥ १ ॥ विधीयतेऽनेन विधिः ॥ २ ॥ क्रम्यते प्रक्रम्यतेऽनेन प्रक्रमः ॥ ३ ॥ ५०३ ॥

मूलेऽङ्गुष्ठस्य स्याद् ब्राह्मं तीर्थं

ब्रह्मा देवताऽस्य ब्राह्मं "देवता" ॥६।२।१०१॥ इत्यणि "ब्राह्मः" ॥७।४।५७॥ इत्यन्त्यस्वरादिलोपः, देवेभ्यस्तीर्यते दीयतेऽनेन तीर्थम् ॥ १ ॥

कायं कनिष्ठयोः ।

कनिष्ठयोर्मूले कः प्रजापतिर्देवताऽस्य कायं तीर्थम्, अञ्जलिमध्येन प्रजापतिभ्योऽञ्जलिदानात् ॥ १ ॥

पित्र्यं तर्जन्यङ्गुष्ठान्तः

तर्जन्यङ्गुष्ठमध्ये पितरो देवताऽस्य पित्र्यं "वाय्वृतुपित्रुषसो यः" ॥६।२।१०१॥ इति यः ॥ १ ॥

दैवं त्वङ्गुलीमुखे ॥ ५०४ ॥

अङ्गुलीनां मुखेऽग्रभागे देवानामिदं दैवतं तीर्थम् ॥ १ ॥ यद् याज्ञवल्क्यः–
' कनिष्ठातर्जन्यङ्गुष्ठमूलान्यग्रं करस्य च ।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ,, ॥ ५०४ ॥
शेषश्चात्र– करमध्ये सौम्यं तीर्थं

ब्रह्मत्वं तु ब्रह्मभूयं ब्रह्मसायुज्यमित्यपि ।

ब्रह्मणो ज्ञानस्य भावो ब्रह्मत्वं ॥ १ ॥ ब्रह्मणो भवनं ब्रह्मभूयं ब्रह्मणैकत्वम्–मोक्ष इत्यर्थः, "हत्याभूयं भावे" ॥ ५।१।३६ ॥ इति क्यपि साधुः ॥ २ ॥ सह युक् योगोऽस्य सयुक् तस्य भावः सायुज्यम्, ब्रह्मणा सायुज्यं ब्रह्मसायुज्यम् ॥३॥

देवभूयादिकं तद्वत्

तद्वदिति देवत्वं देवसायुज्यं च, आदिशब्दात् मूर्खभूयादि ॥ १ ॥ २ ॥

सञ्चोपाकरणं श्रुतेः ॥ ५०५ ॥
संस्कारपूर्वग्रहणं स्यात्

उपाक्रियतेऽनेनोपाकरणं वेदपाठारम्भे विशिष्टो विधिः ॥ १ ॥ "रोहिण्यां छन्दांस्युपाकुर्यात्" इति हि श्रुतिः ॥ २ ॥ ५०५ ॥

स्वाध्यायः पुनर्जपः ।

स्वस्य वेदस्याध्ययनं स्वाध्यायः ॥१॥ जपनं जपः "व्यधजप–" ॥५।३।४७॥ इत्यल् ॥ ~ ॥

औपवस्त्रं तूपवासः

उपवस्ता प्रामोऽस्य औपवस्त्रं "कुत्वादिभ्यः" ॥ ६।४।१२५ ॥ इत्यण् । 'वसूम् स्तम्भे' इत्यस्मात् क्ते उपवस्तः, तस्येदमौपवस्त्रमित्येके, उपवस्त्रमित्यन्ये, उपवस्तुरिदमिति अन्यापि, यत् स्मृतिः – मापान् मधुमसूरांश्च वर्जयेदौपवस्त्रके'॥१॥ उपवसनमुपवासः पुंक्लीबलिङ्गः ॥ २ ॥

कृच्छ्रं सान्तपनादिकम् ॥ ५०६ ॥

कृन्तति पापं कृच्छ्रं नाम तपः, पुंक्लीबलिङ्गः ॥ १ ॥ सन्तपने भवं सान्तपनं ॥ २ ॥ यत् स्मृतिः – त्र्यहं सायं त्र्यहं प्रातः त्र्यहमद्यादयाचितम् ।
त्र्यहं परं च नाश्नीयात् , कृच्छ्रं सान्तपनं स्मृतम् ॥ १ ॥
आदिग्रहणात् चान्द्रायणादि ॥ ५०६ ॥

प्रायः सन्न्यास्यनशने

प्रकर्षेणायन्तेऽनेन परलोकं प्राप्त । सन्यसनं सन्यासः सर्वत्यागेन मरणाध्यवसाय साऽस्त्यत्र सन्यासि, सन्यासयुक्त तच्च तदनशनं च सन्यासवदनशनं तत्र ॥ १ ॥

नियम पुण्यकं व्रतम् ।

नियम्यतेऽस्मादत्र नियम ॥ १ ॥ पुण्यमेव पुण्यकम् ॥ २ ॥ व्रियते उपवासादयत्र व्रत पुंक्लीबलिङ्ग , "वृधिरिभ्य " ( उणा–२०८ ) इति किद्त ॥३॥

उपवासाद्य अथ स्यान्नियमे तप ॥

चरित्रं चरिताचारौ चारित्रचरणे अपि ॥ ५०७ ॥

वृत्तं शीलं च

चर्यते चरित्रं 'लूधूसूखनि–" ॥ ५।२।८७ ॥ इति इत्र ॥ १ ॥ चर्यते स्म चरितम् ॥२॥ आचरणमाचार ॥३॥ चरित्रमेव चारित्रं प्रज्ञादित्वादण् ॥४॥ चर्यते चरणम् ॥ ५ ॥ ५०७ ॥ वर्तनं वृत्तम् ॥ ६ ॥ शेते सुखमनेन शीलं पुंक्लीबलिङ्ग , "शुकशी " ॥(उणा–४६३)॥ इति किद् ल , शील्यते तदिति वा ॥७॥

सर्वैनोध्वसि अप्येऽघमर्षणम् ।

सर्वैनसामपध्वंसिनि अप्ये, अघ मृष्यते क्षोभ्यतेऽनेनाऽघमर्षणम् अदैवत्यो मन्त्र , तज्जपो वा, त्रिरात्रोपवासादिस्तपश्चाराद् वाच्यलिङ्गोऽयम् ॥ १ ॥

समास्तु पादग्रहणाभिवादनोपसंग्रहा ॥ ५०८ ॥

पादयोरन्तर्ग्रहण पादग्रहणम् ॥१॥ अभिवाद्यते आशिष कार्यतेऽनेन अभिवादनम् ॥ २ ॥ उपसंग्रहणमुपसंग्रहः, यन्मनुः—

व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरो ।
वामेन वाम स्प्रष्टव्यो दक्षिणेन तु दक्षिण ॥ ३ ॥ ५०८ ॥

उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे ।

उपवीयते प्राव्रियते स्म उपवीतं पुंक्लीबलिङ्गः ॥ १ ॥ यज्ञसूत्रं यज्ञोपवीतम् यज्ञसूत्र पवित्रमिति चैकोऽर्थ तच्चरानुवादम् ॥ २ ॥

प्राचीनाऽऽवीतमन्यस्मिन्

प्रागेव प्राचीनम् आवीयते स्म आवीतम् अन्यस्मिन्, वामे करे प्रोद्धृते ॥१॥

निवीत कण्ठलम्बितम् ॥ ५०९ ॥

नियतं वीयते स्म निवीतम् ॥ १ ॥ कण्ठे ऋजु लम्ब्यते स्म कण्ठलम्बितम् ।

दैवत त्वङ्गुलीमुखे ॥ ५०४ ॥

अङ्गुलीनां मुखेऽग्रभागे देवतानामिदं दैवतं तीर्थम् ॥ १ ॥ यद् याज्ञवल्क्यः-

"कनिष्ठातर्जन्यङ्गुष्ठमूलान्यग्रं करस्य च ।

प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥" ॥ ५०४ ॥

शेषश्चात्र- करमध्ये सौम्यं तीर्थं

ब्रह्मत्वं तु ब्रह्मभूयं ब्रह्मसायुज्यमित्यपि ।

ब्रह्मणो ज्ञानस्य भावो ब्रह्मत्वं ॥ १ ॥ ब्रह्मणो भवनं ब्रह्मभूयं ब्रह्मणैकत्वम्-मोक्ष इत्यर्थः, "हत्याभूय भावे" ॥ ५।१।३६ ॥ इति क्यपि साधुः ॥ २ ॥ सह युक् योगोऽस्य सयुक् तस्य भावः सायुज्यम्, ब्रह्मणा सायुज्यं ब्रह्मसायुज्यम् ॥३॥

देवभूयादिकं तद्वत्

तद्वदिति देवत्वं देवसायुज्यं च, आदिशब्दात् सूरभूयादि ॥ १ ॥ २ ॥

अथोपाकरणं श्रुते ॥ ५०५ ॥

संस्कारपूर्वग्रहणं स्यात्

उपाक्रियतेऽनेनोपाकरणं वेदपाठारम्भे विशिष्टो विधिः ॥ १ ॥ "रोहिण्यां छन्दांस्युपाकुर्वीत" इति हि श्रुतिः ॥ २ ॥ ५०५ ॥

स्वाध्यायः पुनर्जपः ।

स्वस्य वेदस्याध्ययनं स्वाध्यायः ॥१॥ जपनं जपः "व्यधजप-" ॥५।३।४७॥ इत्यल् ॥ २ ॥

औपवस्त्रं तूपवासः

उपवस्ता प्राप्तोऽस्य औपवस्त्रं "प्रज्ञादिभ्यः" ॥ ६।४।१२९ ॥ इत्यण् । 'वसूच् स्तम्भे' इत्यस्मात् क्ते उपवस्तः, तस्येदमौपवस्त्रमित्येके, उपवस्त्रमित्यन्ये उपवस्त्रुरिदमिति अभाषपि, यत् स्मृतिः - मापान् मधुमसूरांश्च वर्जयेदौपवस्त्रके' ॥१॥ उपवसनमुपवासः पुंक्लिबलिङ्गः ॥ २ ॥

कृच्छ्रं सान्तपनादिकम् ॥ ५०६ ॥

कृन्तति पापं कृच्छ्रं नाम तपः, पुंक्लीबलिङ्गः ॥ १ ॥ सन्तपने भवं सान्तपनं ॥ २ ॥ यद् स्मृतिः - त्र्यहं सायं त्र्यहं प्रातः त्र्यहमद्यादयाचितम् ।

त्र्यहं परं च नाश्नीयात्, कृच्छ्रं सान्तपनं स्मृतम् ॥ १ ॥

आदिग्रहणात् चान्द्रायणादि ॥ ५०६ ॥

प्रायः सन्न्यास्यनशने

प्रकर्षेणायन्तेऽनेन परलोकं प्राग । सन्न्यसनं सन्न्यासः सर्वत्यागेन मरणाध्यवसाय साऽस्त्यस्य सन्न्यासि, सन्न्यासयुक्तं तच्च सदनवान च सन्न्यास्यनशनं तत् ॥ १ ॥

नियम पुण्यकं व्रतम् ।

नियम्यतेऽभावत्र नियम ॥ १ ॥ पुण्यमेव पुण्यकम् ॥ २ ॥ व्रियते उपवासाद्यत्र व्रतं पुंक्लीबलिङ्ग, ' वृधिपिरभ्यां ' ( उणा–२०८ ) इति किदत ॥३॥

क्षेपथात्र अथ स्यान्नियमे तपः ॥

चरित्रं चरिताचारौ चारित्रचरणे अपि ॥ ५०७ ॥

वृत्तं शीलं च

चर्यते चरित्रं 'लघूसूलनि–' ॥ ५।२।८७ ॥ इति इत्रः ॥ १ ॥ चर्यते स्म चरितम् ॥२॥ आचरणमाचारः ॥३॥ चरित्रमेव चारित्रं प्रज्ञादित्वादण् ॥४॥ चर्यते चरणम् ॥ ५ ॥ ५०७ ॥ वर्तनं वृत्तम् ॥ ६ ॥ शीते सुखमनेन शीलं पुंक्लीबलिङ्ग, 'शुकशी' ॥(उणा–४६३)॥ इति किद् लः, शील्यते तदिति वा ॥७॥

सर्वैनोध्वंसि जप्येऽघमर्षणम् ।

सर्वैनसामपध्वंसिनि जप्ये, अघ मृष्यते शोध्यतेऽनेनाऽघमर्षणम्, अर्धमर्षणो मन्त्र, तत्तपो वा त्रिरात्रोपवासादिरूपव्रताद् वाच्यलिङ्गोऽयम् ॥ १ ॥

समासु पादग्रहणाभिवादनोपसग्रहा ॥ ५०८ ॥

पादयोरन्तग्रहण पादग्रहणम् ॥१॥ अभिवाद्यते आशिष कार्यतेऽनेन अभिवादनम् ॥ २ ॥ उपसग्रहणमुपसंग्रहः, यन्मनुः—

व्यत्यस्तपाणिना कार्यमुपसग्रहण गुरोः ।
वामेन वामः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥ ३ ॥ ५०८ ॥

उपवीत यज्ञसूत्र प्रोद्धृते दक्षिणे करे ।

उपवीयते प्राप्यते स्म उपवीत पुंक्लीबलिङ्ग ॥ १ ॥ यज्ञसूत्रं यज्ञोपवीतम्, यज्ञसूत्र पवित्रमिति चैकोऽर्थं तथाहानुवादम् ॥ २ ॥

प्राचीनाऽऽवीतमन्यस्मिन्

प्रागेव प्राचीनम् आवीयते स्म आवीतम् अन्यस्मिन्, वामे करे प्रोद्धृते ॥१॥

निवीतं कण्ठलम्बितम् ॥ ५०९ ॥

नियतं वीयते स्म निवीतम् ॥ १ ॥ कण्ठे ऋजु लम्ब्यते स्म कण्ठलम्बितम् ।

यम्मनु —

प्रोद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विज ।
सव्ये प्राचीनमावीती निवीती कण्ठसज्जने ॥ ५०९ ॥

प्राचेतसस्तु वाल्मीकिर्वल्मीककुशिनौ कवि ।
मैत्रावरुणवाल्मीकौ

प्रचेतसोऽपत्यं प्राचेतस ॥ १ ॥ वल्मीकस्यापत्यं वाल्मीकि, बाह्वादित्वा दिञ् ॥ २ ॥ वल्मीकभवत्वाद् वल्मीक ॥ ३ ॥ कुशाः सन्त्यस्य कुशी ॥ ४ ॥ कवते कवि, आदिकविरपि ॥ ५ ॥ मित्रावरुणयोरयं मैत्रावरुण, मैत्रावरुणिरपि ॥ ६ ॥ वल्मीकस्यायं वाल्मीक ॥ ७ ॥

वेदव्यासस्तु माठर ॥५१०॥
द्वैपायन पाराशर्य कानीनो बादरायण ।
व्यास

वेदार्थान् व्यासयति प्रपञ्चयति वेदव्यास, यद् भारते- "वेदार्था भारते न्यस्ता" इति ॥१॥ मठरस्यापत्य माठरः बिदादित्वादञ् ॥२॥५१०॥ द्वीपस्यापत्यं द्वैपायनः, नरादित्वादायनण् ॥३॥ पराशरस्यापत्य पाराशर्य, गर्गादित्वाद् यञ् ॥४॥ कन्याया अपत्य कानीन "कन्यात्रिवेण्या-" ॥ ६।१।६२ ॥ इत्यणि साधु ॥ ५ ॥ बादरस्यापत्य बादरायण, नडादित्वादायनण् ॥ ६ ॥ व्यासयति प्रपञ्चयति शुभा ऽशुभमिति व्यासः ॥ ७ ॥

अस्याऽम्बा सत्यवती वासवी गन्धकालिका ॥ ५११ ॥
योजनगन्धा दाशेयी शाल्कायनजा च सा ।

अस्य व्यासस्य अम्बा जननी, सत्यमस्त्यस्याः सत्यवती ॥ १ ॥ वसोरियं वासवी ॥२॥ गन्धेन युक्ता काली श्यामा गन्धकाली, के गन्धकालिका ॥३॥५११॥ योजन व्यापी गन्ध सौरभ्यमस्या योजनगन्धा ॥ ४ ॥ दाशी धीवराङ्गना तस्या अपत्य दाशेयी ॥ ५ ॥ शाल्कायनाज्जाता शाल्कायनजा ॥ ६ ॥

शेषश्चात्र—सत्यवत्यां गन्धवती मत्स्योदरी ।

जामदग्न्यस्तु राम स्याद् भार्गवो रेणुकासुत ॥ ५१२ ॥

जमदग्नेरपत्य जामदग्न्य, गर्गादित्वाद् यञ् ॥१॥ रमते रामः, परशुरामोऽपि ॥२॥ भृगोरपत्यं भार्गवः, "ऋषिवृष्ण्य" ॥६।१।६१॥ इत्यण् ॥३॥ रेणुकाया सुतो रेणुकासुत, रैणुकेयोऽपि ॥ ४ ॥ ५१२ ॥

नारदस्तु देवब्रह्मा पिशुन कलिकारक ।

नारं नरसमूहं द्यति खण्डयति कलहरुचित्वात् नारदः ॥ १ ॥ देवानां ब्रह्मा देवब्रह्मा ॥ २ ॥ पिशुनयति कथयति पिशुनः ॥ ३ ॥ कलिं करोति कलिकारकः ॥ ४ ॥

वसिष्ठोऽरुन्धतीजानि

अतिशयेन वसुमान् वसिष्ठः, “गुणाद्याद्” ॥ ७।३।१९ ॥ इति इष्ठे “विन्मतोर्लुक्” ॥ ७।४।१२ ॥ इति मतोर्लुगपि “अभ्यसस्यादे” ॥ ७।४।४३ ॥ इत्यभ्यासस्यादिलोपः ॥ १ ॥ अरुन्धती जायाऽस्य अरुन्धतीजानिः “जायाया जानिः” ॥ ७।३।११४ ॥ इति जान्यादेशः ॥ २ ॥

अक्षमाला त्वरुन्धती ॥ ५१२ ॥

अक्षाणां मालाऽस्या अक्षमाला, न क्षमां धत्तीति वा अगामित्वात् ॥ १ ॥ न रुणद्धि अरुन्धती ॥ २ ॥ ५१३ ॥

त्रिशङ्कुयाजी गाधेयो विश्वामित्रश्च कौशिक ।

त्रिशङ्कुं याजयतीति त्रिशङ्कुयाजी ॥ १ ॥ गाधेरपत्यं गाधेयः “इतोऽनिञः” ॥ ६।१।७२ ॥ इत्येयण् गाधिनन्दनोऽपि ॥ २ ॥ विश्वं मित्रमस्य विश्वामित्रः, “ऋषौ विश्वस्य मित्रे” ॥ ३।२।७९ ॥ इति दीर्घः ॥ ३ ॥ कुशिकस्यापत्यं कौशिकः, शिवादित्वादण् ॥ ४ ॥

क्रुधारणिस्तु दुर्वासा

क्रुधारणिग्रहणात् क्रुधारणिः ॥ १ ॥ दुष्टं वासोऽस्य दुर्वासा ॥ २ ॥

शतानन्दस्तु गौतम ॥ ५१४ ॥

शतं बहूनामानन्दयति शतानन्दः ॥ १ ॥ गोतमस्यापत्यं गौतमः, “ऋषिवृष्ण्य” ॥ ६।१।६१ ॥ इत्यण् ॥ २ ॥ ५१४ ॥

याज्ञवल्क्यो ब्रह्मरात्रिर्योगीशोऽपि

यज्ञवल्कस्यापत्यं याज्ञवल्क्यः, गर्गादित्वाद् यञ् ॥ १ ॥ ब्रह्मैव रात्रिरस्य सदा योगनिद्रापरायणत्वात् ब्रह्मरात्रिः ॥ २ ॥ योगस्य ईशो योगेशः, योगीशोऽपि ॥ ३ ॥

अथ पाणिनौ ।

शालातुरीयदाक्षेयौ

पणिनोऽपत्यं पाणिनः “अणोऽपत्ये” ॥ ६।१।२८ ॥ इत्यण् “गाथिविदथि” ॥ ७।४।५४ ॥ इत्यन्त्यस्वरादिलोपनिषेधः, ततः पाणिनस्यापत्यं पाणिनिः, “अत इञ्” ॥ ६।१।३१ ॥ तत्र, शलातुरमभिजनो निवासोऽस्य शालातुरीयः “सलातुराच्छीयम्” ॥ ६।३।२१७ ॥ दाक्ष्या अपत्यं दाक्षेयः, “ङ्याप्सूत” ॥ ६।१।७० ॥ इत्येयण्, दाक्षीपुत्रोऽपि ॥ ३ ॥

गोनर्दीये पतञ्जलि ॥ ५१५ ॥

गोनर्दे भवो गोनर्दीय ,"दोरीय" ॥ ६।३।३२ ॥ सूत्र ॥ १ ॥ पतति पत, पताऽञ्जले पतञ्जलि , पृषोदरादित्वात् ॥ २ ॥ ५१५ ॥

कात्यायनो वररुचिर्मेधाजिच्च पुनर्वसु ।

कतस्यापत्य कात्य , तस्यापत्य कात्यायन "यञिञ" ॥ ६।१।५४ ॥ इत्यायनण् , कात्योऽप्यभेदोपचारात् ॥ १ ॥ वरा रुचिरस्य वररुचि ॥२॥ मेधया जयति मेधाजित् ॥ ३ ॥ पुनरपि वस्वस्य पुनर्वसु , पुनर्वसोर्जात इति वा ॥ ४ ॥

अथ व्याडिर्विन्ध्यवासी नन्दिनीतनयश्च स ॥ ५१६ ॥

विशेषेण आसमन्ताद् अडति उद्यच्छते, डीयते खे चरतीति वा व्याडिः, पृषोदरादित्वात् ॥ १ ॥ विन्ध्ये वसति विन्ध्यवासी ॥ २ ॥ नन्दिन्यास्तनयो नन्दिनीतनय ॥ ३ ॥ ५१६ ॥

स्फोटायने तु कक्षीवान्

स्फोट शब्दस्फोटमयते स्फोटकादित्वात् स्फोटायनस्तत्र, स्फुटस्यापत्यमित्यायायनमपि, स्फोटनोऽपि ॥ १ ॥ कक्षावद् योगोऽस्त्यस्य कक्षीवान् "चर्मण्वत्यष्ठीवद्" ॥ २।१।९६ ॥ इति मतौ निपात्यते ॥ २ ॥

पालकाप्ये करेणुभूः ।

पालकैर्हस्तिचिकित्सकैराप्यते आसत्वेन गम्यते पालकाप्यस्तत्र ॥ १ ॥ करेणोः करिण्या भवति करेणुभूः, कारेणवोऽपि ॥ २ ॥

वात्स्यायने मल्लनाग कौटिल्यश्चणकात्मज ॥ ५१७ ॥

द्रामिल पक्षिलस्वामी विष्णुगुप्तोऽङ्गुलश्च स ।

वत्सस्यापत्यं वात्स्य , तस्यापत्य वात्स्यायन , "यञिञ" ॥ ६।१।५४ ॥ इत्यायनण् ,तत्र ॥१॥ मल्लो मदनमदोच्छेदने स चासौ नागश्च मल्लनाग "वृन्दारकनागकुञ्जरैः" ॥३।१।१०८॥ इति कर्मधारयः ॥ २ ॥ कुटो घटस्त लान्ति कुटिलाः कुम्भीधान्या , तेषामपत्यं कौटिल्य , गर्गादित्वाद् यञ् ॥ ३ ॥ चणकस्य ऋषेरात्मजश्चणकात्मजः, चाणाक्योऽपि ॥ ४ ॥ ५१७ ॥ द्रामिलदेशे भवो द्रामिलः ॥ ५ ॥ प्रशस्तो पित्रो· पक्षावस्य स पक्षिल स चासौ स्वामी पक्षिलस्वामी ॥६॥ विष्णुरेनं गुप्यादिति विष्णुगुप्त , "तिक्कृतौ नाम्नि" ॥ ५।१।७१ ॥ इति क्तिः ॥ ७ ॥ अङ्गु शरीरावयव लाति अङ्गुलः, हीनाङ्गुलिरस्याऽस्तीति वा "हीनात स्वाङ्गादः" ॥ ७।२।४५ ॥

क्षतव्रतोऽवकीर्णी स्यात्

क्षतं विलुप्तं व्रतमनेन क्षतव्रतः ॥ १ ॥ अवान्तरं कीर्णं रेतोऽस्माऽस्त्यव कीर्णी यत् स्मृति – ब्रह्मचार्यवकीर्णी स्यात् कामतस्तु स्त्रियं व्रजन् ॥ २ ॥

व्रात्यः संस्कारवर्जितः ॥ ५१८ ॥

व्रते साधुः कालो व्रात्यस्तत्र भवो व्रात्यः प्रायश्चित्तार्हः व्राते कृन्दं साधुरिति वा पृथग् व्यपदेश्यो न इत्यर्थः संस्कारोऽध्यापनयन तेन वर्जितः

यन्मनु –अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।

सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥ १ ॥ ५१८॥

शिपिविष्टः कृष्णकर्मा

शेसते शिपिविष्टः 'मुसुखानमुसुखान् ॥ (उमा–२७८) ॥ इत्यादिना निपात्यते ॥१॥ कृष्णं मलिनं कर्माऽऽचारोऽस्य कृष्णकर्मा दुराचारः 'शिपिविष्टः कृष्ण कर्मा' इत्यमरः ॥ २ ॥

ब्रह्मबन्धुर्द्विजोऽधमः ।

ब्रह्मा बन्धुरेवाऽस्य ब्रह्मबन्धुः ॥ १ ॥

नष्टाग्निर्वीरहा

नष्ट उच्छिन्नोऽग्निरस्य नष्टाग्निः ॥ १ ॥ वीरयते वीरोऽग्निः, तमुपेक्षया हन्ति वीरहा "ब्रह्मभ्रूण " ॥ ।१।१५१॥ इत्यत्र ब्रह्मादिभ्य एव हन्ते ।क्विति भूते निपातनात् वर्तमाने ' क्विप् ' ॥ ।३।१४८॥ इति क्विप् ॥ २ ॥

जातिमात्रजीवी द्विजब्रुवः ॥ ५१९ ॥

जातिमात्रेण जीवति जातिमात्रजीवी ॥ १ ॥ द्विजश्चाऽसौ ब्रुवश्च द्विजब्रुवः "निन्द कुत्सनैरपापाद्यैः" ॥ २ । १ । १०० ॥ इति कर्मधारयः ॥२॥५१९॥

धर्मध्वजी लिङ्गवृत्तिः

धर्मस्य ध्वजश्चिह्नमेवाऽस्त्यस्य धर्मध्वजी ॥ १ ॥ लिङ्गात् जटादेर्वृत्तिर्जीविकाऽस्य लिङ्गवृत्तिः ॥ २ ॥

वेदहीनो निराकृतिः ।

वेदेन स्वाध्यायेन हीनो वेदहीनः ॥ १ ॥ आकृतेर्जातेर्निष्क्रान्तो निराकृतिः, यत् स्मृतिः – अनधीत्य तु यो वेदान् अन्यत्र कुरुते श्रमम् ।

स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ २ ॥

सार्वाशी भोजनार्थं यो गोत्रादि वदति स्वकम् ॥५२०॥

वार्तार्थं जीविका निमित्त सन्नादामश्नाति वातादी ॥ १ ॥ ५२० ॥

उच्छिष्टभोजनो देवनैवेद्यबलिभोजन ।

उच्छिष्ट भोजनमस्य उच्छिष्टभोजम ॥१॥ देवस्य नैवेद्यं बलिं च भोजन यस्य स तथा ॥ २ ॥

अजपस्त्वसदध्येता

नास्ति जप स्वाध्यायोऽस्य अजप ॥ १ ॥ असदधीतेऽसदध्येता ॥ २ ॥

शाखारण्डोऽन्यशाखक ॥ ५२१ ॥

स्वशाखया रण्डो विरहित शाखारण्ड, अन्यशाखासु रमते वा "पञ्चमाद् डः" ॥(उणा–१६८) ॥१॥ अन्याः शाखा अस्य अन्यशाखक ॥ २ ॥ ५२१ ॥

शस्त्राजीव काण्डस्पृष्ट

शस्त्रेण जीवति शस्त्राजीव ॥ १ ॥ स्पृशति काण्डान्यनेन काण्डस्पृष्टः, "वा जातिकालसुखादे" ॥ ३ । १ । १५२ ॥ इति क्तान्तस्य वा पूर्वनिपात, काण्डोऽस्य स चासौ स्पृष्टश्चेति वा ॥ २ ॥

गुरुहा नरकीलक ।

गुरु हन्ति गुरुहा ॥ १ ॥ नरेषु कीलक इव नरकीलकः ॥ २ ॥

मलो देवादिपूजायामभाक्त

मल्ते पाप मल, मल्योगाद् वा ॥ १ ॥

अथ मलिम्लुच ॥ ५२२ ॥

पञ्चयज्ञपरिभ्रष्ट

मलिम म्लोचति मलिम्लुच, मूलविभुजादित्वात् ॥१॥५२२॥ पञ्चभिर्यज्ञमहा-दिभि परिभ्रष्टः ॥ २ ॥

निषिद्धैकरुचि खरु ।

निषिद्धा एकत्र रुचिरनेन निषिद्धैकरुचि ॥ १ ॥ खनति चित्तं खरुः,"ख नो लुक् च" ॥ ( उणा–८०८ ) ॥ इति रु ॥ २ ॥

सुप्ते यस्मिन्नुदेत्यर्कोऽस्तमेति च क्रमेण तौ ॥ ५२३ ॥

अभ्युदिताऽभिनिर्मुक्तौ

अभिभूय उदितोऽर्कोऽस्य अभ्युदित ॥ १ ॥ अभिभूय निमुक्तोऽस्तमितोऽर्कोऽस्य सुप्तस्य अभिनिर्मुक्तः ॥ २ ॥५२३॥

वीरोज्झो न जुहोति यः ।

वीरमग्निमुज्झति वीरोज्झः ॥ १ ॥

अग्निहोत्रच्छलाद् याच्ञापरो वीरोपजीवकः ॥ ५२४ ॥

वीरमग्निमुपजीवति वीरोपजीवकः ॥ १ ॥ ५२४ ॥

वीरविप्रावको जुह्वद् धने शूद्रसमाहृते ।

वीरमग्निं विप्रावयति वीरविप्रावकः ॥ १ ॥

स्याद्वादवाद्यार्हतः स्यात्

स्याद्वादोऽनेकान्तवादस्तं वदति स्याद्वादवादी, अनेकान्तवाद्यपि ॥ १ ॥ अर्हन् देवताऽस्य आर्हतः, जैनोऽपि ॥ २ ॥

शून्यवादी तु सौगतः ॥ ५२५ ॥

शून्यं निराकारं वदति शून्यवादी ॥ १ ॥ सुगतो देवताऽस्य सौगतः, बौद्धोऽपि ॥ २ ॥ ५२५ ॥

नैयायिकस्त्वाक्षपादो यौगः

न्यायः प्रमाणप्रमेयादिः, तं वेत्त्यधीते वा नैयायिकः, न्यायादित्वाट् ठक्, "य्वः पदान्तात्" ॥ ७ । ४ । ५ ॥ इत्यैजागमः ॥ १ ॥ अक्षस्तृतीयनेत्रं पादेऽस्य अक्षपादः, अक्षपादस्यायमाक्षपादः ॥ २ ॥ योगः प्रत्याहारादि, तं वेत्त्यधीते यौगः, "तद्वेत्त्य" ॥ ६ ॥ २ ॥ ११७ ॥ इत्यण् ॥ ३ ॥

साङ्ख्यस्तु कापिलः ।

पञ्चविंशतितत्त्वानां सङ्ख्यानं सङ्ख्या, तदधिकृत्य कृतं शास्त्रं साङ्ख्यम्, तद्वेत्त्यधीते वा साङ्ख्यः ॥ १ ॥ कपिलेन कृतो ग्रन्थः कापिलः, तं वेत्त्यधीते वा कापिलः, कपिलस्यायमिति वा ॥ २ ॥

वैशेषिकः स्यादौलूक्यः

नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः, ते प्रयोजनमस्य वैशेषिकं शास्त्रं तद् वेत्त्यधीते वा वैशेषिकः ॥१॥ उलूकस्यापत्यमिव तमस्त्यागादौलूक्यं शास्त्रम्, उलूकनेपथ्यधारिणा महेश्वरेण प्रणीतमिति प्रसिद्धिः, गर्गादित्वाद् यञ्, तत्र साधुरौलूक्यः ॥ २ ॥

बार्हस्पत्यस्तु नास्तिकः ॥ ५२६ ॥

चार्वाको लौकायतिकश्च

बृहस्पतिना कृतं बार्हस्पत्यं शास्त्रम् तत्र साधुर्बार्हस्पत्यः बृहस्पतेरयं शिष्य इति वा 'दित्यदित्या-" ॥ ६।१।१५ ॥ इति ण्यः ॥ १ ॥ नास्ति पुण्यं पापमिति

मतिरस्य नास्तिकः ॥ ८ ॥ ५२६ ॥ ष्ववसारमान प्यावाकः, "मवाकश्यामाकः" ॥ ( उणा-३७ ) ॥ इत्याके निपात्यते ॥ ३ ॥ लोकेप्वायत लोकायत बृहस्पतिप्रणीत शास्त्रं तद वेत्त्यधीते वा लौकायतिकः, न्यायार्थित्वाट्ठकण्, "याज्ञिकौक्थिक-" ॥ ६। ।१२२ ॥ इति निपातनाल्लौकायितिकोऽपि ॥ ४ ॥ उपसंहारमाह-

एते षडपि तार्किकाः ।

एवं आर्हतादयः, तर्कः प्रयोजनमेषां तार्किकाः ॥ १ ॥

क्षत्रं तु क्षत्रियो राजा राजन्यो बाहुसंभवः ॥ ५२७ ॥

क्षदति संवृणोति क्षत्रं पुक्लीबलिङ्गः, "कुयामा" ॥ ( उणा-४५१ ) ॥ इति त्र, क्षतात् त्रायते वा पृषोदरादित्वात् ॥ १ ॥ क्षत्रस्यापत्यं क्षत्रियः "क्षत्रादियः" ॥ ६।१।९३ ॥ २ ॥ राजते राजा, "उक्षितक्षि" ॥ ( उणा-९०० ) ॥ इत्यन् ॥ ३ ॥ 'धामाजि" ॥ ( उणा-३७९ ) ॥ इत्यन्ये राजन्यः, राज्ञोऽपत्यमिति वा "जातौ राज्ञः" ॥ ६।१।९२ ॥ इति यः ॥ ४ ॥ ब्रह्मणो बाहुभ्यां सम्भवति बाहुसम्भवः, यत् श्रुतिः- 'बाहू राजन्यः कृतः" ॥ ५ ॥ ५२७ ॥

अर्यो भूमिस्पृशो वैश्या ऊरव्या ऊरुजा विशः ।

अयन्त्यर्यो 'स्वामिवैश्येऽर्यः" ॥ ५।१।३३ ॥ इति साधुः ॥ १ ॥ भूमिं स्पृशन्ति कृष्यादिना भूमिस्पृशः ॥ २ ॥ विश एव वैश्याः भेषजादित्वात् ट्यण् ॥३॥ ऊर्वोर्भवा ऊरव्याः देहांशत्वाद् यः ॥ ४ ॥ ब्रह्मण ऊर्वोर्जाता ऊरुजाः, यत् श्रुतिः - ऊरू तदस्य यद्वैश्यः" इति ॥ ५ ॥ विशन्ति विशः ॥ ६ ॥

वाणिज्यं पाशुपाल्यं च कर्षणं चेति वृत्तयः ॥ ५२८ ॥

वणिक्कर्म वाणिज्यं ॥ १ ॥ पशुपालस्य कर्म पाशुपाल्यं ॥ १ ॥ कृष्यते भूमिरस्मिन् कर्षणं कृषिः, इत्येता वर्तन्ते जीवन्त्याभिरिति वृत्तयः ॥१॥५२८॥

आजीवो जीवनं वार्ता जीविका वृत्तिवेतने ।

आजीवनमाजीवः आजीवन्त्यमेनेति वा ॥१॥ जीव्यतेऽनेन जीवनम् ॥२॥ वर्तनं वृत्तिसारोऽस्त्यस्यां वार्ता, "प्रज्ञाश्रद्धा" ॥ ७।२।३३ ॥ इति णः ॥ ३ ॥ जीवन्त्यनया जीविका, 'नाम्नि पुंसि च' ॥ ५।३।१२१ ॥ इति णकः ॥ ४ ॥ वर्तन्तेऽनया वृत्तिः ॥ ५ ॥ वेति खादत्यनेन वेतनं "कीपति" ॥ ( उणा-२१२ ) ॥ इति तन ॥ ६ ॥

उञ्छो धान्यकणादानं

उञ्छनमुञ्छः, पुल्लिङ्गः ॥ १ ॥ धान्यकणानामादानमुच्चयो धान्यकणादानम् ॥ १ ॥

कणिशाद्यर्जनं शिलम् ॥ ५२९ ॥

कणिश धान्यमञ्जरी आदिशब्दात् शिफादि सस्याजनं ग्रहणम् 'शिलतं उञ्छ शिल्यते शिलम्, "तुषादि" ॥ ( उणा-५ ) ॥ इति किद् ॥१॥५२९॥

ऋतं तद् द्वयम्

तदुभयमुञ्छशिलं ऋतं सत्यं धर्म्यत्वात् ॥ १ ॥

अनृतं कृषिः

न ऋतमनृतं पापिष्ठत्वात्, प्रमृतमित्यन्ये ॥ १ ॥

मृतं तु याचितम् ।

मृतं निर्जीवमिव ॥ १ ॥ याच्यते स्म याचितम् ॥ २ ॥

अयाचितं स्यादमृतं

न याचितमयाचितम् ॥ १ ॥ अमृतमविनश्वरम् ॥ २ ॥

सेवावृत्तिः श्वजीविका ॥ ५३० ॥

सेवालक्षणा वृत्तिः सेवावृत्तिः ॥ १ ॥ शुन इव जीविका वृत्तिः परपिण्डोप-जीवित्वादधमेत्यर्थः ॥ २ ॥ ५३० ॥

सत्यानृतं तु वाणिज्यं वणिज्या

किञ्चित् सत्यं किञ्चिदसत्यं सत्यानृतम् ॥ १ ॥ वणिजः कर्म वाणिज्यं राजा दित्वात् ष्यञ् ॥ २ ॥ 'सखिवणिग्दूताद्' ॥ ४।१।६१ ॥ इति ये वणिज्या व्युत्पत्तिः, यन्मनु -

"ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् ।
मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् ॥ १ ॥
सत्यानृतं तु वाणिज्यं तेनापि वस्तु जीव्यते ।
सेवा श्ववृत्तिराख्याता तस्मात् तां परिवर्जयेत्" ॥ इति ॥ २ ॥

वाणिज्यो वणिक् ।

क्रयविक्रयिकः पण्याजीवाऽऽपणिकनैगमाः ॥ ५३१ ॥

वैदेहः सार्थवाहश्च

वणिगेव वाणिजः, प्रज्ञादित्वादण् ॥ १ ॥ पणायति व्यवहरते वणिक् "पणेरिज्यादेश्च वः" ॥ ( उणा-८७२ ) ॥ इतीज् वणादेशश्च ॥ २ ॥ क्रयविक्रयेण जीवति क्रयविक्रयिकः व्यवहाराच्च क्रयविक्रयाद् ॥६।४।१६॥ इति ठक् ॥३॥ पण्येनाऽऽजीवति पण्याजीवः ॥४॥ आपणमवतीत्यापणिकः 'आङ् पणिपनि' ॥ (उणा-१९ ) ॥

इति इक, आपण प्रयोजनमस्येति वा प्रापणिकोऽपि ॥ ५ ॥ निगमे पुरे मार्गे वा भवो नैगमः ॥ ६ ॥ ५३१ ॥ विदहे उपचये भवो वैदेह ॥ ७ ॥ सार्थान् सधनान् सरतो या पान्थान् वहति सार्थवाह ॥ ८ ॥

क्रायक क्रयिक क्रयी ।

क्रीणाति मूल्येन भाण्ड क्रायकः ॥ १ ॥ क्रयेण जीवति क्रयिक "भ्य स्माद्" ॥ ६ । ४ । १६ ॥ इतीक ॥ २ ॥ क्रयोऽस्त्यस्य क्रयी ॥ ३ ॥

क्रेयदे तु विपूर्वास्ते

क्रेय क्रेतव्य ददाति क्रेयदस्तत्र विशब्दपूर्वास्ते क्रायकादयः–विक्रायक ॥ १ ॥ विक्रयिक ॥ २ ॥ विक्रयी ॥ ३ ॥

मूल्ये वस्नार्घवक्रया ॥ ५३२ ॥

मूलेनाऽऽनाम्य मूल्य तत्र, "इयपद" ॥ ७।१।११ ॥ इति य ॥ १ ॥ वसत्यस्मिन् पण्यं वस्नः पुल्लिङ्गः, "ग्लावापनि" ॥ ( उणा–२५८ ) इति न ॥ २ ॥ अर्यते पण्यमस्मिन् अर्घ, "स्वार्ति" ॥ ( उणा–१०९ ) ॥ इति घ, अर्घति पण्यमनेनेति वा ॥ ३ ॥ अवक्रीयतेऽनेन अवक्रयः, "वाऽवाप्यो" ॥३।२। १५६॥ इति वादेशे वक्रय ॥ ४ ॥ ५३२ ॥

शेषश्चात्र–अथ वक्रये भाटकः ॥

मूलद्रव्य परिपणो नीवी

मूल लाभकरणं द्रव्यं मूलद्रव्यम् ॥ १ ॥ परिपण्यते व्यवहारार्थं प्रयुज्यते परिपणः, "पंर्मेर्माने" ॥ ५।३।२२ ॥ इत्यल् ॥ २ ॥ नीयते वृद्धिमसौ नीवि, ङ्यां नीवी ॥ ३ ॥

लाभोऽधिक फलम् ।

मूलधनाद् यदधिक निष्पन्नम्, स लभ्यते इति लाभ ॥ १ ॥ फलति फलं फलान्तरादि ॥ २ ॥

परिदान विनिमयो नैमेय परिवर्तनम् ॥ ५३३ ॥

व्यतिहार परावर्तो वैमेयो निमयोऽपि च ।

परिवर्ताद् दान परिदानम् ॥ १ ॥ विनिमान विनिमयः ॥ २ ॥ निमेये परिवर्तनीये भवो नैमेय ॥ ३ ॥ परिवर्त्यते परिवर्तनम् ॥ ४ ॥ ५३३ ॥ व्यत्ययेन हरणं व्यतिहार ॥ ५ ॥ परावर्तन परावर्त ॥ ६ ॥ विमेये परिवर्तनीये भवो वैमेयः ॥ ७ ॥ निमान निमय ॥ ८ ॥

निक्षेपोपनिधी न्यासे

निक्षिप्यते भूतलादौ इति निक्षेप ॥ १ ॥ उपसमीपे समीपे वा निधीयते उपनिधि, उप समीपे निधिर्वा ॥ २ ॥ न्यस्यते निक्षिप्यते न्यास तत्र–स्मार्ते स्वर्णभेदोऽस्ति– "वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्पितम् ।

द्रव्यं तदुपनिधिर्न्यास प्रकाश्य स्थापितं तु यत् ॥ १ ॥

निक्षेप शिल्पिहस्ते तु भाण्डं संस्कर्तुमर्पितम्" । इति

प्रतिदान तदर्प्पणम् ॥ ५३४ ॥

तस्य न्यासस्य निक्षिप्तो प्रतीप दान प्रतिदानम्, परिदानमित्येके ॥१॥५३४॥

क्रेतव्यमात्रके क्रेय

क्रीयते क्रेयम्, यथा क्रेये गौवर्तते न च क्रय्योऽस्ति ॥ १ ॥

क्रय्य न्यस्त क्रयाय यत् ।

क्रयनिमित्तमापणे न्यस्तम्, क्रीयते क्रय्यम्, 'क्रय्य क्रयार्थे ॥४।३।९१॥ इति साधु ॥ १ ॥

पणितव्यं तु विक्रेय पण्यं

पण्यते पणितव्यम् ॥१॥ विक्रीयते विक्रेयम् ॥ २ ॥ पण्यते पण्यम्, "अवद्य–पण्य–वर्या" ॥ ३।१।१०१ ॥ इति यत् साधु ॥ ३ ॥

सत्यापन पुन ॥ ५३५ ॥

सत्यङ्कार सत्याकृति

अवश्यं मयैतद् विक्रेतव्यमिति सत्यस्य करण सत्यापनम्, "सत्यापपाशरूपवीणा" ॥ ३।१।२५ ॥ इति णिच् आकारादेशो च "अर्त्तिह्री" ॥ ७।३।३६ ॥ इति पोऽन्तः ॥१॥५३५॥ सत्यस्य करण सत्यङ्कार "कारे सत्यागदस्य" ॥६।३।७०॥ इति मोऽन्त ॥ २ ॥ "सत्यादशपथे" ॥ ५।४।६६ ॥ इति डाचि कृञ् च सत्याकृति ॥ ३ ॥

तुल्यौ विपणविक्रयौ ।

विपणन विपण, घुराद्यदन्तात् अपरिपठितत्वात्, अन्यथा विपाण स्यात् ॥ १ ॥ विक्रयणं विक्रय ॥ २ ॥

गण्य गणेयं सङ्ख्येयं

गण्यते गण्यम् ॥१॥ गणेयम्, 'गमाद्यव्याख्य' ॥ (उणा–३७०) ॥ इति एये निपात्यते, यद्वाचस्पति –' गणनीयं तु गणेयम् ' इति ॥२॥ सङ्ख्यायते सङ्ख्येयम् ॥ ३ ॥

सङ्ख्या त्वेकादिका भवेत् ॥ ५३६ ॥

एत्येकत्वमङ्ख्यामित्येक "भाग्" ॥ ( उणा-२१ ) ॥ इति क , एक-आदिरस्या एकादिका, आदिग्रहणात् द्वौ त्रय चत्वार एते यान्यलिङ्गा , पञ्चमते स्यादयोऽष्टादशान्ता अलिङ्गा , यदवोचाम-

"नन्ता सङ्ख्या डतियुष्मदस्माच्च स्युरलिङ्गका" । इति

षष्-शब्दस्य रूपविशेषाभावात् लिङ्गनिर्णयो नोक्त , एकोनविंशति त्रिंशदि त्यादय शतादयश्च स्त्रीलिङ्गा , यदवोचाम स्त्रीलिङ्गनिर्णये- "विंशत्याद्या शताद् द्वन्द्वे" इति । पद्मादिस्तु त्रिलिङ्गनिर्णये पृथक्लिङ्ग उक्त । अत्र च एकाद्या अष्टा दशान्ता सङ्ख्येये वर्तन्ते, विंशत्याद्यास्तु सङ्ख्याशब्दा एकत्वे वर्तमाना सङ्ख्येये सङ्ख्याने च वर्तन्ते,यथा विंशतिघटाः, विंशतिघटानाम्, शतं गाव , शतं गवामिति। यदाह वाचस्पति- "अष्टादशान्ध एकाद्या सङ्ख्याः सङ्ख्येयगोचराः ।

ऊनविंशत्यादिकास्तु सर्वा सङ्ख्येयसङ्ख्ययो ,, ॥ १ ॥

भाष्यकारोऽप्याह-"अष्टादशभ्य सङ्ख्या सङ्ख्येये वर्तते, तत पर सङ्ख्याने सङ्ख्येये च" इति । द्वित्वबहुत्वयोर्वर्तमानास्तु विंशत्याद्या सङ्ख्यायामेव वर्तन्ते, यथा द्वे विंशती, तिस्रो विंशतय ; गवां विंशती, विंशतय इति ॥ १ ॥ ५३६ ॥

यथोत्तर दशगुण भवेदेको दशायुत ।

शतं सहस्रमयुत लक्षमयुतकोटय ॥५३७॥

अर्बुदमब्जं खर्वं च निखर्वं च महाम्बुजम् ।

शङ्कुर्वार्धिरन्त्य मध्य परार्द्धं चेति नामत ॥ ५३८ ॥

एको दशभिर्गुणितो दशमन्ते दश ' दृसृयु " ॥ ( उणा-१०१ ) ॥ इति किदन् ॥ १ ॥ एव यथोत्तर दशभिर्गुणिता , दशदशतो मानमेषां सङ्ख्ये यानाम्, अस्य वा सङ्ख्यानमस्य शतम् ॥ १ ॥ एवं दश शतानि मानमेषामस्य वा सहस्रम् दश सहस्राण्ययुतम , शतादयस्त्रयः पुक्लीबलिङ्गा ॥१॥१॥ दशाऽयुतानि लक्ष स्त्रीक्लीबलिङ्ग , नियुतमपि ॥ १ ॥ दश लक्षाणि प्रयुत पुक्लीबलिङ्ग ॥१॥ दश प्रयुतानि कोटि स्त्रीलिङ्ग ॥ १ ॥ ५३७ ॥ दश कोटयोऽर्बुद पुक्लीबलिङ्गः ॥ १ ॥ दशाऽर्बुदानि अब्जम् ॥ १ ॥ दशाऽब्जानि खर्वम् ॥ १ ॥ दश खर्वाणि निखर्वम् ॥ १ ॥ दश निखर्वाणि महाम्बुजम् ॥१॥ दश महाम्बुजानि शङ्कु पुंलीलिङ्गः ॥ १० ॥ दश शङ्कवो वार्धि समुद्र, पुंलिङ्गः ॥ १ ॥ दश वा र्ध्याऽन्त्यम ॥ १ ॥ दशान्त्यानि मध्यम् ॥ १ ॥ दश मध्यानि परार्द्धमिति ॥१॥ शतादय विंशत्यादय " ॥ ६ । ४ । १६२ ॥ इति निपात्यन्ते, यदाह-

"एकं दश शतमस्मात् सहस्रमयुतं ततः परं लक्षम् ।
प्रयुतं कोटिमथाऽर्बुदमब्जं खर्वं निखर्वं च ॥ १ ॥
तस्माद् महासरोजं शङ्कुं सरितां पतिं ततस्त्वन्त्यम् ।
मध्यं परार्ध्यमाहुर्यथोत्तरं दशगुणं तज्ज्ञाः" ॥१॥ इति ॥ १८ ॥५३८॥

असङ्ख्यं द्वीपवार्ध्यादि

न विद्यते सङ्ख्या सङ्ख्यानमस्य असङ्ख्यम् ॥ १ ॥ द्वीपा जम्बूद्वीपादयः, वार्धयो लवणोदादयः, आदिग्रहणात् चन्द्राऽर्कादयः, यदाहुः –"असङ्ख्याता द्वीपसमुद्राः" इति ।

पुद्गलाऽऽत्माद्यनन्तकम् ।

पुद्गला आत्मा च आदिर्यस्य तत् तथा, आदिग्रहणात् आकाशप्रदेशादि, नास्त्यन्तोऽस्य अनन्तकम् ॥ १ ॥

सांयात्रिकः पोतवणिक्

समुद्रियाणां यात्रा संयात्रा, सा प्रयोजनमस्य सांयात्रिकः ॥ १ ॥ पोतस्य वणिक् पोतवणिक् ॥ २ ॥

यानपात्रं वहित्रकम् ॥ ५३९ ॥

बोहित्थं वहनं पोतः

जलमार्गे यानाय पात्रं यानपात्रम् ॥ १ ॥ उह्यतेऽनेन वहति जले वा वहित्रम्, "वहिचमि–" ॥ (उणा–४५९) इति इत्रः ॥ ५३९ ॥, "पथयूथ–" ॥ (उणा २३१) ॥ इति निपातनात् बोहित्थम्, बोहित्थितिष्ठतीति वा पृषोदरादित्वात् ॥२॥३॥ उह्यतेऽनेन वहनम् प्रवहणमपि ॥ ४ ॥ पूयते इति पोतः "हस्यामि–" ॥ ( उणा–२०० ) इति तः ॥ ५ ॥

पोतवाहो नियामकः ।

निर्यामः

पोतं वाहयति पोतवाहः ॥ १ ॥ नियन्तुं शक्नोति नियामकः ॥ २ ॥ निर्यामयति निर्यामः ॥ ३ ॥

कर्णधारस्तु नाविकः

कर्णमरित्रं धारयति कर्णधारः "मद् दुष–" 'कर्ण ओत्रमरित्रं च' इति ॥१॥ नावा तरति नाविकः "नौद्विस्वरादिकः" ॥ (६।४।१०) ॥ २ ॥

नौस्तु तरिणी ॥ ५४० ॥

तरीतरण्यौ वेडा

नुद्यते कर्णधारैर्नौः स्त्रीलिङ्गः, " ग्लानुदिभ्यां डौः " ॥ (उणा–८६८) ॥१॥ मज्जो नौशीर्षमस्त्यस्यां मज्जिनी ॥ २ ॥ ५४० ॥ तरत्यनया तरिः, " स्वरेभ्य " ॥ (उणा–६०६) ॥ ङ्यां तरी, मज्जा " तृस्तृतन्त्रि " ॥ (उणा–७११) इति ईप्रत्यये तरीरीदन्त ॥ ३ ॥ " ऋहृस " ॥ ( उणा–६३८ ) ॥ इत्यणौ, तरणिः, ङ्यां तरणी ॥ ४ ॥ विल्यते आकुञ्चतेऽस्यां वेडा ॥ ५ ॥

अथ द्रोणी काष्ठाम्बुवाहिनी ।

द्रवत्यम्भोऽस्यां द्रोणी, " द्रोवा " ॥ ( उणा–१८४ ) इति णः, काष्ठमम्बु च वहति काष्ठाऽम्बुवाहिनी, क्षीरस्वामी तु–काष्ठमुपलक्षण काष्ठाश्मादिमयी जलधारिणी द्रोणी इति व्याचख्यौ ॥ १ ॥

नौकादण्ड क्षेपणी स्यात्

येन नौर्वाह्यतेऽसौ नौकादण्डः, क्षिप्यतेऽनया क्षेपणी ॥ १ ॥

गुणवृक्षस्तु कूपक ॥ ५४१ ॥

गुणयुक्तो वृक्ष इव गुणवृक्षः, यत्र नौ रज्ज्वा बध्यते, पोते जनपद्याधारइत्येके ॥ १ ॥ कूपे आधारगर्ते कायति कूपकः, गौडस्तु– जलान्तस्तम्भं कूपकमाह ॥ २ ॥ ५४१ ॥

पोलिन्दास्त्वन्तरादण्डा

पोलन्ति महत्त्वं यान्ति पोलिन्दाः " कल्यलिपुलि " ॥ ( उणा–२४६ ) इति इन्दक्, बाहुलकात् गुण , नौकाया मध्ये दण्डा अन्तरादण्डा ॥ १ ॥

स्यात् मज्जो मज्जिनीशिर ।

मज्जत्यनेन मज्जः पुल्लिङ्गोऽयम्, वैजयन्ती तु– "नौशिरो मज्जमस्त्रियाम्" इति क्लीबेऽप्याह, मज्जिनी नौस्तस्या शिर उपरिभाग ॥ १ ॥

अभ्रिस्तु काष्ठकुद्दाल

अभ्रति अभ्रिः स्त्रीलिङ्गः, " पदिपठि " ( उणा–६०७ ) इति इः, काष्ठैः कुद्दालः, काष्ठमयो वा, येन सिक्तम्य मम मम पोतादि कूपेन पूयते ॥ १ ॥

सेकपात्रं तु सेचनम् ॥ ५४२ ॥

सिच्यते उदच्यतेऽनेन सेचनम्, येन नावो जलमुद्ध्रियते कश्चित् ॥१॥५४२॥

केनिपात कोटिपात्रमरित्रे

के जले निपात्यन्ते नीयन्ते नावोऽनेन केनिपातः, "अद्व्यञ्जनात्–" ॥३।२।

१८ ॥ इति सप्तम्या अलुप् ॥ १ ॥ कोटिभिः पाति कोटिपात्रम्, " ष्ट्रन् " ॥ ( उणा-४४६ ) ॥ इति ष्ट्रन् ॥ २ ॥ इमर्त्येनेन नौतरित्रम्- " अर्तिलूधूसूखनि " ॥ ५ । २ । ८७ ॥ इतीत्रस्तत्र ॥ ३ ॥

अथोडुपः प्लवः ।
कोलो भेलस्तरण्डश्च

' उड संघाते सौत्र ' उड्यते उडुपः पुल्लीबलिङ्गः, " उडेरुपक् " ॥ ( उणा-३११ ) ॥ १ ॥ प्लवतेऽम्भसि प्लवः ॥ २ ॥ कोलति सङ्ख्यामति कोलः ॥ ३ ॥ ' भिलि सौत्र ' भिल्यते भेलः, भेरस्य कले वा ॥ ४ ॥ तीर्यतेऽनेन तरण्डः पुल्लीबलिङ्गः, ' शृङ्गृ ' ॥ ( उणा-१७३ ) इत्यण्डः ॥ ५ ॥

स्यात्तरपण्यमातरः ॥ ५४३ ॥

पणे साधु पण्यं मूल्यं तरस्य पण्यं तरपण्यम् ॥ १ ॥ आतरत्यनेन आतरः ॥ २ ॥ ५४३ ॥

वृद्ध्याजीवो द्वैगुणिको वार्धुषिकः कुसीदिकः ।
वार्धुषिश्च

वृद्धिमाजीवति वृद्ध्याजीवः ॥ १ ॥ द्विगुणं गृह्णाति द्वैगुणिकः ॥ २ ॥ वृधुषी वृद्धिस्तां गृह्णाति वार्धुषिकः " अक्षस्थग्रहणाति गर्ह्ये " ॥ ६ । ४ । ३४ ॥ इतीकणि साधुः ॥ ३ ॥ कुसीदवृद्धिं गृह्णाति कुसीदिकः ' कुसीदादिकट् " ॥६।४।३५॥ ॥ ४ ॥ वृधुष्यां भवो वाधुषस्तस्यापत्यं वार्धुषिः ॥ ५ ॥

कुसीदार्थप्रयोगौ वृद्धिजीवने ॥ ५४४ ॥

'कुसच् श्लेषे दन्त्यान्त ' कुस्यति कुसीदम् ' कुसेरिदेदौ " ॥ (उणा-२४१) ॥ इति इद, कुत्सितं सीदत्यत्रेति वा पृषोदरादित्वात् ॥ १ ॥ अर्थस्य प्रयोगः कालान्तरेण दानमर्थप्रयोगः, वृद्ध्या जीविका वृद्धिजीवनं तत्र ॥२॥५४४॥

वृद्धिः कलान्तरं

मूलद्रव्यस्य वर्धनं वृद्धिः ॥ १ ॥ मूलद्रव्यस्याऽपरा कला कलान्तरम् ॥२॥

ऋणं तूद्धार पर्युदञ्चनम् ।

ऋर्यते स्म ऋणम् "ऋह्रीघ्रा " ॥४।२।७६॥ इति क्तस्य नत्वं ॥१॥ उद्ध्रियतेऽसौ उद्धार्यते वा उद्धारः ॥ २ ॥ परितः उद्यमममुञ्चमञ्चत् उद्धारत्वेन प्रहणं पर्युदञ्चनम् ॥ ३ ॥

याञ्चयाप्तं याचितकम्

याचितेन निर्वृत्तं याचितकम्, "याचिताऽपमित्यात् कण्" ॥६।४।२२॥१॥

परिवृत्त्यापमित्यकम् ॥ ५४५ ॥

*परिवृत्त्या आप्तं अपमित्य प्रतिदानेन निर्वृत्तमापमित्यकम्, "याचिता" ॥ ६।४।२३ ॥ इति कण् ॥ १ ॥ ५४५ ॥*

अधमर्णो ग्राहक स्यात्

ऋणेऽधमोऽधमर्ण, राजदन्तादित्वात् पूर्वनिपात ॥१॥ गृह्णाति ग्राहक ॥२॥

उत्तमर्णस्तु दायक ।

ऋणे उत्तमः उत्तमर्ण ॥ १ ॥ ददाति इति दायक ॥ २ ॥

प्रतिभूर्लग्नक

प्रतिनिधि प्रतीतो वा भवति प्रतिभू ॥१॥ लगति सम्बध्यते लग्न, "क्षुब्धविरिब्ध" ॥ ४।४।१७ ॥ इति साधु, के लग्नक ॥ २ ॥

साक्षी स्थेय

साक्षात् द्रष्टा साक्षी "साक्षाद् द्रष्टा" ॥७।१।११७॥ इतीन्, "प्राक्तोऽव्ययस्य" ॥ ७।४।६५ ॥ इत्यन्त्यस्वरादिलोप ॥ १ ॥ तिष्ठन्त्यस्मिन् इति स्थेय विवादपदे निर्णेता प्रमाणभूत पुरुष ॥२॥

शाश्वतः–अथ साक्षिणि स्याद्

मध्यस्थः प्राश्निकोऽप्यथ ।

कूटसाक्षी मृषासाक्ष्ये सूर्मी स्याद् दुष्टसाक्षिणि ॥

आधिस्तु बन्धक ॥ ५४६ ॥

आधीयतेऽसौ आधि ॥ १ ॥ बध्यते सम्बध्यते बन्धक, "दृकृतॄ" ॥ (उणा–२७) इत्यक ॥ २ ॥ ५४६ ॥

अथ मानविशेषानाह–

तुलाद्यै पौतवं मान

तुला पदवती प्रतिमानवती च तदाद्यैर्यद् मीयते तन्मानम्, पुनातीति पोतुर्मानभाण्डशोधक पौतवाध्यक्ष "कसिकमि" ॥ (उणा–७७३) इति तुन्, पोतोरिद पौतवम् ॥ १ ॥

द्रुवय कुडवादिभि ।

द्रोर्विकारो द्रुवयं मानम्, "द्रोर्वय" ॥ ६।२।४३ ॥ १ ॥

पाय्य हस्तादिभि

मीयतेऽनेन पाय्य मानम्, "धाय्यापाय्य" ॥ ५।१।२४ ॥ इति ण्यान्त निपात्यते ॥ १ ॥

तत्र स्याद् गुञ्जा पञ्च माषक ॥ ५४७ ॥

यवेति पौतवे गुञ्जा रक्तिका ॥ १ ॥ पञ्च सङ्ख्या मीयतेऽनेन माष "मृकणि" ॥ (उणा-५४०) इति षः, क माषक पुंक्लीबलिङ्ग ॥१॥५४७॥

ते तु षोडश कर्षोऽक्ष

ते माषा षोडशकसङ्ख्याः, कर्षति कर्षः पुंक्लीबलिङ्ग ॥१॥ अक्ष्णोत्यक्ष ॥२॥

पलं कर्षचतुष्टयम् ।

पलति पलं पुंक्लीबलिङ्ग ॥ १ ॥

बिस्त सुवर्णो हेम्नोऽक्षे

हेम्न सुवर्णस्य अक्षे कर्षे 'बिसच् प्रेरणे' बिस्यते बिस्तः, 'शीरीभू' ॥ (उणा-२०१) ॥ इति क्तः ॥ १ ॥ सुवर्णमस्त्यस्य सुवर्ण अर्शआदित्वाद् अच्,
यदाह—"माषो दशार्धगुञ्जः षोडशमाषो निगद्यते कर्षः ।
सस्सुवर्णस्य सुवर्णस्तैरेव पलं चतुर्भिरथ" इति ॥ २ ॥

कुरुबिस्तस्तु तत्पले ॥ ५४८ ॥

तस्य सुवर्णस्य पले कुरुषु प्रसिद्धो बिस्तो हेमपलं कुरुबिस्त यन्माला—"पलेन हि सुवर्णस्य कुरुबिस्त" ॥ १ ॥ ५४८ ॥

अथ पौतवमाह—

तुला पलशतं

तोल्यते तुला भिदादित्वाद् अङ् साधुः ॥ १ ॥ पलानां शतं पलशतं ॥ १ ॥

तासां विंशत्या भारः आचितः ।

शाकटः शाकटीनश्च शलाटः

तासां तुलानां विंशत्या पलसहस्रद्वयेनेत्यर्थः भ्रियते भारः ॥१॥ पुंसा हि द्वे पलसहस्रे वोढुं शक्यते आचीयते स्म आचितः ॥ २ ॥ शकटेन वोढुं शक्यः शाकटः 'कथित्' ॥ ६।२।१४५ ॥ इत्यण् ॥ ३ ॥ शकट्या नीयते 'कानद्' ॥ ५।१।११ ॥ इति के स्वार्थेऽपि च शाकटीनः ॥४॥ शृणाति शलाट "अनिषृ" ॥ (उणा-१४५) ॥ शलाटः कर्षे शलाट ॥ ५ ॥

ते दशाचितः ॥ ५४९ ॥

ते भारा दशसङ्ख्याः आचीयते स्म आचितः, क्लीबेऽप्ययमित्यन्ये ॥१॥५४९॥

अथ द्रवमाह—

चतुर्भिः कुडवैः प्रस्थः

कुड्यते क्षप्यते कुडवः प्रसृतद्वयम्, तैश्चतुर्भिः प्रतिष्ठते प्रस्थः पुंक्लीबलिङ्ग ॥१॥

प्रस्थैश्चतुर्भिराढक ।

आढौक्यते आढकस्त्रिलिङ्गः, "कीचकपेचक-" ॥ (उणा–३३) इत्यके निपात्यते ॥ १ ॥

चतुर्भिराढकैर्द्रोण

द्रवति द्रोणः पुंक्लीबलिङ्गः, "द्रोणा" ॥ (उणा–८४) ॥ इति णः ॥ १ ॥

खारी षोडशभिश्च तैः ॥ ५५० ॥

तैर्द्रोणैः षोडशभिः खन्यते खारी, "द्वारश्वार" ॥ (उणा–४११) इत्यारे निपात्यते ॥ १ ॥ ५५० ॥

अथ पाम्यमाह—

चतुर्विंशत्यङ्गुलानां हस्त

हस्यतेऽनेन हस्तः ॥ १ ॥

दण्डश्चतुष्कर ।

दाम्यति दण्डश्चतुष्करः ॥ १ ॥

तद् सहस्रौ तु गव्यूत क्रोश

तेषां दण्डानां द्वौ सहस्रौ गवां यूतिरत्र गव्यूत पृषोदरादित्वात् ॥ १ ॥ क्रुश्यते क्रुश्यतेऽध्वपरिमाणमस्मात् क्रोशः ॥ २ ॥

तौ द्वौ तु गोरुतम् ॥ ५५१ ॥

गव्या गव्यूतगव्यूती

तौ क्रोशौ द्वौ गवां रुतमत्र गोरुतम् ॥ १ ॥ ५५१ ॥ गोभ्यो हिता गव्या ॥ २ ॥ गवां यूतिरत्र गव्यूतम् ॥ ३ ॥ गवां यूतिगव्यूतिः पुंस्त्रीलिङ्गः पृषोदरादित्वात् ॥ ४ ॥

चतुष्क्रोशं तु योजनम् ।

चत्वारः क्रोशाः समाहृता अत्र चतुष्क्रोशम्, युज्यतेऽनेन योजनम्,

यदाह–हस्तोऽङ्गुलविंशत्या चतुरन्वितया चतुष्करो दण्डः ।

तद्वि सहस्रं क्रोशो योजनमेकं चतुष्क्रोशैः" इति ॥ १ ॥

वाणिज्यमुक्तम् पाशुपाल्यमाह–

पाशुपाल्यं जीववृत्ति

पशुपालस्य भावः कर्म वा पाशुपाल्यम्, राजादित्वात् ट्यण् ॥१॥ जीवपाल-भावं वर्त्तनं जीववृत्ति ॥ २ ॥

गोमान् गोमी गवीश्वरे ॥ ५५२ ॥

गावः सन्त्यस्य गोमान्, मतुप् ॥ १ ॥ "गोः" ॥ ७ । २ । ५० ॥ इति मिनि गोमी ॥ २ ॥ गवामीश्वरो गवीश्वरस्तत्र, गवेश्वरोऽपि ॥ ३ ॥ ५५२ ॥

गोपाले गोधुगाभीरगोपगोसङ्ख्यबल्लवाः ।

गाः पालयति गोपालस्तत्र ॥ १ ॥ गां दोग्धि गोधुक् ॥ २ ॥ आ अभितः ईरयत्याभीरः आप्नोतीति वा 'अभीरामीर" ॥ ( उणा-४२९ ) ॥ इतीरे निपात्यते ॥ ३ ॥ गाः पाति गोपः ॥ ४ ॥ गाः संख्याति सङ्ख्ये वा गोसङ्ख्यः "समः ख्यः" ॥५।१।७७॥ इति कः ॥५॥ वलते बल्लवः, "वल्लिवटि" ॥ (उणा-५१५) ॥ इत्यच् ॥ ६ ॥

गोविन्दोऽधिकृतो गोषु

गां विन्दति गोविन्दः "निगवादेर्नाम्नि" ॥ ५।१।६१ ॥ इति शः ॥ १ ॥

जाबालस्त्वजजीविकः ॥ ५५३ ॥

अजाः पालयतीति जाबालः पृषोदरादित्वात्, अजमलति जबालस्तस्या-ऽपत्यमिति वा ॥१॥ अजेभ्यो जीविकाऽस्य अजजीविकः अमृतं कृषिरिति कर्षणमुक्तम् ॥ २ ॥ ५५३ ॥ अथ कृषिवृत्तीन् कृषिवलानाह-

कुटुम्बी कर्षकः क्षेत्री हली कृषिककार्षकौ ।

कृषीवलोऽपि

कुटुम्बमस्त्यस्य कुटुम्बी ॥ १ ॥ कर्षति भुवं कर्षकः ॥ २ ॥ क्षेत्रमस्त्यस्य क्षेत्री, क्षेत्राजीवोऽपि ॥ ३ ॥ हलमस्त्यस्य हली ॥४॥ कर्षति कृषिकः 'पाशुकि-" ॥ ( उणा-४१ ) ॥ इति किकन्, कृषकोऽपि ॥५॥ 'कृषेर्गुणवृद्धी च" ॥ (उणा-३१) ॥ इत्यके वृद्धौ च कार्षकः ॥६॥ कृषिरस्त्यस्य कृषीवलः 'रज्यादिभ्यो वलच्' ॥ ७ । २ । २७ ॥ "वलेऽपित्रादे" ॥ ३।२।८२ ॥ इति दीर्घे ॥ ७ ॥

जित्या तु हलिः

जीयते जितुमनेनेति जित्या, "जिविपूञ्भ्यो हलिमुञ्जकल्के" ॥ ५।१।४२ ॥ इति क्यप् ॥१॥ हलन्त्यनया हलिः महद् हलम्, "पदिपठि-" ॥ (उणा-६०७) ॥ इति इः पुंस्त्रीलिङ्गावेतौ ॥ २ ॥

सीरस्तु लाङ्गलम् ॥ ५५४ ॥

गोदारणं हलं

सीयते बध्यते सीरः पुंक्लीबलिङ्गः, 'शुसिचि-' ॥ ( उणा-३९२ ) ॥ इति रो दीर्घत्वं च ॥१॥ लङ्गति गच्छति लाङ्गलम् '[illegible]" ॥ ( उणा-४६६ )

इन्यत ॥ २ ॥ ५५४ ॥ गौर्दार्यतेऽनेन गोदारणम् ॥ ३ ॥ हलति हल पुंक्ली बलिङ्ग ॥ ४ ॥

ईषसीते तद्दण्डपद्धती ।

इषति ईषा लाङ्गलदण्ड ॥ १ ॥ सिनोति भुव सीता, लाङ्गलस्य पद्धतिर्लेखेत्यर्थः ॥ २ ॥

निरीषे कुटकं

निष्क्रान्ता ईषाऽस्माद् निरीष तत्र ॥ १ ॥ कुट्यति कुटक यस्याऽग्रे फालो बध्यते ॥ २ ॥

फाले कृषक कुशिक फलम् ॥ ५५५ ॥

फलति विदीर्यते भूमिरनेन फालस्तत्र ॥ १ ॥ कर्षन्त्यनेन कृषक, " कृषे गुणवृद्धी च " ॥ ( उणा–३१ ) ॥ इति किदक ॥ २ ॥ कुश्नाति भुव कुशिक " कुशिकहृदिक- " ॥ ( उणा–४५ ) ॥ इतीके निपात्यते ॥ ३ ॥ फलति विदारयति फलम् ॥ ४ ॥ ५५५ ॥

दात्र लवित्र

दान्त्यनेन दात्रम्, " नीदाम्न् " ॥ ५ । २ । ८८ ॥ इति त्रट् ॥१॥ लून्त्यनेन लवित्रम्, " लूधूसू " ॥ ५।२।८७ ॥ इति इत्र ॥ २ ॥

तन्मुष्टौ वण्ट

तस्य दात्रस्य मुष्टिग्रहणस्थान तन्मुष्टिस्तत्र, वण्टयते विभज्यते वण्ट ॥ १ ॥

मत्य समीकृतौ ।

मतशब्द साम्यपर्याय, मतस्य करण मत्यम्, "मतमदस्य करणे" ॥ ७ । १।१४ ॥ इति य, असमस्य समीकरण तत्र ॥ १ ॥

गोदारण तु कुद्दाल

गौर्दार्यतेऽनेन गोदारणम् ॥ १ ॥ कुँ दल्यतेऽनेन कुद्दाल पृषोदरादित्वात् पुंस्ययम्, वैजयन्ती तु–"गोदारण कुद्दालम्" इति क्लीबमाह ॥ १ ॥

खनित्र त्ववदारणम् ॥ ५५६ ॥

खन्यतेऽनेन खनित्र कुद्दालादि, " लूधूसू " ॥ ५ । २ । ८७ ॥ इतीत्र ॥ १ ॥ अवदार्यतेऽनेनाऽवदारणम् ॥ २ ॥ ५५६ ॥

प्रतोदस्तु प्रवयणं प्राजन तोत्रतोदने ।

---

१ कु पृथिवी, इति हैममतम् ।

प्रतुद्यन्ते बोधारोऽनेन प्रतोद ॥ १ ॥ प्राजन्ति प्रेरयन्त्यनेन प्रवयणम्, "भजने वा" ॥ ४।४।३ ॥ इति विकल्पेन वीरादेश, पक्षे प्राजनम् ॥२॥३॥ तुद्यते ऽनेन तोत्त्रम्, "नीदाम्" ॥ ५।२।८८ ॥ इति त्रट् ॥४॥ अनटि तोदनम् ॥५॥

योत्रं तु योक्त्रमाबन्ध

यूयते युज्यते वाऽनेन योत्रम्, योक्त्रम्, "नीदाम्" ॥ ५।२।८८ ॥ इति त्रट् ॥ १ ॥ २ ॥ आबध्यतेऽनेन आबन्धश्चर्मरज्जु ॥ ३ ॥

कोटिशो लोष्टभेदन ॥ ५५७ ॥

कोटिभिः कोणैः श्यति कोटिशः ॥ १ ॥ लोष्टान् भिनत्ति लोष्टभेदन, कोटीशोऽपि ॥ २ ॥ ५५७ ॥

मेधिर्मेथि खलेवाली खले गोबन्धदारु यत् ।

मेथन्ति सङ्गच्छन्ते गावोऽस्यां मेथि "नाम्युपान्त्य" ॥ (उणा-६०९) ॥ इति कित् इः ॥ १ ॥ 'मिथृग् मेधाहिंसयो' मेथते हिंसन्ति मेधि "किकिपिकि-" ॥ (उणा-६०८) ॥ इति इ पुंस्त्रीलिङ्गावेतौ ॥ २ ॥ खले वलन्ति भ्रमन्ति गावो ऽनया खलेवाली, खले गोबन्धनार्थं दारु ॥ ३ ॥

शूद्रोऽन्त्यवर्णो वृषल पद्य पज्जो जघन्यज ॥ ५५८ ॥

शीयते इति शूद्रः, "स्फायि…" ॥ (उणा-३९४) इति र ॥१॥ अन्त्यश्चासौ वर्णश्चान्त्यवर्णः ॥२॥ वर्षति वृषल, "वृषिभपि" ॥ (उणा-४६८) इति किदल वृष लाति लुनातीति वा, नारदस्तु– "वृषो हि भगवान् धर्मस्तस्य य कुरुते लव वृषल तं विजानीयात्" इत्याह ॥ ३ ॥ ब्रह्मण पादयोरभव पद्य देहांशत्वाद् य हिमवति" ॥३।२।९९॥ इति पद्यादेशः ॥४॥ पद्भ्यां जातः पज्जः यत् श्रुति – "पद्भ्यां शूद्रोऽजायत" इति ॥५॥ जघन्ये जातो जघन्यजः ॥६॥५५८॥

ते तु मूर्धावसिक्तादू आरथकृद् मिश्रजातय ।

ते शूद्रा मूर्धावसिक्तादारभ्य रथकारं यावत् मिश्रा सङ्कीर्णाजातिरेषां मिश्रजातयः ।

क्षत्रियायां द्विजाद् मूर्धावसिक्त

सुतस्तु क्षत्रियाय् जात ' इत्यतो वक्ष्यमाणाज्जात इति सम्बध्यते ब्राह्मणात् क्षत्रियायां जात मूर्धनि अवसिच्यते स्म मूर्धावसिक्त ॥ १ ॥

विट्स्त्रियां पुन ॥ ५५९ ॥

अम्बष्ठ

द्विजादिति सम्बध्यते, ब्राह्मणाद् वैश्यायां जात , अम्बायां तिष्ठति अम्बष्ठः, "गोऽम्बाऽऽम्ब-"॥२।३।३०॥ इति षत्वम्, "ड्यापोर्बहुलं नाम्नि ॥२।४।९९॥ इति ह्रस्व ॥ १ ॥ ५५९ ॥

अथ पारशवनिषादौ शूद्रयोषिति ।

ब्राह्मणात् शूद्रायां जातः, परपुरुषाद् भिन्नवर्णा स्त्री परस्त्री तस्या अपत्यं पारशवः, "परस्त्रिया परशुस्वाऽसावर्ण्ये" ॥६।१।४०॥ इति अभि साधु ॥ १ ॥ निषीदति निषाद, ज्वलादित्वात् णः ॥ २ ॥

क्षत्राद् माहिष्यो वैश्यायां

क्षत्रियाद् वैश्यायां जातः, महिष्यां साधुर्महिष्य प्रज्ञादाणि माहिष्यः, स हि अन्तःपुररक्षिता इति स्मार्त्तम् ॥ १ ॥

उग्रस्तु वृषलस्त्रियाम् ॥ ५६० ॥

क्षत्रियात् शूद्रायां जात, उग्यस्तुम , "ऋरक्षुर" ॥ (उणा–३९६) ॥ इति निपात्यते ॥ १ ॥ ५६० ॥

वैश्यात् तु करणः

वैश्यात् शूद्रायां जात , करोति करण , नन्द्यादित्वाद् अन ॥ १ ॥

शूद्रात् तु आयोगवो विश स्त्रियाम् ।

शूद्राद् वैश्यायां जात , अयोवद् गौरस्य अयोगुस्तस्याऽयमायोगव ॥ १ ॥

क्षत्रियायां पुन क्षत्ता

शूद्रात् क्षत्रियायां जातः, क्षदति द्वाःस्थत्वात् क्षत्ता ॥ १ ॥

चण्डालो ब्राह्मणस्त्रिया ॥ ५६१ ॥

शूद्राद् ब्राह्मणस्त्रियां जातः, चण्डसुम कर्म अलति पर्याप्नोति चण्डालः ॥१॥ ॥ ५६१ ॥

वैश्यात् तु मागध क्षत्र्या

वैश्यात् क्षत्रियायां जातः, मगध्यति स्तौति मगधः, प्रज्ञादाणि मागधं ॥१॥

वैदेहको द्विजस्त्रियां ।

वैश्याद् ब्राह्मण्यां जातः, वैदेव इव वैदेहको वणिक्कर्मा ॥ १ ॥

सूतस्तु क्षत्रियाद् जात

क्षत्रियाद् ब्राह्मण्यां जात , सुवति प्रेरयत्यश्वान् सूतः ॥ १ ॥

उपसंहारमाह—

इति द्वादश तद्भिद ॥ ५६२ ॥

तेषां शूद्राणां भिदो जातिविशेषाः ॥ ५६२ ॥

माहिष्येण तु जात स्यात् करण्यां रथकारक ।

माहिष्याद् वैश्यात् क्षत्रियजातात् करण्यां शूद्रावैश्यजातायां सुतः, रथं करोति रथकारस्तक्षा ॥ १ ॥

कारुस्तु कारी प्रकृति शिल्पी

करोति कृणोति वा कारु, "कृवापा" ॥ (उणा–१) ॥ इत्युण् ॥ १ ॥ ग्रहादिभिणिनि कारी ॥ २ ॥ प्रक्रियतेऽनया प्रकृति ॥ ३ ॥ शिल्पं कलाकौशल मस्त्यस्य शिल्पी ॥ ४ ॥

श्रेणिस्तु तद्गण ॥ ५६३ ॥

तेषां कारूणां गणः श्रीयते श्रेणि पुंस्त्रीलिङ्ग 'कावावी "॥ (उणा–६३४) ॥ इति णिः ॥ १ ॥ ५६३ ॥

शिल्प कला विज्ञान च

शील्यते शिल्पम्, "पम्पाशिल्पादय" ॥ (उणा–३००) ॥ इति पे निपात्यते ॥ १ ॥ 'कलण् संख्यानगत्योरदन्तः कल्यते कला 'भीपिभुपि' ॥ ५।३।१०९ ॥ इति बहुवचनाद् अङ् ॥ २ ॥ विविध ज्ञायते विज्ञानम् ॥ ३ ॥

मालाकारस्तु मालिक ।

पुष्पाजीव

मालां स्रज करोति ग्रथ्नाति मालाकार ॥ १ ॥ मालागुम्फन शिल्पमस्य मालिक "शिल्पम्" ॥६।४।५७॥ इतीकण् मालाऽस्य अस्तीति वा व्रीह्यादित्वादिकः ॥ २ ॥ पुष्पैराजीवति पुष्पाजीव ॥ ३ ॥

पुष्पलावी पुष्पाणामवचायिनी ॥ ५६४ ॥

पुष्पाणि लुनाति पुष्पलावी, "कर्मणोऽण्" ॥ ५।३।१४ ॥ "अजम" ॥ १।४।२० ॥ इति ङी पुष्पाणामवचेत्री ॥ १ ॥ ५६४ ॥

कल्यपाल सुराजीवी शौण्डिको मण्डहारक ।

वारिवास पानवणिक् ध्वजो ध्वजत्याऽऽसुतीवल ॥ ५६५ ॥

कल्यं मद्यं पालयति रक्षति कल्यपाल ॥१॥ सुरया जीवति सुराजीवी ॥२॥

शुण्डा पानमदस्थानं सुरा वा पण्यमस्य शौण्डिकः, "तदस्य पण्यम्" ॥ ६।४।५४ ॥ इतीकण् ॥ ३ ॥ मण्डमच्छसुरां हरति मण्डहारकः ॥ ४ ॥ वारि वासयति वारिवासः ॥ ५ ॥ पानस्य वणिग् पानवणिक् ॥ ६ ॥ ध्वजति ध्वजः ॥ ७ ॥ ध्वजः सुराभाण्डपताकाऽस्त्यस्य ध्वजी ॥८॥ आसुतिर्मद्यसंधानमस्त्यस्य आसुतीबलः ॥९॥ ॥ ५६५ ॥

मद्यं मदिष्ठा मदिरा परिस्रुता
कश्यं परिस्रुन्मधु कापिशायनम् ।
गन्धोत्तमा कल्यमिरा परिप्लुता
कादम्बरी स्वादुरसा हलिप्रिया ॥ ५६६ ॥
शुण्डा हाला हारहूरं प्रसन्ना वारुणी सुरा ।
माध्वीकं मदना देवसृष्टा कापिशमब्धिजा ॥ ५६७ ॥

मदस्य करणं मद्यम्, "मतमदस्य करणे" ॥७।१।१४॥ इति यः, माद्यन्त्यनेन इति वा "बहुलम्" ॥५।१।२॥ इति करणेऽपि "शमिमदि" ॥५।१।३०॥ इति य ॥१॥ अतिशयेन मदवती मदिष्ठा, "गुणाङ्गाद्" ॥ ७।३।९ ॥ इतीष्ठे "विन्मतोः" ॥७।४।३२॥ इति मतुलोपे "त्र्यन्त्यस्वरादेः" ॥ ७।४।४३ ॥ इति अन्त्यस्वरादिलोप ॥२॥ माद्यत्यनया मदिरा "मदिमन्दि" ॥(उणा-४१२)॥ इतीरः ॥३॥ परिस्रवति स्म परिस्रुता ॥४॥ कशादेशे साधु कश्यं ॥५॥ परिस्रवति परिस्रुत् स्त्रीलिङ्गः ॥६॥ मन्यते मधु पुंक्लीबलिङ्ग ॥ ७ ॥ कापिश्यां नगर्यां भव कापिशायनम्, "वह्लुदूर्दि पर्दिकापिश्याष्टायनण् ॥ ६।३।१४ ॥ ८ ॥ गन्धेन उत्तमा गन्धोत्तमा ॥९॥ कल्यते कल्यं क्लीबलिङ्गः ॥ १० ॥ एति आम्यत्यनया इरा, "इणूभ्यागम्याम्" ॥ ( उणा-३८९ ) ॥ इति किद् र ॥ ११ ॥ परिप्लवते स्म परिप्लुता ॥ १२ ॥ कुत्सितम्बरस्य नीलवाससः इयं कादम्बरी स्त्रीलिङ्ग, कुत्सितमम्बु यत्र क्षारत्वात् कदम्बु समुद्रः,तमियर्तीति वा, कादम्बे गिरौ अर्यते वा तत्र हि माद्यन्त्यसौ का,पृषोदरादित्वात् ॥ १३ ॥ स्वादू रसोऽस्याः स्वादुरसा ॥ १४ ॥ हलिनो बलस्य प्रिया हलिप्रिया ॥ १५ ॥ ५६६ ॥ शुनति वैकल्यमनया शुण्डा पुंस्त्रीलिङ्गः, "कुगुहु-" ॥ (उणा-१७०)॥ इति किद् ड ॥१६॥ हलति विश्लिष्यतां हाला, ज्वलादित्वात् ण ॥१७॥ हरति इन्द्रियाणि हारहूरम्, 'सिन्दूरकर्चूर" ॥ ( उणा-४२० ) ॥ इत्यूरे निपात्यते हारहूरा द्राक्षा तद्विकारो वा ॥१८॥ प्रसीदत्यच्छत्वात् प्रसन्ना ॥१९॥ वरुणस्येयं वारुणी समुद्रोत्पन्नत्वात् ॥ २० ॥ सुरति उद्दीप्यते सुरा सूयते परिवास्यते वा 'ऋज्यजि" ॥ (उणा-३८८) ॥ इति किद् रः ॥२१॥ माद्यत्यनया माध्वीकम्, 'सृणीकास्तीक" ॥ ( उणा-५० ) ॥ इतीकं निपात्यते, मृद्वीकाया विकारो माध्वी

कमिस्त्न्ये ॥ २२ ॥ मदयति मदना ॥ २३ ॥ देवै सृज्यते स्म देवसृष्टा ॥ २४ ॥ कपिशमेव कापिशं प्रज्ञादित्वादण् ॥ २५ ॥ अभ्येजाता अभिजा ॥२६॥५६७॥

मध्वासवे माधवक

मधु माक्षिकं तन्मिथे आसूयते मध्वासवस्तत्र, मधुनो विकारो माधवः, के माधवकः ॥ १ ॥

मैरेये शीधुरासव ।

मीरायां देशे भवो गौड्याः सुराया विशेषो मैरेयः, नद्यादित्वाड्ढञ् मीरे समुद्रे भव इति वा तत्र ॥१॥ शेरतेऽनेन शीधु, 'शीङो धुक्' ॥ (उणा–७८४) ॥ पुंस्त्रीबलिङ्गावतौ ॥ २ ॥ आसूयत आसव ॥ ३ ॥

जगलो मेदको मद्यपङ्क

मद्य गलति जगल, पृषोदरादित्वात् ॥ १ ॥ मेद्यति स्निह्यत्यनेन मेदकः 'नाम्नि पुंसि च' ॥५।३।१२१॥ इति णक ॥ २ ॥ मद्यस्य पङ्को मद्यपङ्क ॥ ३ ॥

किण्वं तु नग्नहू ॥ ५६८ ॥

नग्नहुर्मद्यबीज च

'किण सौत्र किण्यते किण्वम् निघृषि'' ॥ (उणा–५११) ॥ इति किद् व ॥ १ ॥ नमेन हूयते स्पर्धते सुराध्यक्षमानमावात् नग्नहू ॥ २ ॥ ५६८ ॥ कग्नहु'' ॥ (उणा–७४६) ॥ इति निपातनाद् नग्नहुः, पुंल्लिङ्गावेतौ ॥३॥ मद्यस्य बीज मद्यबीज मापादत्स्यापि ॥ ४ ॥

मद्यसन्धानमासुति ।

आसवोऽभिषव

मद्यस्य सन्धान मद्यसन्धानम् ॥ १ ॥ आसूयते आसुतिः ॥ २ ॥ आसव नमासवः ॥ ३ ॥ एवमभिषव ॥ ४ ॥

मद्यमण्डकारोत्तमौ समौ ॥ ५६९ ॥

मद्यस्य मण्डा मद्यमण्ड ॥ १ ॥ कारेण क्रियावशाद् उत्तमो मुख्य कारोत्तमः सुरार्थे स्वच्छो भाग ॥ २ ॥ ५६९ ॥

गल्वर्कस्तु चषक स्यात् सरकश्चानुतर्षणम् ।

गलत्यनेन गल्वर्कः निष्कतुरुष्क' ॥ (उणा– २६) ॥ इति के निपात्यते ॥ १ ॥ चषन्ति पिबन्त्यनेन चषक ॥ २ ॥ सरन्त्यनेन सरकः वृकुम्' ॥ (उणा–२७) ॥ इत्यकः पुंस्त्रीबलिङ्गावेतौ ॥ ३ ॥ अनुतृष्यन्त्यनेनाऽनुतर्षण पानपात्रम् अनुतर्षोऽपि । अमरस्तु सरकानुतर्षौ सुरापरिवेषणपात्रवाचकाद ॥ ४ ॥

शुण्डा पानमदस्थान

शुन्यते शुण्डा पानमदयोरास्पदं कल्यपालगृहं करेणुः ॥ १ ॥

मधुवारा मधुक्रमाः ॥ ५७० ॥

मधुनो वारा अवसरा मधुवाराः ॥१॥ मधुनः क्रमा मधुक्रमाः ॥२॥ ५७० ॥

सपीतिः सहपानं स्यात्

सह पानं सपीतिः ॥ १ ॥ सह पीयते सहपानम् ॥ २ ॥

आपानं पानगोष्ठिका ।

आपिबन्त्यस्मिन् आपानम् ॥ १ ॥ पानस्य गोष्ठी आसनबन्धः ॥ २ ॥

उपदंशस्त्ववदंशश्चक्षणं मद्यपाशनम् ॥ ५७१ ॥

उपदश्यते पानरुचिजननार्थमुपदंशः ॥ १ ॥ अवदश्यतेऽवदंशः ॥ २ ॥ चक्ष्यते चक्षणम् ॥ ३ ॥ मद्यपस्य अशनं मद्यपाशनम्, कारविशदमभ्यवहार्यम् ॥ ४ ॥ ५७१ ॥

नाडिंधमः स्वर्णकारः कलादो मुष्टिकश्चसः ।

नाडीं धमति नाडिंधमः, "नाडीमुष्ट्योः" ॥ ५।१।१२० ॥ इति खश्प्रत्ययः ॥ १ ॥ स्वर्णं करोति अलङ्कारादिरूपतया स्वर्णकारः ॥ २ ॥ कलम् आदत्ते कलादः, कलं सुवर्णकालिकाम्–आददाति आखण्डयति वा, अत एव कलं धौतमन्त्रेति कलधौतम् ॥ २ ॥ मुष्टिं कायति मुष्टिकः ॥ ४ ॥

तैजसावर्तनी मूषा

तैजसं हेमादि तदावर्त्यतेऽनया तैजसावर्तनी ॥१॥ मूष्यते मूषा "मुषूष्" ॥ ( उणा–५४२ ) इति किद् षः ॥ २ ॥

भस्त्रा चर्मप्रसेविका ॥ ५७२ ॥

भसं शुद्धोत्पादी सरन्ति, बभस्त्यनया वह्निर्भस्त्रासोऽद्यममी, द्रुयामा' ॥ ( उणा–४५१ ) इति त्रः ॥ १ ॥ चर्मणा प्रसीव्यते चर्मप्रसेविका पुंस्त्रीलिङ्गः ॥ २ ॥ ५७२ ॥

आस्फोटनी वेधनिका

आस्फोट्यतेऽनया आस्फोटनी ॥ १ ॥ वेध्यतेऽनया मौक्तिकादि वेधनी, के वेधनिका ॥ २ ॥

शाणस्तु निकषः कषः ।

सुचिसूत्रं पिप्पलकम्

सूचेः सूत्रं सूचिसूत्रम् ॥ १ ॥ पिप्पलमेव पिप्पलकम् ॥ २ ॥

तर्कुः कर्त्तनसाधनम् ॥ ५७५ ॥

'कृतैप् वेष्टने' कृत्यते वेष्ट्यते सूत्रमस्मिन् तर्कुः पुंस्त्रि , "कृतेस्तक् च" ॥ ( उणा–७२३ ) ॥ इरयु तकादेशश्च ॥ १ ॥ कृत्यते कर्त्तनं तस्य साधनं ॥ २ ॥ ५७५ ॥

पिञ्जनं विहननं च तुलस्फोटनकार्मुकम् ।

पिञ्ज्यते हन्यतेऽनेन पिञ्जनम् ॥ १ ॥ विहन्यतेऽनेन विहननम् ॥ २ ॥ तुलस्फोटनाय कार्मुकम् ॥ ३ ॥

सेवनं सीवनं स्यूतिः

सेव्यते सेवनम् ॥ १ ॥ 'ष्ठिवसिवोऽनटि वा'' ॥४।२।११२॥ इति दीर्घत्वे सीवनम् ॥ २ ॥ स्त्रियां क्तौ "अनुनासिके च" ॥ ४।१।१०८ ॥ इत्यूटि च स्यूतिः ॥ ३ ॥

तुल्यौ स्यूतप्रसेवकौ ॥ ५७६ ॥

सीव्यते स्म स्यूतः ॥ १ ॥ प्रसीव्यते प्रसेवः , के प्रसेवकः वस्त्रावाप नम् ॥ २ ॥ ५७६ ॥

तन्त्रवायः कुविन्दः स्यात्

तन्त्रं तन्त्वातनं वयति तन्त्रवायः, तन्तुवायोऽपि ॥१॥ कु विन्दति कुविन्दः "लिम्पादेर्नाम्नि" ॥ ५।१।६१ ॥ इति शः ॥ २ ॥

त्रसरः सूत्रवेष्टनम् ।

त्रस्यति चलति त्रसरः, "अठर-" ॥ (उणा–४०३) ॥ इति बहुवचनात् रः ॥ १ ॥ सूत्रं वेष्ट्यते वानार्थमत्र सूत्रवेष्टनम् ॥ २ ॥

वाणिर्व्यूतिः

वानं वाणिः स्त्रीलिङ्गः "कमिवमि" ॥ ( उणा–६१८) ॥ इति णिः ॥ १ ॥ 'ऊयैङ् तन्तुसन्ताने' विशेषेण ऊयनं व्यूतिः "स्त्रियां क्तिः" ॥ ५।३।९१ ॥ य्वोः "व्वम्" ॥ ४।४।१२१ ॥ इति यलोपः ॥ १ ॥

वानदण्डो वेमा

वानाय दण्डो वानदण्डः ॥ १ ॥ वयन्त्यनेन वेमा पुंक्लीबलिङ्गः, "सात्मना त्मन्" ॥ ( उणा–९१६ ) ॥ इति मनि निपात्यते ॥ २ ॥

सूत्राणि तन्तवः ॥ ५७७ ॥

सूत्र्यते पटः एभिः सूत्राणि पुंक्लीबलिङ्गः, 'सुसूधाग्निं' ॥ (उणा–४४९) ॥ इति क्विन्, न, सूत्र्यते एभिरिति वा ॥ १ ॥ तन्यन्त इति तन्तवः पुंलिङ्गः, 'कसिकमि' ॥ (उणा–७७३) ॥ इति तुन् ॥ २ ॥ ५७७ ॥

निर्णेजकस्तु रजकः

निर्णेनेक्ति क्षालयति निर्णेजकः धावकोऽपि ॥ १ ॥ रजति रजकः, 'मूलवनुरञ्ज' ॥ ५।१।६७ ॥ इत्यकद् अकट्पिनोश्च ॥ ४।२।५० ॥ इति नलोपः ॥ २ ॥

पादुकाकृत् तु चर्मकृत् ।

पादुका पादत्राणानि करोतीति पादुकाकृत् ॥ १ ॥ चर्म करोति परिषीव्यतीति चर्मकृत् ॥ २ ॥

उपानत् पादुका पादूः पन्नद्धा पादरक्षणम् ॥ ५७८ ॥

प्राणहिता

उपनह्यति पादमुपानत् स्त्रीलिङ्गः क्विपि गतिकारकस्य नहिवृति" ॥६।३।८५॥ इति दीर्घः ॥ १ ॥ पादावेव पादुका "स्वार्थादिभ्यः कः" ॥२।४।१०४॥ इति ह्रस्वः ॥ २ ॥ पद्यतेऽनया पादूः स्त्रीलिङ्गः "कसिपदि" ॥ (उणा–८३५) ॥ इति णिदूः ॥ ३ ॥ पदानद्धा पन्नद्धा ॥४॥ पादौ रक्ष्येते अनेन पादरक्षणम्, पादत्राणमपि ॥ ५ ॥ ५७८ ॥ प्राणेभ्यो हिता प्राणहिता ॥ ६ ॥

शेषश्चात्र–पादुकायां पादरथी पादजङ्घः पदत्वरा ।
पादवीथी अपेशीथ पादपीठी पदायता ॥

अनुपदीना स्याद्बद्धाऽनुपदं हि या ।

अनुपदं पदायामेन बद्धा अनुपदीना, 'अनुपदं बद्धा" ॥ ७।१।९६ ॥ इतीनः ॥ १ ॥

नद्ध्री वद्ध्री वरत्रा स्यात्

नह्यतेऽनया नद्ध्री, नीदाम्नु– ॥ ५।२।८८ ॥ इति त्रट् ॥ १ ॥ वध्यते दीर्घमथति चमरज्जुत्वात् वद्ध्री पुंस्त्रीलिङ्गः 'नीदापि' ॥ (उणा–३८०) ॥ इति रः ॥२॥ व्रियतेऽनया वरत्रा 'वृग्नक्षि' ॥ (उणा–४५६) ॥ इति अत्र ॥३॥

आरा चर्मप्रभेदिका ॥ ५७९ ॥

इयर्ति गच्छत्यनया आरा भिदादित्वादङि साधुः ॥ १ ॥ चर्म प्रभिनत्ति

चर्मप्रभेदिका चर्मसीवनी ॥ २ ॥ ॥ ५७९ ॥

कुलालः स्यात् कुम्भकारो दण्डभृत् चक्रजीवकः ।

कोलति सस्त्यायति कुलालः, "कुलिपिलि" ॥ (उणा–४७६) ॥ इति किदालः, कुशानि गृहाणि अलति वा, कु मृदं लालयते मृद्नाति वा ॥१॥ कुम्भं करोति कुम्भकारः ॥ २ ॥ दण्डं बिभर्ति दण्डभृत् ॥ ३ ॥ चक्रेण जीवति चक्रजीवकः ॥ ४ ॥

शाणाजीवः शस्त्रमार्जो भ्रमासक्तोऽसिधावकः ॥ ५८० ॥

शाणया जीवति शाणाजीवः ॥ १ ॥ शस्त्राणि मार्ष्टि शस्त्रमार्जः ॥ २ ॥ भ्रमयन्त्रे आसक्तो भ्रमासक्तः ॥३॥ असीन् धावति धोपयत्यसिधावकः ॥४॥५८०॥

धूसरश्चाक्रिकस्तैली स्यात्

धुवति धूसरः, "कृधूतनि" ॥ (उणा–४४०) ॥ इति किन् सरः ॥१॥ चक्रं पण्यमस्य चाक्रिकः ॥ २ ॥ तैलमस्त्यस्य तैली, तिलन्तुदोऽपि ॥ ३ ॥

पिण्याकखलौ समौ ।

पिष्यते पिण्याकः सुततैलः कल्कविशेषः, "पिषे पिन्पिण्यौ च" ॥ (उणा–३६) ॥ इत्याकः ॥ १ ॥ खन्यते खलः, "मृभिखनि" ॥ (उणा–४७२) ॥ इति किदलः पुंक्लीबलिङ्गावेतौ ॥ २ ॥

रथकृत् स्थपतिस्त्वष्टा काष्ठतट् तक्षवर्धकी ॥ ५८१ ॥

रथं करोति रथकृत्, रथकारोऽपि ॥ १ ॥ स्थापयति स्थपतिः ॥ २ ॥ त्वक्षति तनूकरोति दारूणि त्वष्टा ॥ ३ ॥ काष्ठं तक्ष्णोति काष्ठतट् ॥ ४ ॥ तक्ष्णोति तक्षा, "उक्षितक्षि" ॥ (उणा–९००) ॥ इत्यन् ॥ ५ ॥ वर्धयति छिनत्ति वर्धकिः, "वर्धेरकिः" ॥ (उणा–६२४) ॥ ६ ॥ ५८१ ॥

ग्रामायत्तो ग्रामतक्षः

ग्रामस्याऽऽयत्तः साधारणस्तक्षा ग्रामतक्षः, "ग्रामकौटात् तक्ष्णः" ॥७।३।१०९॥ इत्यद् समासान्तः ॥ १ ॥

कौटतक्षोऽनधीनकः ।

कुट्यां शालायां भवः कौटः स्वतन्त्रः स चासौ तक्षा च कौटतक्षः, "ग्रामकौटात् तक्ष्णः" ॥ ७।३।१०९ ॥ इत्यद् समासान्तः, नास्ति अधि उपरि इनः स्वामी अस्य अनधीनः ॥ १ ॥

वृक्षभित् तक्षणी वासी

वृक्षान् भिनत्ति वृक्षभित् ॥ १ ॥ तक्ष्यतेऽनया तक्षणी ॥ २ ॥ वसति छन्ने वाति, 'वस्निकृटि' ॥ (उणा-६१९) ॥ इति णिदिः वासी ॥ ३ ॥

क्रकच करपत्रकम् ॥ ५८२ ॥

क्रामति क्रकच पुंक्लीबलिङ्गः 'क्रकचादयः' ॥ (उणा-३१५) ॥ इत्यचे निपात्यते ॥ १ ॥ करगचार्थे पत्रम् करपत्रम् करस्याधारणेन पत्रयतीति वा कद् ॥ २ ॥ ५८२ ॥

स उद्घनो यत्र काष्ठे काष्ठं निक्षिप्य तक्ष्यते ।

उद्धन्यते काष्ठमस्मिन् उद्घनः 'निघोद्घ' ॥ ५।३।३६ ॥ इत्यलि निपात्यते, काष्ठग्रहणमतन्त्रं लोहादेरपि । यदाह— 'लोहाद्घनघनस्कन्धा' इति ॥ १ ॥

वृक्षादनो वृक्षभेदी

वृक्षा अद्यन्ते छिद्यन्तेऽनेन करणेन वृक्षादनः ॥ १ ॥ वृक्षान् भिनत्ति वृक्षभेदी ॥ २ ॥

टङ्क पाषाणदारक ॥ ५८३ ॥

टङ्कयते टङ्कः पुंक्लीबलिङ्गः, हन्यमानश्च शब्दं करोति वा ॥ १ ॥ पाषाणं दारयति पाषाणदारकः ॥ २ ॥ ५८३ ॥

व्योकार कर्मारो लोहकार

विशेषेण ओक समवायमियर्ति व्योकारः 'व्यो' इत्यव्ययं पर्याय इति भोजः ॥ १ ॥ करोति कर्मारः 'कृगो मादिः' ॥ ( उणा-४०७ ) ॥ इत्यारः, कर्म इयर्ति वा ॥ २ ॥ लोहं करोति लोहकारः ॥ ३ ॥

कूटं त्वयोघन ।

कूट्यते दह्यतेऽनेन कूटं पुंक्लीबलिङ्गः ॥ १ ॥ अयो हन्यतेऽनेन अयोघनः ॥ २ ॥

व्रश्चन पत्रपरशु

वृश्चति छिनत्ति व्रश्चनः रम्यादित्वादनट् ॥ १ ॥ पत्राकारः पत्राणां वा छेदकः परशुः पत्रपरशुः ॥ २ ॥

ईषीका तूलिकैषिका ॥ ५८४ ॥

ईषति ईषीका 'ऋषिचृषि-' ॥ (उणा-४८) ॥ इति कः ॥ १ ॥ तूल्यते तूलिः 'नाम्युपान्त्य-' ॥ (उणा-६०९) ॥ इति किः के तूलिका ॥ २ ॥ इषति ईषिका काष्ठलोहादिमयी शलाका ॥ ३ ॥ ५८४ ॥

---

१ अव्ययमेतद् ।

भक्ष्यकारः कान्दविकः

भक्ष्यं खरविशदमभ्यवहार्यं करोति भक्ष्यकारः ॥ १ ॥ कन्दुः पण्यमस्य कान्दविकः, "तदस्य पण्यम्" ॥६।४।५४॥ इतीकण् "अवर्णोवर्णस्य" ॥८।४।७१॥ इत्यादिना लस्यानुपधादिकणइलोपाभावः, कन्दुना कृतं कान्दवं तत् पण्यमस्येति वा ॥ २ ॥

कन्दुस्वेदनिके समे ।

कन्दन्त्येनां कन्दुः पुंस्त्रीलिङ्गः, "भृमृ" ॥ (उणा–७१६)॥ इत्युः ॥ १ ॥ स्वेद्यतेऽनया स्वेदनी, के स्वेदनिका ॥ २ ॥

रङ्गाजीवस्तौलिकिकश्चित्रकृच्च

रज्यन्त्येषु रङ्गा वर्णकाः, तैस्य आजीवति रङ्गाजीवः ॥ १ ॥ तूलिकालिखनं शिल्पस्य तौलिकिकः ॥ २ ॥ चित्रं करोति चित्रकृत्, चित्रकरोऽपि ॥ ३ ॥

अथ तूलिका ॥ ५८५ ॥

कूचिका

तूलति तूलिका ॥ १ ॥ ५८५ ॥ कूचति कूचिका ॥ २ ॥

चित्रमालेख्यम्

चीयते चित्रम्, "चिमिदि" ॥ ( उणा–४५४ ) ॥ इति कित् त्रः ॥ १ ॥ आलिख्यते आलेख्यम् ॥ २ ॥

पलगण्डस्तु लेप्यकृत् ।

पलेन मांसमेव मृदादिना गण्डति संहन्ति पलगण्डः ॥१॥ लेप्यं करोति लेप्यकृत्, लेपकोऽपि ॥ २ ॥

पुस्तं लेप्यादि कर्म स्यात्

पुस्यते अभिमयते मृदा पुस्तं पुंक्लीबलिङ्गः "सीरी" ॥ (उणा–२०१) ॥ इति कित् तः, 'पुस्तण् आदरे' इत्यस्य वाऽल्, लेप्यमादिरस्य लेप्यादि कर्म ॥१॥

नापितश्चाण्डिलः क्षुरी ॥ ५८६ ॥

क्षुरमर्दी दिवाकीर्तिर्मुण्डकोऽन्तावसाय्यपि ।

न आप्यते नापितः, 'नम आपे' ॥ (उणा–२११) ॥ इति इतः ॥ १ ॥ चण्डते चण्डिलः, 'कल्यनि' ॥ ( उणा–४८१ ) ॥ इतीलः ॥ २ ॥ क्षुरोऽस्त्यस्य क्षुरी ॥ ३ ॥ ५८६ ॥ क्षुरेण मर्दयति क्षुरमर्दी ॥ ४ ॥ दिवा कीर्त्यते दिवाकीर्तिः,

सप्तौ क्षुरकर्मनिषेधात् ॥ ५ ॥ मुण्डयति मुण्डकः ॥ ६ ॥ अन्तमवस्यति अन्ता-वसायी ॥ ७ ॥

शेषश्चात्र—

नापिते ग्रामणीभण्डिवाहक्षौरिकमाण्डिकाः ॥ ७ ॥

मुण्डनं भद्राकरणं वपनं परिवापणम् ॥ ५८७ ॥

क्षौरं

मुण्ड्यते मुण्डनम् ॥ १ ॥ भद्रा क्रियते भद्राकरणम् 'मद्रभद्राद् वपने" ॥७।२।१४४॥ इति डाच् ॥ २ ॥ उप्यते वपनम् ॥ ३ ॥ परिवाप्यते परिवापणम् ॥ ४ ॥ ५८७ ॥ क्षुरस्येदं कर्म क्षौरम् ॥ ५ ॥

नाराची त्वेषिण्यां

नरमञ्चति नराच् तस्येयं नाराची ॥१॥ इष्यते अन्विष्यते अनयाऽनया एषणी, "इणोऽनिच्छायाम्' ॥ ५ । २ । ११२ ॥ इत्यन गौरादित्वात् ङी, तत्र ॥ २ ॥

देवाजीवस्तु देवलः ।

देवानाजीवति देवाजीवः ॥ १ ॥ देवान् लाति देवलः, दिव्यतीति वा 'मृदि कन्दि' ॥ ( उणा–४६५ ) ॥ इत्यलच् ॥ २ ॥

मार्दङ्गिको मौरजिकः

मृदङ्गो वादनं शिल्पमस्य मार्दङ्गिकः ॥ १ ॥ एवं मौरजिकः ॥ २ ॥

वीणावादस्तु वैणिकः ॥ ५८८ ॥

वीणां वादयति वीणावादः ॥१॥ वीणावादनं शिल्पमस्य वैणिकः ॥२॥५८८॥

वेणुध्मः स्याद् वैणविकः

वेणुं धमति वेणुध्मो वांशिकः ॥ १ ॥ वेणुवादनं शिल्पमस्य वैणविकः, तस्यानुदात्तात् "वर्णाद्वेणुः' ॥ ७ । ४ । ७१ ॥ इत्यकणूत्सोपाभाव ॥ २ ॥

पाणिघः पाणिवादकः ।

पाणी हन्तीति पाणिघः 'पाणिघताडघौ शिल्पिनि ॥ ५ । १ । ८६ ॥ इति साधुः ॥ १ ॥ पाणी वादयति पाणिवादकः ॥ २ ॥

स्यात् प्रातिहारिको मायाकारः

प्रतिहरण व्याज प्रयोजनमस्य प्रातिहारिक ॥ १ ॥ मायां करोति मायाकार ॥ २ ॥

माया तु शाम्बरी ॥ ५८९ ॥

मात्यस्यां विश्व माया, "स्याच्छा" ॥ (उणा–३५७) ॥ इति य ॥ १ ॥ शम्बराख्यस्याऽसुरस्य इय शाम्बरी, श शृणोति शबरो व्याजस्तस्यमिमात वा ॥ २ ॥ ॥ ५८९ ॥

इन्द्रजाल तु कुहुक जाल कुसृतिरित्यपि ।

इन्द्रस्य जालमिन्द्रजालम् ॥१॥ कुहयते विस्मापयते कुहुकम्, "मिवमि" ॥ (उणा–५१) ॥ इत्युक, कुहकमपि ॥ २ ॥ जालमिव जालम् ॥ ३ ॥ कुत्सिता सृतिः कुसृति ॥ ४ ॥

कौतूहल तु कुतुक कौतुक च कुतूहलम् ॥ ५९० ॥

कुतूहलमेव कौतूहलम्, प्रज्ञादित्वादण् ॥ १ ॥ कुमुमिस्तुदयतेऽनम, कुत्सित तन्यते वा कुतुकम्, "निष्कतुरुष्क" ॥ ( उणा–२६ ) ॥ इति निपात्यते ॥ २ ॥ कुतुकमेव कौतुक ॥ ३ ॥ कुत्सित तोदति कुतूहलम् "मुरलारल" ॥ (उणा–४७४ ) ॥ इत्यले निपात्यते विनोदोऽपि ॥ ४ ॥

व्याधो मृगवधाजीवी लुब्धको मृगयुश्च स ।

विध्यतीति व्याधः, "तन्व्यधि" ॥ ५ । १ । ६४ ॥ इति ण ॥१॥ मृगवधेनाऽऽजीवति मृगवधाजीवी ॥ २ ॥ लुभ्यति स्म लुब्ध, के लुब्धक ॥ ३ ॥ मृगान् याति मृगयु, "पीमृगमित्र" ॥ (उणा–७४१) ॥ इति किदुः ॥ ४ ॥

पापर्धिर्मृगयाऽऽखेटो मृगव्याच्छोदने अपि ॥ ५९१ ॥

पापानि ऋध्नुवन्त्यस्यां पापर्द्धि ॥ १ ॥ मृग्यन्ते प्राणिनोऽस्यां मृगया "मृगयेच्छा" ॥ ॥ ॥ इति साधु ॥ २ ॥ आखेट्यन्ते उत्त्रास्यन्ते प्राणिनोऽस्मिन् आखेटः ॥ ३ ॥ मृगान् व्ययत्याच्छादयति मृगव्यम् ॥ ४ ॥ आच्छोद्यन्ते प्राणिनोऽस्मिन् आच्छोदनं पृषोदरादित्वात्पस्य लत्वम् श्रीहर्षवाक्यिहादेतौ ॥५॥५९१॥

जालिकस्तु वागुरिक

जालेन जीवति जालिक, वेतनादित्वादिकण् ॥ १ ॥ वागुरया चरति वागुरिकः "चरति" ॥ ६ । ४ । ११ ॥ इतीकण् ॥ २ ॥

वागुरा मृगजालिका ।

पण्यमस्य मांसिकः ॥ ३ ॥ कूटं कूटयन्त्रं तेन चरति कौटिकः सहिकोऽपि ॥ ४ ॥

अथ सूना स्थानं वधस्य यत् ॥ ५९४ ॥

सुन्वन्त्यस्यां सूना, "सोरू च" ॥ (उणा–२६३) ॥ इति न, पशूनां घात स्थानम् ॥ १ ॥ ५९४ ॥

स्याद् बन्धनोपकरणं वीतंसो मृगपक्षिणाम् ।

मृगादिबन्धननिमित्तं आस्वागुरादिसाधनं वितन्यते बन्धाय वीतंसः पुंक्लीबलिङ्गः, "स्यवाभ्यां तनेरीच वे" ॥ ( उणा–५६५ ) ॥ इति स, वितन्यते बध्यतेऽनेन वा "घञ्युपसर्गस्य" ॥ ३।२।८६ ॥ इति दीर्घः ॥ १ ॥

पाशस्तु बन्धनग्रन्थिः

पश्यते बध्यतेऽनेन पाशः, पान्त्यऽनेन वा, "पाशाशमि" ॥ (उणा–५२०) ॥ इति शः ॥ १ ॥ मृगादीनां बन्धनाय ग्रन्थिर्बन्धनग्रन्थिः ॥ २ ॥

अवपातावटौ समौ ॥ ५९५ ॥

अवपतन्ति मृगा अत्रेति अवपातः ॥ १ ॥ अव्यन्तेऽनेन अवटः, "दिव्य वि" ॥ ( उणा–१४२ ) ॥ इत्यटः ॥ २ ॥ ५९५ ॥

उन्माथः कूटयन्त्रं स्यात्

ऊर्ध्वपातान्मथ्यतेऽनेन उन्माथः ॥ १ ॥ कूटेन छद्मेन यन्त्र्यते अनेन कूटयन्त्रम्, पाशयन्त्रमित्येके ॥ २ ॥

विवर्णस्तु पृथग्जनः ।

इतरः प्राकृतो नीचः पामरो बर्बरश्च सः ॥ ५९६ ॥

विरुद्धो वर्णोऽस्य विवर्णः वर्णान्तरालत्वात् ॥ १ ॥ पृथग् जनेभ्य पृथग्जनः ॥ २ ॥ एतीति इतरः "इणपूभ्यां कित्" ॥ ( उणा–४३८ ) ॥ इति तरः ॥ ३ ॥ प्रकृतौ भवः प्राकृतः गुणाऽसंस्कृतः ॥ ४ ॥ निम्नमञ्चति नीचः ॥ ५ ॥ पायते पामरः "जठर" ॥ ( उणा–४०३ ) ॥ इत्यरे निपात्यते ॥ ६ ॥ वृणोति बर्बरः "कृगृशृ" ॥ ( उणा–४४१ ) ॥ इति वरट् ॥ ७ ॥ ५९६ ॥

चण्डालेऽन्तावसाय्यन्तेवासिश्वपचबुक्कसाः ।

निषादप्लवमातङ्गदिवाकीर्तिजनङ्गमाः ॥ ५९७ ॥

चण्डते चण्डालः, "चण्डमृ" ॥ (उणा–४७५) ॥ इत्यालः चण्डमालः मृषाऽस्येति वा, यथाहि—"चण्डमालः मृषा यस्येत्यथ चान्द्रवतां मतः" इति, तत्र। प्रज्ञाधणि चाण्डालोऽपि ॥१॥ अन्तमवस्यत्यन्तावसायी ॥२॥ अन्ते ग्रहे वसत्यन्तेवासी ॥३॥

"क्षयवासि" ॥३।२।२५॥ इति सप्तम्या अलुप् ॥ ३ ॥ श्वानं पचति श्वपचः सिद्धादित्वादच् ॥ ४ ॥ बुक्कति भाऽस्य बुक्कसः "फनस" ॥ (उणा-५७१) ॥ इत्यसे निपात्यते, बुक्कामस्यतीति वा 'पुत् कुत्सितं कसति पुल्कस इत्येके, पुक्कस इत्यन्ये' श्वपचो डोम्बो बुक्कसो भूतप इत्यर्थान्तरभेदोऽत्र नाश्रितः ॥ ५ ॥ निषीदति निषादः ॥ ६ ॥ प्लवते प्लवः ॥ ७ ॥ मन्यते पापीयान् मातङ्गः "ममेर्मत्मातौ च" ॥ (उणा-१००) ॥ इत्यङ्गः मा मिथिद्व तङ्गतीति वा, मातङ्गापत्यमिति पौराणिकाः ॥८॥ दिवा कीर्त्यते दिवाकीर्त्तिः रात्रौ मनवस्त्वात्, 'स्वरेभ्य इः' ॥ (उणा-६०६) ॥९॥ जनं गच्छति जनङ्गमः, "नाम्नो गमः" ॥५।१।१३१॥ इति खः ॥ १० ॥५९७॥

पुलिन्दा नाहला निष्ट्या शबरा वरुटा भटाः ।
माला भिल्लाः किराताश्च सर्वेऽपि म्लेच्छजातयः ॥५९८॥

पोथन्ति वदन्ते पुलिन्दाः, "कल्यनि" ॥ (उणा-२४६) इतीन्दः ॥१॥ नह्यन्ति वल्कलानि नाहलाः 'नहिकलर्थालच" ॥ (उणा-४६६) ॥ इत्यलः ॥२॥ निर्गता वर्णाश्रमेभ्यो निष्ट्याः "निसो गते" ॥६।३।१८॥ इति त्यच् ॥३॥ शवन्ति शवराः, 'ऋच्छिचटि" ॥ (उणा-३९७) इत्यरः ॥ ४ ॥ वृणन्ति वरुटाः "गृजूद्" ॥ (उणा-१५२) इत्युटः ॥ ५ ॥ भटन्ति भटाः ॥ ६ ॥ मल्यन्ते मालाः, मां लान्तीति वा ॥७॥ भिन्दन्ति भिल्लाः, "भिल्लाच्छभल्ल-" ॥ (उणा-४६४) ॥ इति निपात्यते, भिदं विदारणं लान्तीति वा ॥८॥ किरन्ति शरान् किराताः "कृवृकस्य" ॥ (उणा-२०९) ॥ इत्यातकः ॥ ९ ॥ म्लेच्छनमव्यक्तं वदन्ति म्लेच्छास्तेषां जातिविशेषा म्लेच्छजातयः एतेऽरण्यचरा देशभेदाद् भिन्नाः ॥ ५९८ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां स्वोपज्ञाभिधानचिन्तामणि नाममालाटीकायां मर्त्यकाण्डस्तृतीयः ॥ ३ ॥

अर्हम्

## अथ तिर्यक्काण्डः

अथ तिर्यक्काण्डं चतुर्थमारभ्यते ।

तत्र पृथिव्यप्तेजोवायुवनस्पतिभेदैकेन्द्रियाः स्थावराः द्वित्रिचतुष्पञ्चेन्द्रियभेदेन त्रसाश्च कृमिप्रभृतयस्तिर्यञ्चो वर्ण्यन्ते तत्र पृथिवीकायिकानाह—

भूर्भूमिः पृथिवी पृथ्वी वसुधोर्वी वसुन्धरा ।
धात्री धरित्री धरणी विश्वा विश्वम्भरा धरा ॥ १ ॥
क्षितिः क्षोणी क्षमाऽनन्ता ज्या कुर्वसुमती मही ।
गौर्गोत्रा भूतधात्री क्ष्मा गन्धमाताऽचलाऽवनिः ॥ २ ॥

सर्वसहा रत्नगर्भा जगती मेदिनी रसा ।
काश्यपी पर्वताधारा स्थिरेला रत्नबीजसूः ॥ ३ ॥
विपुला सागराद्यान्ते स्युर्नेमीमेखलाम्बरा ।

भवत्यस्यां सर्वं भूः, "भ्वादिभ्यो वा" ॥५।३।११५॥ इति क्विप् ॥ १ ॥ "इग्भूम्यां" ॥ (उणा-६९०) ॥ इति किति मिप्रत्यये भूमि ॥ २ ॥ प्रथते पृथिवी, "प्रथेरिवट् पृथ् च" ॥ (उणा-५२१) ॥ इति साधुः ॥ ३ ॥ पृथ्वी पृथुत्वात् "स्वराद्युतो" ॥२।४।३५॥ इति ङी ॥४॥ वसु धनं धत्ते वसुधा, "आतो डोऽ" ॥५।१।७६॥ इति डः ॥ ५ ॥ उर्वी विस्तीर्णत्वात् ॥ ६ ॥ वसूनि धारयति वसुन्धरा "धारेर्धर च"॥५।१।११३॥ इति खः ॥ ७ ॥ दधाति विश्वं धात्री ॥८॥ धरति धरित्री, "धर्षिवहि"॥ (उणा-४५९)॥ इत्यादिग्रहणाद् इत्रः ॥९॥ "ऋदृस" ॥ (उणा-६३८) ॥ इत्यणौ धरणि, ङ्यां धरणी ॥ १० ॥ विशन्ति सर्वमस्यां विश्वा, "निघृषी" ॥ (उणा-५११) इति किद्वः ॥ ११ ॥ विश्वं जगद् बिभर्ति विश्वंभरा, "भृवृजि" ॥५।१।११२॥ इति खः ॥ १२ ॥ धरति धरा ॥१३॥१॥ क्षियन्त्यधिवसन्त्येनां क्षितिः, "स्त्रियां क्तिः" ॥५।३।९१॥१४॥ क्षौति भूप क्षोणिः, "कावावि" ॥(उणा-६३४) ॥ इति णि ङ्यां क्षोणी ॥१५॥ क्षमते भारं क्षमा ॥ १६ ॥ नास्त्यन्तोऽस्या अनन्ता ॥ १७ ॥ जिनाति हीयते ज्या, "कमिव" ॥ ५।१।१७१ ॥ इति ड ॥ १८ ॥ कायति भूप कु, "पृकाहृषि" ॥ (उणा-७२९) ॥ इति किदुः ॥ १९ ॥ वसूनि सन्त्यस्यां वसुमती ॥ २० ॥ महते मही गौरादित्वाद् ङी ॥ २१ ॥ गच्छन्त्यस्यां गौ, गोरूपधरत्वाद् वा ॥ २२ ॥ गोत्रा शैला सन्त्यस्यां गोत्रा अभ्रादित्वात्, गाम्नायते वा ॥ २३ ॥ भूतानि दधाति धारयति भूतधात्री ॥ २४ ॥ क्षमते भारं क्ष्मा क्षम्मग्रीष्म" ॥ (उणा-३४६) ॥ इति मे निपात्यते ॥२५॥ गन्धस्य मातेव गन्धमाता, गुणो गन्धगुणाऽऽश्रानात् ॥२६॥ न चलत्यचला ॥२७॥ अवति प्रजा, अव्यते भूपैरिति वा अवनिः, 'सदिवृति" ॥ (उणा-६८०) ॥ इत्यनि ॥ २८ ॥ २ ॥ सर्वं सहते सर्वसहा, "सर्वात् सहः" ॥५।१।१११॥ इति खः ॥ २९ ॥ रत्नानि गर्भेऽस्या रत्नगर्भा, रत्नवतीति भागुरि ॥३०॥ गच्छन्त्यस्यां जगती, "गमेर्डिद् द्वे च ॥ (उणा-८८१) इति कतृः "अधातूदृदितः" ॥ २ । ४ । २ ॥ इति ङी ॥ ३१ ॥ मेधस्सवत्स्य मेदिनी, वैरमेदोयोगादित्यन्ये ॥ ३२ ॥ रस्यते रसा, रसा सन्त्यस्यां वा अभ्रादित्वात् ॥ ३३ ॥ काश्यपस्येय काश्यपी, भार्गवेण हि पृथ्वी जित्वा अस्मै दत्ता ॥ ३४ ॥ पर्वता आधारोऽस्याः पर्वताधारा ॥ ३५॥ स्थिरा अचलत्वात् ॥ ३६ ॥ इलति इला, "नाम्युपान्त्य" ॥ ५ । १ । ५४ ॥ इति क, इराशब्दस्य रलत्वे वा ॥ ३७ ॥ रत्नानि बीजानि च सूते रत्नसूः ॥ ३८ ॥ बीजसूः ॥ ३९ ॥ ३ ॥ विपुला विशालत्वात् ॥ ४० ॥

सागरशब्दाग्रे नेमीमेखलाम्बराः, सागरो नेमिर्मेखला अम्बरं वाऽस्या सागरनेमी ॥ ४१ ॥ सागरमेखला ॥ ४२ ॥ सागराम्बरा, यौगिकत्वात् समुद्ररशना समुद्रकाञ्चि समुद्रवसना इत्यादयोऽपि ॥ ४३ ॥

शेषश्चात्र—

अथ पृथ्वी महाकान्ता क्षान्ता मेरुकर्णिका ।
गोत्रकीला घनश्रेणी मध्यलोका जगद्वहा ॥
देहिनी केशिनी मौलिमहास्थाल्यम्बरस्थली ॥ ४३ ॥

## द्यावापृथिव्यौ तु द्यावाभूमी द्यावाक्षमे अपि ॥ ४ ॥

## दिवस्पृथिव्यौ रोदस्यौ रोदसी रोदसी च ते ।

द्यौश्च पृथिवी च द्यावापृथिव्यौ एवं द्यावाभूमी द्यावाक्षमे 'दिवो द्यावा" ॥ ३।२।४४ ॥ इति द्यावादेशः ॥ १ ॥ २॥३॥४॥ दिवस् दिव पृथिव्यां वा" ॥ ३।२।४५ ॥ इति दिवसादेशे दिवस्पृथिव्यौ दिव·पृथिव्यावित्यपि ॥ ४ ॥ रुन्द्धस्त्वनयोः रोदस्यौ स्त्रीलिङ्गोऽयं द्विवचनान्तः, 'अस्'' ॥ (उणा–९५२) ॥ इत्यस् गौरादित्वाद् ङीः ॥ ५ ॥ रोदसी अम क्लीबलिङ्गो द्विवचनान्तः स्पष्टार्थमुभयोर्निर्देश, इदन्तात् रोदसिशब्दात् द्विवचने रोदसी, मधुस्तु –' द्यावापृथिव्योर्द्विवचने रोदसिशब्द इवर्णान्तादेश पृषोदरादित्वादिति ' रोदसीत्यव्ययमपि ॥ ६ ॥ ७ ॥

## उर्वरा सर्वसस्या भू

ऊर्वति क्षुधमुर्वरा "अठर " ॥ ( उणा–४०३ ) इत्यरे निपात्यते ऋच्छिमर्ति वा सर्वे सस्यमस्यां सर्वसस्या भूमिः ॥ १ ॥

## इरिण पुनरूषरम् ॥ ५ ॥

ऋणाति इरिणम्, ' ऋहेरे किद्' ॥ (उणा–१९५) इतीणः ॥ १ ॥ ऊषस्य निवास ऊषरम् रोऽश्मादे ॥६।२।७९॥ इति चातुरर्थिको र ऊषोऽस्यास्तीति वा मध्वादित्वाद् र ॥ २ ॥ ५ ॥

## स्थल स्थली

स्थलति स्थलम्, तिष्ठन्त्यस्मिन्निति वा ' स्थो वा" ॥ ( उणा–४७३ ) इति किद्ल ॥ १ ॥ स्थली अकृत्रिमा चेत् भाजगोण ' ॥ २।४।३० ॥ इति ङीः कृत्रिमा तु स्थला स्पष्टार्थमुभयलिङ्गनिर्देश ॥ २ ॥

## मरुर्धन्वा

म्रियन्ते तृषाऽत्र मरुः ॥ १ ॥ धुनु गतौ' धुन्वति धन्वा उक्षितक्षि " ॥ ( उणा–९०० ) इत्यन्, धनतीति वा ' अन्वन् ॥५।१।१४७॥ इति धन् पुंस्त्रियामेती ॥ २ ॥

क्षेत्राद्यप्रहृत खिलम् ।

न प्रहण्यते स्म अप्रहत हलादिभिरकृष्ट क्षेत्र केदारादि ॥ १ ॥ खलन्त्यत्र मूषिकाद्या खिलम्, पृषोदरादित्वादित्वम् ॥ २ ॥

मृन्मृत्तिका

मृद्यते मृद् कृषादित्वात् क्विप् ॥ १ ॥ मृदेव मृत्तिका, "मृदस्तिक" ॥७।२।१७१॥ इति स्वार्थे तिकः ॥ २ ॥

सा क्षारोष

सा मृत्तिका क्षारा, ऊष्यति रुमत्यूष ॥ १ ॥

मृत्सा मृत्स्ना च सा शुभा ॥ ६ ॥

सा मृत्तिका शुभा प्रशस्ता मृदेव मृत्सा मृत्स्ना, "सस्नौ प्रशस्ते" ॥ ७।२।१७२ ॥ इति साधू ॥ १ ॥ २ ॥ ६ ॥

रुमा लवणखानि स्यात्

रुवन्त्यस्यां रुमा, "मिथिमिमि-" ॥ (उणा–३४०) इति किद् मः । लवणस्य खानिराकरो लवणखानिः ॥ १ ॥

सामुद्र लवण हि यत् ।

तदक्षीव वशिरश्च

समुद्रे भव सामुद्रम् ॥ १ ॥ लुनाति स्वदधार्न लवणम् ॥ २ ॥ अक्ष्णोति व्याप्नोत्यक्षीवम्, "प्रहाह्रा" ॥ ( उणा–५१४ ) ॥ इति वे निपात्यते ॥ ३ ॥ उद्यते वशिर पुंक्लिव, क्लीबोऽयमिति केचित् "स्थविर" ॥ ( उणा–४१७ ) इतीरे निपात्यते ॥ ४ ॥

सैन्धव तु नदीभवम् ॥ ७ ॥

माणिमन्थ शीतशिव

सिन्धुनद्युपलक्षिते देशे भव सैन्धव पुक्लीबलिङ्ग ॥ १ ॥ नद्यां भवति नदीभवम् ॥ २ ॥ ७ ॥ मणिमन्थे गिरौ भव माणिमन्थम्, मणिबन्ध माणिमन्तं वा आहु ॥ ३ ॥ शीत शिनोति उष्णवीर्यत्वात् शीतशिवम्, "प्रहाह्रा" ॥ (उणा–५१४ ) ॥ इति वे निपात्यते ॥ ४ ॥

रौमक तु रुमाभवम् ।

वसुक वस्तूक तथा

रुमायामाकरे भव प्रागुज्योतिषेऽपि क्षार्ये के च रौमकम् ॥१॥२॥ वसति वसु वस्तेव वसुकम्, यन्माला "रौमकं वसुकं वसु" ॥३॥ वसुगन्धि वस्तूकं नाम लवणम् ॥ ४ ॥

विडपाक्ये तु कृत्रिमे ॥ ८ ॥

विडति भिनत्ति मलान् विडम् पाके साधुः पाक्यं कमरादयम्, पच्यते इति वा कृत्रिमे कृतके द्वयमर्थ पाक्यविडलवणयोर्भेदेऽपि कृतकत्वादैक्यम् ॥ १ ॥ २ ॥ ॥ ८ ॥

सौवर्चलेऽक्षे रुचकं दुर्गन्धं शूलनाशनम् ।

सुवर्चलाकरे भव सौवर्चलं तत्र पुंक्लीबलिङ्गः । सुष्ठु वर्चन सुवर्चस्तस्येद सौवर्चममग्निदीपनम् लक्षातीति वा ॥ १ ॥ अश्नोति व्याप्नोति अक्षम् ॥ २ ॥ रोचतेऽन मनेन रुचकम्, "घुसूदि" ॥ (उणा–२९) ॥ इति किदकः ॥ ३ ॥ दुष्टो गन्धोऽस्य दुर्गन्धं ॥ ४ ॥ शूलरोगं नाशयति शूलनाशनम् ॥ ५ ॥

कृष्णे तु तत्र तिलकं

तत्र सौवर्चले कृष्णे तिलति स्निह्यति तिलकं पुंक्लीबलिङ्गः, "घुसूदि" ॥ (उणा–२९) इति किदकः, पूर्वं तु मधुवर्णमगन्धं कृष्णवर्णं तिलकमित्येके, यदुक्तं 'कृष्णे सौवर्चलगुणा लवणे गन्धवर्जिते' ॥ इति ॥ १ ॥

यवक्षारो यवाग्रज ॥ ९ ॥

यवनालज पाक्यश्च

यवानां क्षारो यवक्षारः ॥ १ ॥ यवाग्रेभ्यो जातो यवाग्रजः दग्ध्वा यवाङ्कुरान् जन्यत इत्यर्थः ॥ २ ॥ ९ ॥ यवनालेभ्यो जातो यवनालजः ॥ ३ ॥ पच्यते पाक्यः असौ वनस्पतिकायजनितोऽपि क्षारप्रस्तावात् पृथ्वीकाये भणितः एव स्वर्जिकाक्षारादयोऽप्यूह्यम् ॥ ४ ॥

पाचनकस्तु टङ्कण ।

मालतीतीरजो लोहश्लेषणो रसशोधनः ॥ १० ॥

पाचयति पाचनः के पाचनकः ॥ १ ॥ टङ्कयति बध्नाति टङ्कणः "पिचणः" ॥ (उणा–१९०) इत्यणे निपात्यते टङ्गणोऽपि ॥ २ ॥ मालत्यास्तीरे जातो मालतीतीरजः ॥ ३ ॥ लोहं हेमादि श्लिष्यत्यनेन लोहश्लेषणः ॥ ४ ॥ रसं शोधयति रसशोधनः ॥ ५ ॥ १० ॥

समास्तु सर्जिकाक्षारकापोतसुखवर्चका ।

स्वर्जिकां दग्ध्वा क्षार्यते स्वर्जिकाक्षारः ॥ १ ॥ कपोतस्याय कापोत कपोतवण, कु ईषत् पूयते वा " दम्यमि " ॥ (उणा–२००) इति त ॥ २ ॥ सुखाय वर्चते सुखवर्चक ॥ ३ ॥

स्वर्जिस्तु स्वर्जिका सुग्घी योगवाही सुवर्चिका ॥ ११ ॥

सुष्ठु अज्यते स्वर्जिः स्त्रीलिङ्गः ॥ १ ॥ "स्वरेभ्य इ" ॥ (उणा–६०६) ॥ के स्वर्जिका ॥ २ ॥ सुघो हन्ति सुग्घी " अचित्ते टक् " ॥ ५।१।८३ ॥ ३ ॥ योग वहन्ति योगवाही ॥ ४ ॥ सुष्ठु वर्चते सुवर्चिका ॥ ५ ॥ ११ ॥

भरतान्यैरावतानि विदेहाश्च कुरून् विना ।
वर्षाणि कर्मभूम्य स्यु

बिभ्रति धर्मं भरतानि पञ्च तत्र । एक जम्बूद्वीपे द्वे, धातकीषण्डे, द्वे च पुष्करवरद्वीपार्धे इति एव भरतस्थानक्रमेण ॥१॥ इरावतीनां नदीनां निवासा ऐरावतान्यपि पञ्च ॥२॥ विदिह्यन्ते विदेहा पञ्च, ते च द्विविधा पूर्वं चापरे च कुरून् विनेति देवकुरूनुत्तरकुरूंश्च वर्जयित्वेत्यर्थ ॥३॥ तेषां हि युगलधर्मोत्पत्तिहेतुत्वात्सत्कर्मभूमित्वम्, इष्यन्ते सिध्यन्ते वर्षाणि कर्मणां शुभाऽशुभानामुपार्जने भूमयः कर्मभूम्य ॥१॥

शेषाणि फलभूमय ॥ १२ ॥

शेषाणीति हैमवत हरिवर्ष-रम्यक-हैरण्यवतानीति चत्वारि वर्षाणि जम्बूद्वीपे, एतन्नामानि द्विगुणानि धातकीखण्डे पुष्करवरद्वीपार्धे च एवं च विंशतिवर्षाणि देवकुरूत्तरकुरुरूपविदेहांशदशकसहितानि त्रिंशत् फलभोगाय भूमय फलभूमय ॥ १ ॥ १२ ॥

वर्षं वर्षधरास्तक

वृष्यते वर्षं पुल्लीबलिङ्गः ॥ १ ॥ वर्षधरावमो हिमवन्महाहिमवन्निषधनीलरुक्मिशिखरिण षड् जम्बूद्वीपे, एतन्नामानो द्विगुणा धातकीखण्डे पुष्करवरद्वीपार्धे च एव त्रिंशद् वर्षधरावयः तैरन्तरमते विभज्यते वर्षधरावाहम्, लौकिका नववर्षाण्याहुर्यथा—

भारत प्रथम वर्षं तत किंपुरुष स्मृतम् ।
हरिवर्ष तथैवान्यद् मेरोर्दक्षिणतो द्विज ॥
रम्यक चोत्तरं वर्षं तस्यैवानुहिरण्मयम् ।
उत्तरा कुरवश्चैव यथा वै भारत तथा ॥
भद्राश्च पूर्वतो मेरो केतुमाल तु पश्चिमे ।
नवसाहस्रमेकैकमेतेषां द्विजसत्तम ! ॥
इलावृत च तन्मध्ये तन्मध्ये मेरुरुत्थित ॥ २ ॥

विषयस्तूपवर्तनम् ।

देशो जनपदो नीवृद् राष्ट्रं निर्गश्च मण्डलम् ॥ १३ ॥

सिनोतीति विषयः ॥१॥ उपवर्तन्तेऽस्मिन्नुपवर्तनम्, "उपावर्तनम्" इति चास्य ॥२॥ दिश्यते देशः ॥३॥ जने पद्यते जनानां वा पदं जनपदः ॥४॥ नियतं वर्तन्तेऽस्यां नीवृत् स्त्रीलिङ्गः, अमरस्तु पुस्याह ॥५॥ राजते राष्ट्रं पुंनपुंसकः, 'ष्ट्रन्' (उणा-४८६) इति ष्ट्रन् ॥ ६ ॥ निगम्यतेऽस्मिन् निर्गः, ' निर्गो देशे " ॥५॥१।१११॥ इति साधुः ॥ ७ ॥ मण्ड्यते मण्डलं त्रिलिङ्गः, ' मृदिकन्दि " ॥ (उणा-४६५) ॥ इत्यलः, अमरस्तु– 'नीवृज्जनपदो देशविषयौ तूपवर्तनम्" इति पृथगाह ॥ ८ ॥ १३ ॥

आर्यावर्तो जन्मभूमिर्जिनचक्र्यर्धचक्रिणाम् ।

पुण्यभूराचारवेदी मध्यं विन्ध्यहिमाद्रयोः ॥ १४ ॥

आर्या आवर्तन्तेऽत्र आर्यावर्तः, जिना अवसर्पिण्यामृषभाद्याः चतुर्विंशतिः, चक्रिणो भरताद्या द्वादश, अर्धचक्रिणोऽश्वग्रीवादयस्त्रिपृष्ठादयश्च नव साहचर्याद् बलादयो बलदेवा नव तेषां जन्मभूमिः ॥ १ ॥ पुण्यस्य भूः पुण्यभूः ॥ २ ॥ आचारस्य वेदीव आचारवेदी विन्ध्याद्रेर्हिमाद्रेश्च मध्यभागः

यथाह – आसमुद्रात्तु वै पूर्वादासमुद्राच्च पश्चिमात् ।

हिमवद्विन्ध्ययोर्मध्यमार्यावर्तं विदुर्बुधाः ॥ इति ॥ ३ ॥ १४ ॥

गङ्गायमुनयोर्मध्यमन्तर्वेदिः समस्थली ।

गङ्गायमुनयोश्च नद्योर्मध्यभूमिरन्तर्मध्ये वेदिरिव अन्तर्वेदिः ॥ १ ॥ समा चासौ स्थली च समस्थली ॥ २ ॥

ब्रह्मावर्तः सरस्वत्या दृषद्वत्याश्च मध्यतः ॥ १५ ॥

ब्रह्माणो ब्राह्मणा आवर्तन्तेऽत्र ब्रह्मावर्तः ॥ १ ॥ १५ ॥

ब्रह्मवेदिः कुरुक्षेत्रे पञ्चरामह्रदान्तरम् ।

ब्रह्मणो वेदिर्ब्रह्मवेदिः कुरुक्षेत्रे पञ्चानां रामह्रदानां मध्यप्रदेशः ॥ १ ॥

धर्मक्षेत्रं कुरुक्षेत्रं द्वादशयोजनावधि ॥ १६ ॥

धर्मस्य क्षेत्रं धर्मक्षेत्रम् ॥ १ ॥ कुरवोऽत्र क्षियन्ति स्म कुरुक्षेत्रं तच्च द्वादश योजनावधि भवति ॥ २ ॥ १६ ॥

हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशनादपि ।

प्रत्यगेव प्रयागाच्च मध्यदेशः स मध्यमः ॥ १७ ॥

उत्तरस्यां हिमवान् पर्वतः, दक्षिणस्यां विन्ध्य, विनशन सरस्वत्या अन्तर्दा नदेश, प्रयागः गङ्गायमुनयो सङ्गम तानवधीकृत्य मध्यवर्ती देशश्च मध्यदेशः ॥ १ ॥ मध्ये भवो मध्यम, नात्युत्कृष्टो नाप्यपकृष्ट इत्यर्थः ॥ २ ॥ ॥ १२ ॥

देश प्राग्दक्षिण प्राच्यो नदीं यावच्छरावतीम् ।

शरावत्या सरित पूर्वोत्तरेण वहन्त्या देशः पूर्वतो दक्षिणतश्च प्राच्यः ॥१॥

पश्चिमोत्तरस्तूदीच्य

शरावत्याः पश्चिमत उत्तरतश्च उदीच्य, यदाह–

प्रागुदञ्चौ विभजते हंसः क्षीरोदके यथा ।
विदुषां शब्दसिद्ध्यै या सा च पायाच्छरावती ॥ १ ॥

प्रत्यन्तो म्लेच्छमण्डल ॥ ९८ ॥

प्रतिगतोऽन्त मोटादिदेश प्रत्यन्त, म्लेच्छानां मण्डलो देशो म्लेच्छमण्डल ॥ १ ॥ १८ ॥

पाण्डूदक्कृष्णतो भूम पाण्डूदक्-कृष्णमृत्तिके ।

पाण्डूदक्कृष्णशब्देभ्य परो भूम पाण्डुभूमिरत्र पाण्डुभूम, पाण्डुमृत्तिको देशः ॥ १ ॥ उदीची भूमिरत्र उदग्भूमः, उदङ्मृत्तिक ॥ २ ॥ कृष्णा भूमिरस्य कृष्णभूमः कृष्णमृत्तिक "सङ्ख्यापाण्डूदक्कृष्णाद् भूमेः" ॥७।३।७८॥ इत्यत् समासान्त ॥ ३ ॥

जङ्गलो निर्जल

आमन्ते स्थलान्यत्र जङ्गल स्थलप्रायः, "जनमेर्गोऽन्तश्च" ॥ (उणा-४६७) ॥ इत्यलः प्राणाणि जाङ्गलोऽपि ॥ १ ॥ निर्गत जलमत्र निर्जल ॥ २ ॥

अनूपोऽम्बुमान्

अनुगता आपोऽत्र अनूप, "ऋक्पू पथ्यपोऽत्" ॥७।३।७६॥ इत्यत् समासान्तः "अनोर्देशे" ॥२।१।११०॥ इत्युपादेशः ॥१॥ अम्बुमान् जलप्राय ॥२॥

कच्छस्तु तद्विध ॥ ९९ ॥

कच्यते कच्छ पुल्लिङ्गसिद्धः, "तुदिमदि" ॥ (उणा-१२४) इति छक तद्विधोऽनूपप्राय ॥ १ ॥ १९

कुमुद्वान् कुमुदाः

कुमुदानि सन्त्यत्र, कुमुदानां निवास इति वा कुमुद्वान् ॥१॥ "नडकुमुद" ॥ ६।२।७४ ॥ इति चातुरर्थिको डिद् मतुप्रत्ययः ॥ २ ॥

वेतस्वान् भूरिवेतसः ।

वेतसाः सन्त्यत्र वेतस्वान् देशः, "नडकुमुदवेतस" ॥ ६।२।७४ ॥ इति डिद् मतुः ॥ १ ॥

नडप्रायो नडकीयो नड्वांश्च नड्वलश्च सः ॥ २० ॥

नडप्रायो नडबहुल इत्यर्थः ॥ १ ॥ नडाः सन्त्यत्र नडकीयः, "नडादेः कीयः" ॥६।२।९२॥ इति चातुरर्थिकः कीयः ॥ २ ॥ "नडकुमुद" ॥६।२।७४॥ इति डिति मतौ नड्वान् ॥ ३ ॥ "नडशादाद्" ॥ ६।२।७५ ॥ इति डिति वले नड्वलः ॥ ४ ॥ २० ॥

शाद्वलः शादहरिते

शादाः सन्त्यत्र शाद्वलः "नडशादाद् वलः" ॥ ६।२।७५ ॥ 'नहि कोटर सस्येऽसौ तर्जयति शाद्वल' इति । शाद्वलः दूर्वा इति च नीलत्वापचारात्, शादः अर्थं तेन नीले मध्याश्रित— 'शष्पकर्दमयोः शादः' इति ॥ १ ॥

देशो नद्यम्बुजीवनः ।

स्याद् नदीमातृकः

नद्यम्बुभ्यो जीवनं वृत्तिरत्र नद्यम्बुजीवनः, तत्र हि नद्यम्बुभ्यः सस्यनिष्पत्तिः । नदी माताऽस्य नदीमातृकः ॥ १ ॥

देवमातृको वृष्टिजीवनः ॥ २१ ॥

देवोऽभ्रं माताऽस्य देवमातृकः, वृष्टिर्जीवनमत्र वृष्टिजीवनः वृष्टिनिष्पन्न सस्यत्वात् ॥ १ ॥ २१ ॥

प्राग्ज्योतिषाः कामरूपाः

प्राग् ज्योतिषमत्र प्राग्ज्योतिषाः ॥१॥ कामतो रूपमत्र कामरूपाः ॥२॥

मालवाः स्युरवन्तयः ।

मलन्ते मालवाः, 'मलेर्वः' ॥ ( उणा–५१७ ) ॥ इति णिद्वः ॥ १ ॥ अवन्त्यन्ते अवन्तयः पुंसि, "पचादि" ॥ ( उणा–६६५ ) ॥ इति अतिः ॥ २ ॥

त्रैपुरास्तु डाहलाः स्युश्चेदयश्च ते ॥ २२ ॥

त्रिपुरी अदूरभवास्त्रैपुराः 'निवासादूरभवे' ॥६।३।६९॥ इति अण् ॥१॥ दह्यन्ते डाहलाः, इन्धनेन हि ते त्रिपुरदहनेन दग्धाः "शाशाक" ॥ (उणा–४८०) ॥

इत्यादे निपात्यते ॥ २ ॥ मेदय एव मैद्या भेषजादित्वात् ष्यण् ॥ ३ ॥[1] मद्यम्दे मेदय, पृषोदरादित्वात् ॥ ४ ॥ २२ ॥

मद्रास्तु हरिकेलीयाः

मद्यन्ति मद्रा ॥ १ ॥ हरिकेलौ भवा हारिकेलीया, "दोरीयः" ॥६।३।१२॥ ॥ २ ॥

अङ्गाश्चम्पोपलक्षिताः ।

अङ्गन्त्यङ्गा, चम्पया नगर्या उपलक्षिताः चम्पोपलक्षिता ॥ १ ॥

साल्वास्तु कारकुक्षीया

सलन्ति साल्वा, "सलेर्णिद् वा" ॥ ( उणा–५१० ) ॥ इति व ॥ १ ॥ कारकुक्षेरिमे कारकुक्षीयाः ॥ २ ॥

मरवस्तु दशेरका ॥ २३ ॥

म्रियते तृषा एषु मरव पुंसि, "भमृत्" ॥ (उणा–७१६) ॥ [illegible] ॥१॥ दशन्ति दशेराः, "कृगृपति" ॥ (उणा–४११) ॥ इति केरः, के दशेरका ॥ २ ॥ २३ ॥

जालन्धरास्त्रिगर्ता स्यु

[illegible] जाल धारयन्ति जालन्धरा, "धारेरच" ॥५।१।११२॥ इति ख ॥ १ ॥ तिस्रो गर्ता अत्रेति त्रिगर्ता ॥ २ ॥

तायिकास्तर्जिकाभिधा ।

[illegible] तायन्ते तायिका ॥१॥ तर्जयन्ति तर्जिका, "कृषिक–" ॥ (उणा–४५) ॥ इतीके निपात्यते ॥ २ ॥

कश्मीरास्तु माधुमता सारस्वता विकर्णिका ॥ २४ ॥

'कश शब्दे ताडन्यान्त' कशन्ति कश्मीरा, "कशेर्मोऽन्तश्च" ॥ ( उणा–४२० ) ॥ इतीर ॥ १ ॥ मधुमता निर्वृत्ता माधुमता, भातुर्थिकोऽम् ॥ २ ॥ सरस्वती देवता एषां सारस्वताः ॥ ३ ॥ विविधा कर्णिका अत्र विकर्णिकाः ॥४॥ ॥ २४ ॥

वाहीकाष्टक्कनामान

वहन्ति वाहीका[1], "सृणीकास्तीक–" ॥ (उणा–५०) ॥ इति ईके निपात्यते ॥१॥ टकन्ति टक्काः, "भिक्षकुक्क–" ॥ (उणा–१०७) ॥ इति के निपात्यते ॥२॥

---

१ तृतीयान्तमेतत् ।

। बाह्लीका बाल्हिकाह्वया ।

बल्हन्ते बाल्हीका, "सृणीकास्तीक-" ॥ (उणा-५०) ॥ इति ईके निपात्यते ॥१॥ बल्हते बल्हि, "पदिपठि-" ॥ (उणा-२६) ॥ इति इ बाहुलकाद् दीर्घत्वे बाल्हय, स्वार्थे के बाल्हिका ॥ २ ॥

तुरुष्कास्तु साखय स्युः

तुष्यन्ते तुरुष्का "निष्कतुरुष्क" ॥ (उणा-२६) ॥ इति के निपात्यते ॥१॥ सारवन्ति साखयः, पृषोदरादित्वात् वन्त्यादि ॥ २ ॥

कारूषास्तु बृहद्गृहा ॥ २५ ॥

कुर्वन्ति कारूषा "कोरदूषा" ॥ (उणा-५६१) ॥ इत्यूषे निपात्यते ॥१॥ बृहन्ति गृहाणि एषु बृहद्गृहा ॥ २ ॥ २५ ॥

लम्पाकास्तु मुरुण्डा स्युः

लपन्ति लम्पाकाः "मवाकश्यामाक-" ॥ (उणा-३७) ॥ इत्याके निपात्यते ॥ १ ॥ मोदन्ते मुरुण्डा "पिचण्ड" ॥ (उणा-१७६) ॥ इति निपात्यते ॥ २ ॥

सौवीरास्तु कुमालकाः ।

सुवीराणामिमे सौवीरा ॥ १ ॥ कुं पृथ्वीं मलन्ते कुमालका ॥ २ ॥

प्रत्यग्रथास्त्वहिच्छत्रा

प्रत्यग् रथा अत्र प्रत्यग्रथा ॥१॥ अहिच्छत्रमस्त्येषु अहिच्छत्रा, अभ्रादि त्वाद् अ ॥ १ ॥

कीकटा मगधाह्वया ॥ २६ ॥

कच्यन्ते कीकटा "कपटकीकट" ॥ (उणा-१४४) ॥ इत्यटे निपात्यते ॥१॥ मह्यन्ति मगधा "महेर्मलुक् च" ॥ (उणा-२५१) ॥ इत्यधः ॥२॥२६॥

ओण्ड्रा केरलपर्याया

"ओणृ अपनयने" ओणन्ति ओण्ड्रा, "सुरासुर" ॥ (उणा-२९९) ॥ इति रे निपात्यते ॥ १ ॥ किरन्ति केरला, "मुरलोरल-" ॥ (उणा-४७४) ॥ इत्यले निपात्यते ॥ २ ॥,

कुन्तला उपहालका ।

कनन्ति कुन्तला "मुरलो-" ॥ (उणा-४७४) ॥ इत्यले निपात्यते ॥ १ ॥ उप समीपे हालः येषामुपहालका । अत्र प्राग्ज्योतिष-मालव-चेदि-वङ्गाऽङ्ग मगधाः प्राच्या मरव सात्वाश्च प्रतीच्या जालन्धर-तायिक कश्मीर-बाल्हीक

वाल्हिक तुरुष्क काम्बोज-कम्बोज-सौवीर प्रत्यग्रथा सदाख्या , औण्ड्राः कुन्तलाश्च अपाख्या इति ॥ २ ॥

ग्रामस्तु वसथः स नि प्रति पर्यु-पत पर ॥ २७ ॥

ग्रस्यते कुष्ठैरिति ग्राम , "ग्रसिह्वाग्म्यां ग्रामिह्वौ च" ॥ ( उणा–३३९ ) ॥ इति म ॥ १ ॥ समाविश्य परो वसथ सवसति सवसथ ॥ २ ॥ एव निवसथ ॥ ३ ॥ प्रतिवसथ ॥४॥ परिवसथ ॥५॥ उपवसथ , "उपसर्गाद् वस" ॥ ( उणा–२३३ ) ॥ इसथ ॥ ६ ॥ २७ ॥

पाटकस्तु तदर्द्धे स्यात्

तस्य ग्रामस्यार्द्धे पाट्यति पाटक ॥ १ ॥

आघाटस्तु घटोऽवधि ।

अन्तोऽवसान सीमा च मर्य्यादाऽपि च सीमनि ॥ २८ ॥

आघटते अनोऽत्र आघाट ॥ १ ॥ तिष्ठन्त्यत्र घट , "घटाघाटा" ॥ (उणा–१४१) ॥ इति टे निपात्यते ॥ २ ॥ अवधीयतेऽवधि ॥ ३ ॥ अमत्यनेन अन्त ॥ ४ ॥ अवसीयतेऽनेन अवसानम् ॥ ५ ॥ सीयते बध्यते सीमा, "सेरी च वा" ॥ (उणा–३४३) ॥ इति म , मनन्तात् वा डाप् ॥६॥ विवादिनां मर्ं मरण-मासमन्तात् याति खण्डयति मर्यादा ॥ ७ ॥ स्यति विवादमिति "स्यतेरी च वा" ॥ (उणा–९१५) ॥ इति मनि आबभावे सीमा नकारान्तः स्त्रीलिङ्गस्तत्र ॥८॥२८॥

ग्रामसीमा तूपशल्य

ग्रामस्य सीमा ग्रामान्त , अस्ते निहार्थं शल्यप्रक्षेपादुपशल्यम् , उपशल्यते थाछु गम्यतेऽत्रेति वा "स्थाच्छमा ' ॥ (उणा–३५७) ॥ इति यः ॥ १ ॥

माल ग्रामान्तराऽटवी ।

मलन्ते भयमत्र मालम् स्वार्थे के मालकोऽपि पुंक्लीबलिङ्ग , ग्रामस्य अन्तरालेऽटवी ॥ १ ॥

पर्यन्तभू परिसर स्यात्

ग्रामस्य पर्यन्तेषु भूमि पर्यन्तभूः ॥१॥ परित सरन्ति सचरन्त्यत्र परिसर "पुंनाम्नि" ॥ ५।३।१३० ॥ इति घ ॥ २ ॥

कर्मान्तस्तु कर्मभूः ॥ २९ ॥

कर्मणामन्तो निष्पत्तिरत्र कर्मान्त ॥ १ ॥ कर्मार्थं भूमि कर्मभू ॥ २९ ॥

गोस्थान गोष्ठम्

भङ्ग्यं भाङ्गीनमौमीनमुम्य यव्य यवक्यवत् ।
तिल्य तैलीन माषीण माष्य भङ्गादिसम्भवम् ॥ ३३ ॥

भङ्गानां क्षेत्रं भङ्ग्यम्, "धोमाभङ्ग" ॥ ७।१।८३ ॥ इति य, पक्षे ईनञि भाङ्गीनम् ॥ १ ॥ २ ॥ उमानामौमीनम्, उम्यम् ॥ १ ॥ २ ॥ यवानां यव्यम् ॥ १ ॥ यवकानां यवक्यम्, "भवयवक-" ॥ ७।१।८१ ॥ इति ये साधु ॥ ३ ॥ तिलानां तिल्यम्, "धोमाभङ्ग" ॥७।१।८३॥ इति यः ॥ १ ॥ पक्षे ईनञि तैलीनम् ॥ २ ॥ माषाणां माषीणम्, माष्यम्, भङ्गादीनां सम्भवोऽत्र भङ्गादिसम्भवं क्षेत्रम् ॥१॥२॥ ॥३३॥

सीत्यं हल्यम्

सीतया सङ्गतं सीत्यम्, "सीतया सङ्गते" ॥ ७।१।२७ ॥ इति य ॥ १ ॥ हलस्य कर्षः क्षेत्रं कृष्यत इति कृत्वा हल्यम्, "हलस्य कर्षे" ॥ ७।१।२६ ॥ इति य ॥ २ ॥

त्रिहल्य तु त्रिसीत्यं त्रिगुणाकृतम् ।

तृतीयाकृत

त्रयाणां हलानां कर्षस्त्रिहल्यम्, ॥१॥ तिसृभिः सीताभिः सङ्गतं त्रिसीत्यम् ॥ २ ॥ त्रिगुणाक्रियते स्म त्रिगुणाकृतम्, त्रिर्विलिखितम्, "सङ्ख्यादेर्गुणात्" ॥७।२।१३६॥ इति डाच् ॥ ३ ॥ तृतीयं वारं क्रियते स्म तृतीयाकृतम्, "तीयशम्बबीजात्" ॥७।२।१३५॥ इति डाच् ॥ ४ ॥

द्विहल्याद्येवं शम्बाकृतं च तत् ॥ ३४ ॥

द्वयोर्हलयोः कर्षो द्विहल्यम्, आदिशब्दात् द्वाभ्यां सीताभ्यां सङ्गतं द्विसीत्यम्, द्विगुणाकृतम्, द्वितीयाकृतमित्यादि ॥४॥ शम्बा क्रियते स्म शम्बाकृतं अनुलोमकृष्टम्, पुनस्तिर्यक् कृष्यते स्म, "तीयशम्बबीजात्" ॥७।२।१३५॥ इति डाच् ॥५॥ ॥ ३४ ॥

बीजाकृत तूप्तकृष्टे

१ अबीजं सबीजं बीजसपर्शं बीजाकृतम्, "तीयशम्बबीजात्" ॥७।२।१३५॥ इति डाच् ॥ १ ॥ आदावुप्तं पश्चाद् बीजैः सह कृष्टं उप्तकृष्टम्, "पूर्वकाले-" ॥३।१।९७॥ इति कर्मधारयः ॥ २ ॥

द्रौणिकाऽऽढकिकादयः ।

१ स्युर्द्रोणाढकवापादौ

द्रोणस्य आढकस्य च वापो द्रौणिक-, आढकिक-, "तस्य वापः" ॥५।१।४५॥ इतीकञ् । आदिशब्दात् खार्या वापः खारीक इत्यादयः, उप्यतेऽस्मिन् इति वापः क्षेत्रम्, द्रोणाढकयोर्वापो द्रोणाढकवापः, आदिशब्दात् द्रोणं पचति सम्भवति अवहरति द्रौणिकः कटाह इत्यादयः ॥ १ ॥ १ ॥

खलधानं पुनः खलम् ॥ ३५ ॥

खलन्ति सञ्चीयमानानि धान्यानि अत्र खलधानम्, पृषोदरादित्वात् ॥ १ ॥ खलन्ते सञ्चीयन्ते धान्यानि अत्र खलं त्रिलिङ्गः, "गोचरसंचर" ॥ ५।३।१३१ ॥ इति निपातनात् घः ॥ २ ॥ ३५ ॥

चूर्णे क्षोदः

चूर्ण्यते स्म चूर्णं पुंनपुंसकलिङ्गं, द्वय ॥ १ ॥ क्षुद्यते क्षोदः धूलिप्रायोऽयम्, यद् [illegible] – 'चूर्णानि वासयोगाः स्युश्चूर्णो धूलिः सशर्करः' इति ॥ २ ॥

अथ रजसि स्युः धूलीपांशुरेणवः ।

रज्यते अनेनानेन रजः क्लीबलिङ्गं, "मिथिरञ्जि" ॥ ( उणा–६७१ ) ॥ इति किरच्, तत्र ॥१॥ धूयते धूलिः स्त्रीलिङ्गः, "धूमूभ्यां" ॥ (उणा–७०१) ॥ इति क्लिच्, ङ्यां धूली ॥ २ ॥ 'पशुम् नाशने दन्त्यान्तः' पंसयति पांशुः पुंलिङ्गः, "पंसेर्दीर्घश्च" ॥ ( उणा–७१८ ) ॥ इत्युः ॥ ३ ॥ रीयते रेणुः स्त्रीलिङ्गः, "अजिस्था" ॥ ( उणा–७६८ ) ॥ इति णुः ॥ ४ ॥

लोष्टे लोष्टुर्दलिर्लेष्टु

लुप्यते लोष्टः पत्-अत्र पुंनपुंसकलिङ्गः, "लुपेः" ॥ ( उणा–१३८ ) ॥ तत्र ॥ १ ॥ 'लोष्टि संघाते' लोष्ट्यते लोष्टुः पुंलिङ्गः, "सितनि" ॥ ( उणा–७१६ ) ॥ इत्युः ॥ २ ॥ दलयति दलिः स्त्रीलिङ्गः "खरेभ्य इः" ॥ ( उणा–६०६ ) ॥ ३ ॥ लिश्यते लेष्टुः पुंलिङ्गः, "कृसिकम्य" ॥ ( उणा–७७३ ) ॥ इति बहुवचनात् तुन् ॥ ४ ॥

वल्मीकः कृमिपर्वतः ॥ ३६ ॥

वम्रीकूटं वामलूरो नाकुः शक्रशिरश्च सः ।

वलन्ते प्राणिनोऽत्र वल्मीकः पुंनपुंसकलिङ्गः, 'सृणीकास्तीक-" ॥ (उणा–५०) इतीके निपात्यते ॥१॥ कृमीणां पर्वत इव कृमिपर्वतः ॥२॥ ३६ ॥ वम्रीणामुपदेहिकानां कूटं शिखरं वम्रीकूटम् ॥ ३ ॥ वामं वामेन लूयते वामलूरः "सिन्दूर" ॥ ( उणा–४३० ) ॥ इत्यूरे निपात्यते ॥ ४ ॥ नमति नाकुः पुंलिङ्गः "नमेर्नो-कश्च" ॥ (उणा–७२०) ॥ इत्युः ॥ ५ ॥ शक्रस्य शिरो मूर्धा शक्रशिरः ॥६॥

नगरी पूः पूरी द्रङ्गः पत्तनं पुटभेदनम् ॥ ३७ ॥
निवेशनमधिष्ठानं स्थानीयं निगमोऽपि च ।

नश्यन्त्यस्यां नगरी ओङीबालिङ्ग, "अठर"॥ (उणा–४०३) ॥ इत्यरे निपात्यते, नगो सन्त्यस्यामिति वा मध्वादित्वाद् र ॥१॥ पूर्यते पूः, सम्पदादित्वात् क्विप् ॥ २ ॥ पुरति पुरी त्रिलिङ्ग ॥ ३ ॥ द्रमन्त्यत्रेति द्रङ्गः, "द्रमो गिद् वा"॥ (उणा–९५) ॥ इति गः ॥ ४ ॥ पतन्त्यस्मिन् पत्तनम्, "वीपति" ॥ (उणा–२९०) ॥ इति तन, पट्टनमपि ॥५॥ पुटा भाण्डवासनानि भिद्यन्तेऽत्र पुटभेदनम्॥६॥३७॥ निविशन्तेऽत्र निवेशनम् ॥ ७ ॥ अधितिष्ठन्त्यस्मिन्नधिष्ठानम् ॥ ८ ॥ तिष्ठन्त्यस्मिन् स्थानीयम्, "बहुलम्" ॥ ५ । १ । २ ॥ इत्यधिकरणेऽप्यनीयः ॥ ९ ॥ नियतं गच्छन्त्यत्र निगमः, "गोचरसञ्चर" ॥ ५।३।१३१ ॥ इति घ, व्याचस्पतिस्तु—

"स्यात् स्थानीयं स्वस्तिकम्बो ग्रामो ग्रामशताष्टके ।
तदर्द्धे तु द्रोणमुखं तच्च कर्पटमस्त्रियाम्" ॥ १ ॥
कर्पटार्द्धे कर्बुटिकं स्यात्तदर्द्धे तु कार्वटम् ।
तदर्द्धे पत्तनं तच्च पत्तनं पुटभेदनम् ॥ २ ॥
निगमस्तु पत्तनार्द्धे तदर्द्धे तु निवेशनम् ।
कर्वटाधमो द्रङ्गः पत्तनादुत्तमश्च सः ॥ ३ ॥
"जनाश्रयं निवेशश्च स एव द्रङ्ग इत्यपि ।" इति विशेषमाह ॥ १० ॥

शाखापुरं तूपपुरम्

शाखा समीपवर्ति पुरं शाखापुरम्, यदाह–
"शाखा वेदविभागे स्याद् पादपाद्यन्तिकेऽपि च" ।
उप समीपे पुरस्य मूलनगरस्य उपपुरम् ॥ १ ॥

खेटः पुरार्द्धविस्तरः ॥ ३८ ॥

खिटयते खेटः, पुरस्यार्द्धं विस्तरोऽस्य पुरार्द्धविस्तरः ॥ १ ॥ ३८ ॥

स्कन्धावारो राजधानी

षण्णाममात्यादीनां प्रधानभूतत्वाद् राजा स्कन्धस्तमावृणोति स्कन्धावारः ॥ १ ॥ राजा नृपो धीयतेऽस्यां राजधानी स्त्रीक्लीबलिङ्गः ॥ २ ॥

कोट्टदुर्गे पुनः समे ।

कुट्यते कोटः पुंक्लीबलिङ्ग, पृषोदरादित्वाद् गुणः ॥ १ ॥ दुःखेन गम्यतेऽस्मिन् दुर्गम्, "सुगदुर्गमाधारे" ॥५।१।१३२॥ इति साधु ॥ २ ॥

---

१ मुक्ता इत्यर्थ –

गया पूर्गयराज्ये

गच्छन्ति अस्यां गया, 'गयहृदया'॥ (उणा–३७०)॥ इत्ययं निपात्यते॥१॥

कन्यकुब्जं महोदयम् ॥ ३९ ॥

कन्याकुब्जं गाधिपुरं कौशं कुशस्थलं च तत् ।

कन्या कुब्जा अत्र कन्यकुब्जम्, तत्र हि जमदग्निना शापेन नरपतेः कन्या कुब्जीकृता इति प्रसिद्धिः, 'ङ्यापो बहुलम्' ॥ २।४।९९ ॥ इति ह्रस्व ह्रस्वस्य ऽभावे कन्याकुब्जम् ॥१॥२॥ महान् उदयोऽस्य महोदयम्, एते त्रयः क्लीबलिङ्गाः ॥३॥३९॥ गाधे राज्ञः पुर गाधिपुरम्॥४॥कुशाः सन्ति अत्र कौशम्, चातुरर्थिकोऽण् ॥५॥ कुशानां स्थल कुशस्थलम् ॥ ६ ॥

काशिर्वराणसी वाराणसी शिवपुरी च सा ॥ ४० ॥

काशते काशि स्त्रीलिङ्गः ' पदिपठि " ॥ ( उणा–६०७ ) ॥ इति इ ॥ १ ॥ वाराणसीशब्दस्य पृषोदरादित्वात् ह्रस्वत्वे वराणसी ॥२॥ वरणा च असिश्च वरणासी नद्यौ तयोरदूरभवा चातुरर्थिकोऽण् ' इद्धि' सरेण्यादेः " ॥७।४।१॥ इति वृद्धौ रेफाऽकारस्य पृषोदरादित्वाद् दीर्घत्वे णकाराऽऽकारस्य ह्रस्वत्वे च क्यां वाराणसी यद्वा इण्यते "सुनुपा "॥ (उणा–२७८)॥इत्यनेन वराणो वीरणाभिधानम्, वराणा सन्त्यत्र वराणसा नदी 'तुणादे' सद्' ॥६।२।८१॥ इति चातुरर्थिक. सत् तस्या अदूर भवेति वा देशो वा वराणसस्तत्र भवा वा, वारयितीति वा गोपादेरनेरसिः ॥ ( उणा–७०८ ) ॥ इत्यसिप्रत्ययो ङी ॥३॥ शिवस्य पुरी शिवपुरी ॥४॥४०॥

साकेत कोसलाऽयोध्या

सा लक्ष्मी क सुख ताभ्यामित साकेतम् ॥ १ ॥ कोसलदेशयोगात् कोसला ॥ २ ॥ न योध्यते परैरयोध्या ॥ ३ ॥

विदेहा मिथिला समे ।

विदिह्यते विदेहा ॥ १ ॥ मिथ्यते मिथिला, ' मुपिमिथि " ॥ ( उणा–४८३ ) ॥ इति किदिलः ॥ २ ॥

त्रिपुरी चेदिनगरी

तृतीया पुरी त्रिपुरी मयूरव्यंसकादित्वात्, त्रयाणां पुराणां समाहारो वा वा स्यकारवचनात् स्त्रीत्वम् ॥ १ ॥ चेदीनां नगरी चेदिनगरी ॥ २ ॥

कौशाम्बी वत्सपत्तनम् ॥ ४१ ॥

कुशाम्बेन निर्वृत्ता कौशाम्बी चातुरर्थिकोऽण् ॥ १ ॥ वत्सराजस्य वत्सदेशे वा पत्तनं वत्सपत्तनम् ॥ २ ॥ ४१ ॥

उज्जयनी स्याद् विशालाऽवन्ती पुष्पकरण्डिनी ।

उत्कर्षेण जयति उज्जयनी रम्यादित्वात् अनट्, अन्ये तु उज्जयनी नाम राक्षसी देवता वा तस्या निवास उज्जयनीति चातुरर्थिकमणमुत्पाद्य तस्य लोपमिच्छन्ति ॥१॥ विशेषेण शालते विशाला, विशिष्टाः शाला अत्रेति वा, विस्तीर्णत्वाद् वा॥२॥ अव्यतेऽवन्ती ॥३॥ पुष्पकरण्ड नामोद्यानम्, तदत्रास्ति पुष्पकरण्डिनी । यद्व्याडि –

"उज्जयन्यां यदुद्यानं तत् स्यात् पुष्पकरण्डकम्" इति ॥ ४ ॥

पाटलिपुत्रं कुसुमपुरं

पाटलिभिः पुनाति पाटलिपुत्रम्," पुत्रादयः " ॥ ( उणा–४५५ ) ॥ इति निपात्यते ॥ १ ॥ कुसुमबहुलं पुरं कुसुमपुरम् ॥ २ ॥

चम्पा तु मालिनी ॥ ४२ ॥

लोमपादकर्णयोः पूः

चणन्ति अस्यां चम्पा, " मापाचमि " ॥ (उणा–२९६) ॥ इति पः ॥१॥ मालाः सन्त्यस्यां मालिनी ॥ २ ॥ ४२ ॥ लोमपादो राजर्षिः, कर्णः कौन्तेयः तयोः पूः लोमपादपूरी ॥ ३ ॥ कर्णपूरी ॥ ४ ॥

देवीकोटं उमावनम् ।

कोटिवर्षं बाणपुरं स्यात् शोणितपुरं च तत् ॥ ४३ ॥

देव्याः कोटः कौटिल्यमत्र देवीकोटः ॥ १ ॥ उमाया वनमुमावनम् ॥ २ ॥ कोटिभिर्वर्षति कोटिवर्षम् ॥ ३ ॥ बाणाऽसुरस्य पुरं बाणपुरम् ॥ ४ ॥ शोणितलिप्तं पुरं शोणितपुरम् ॥ ५ ॥ ४३ ॥

मथुरा तु मधूपघ्नं मधुरा

मथति चित्तं मथुरा, " खर्जुरादयः " ॥ ( उणा–४२३ ) ॥ इत्युरः, मथुरा वा पिशाच्या अपूरमनं नगरमित्यन्ये ॥ १ ॥ मधोर्दानवस्य उपघ्न आश्रयोऽत्र मधूपघ्नम् ॥ २ ॥ मधुना राजते मधुरा, मधुरमिष्टिसोऽस्या अस्तीति वा मध्वादित्वाद् रः ॥ ३ ॥

अथ गजाह्वयम् ।

स्याद् हास्तिनपुरं हस्तिनीपुरं हस्तिनापुरम् ॥ ४४ ॥

गजस्याह्वयोऽस्य गजाह्वयम्, यद्भारते–"नगरे नागसाह्वये" इति, "तेन गजपुरं नाम नगरम्, इत्यादि ॥१॥ हस्तिन्या इदं हास्तिनं तच्च तत्पुरं च हास्तिनपुरम् ॥२॥ हस्तिन्या पुरं हस्तिनीपुरम् ॥ ३ ॥ पृषोदरादित्वाद् आत्वे हस्तिनापुरम् ॥ ४॥४४॥

सामलिप्त दामलिप्त सामलिप्ती तमालिनी ।

स्तम्बपूर्विष्णुगृहं च स्यात्

ताम्यद्भिर्लिप्यते तामलिप्तम् तामलिप्ती पृषोदरादित्वात् ॥१॥२॥ दामभि र्लिप्यते छाद्यते दामलिप्तम् ॥३॥ तमाला सन्त्यस्यां तमालिनी ॥४॥ स्तम्बगघ्ना पूः स्तम्बपू, समासान्तविधेरनित्यत्वात् अदभाव ॥५॥ विष्णोर्गृहं विष्णुगृहम् ॥६॥

विदर्भा तु कुण्डिनम् ॥ ४५ ॥

विशिष्टो दर्भ सदर्भः कुशो यास्यां विदर्भा ॥१॥ कुण्ड्यते पापमत्र कुण्डिनम्, 'पाकडि' ॥ (उणा-२८२)॥ इतीन, कुण्डिनपुरम्, कुण्डिनापुरमित्यपि॥२॥४५॥

द्वारवती द्वारका स्यात्

द्वाराणि सन्ति अस्यां द्वारवती ॥१॥ द्वारे कायति द्वारका, द्वरतीति वा गके क्षिपकादित्वात् इत्वाभाव ॥ २ ॥

निषधा तु नलस्य पूः ।

निषरा सन्ति कर्मोणि अस्यां निषधा, 'ने सतेरघ्' ॥ (उणा-२५१) ॥ इत्यघ् ॥ १ ॥

प्राकारो वरण साले

प्रकुर्वन्ति तमिति प्राकार, " घञ्युपसर्गस्य " ॥ ३।२।८६ ॥ इति दीर्घ ॥ १ ॥ वृणोति वरणः 'वृञ्' ॥ ( उणा-१८७ ) ॥ इत्यन ॥ २ ॥ सल्यते सालस्त्वत्र ॥ ३ ॥

चयो वप्रोऽस्य पीठम् ॥ ४६ ॥

अस्य प्राकारस्य पीठमूर्मूलभूमिः चीयते चयः प्राकाराऽऽधारः ॥१॥ उप्यते-ऽत्र इति वप्रः पुक्लीबलिङ्ग, 'भीवृधि' ॥ (उणा-३८७) ॥ इति रः ॥२॥४६॥

प्राकाराग्रं कपिशीर्षं

प्राकारस्याग्र प्राकाराग्रम् ॥१॥ कपेरिव शीर्षमस्य कपिशीर्षम् ॥२॥

क्षौमाऽट्टाऽट्टालका समा ।

क्षुवन्ति शब्दायन्ते योधा अत्र क्षौमम्, 'स्यमभीष्म' ॥ (उणा-३४६) ॥ इति मे निपात्यते ॥ १ ॥ अति हिंसाऽतिक्रमयो अ इत्येऽत्र अट्ट, पुक्लीबलिङ्गो ॥ २ ॥ "वातास-" ॥ (उणा-४८०) ॥ इत्यालके नि पातनात् अट्टालक, केऽट्टालकः प्राकाराग्रे रथ्यागृहम् ॥ ३ ॥

पूर्द्वारे गोपुरं

पुरो द्वारं पूद्वार तत्र ॥ १ ॥ गोप्यते गोपुरम्, " श्रु " ॥ (उणा–४२६) ॥ इति उरे निपात्यते ॥ २ ॥

रथ्याप्रतोलीविशिखा समा ॥४७॥

रथान् महति रथ्या, "वहति रथ" ॥७।१।२॥ इति य ॥ १ ॥ प्रतोल्यते प्रतोली ॥ २ ॥ विशायते जनसमर्देन विशिखा " इयतेरिख वा " ॥ (उणा–८५) ॥ इति ख, विगता शिखा मुण्डितेव समत्वादिति वा ॥३॥४७॥

परिकूट हस्तिनखो नगरद्वारकूटके ।

परित कूट्यते परिकूट पुक्लीबलिङ्ग ॥ १ ॥ हस्तिनख इव हस्तिनख दुर्गं द्वारावसरणार्थं क्रमनिम्नो मृत्कूटोऽपसोपानाख्य बहिरतटमन्त्वः सोपानयुक्त पुद्धाय मिलेके ॥ २ ॥ नगरद्वारे कूटो नगरद्वारकूटस्तत्र ॥ ३ ॥

मुख नि सरणे

गृहादेर्निःस्रियते प्रविश्यते च येन तत् मुखमिव मुखम्, यत् कौटिल्य – "मुखसम सक्रमः" इति ॥ १ ॥ नि स्रियतेऽनेन नि सरण तत्र ॥ २ ॥

वाटे प्राचीनाऽऽवेष्टकौ वृति ॥ ४८ ॥

वट्यतेऽनेन वाट त्रिलिङ्गस्तत्र ॥ १ ॥ प्रागेव प्राचीनम्, "अदिक्स्त्रियां" ॥ ७।१।१०७ ॥ इतीन ॥ २ ॥ आवेष्ट्यते आवेष्टक ॥ ३ ॥ व्रियतेऽनया वृति ॥ ४ ॥ ४८ ॥

पदव्येकपदी पद्या पद्धतिर्वर्त्म वर्त्तनी ।

अयन सरणिर्मार्गोऽध्वा पन्था निगम सृति ॥ ४९ ॥

पद्यन्तेऽनया पदवि "छविछिवि" ॥ (उणा–७०६) ॥ इति वा निपात्यते ङ्यां पदवी ॥ १ ॥ एकः पादोऽस्यामेकपदी कुम्भपद्यादित्वात् साधु ॥ २ ॥ पदमस्या इत्म पद्या "हयपद-" ॥ ७।१।११ ॥ इति यः ॥ ३ ॥ पादाभ्यां हन्यते पद्धति, हिमहति ' ॥ ३।२।९६ ॥ इति पदादेशः ॥ ४ ॥ वर्तन्तेऽनेन वर्त्म क्लीबलिङ्ग, ' मन् ' ॥ (उणा–९११) ॥ इति मन् ॥ ५ ॥ सदिवृति " ॥ (उणा–६८०) ॥ इति अनौ वर्तनि, ङ्यां वर्त्तनी ॥६॥ अयन्तेऽनेन अयनम् ॥७॥ सरन्ति अस्यां सरणि स्त्रीलिङ्ग, ' ... " ॥ (उणा–६३८) ॥ इसणि ॥ ८ ॥ मार्गन्ति अनेन मार्गः, म्रियन्तेऽस्मिन्निति वा, ' ... " ॥ (उणा–९१) ॥ इति गे निपात्यते ॥९॥ अतन्ति अत्र पान्था अध्वा "अतेध्वन्" ॥ (उणा–९०९) ॥ इति ध्वनिप् ॥१०॥ पथन्ति अस्मिन् पन्था पुलिङ्गो, ' पथिमथिभ्याम् "॥(उणा–९९६)॥ इतीन् ॥११॥ निगच्छन्ति अनेन निगम ॥१२॥ सरन्ति अनया सृतिः ॥१३॥४९॥

सत्पथे सतित पन्था

सश्चासौ पन्थाश्च सत्पथस्तत्र ॥ १ ॥ स्वतिपूजाभ्यां परः पन्था, पूजित पन्थाः सुपन्था , पूजितः पन्थाः अतिपन्था , पूजायाम् प्राक् टात् ' ॥ ७।३।७२ ॥ इति समासान्तनिषेधः ॥ २ ॥ ३ ॥

अपन्था अपथ समे ।

न पन्था अपन्थाः, "नञ्तत्पुरुषात्" ॥७।३।७१॥ इति समासान्तनिषेधः ॥१॥ नैमो निर्दिष्टस्य अनित्यत्वात् समासान्ते सति अपथम्, ' पथः सङ्ख्याऽव्ययोत्तरः '¹। (हैमलिङ्गानु० नपुं० श्लो–८) ॥ इति क्लीबत्वम् , पथोऽस्याय इति अव्ययीभावो वा॥२॥

व्यध्वो दुरध्व कदध्वा विपथं कापथ च स ॥ ५० ॥

विरुद्धोऽध्वा व्यध्वः ॥१॥ दुष्टोऽध्वा दुरध्व , 'उपसर्गादध्वन ' ॥७।३।७९॥ इत्यत्समासान्त ॥ २ ॥ कुत्सितोऽध्वा कदध्वा ॥३॥ विरुद्धः पन्था विपथम् ॥४॥ कुत्सित पन्था कापथम् 'काक्षपथो " ॥३।२।१३४॥ इति कादेशः,' पथ सङ्ख्या अव्ययोत्तर '१॥( हैमलिङ्गानु० नपुं० श्लो–८)॥ इति क्लीबत्वम् । अमरस्तु– विपथकापथस्थौ पुस्याह गौडश्च यथाह– "व्यध्वो विपथकापथौ" इति ॥ ५ ॥ ५० ॥

प्रान्तरं दूरशून्योऽध्वा

प्रगता अन्तरेऽस्मात् प्रान्तरं दूरशून्या मार्गः ॥ १ ॥

कान्तारो वर्त्म दुर्गमम् ।

कम्यते कान्तार पुंक्लीबलिङ्ग , 'कारण्यकार ' ॥ ( उणा–४११) ॥ इत्यारे निपात्यते, कस्य अम्भसोऽन्तमियर्तीति वा ॥ १ ॥

सुरुङ्गा तु सन्धिला स्याद् गूढमार्गो भुवोऽन्तरे ॥ ५१ ॥

सरत्यनया सुरुङ्गा 'सर्तेः सुच ॥ ( उणा–१०८ ) ॥ इत्युङ्ग ॥ १ ॥ सन्धि लाति सन्धिला, सन्धिरपि भूमिमध्ये गूढोमार्गः ॥ २ ॥ ५१ ॥

चतुष्पथे तु संस्थान चतुष्क

चतुर्णां पथां समाहारश्चतुष्पथ तत्र ॥ १ ॥ सतिष्ठतेऽत्र संस्थानम् ॥ २ ॥ चत्वारोऽध्वानो अस्य चतुष्कम् ॥ ३ ॥

त्रिपथे त्रिकम् ।

त्रयाणां पथां समाहारस्त्रिपथं तत्र ॥ १ ॥ त्रयोऽध्वानो अस्य त्रिकम् ॥२॥

द्विपथं तु च्चारपथ

द्वौ पन्थानौ समाहृतौ द्विपथम् ॥ १ ॥ चारस्य पन्थाश्चारपथ ॥ २ ॥

---

१ ' समासान्ता ऽऽगम संज्ञा ज्ञापक-गण नञ्निर्दिष्टानि अनित्यानि ' ॥ ( न्यायमञ्जूषा–न्या–३५ ) ॥ इति परिभाषया ।

२ सङ्ख्याव्ययाभ्यां परः पथशब्दः क्लीबलिङ्ग", इति भाव ।

गजाद्यध्वा त्वसङ्कुल ॥ ५२ ॥
घण्टापथ संसरण श्रीपथो राजवर्त्म च ।
उपनिष्क्रमण चोपनिष्कर च महापथ ॥ ५३ ॥

असङ्कुलो गजादीनां मार्गः ॥ १ ॥ ५२ ॥ घण्टोपलक्षितानां हस्तिनां पन्थाः घण्टापथः, चाणाक्योक्तोऽष्टदण्डपृथु पन्था ॥२॥ सम्यक् सरन्त्यत्र संसरणम् ॥३॥ श्रिया उपलक्षित पन्था श्रीपथः ॥ ४ ॥ राजयोग्य वर्त्म राजवर्त्म ॥ ५ ॥ उपनिष्क्रम्यतेऽस्मिन् उपनिष्क्रमणम् ॥ ६ ॥ उपनिष्कीर्यते सैन्यमस्मिन् उपनिष्करम् ॥ ७ ॥ महांश्चासौ पन्थाश्च महापथः ॥ ८ ॥ ५३ ॥

विपणिस्तु वणिग्मार्गः

विपण्यन्तेऽस्यां विपणिः स्त्रीलिङ्गः, "पदिपठि-" ॥ ( उणा–६०७ ) ॥ इ ॥ १ ॥ वणिजां मार्गो वणिग्मार्गः पण्यवीथ्यपि ॥ २ ॥

स्थानं तु पदमास्पदम् ।

तिष्ठन्त्यस्मिन् स्थानम् ॥१॥ पद्यतेऽस्मिन् पदम्, "पदोऽयम् क्लीबे" ॥५।३।२९॥ इत्यल् ॥ २ ॥ आ समन्तात् पदमास्पदं वर्चस्कादित्वात् साधु ॥ ३ ॥

श्लेषस्त्रिमार्ग्याः शृङ्गाटः

त्रयाणां मार्गाणां श्लेषो मेलनं श्रीयते तदिति शृङ्गाटम्, "कपाटविराट" ॥ ( उणा–१४८ ) ॥ इत्याटे निपात्यते, शृङ्गैरटन्ति अस्मिन्निति वा, शृङ्गाटवद् मार्गो त्रिकोणत्वाद् वा ॥ १ ॥

बहुमार्गी तु चत्वरम् ॥ ५४ ॥

बहवो मार्गाः समाहृताः बहुमार्गी ॥ १ ॥ चत्यते चत्वरम्, "कृगृशृ" ॥ ( उणा–४४१ ) ॥ इति वरट् ॥ २ ॥ ५४ ॥

श्मशानं करवीरं स्यात् पितृप्रेतात् वनं गृहम् ।

शवानां शयनं श्मशानम्, पृषोदरादित्वात् ॥ १ ॥ करैर्वीरयन्तेऽत्र करवीरम् ॥ २ ॥ पितृप्रेतादिति समाहारद्वन्द्वो यथासंख्यानिवृत्त्यर्थं तेन पितृप्रेतशब्दाभ्यां परं वन गृह च, पितृणां वनं गृहं च पितृवनं पितृगृहम् ॥ ३ ॥ ४ ॥ एवं प्रेतवनम् ॥ ५ ॥ प्रेतगृहम् ॥ ६ ॥

गेहभूर्वास्तु

गेहाय भूमिर्गेहभूः ॥१॥ वसन्त्यत्र वास्तु पुंस्क्लीबलिङ्गः, " वसेर्णिद् वा " ॥ ( उणा–७७४ ) ॥ इति तुन् ॥ २ ॥

गेह तु गृहं वेश्म निकेतनम् ॥ ५५ ॥
मन्दिर सदन सद्म निकाय्यो भवन कुट ।
आलयो निलय शाला सभोदवसित कुलम् ॥ ५६ ॥
धिष्ण्यमावसथ स्थानं पस्त्य संस्त्याय आश्रय ।
ओको निवास आवासो वसति शरण क्षय ॥ ५७ ॥
धामाऽगारं निशान्तं च

केवन्ति निवसन्ति अत्र गेहम्, 'कितो गे च" ॥ (उणा-५८७) ॥ इति ह ॥ १ ॥ गृह्णाति पुरुषोपार्जितं द्रव्यमिति गृहम्, गेहे कः ॥ ५।१।५५ ॥ इति कः, पुंस्त्रीक्लीबलिङ्गोऽयं ॥२॥ विशन्ति अस्मिन्निति वेश्म क्लीबलिङ्गः, मन् '॥ ( उणा-५११ ) ॥ इति मन् ॥ ३ ॥ निकेतन्त्यत्र निकेतनम् ॥ ४ ॥ ५५ ॥ मन्यते स्तूयतेऽत्र मन्दिरं स्त्रीक्लीबलिङ्ग, " मन्दिमन्दि " ॥ (उणा-४१२) ॥ इतीरः ॥ ५ ॥ सीदन्त्यस्मिन् सदनम् ॥ ६ ॥ मन्' ॥ ( उणा-५११ ) ॥ इति मनि सद्म क्लीबलिङ्गः ॥७॥ नितरां चीयते निकाय्य, पाय्यापाय्य' ॥५।१।२४॥ इति ण्यणि निपात्यते ॥ ८ ॥ भवन्त्यस्मिन् भवनं पुंक्लीबलिङ्ग ॥ ९ ॥ कुट्यते ऽस्मिन् कुटः स्त्रीपुंसलिङ्ग ॥ १० ॥ आलीयन्तेऽस्मिन्नालयः ॥ ११ ॥ एवं निलय ॥ १२ ॥ शायते शाला, शामाश्या ' ॥ ( उणा-४६२ ) ॥ इति ल शालते वा सभ्यन्तेऽस्यां वा ॥ १३ ॥ सह भान्त्यस्यां सभा ॥ १४ ॥ उदवसिनोति स्मोदवसितम्, कर्मण्यवसीयते वा ॥१५॥ कोकन्ति अत्र कुलम्, स्थादित्वात् कः ॥१६॥ ॥ ५६ ॥ धृष्णुवन्त्यस्मिन् धिष्ण्यम् 'धिष्ण्याश्याख्या " ॥ ( उणा-३६४ ) ॥ इति ये निपात्यते ॥१७॥ आवसन्ति अस्मिन्नावसथ "उपसर्गे वस ॥(उणा-२२२) ॥ इत्यथः ॥ १८ ॥ तिष्ठन्त्यत्र स्थानम् ॥ १९ ॥ 'पसि निवासे ' सौत्रो धस्मा न्त, पसन्त्यस्मिन् पस्त्यम्, ' स्थलीपथि " ॥ (उणा-३६०) ॥ इति तकारादि र्यः, अपस्त्यायति संघातीभवतीति वा पृषोदरादित्वात् ॥ २० ॥ संस्त्यायन्त्यत्र संस्त्याय ॥ २१ ॥ आश्रयन्त्येनमाश्रयः ॥२२॥ उच्यन्त्यस्मिन् ओकः क्लीबलिङ्गः " उच्यतेः कश्च ' ॥ ( उणा-६६५ ) ॥ इत्यसु ॥ २३ ॥ निवसन्त्यस्मिन्निवासः ॥२४॥ एवमावास ॥२५॥ वसन्त्यस्यां वसतिः स्त्रीलिङ्गः, "वस्यति ' ॥ ( उणा-६५२ ) ॥ इत्यति ॥ २६ ॥ शीर्यते शीतातपमेन शरणम् ॥ २७ ॥ क्षियन्त्यत्र क्षयः ॥ २८ ॥ ५७ ॥ दधात्यस्मिन्नाश्रयं धाम क्लीबलिङ्ग, " मन् " ॥ ( उणा-५११ ) ॥ इति मन्, ' अर्तीरि ' ॥ ( उणा-२३८ ) ॥ इति मे धाम मपि ॥ २९ ॥ अज्यतेऽस्मिन्नगारम् ' अग्यति ॥ ( उणा-४०५ ) ॥ इत्यारः अगाम् वृक्षानित्यर्ति वा ॥ ३० ॥ निशाम्यन्त्यस्मिन्निशान्तम्, ' अपवाधापारे " ॥५।१।१२॥ इति क्त निशाया अन्तोऽत्रेति केचित् ॥३१॥

कुट्टिम त्वस्य बद्धमू ।

अस्य गृहस्य पाषाणादिभिर्बद्धा भूमि , कुट्ट्यते कुट्टिम पुङ्क्लीबलिङ्ग , "कुट्टि घदि" ॥ (उणा–२४९) ॥ इतीम ॥ १ ॥

चतु शाल सजवन

चतस्र शालाः समाहृताश्चतु शालम् ॥ १ ॥ सजयन्तेऽत्र सजवनम् ॥ २ ॥

सौध तु नृपमन्दिरम् ॥ ५८ ॥

सुधया धवलीकृत सौध पुङ्क्लीबलिङ्गः ॥ १ ॥ ५८ ॥

उपकारिकोपकार्या

उपकरोत्युपकारिका ॥ १ ॥ उपक्रियते उपकार्या, उपकर्याऽपि, पटमण्डपादि राजसदनम् ॥ २ ॥

सिंहद्वार प्रवेशनम् ।

सिंहस्येव द्वारं सिंहद्वारम् ॥ १ ॥ प्रविश्यतेऽनेन प्रवेशनम् ॥ २ ॥

प्रासादो देवभूपानां

गृहमित्युत्तरतः सबध्यते प्रसीदन्ति नयन-मनांस्यस्मिन्निति प्रासाद , "घञ्यु पसर्गस्य" ॥ ३।२।८६ ॥ इति दीर्घः, प्रसादनोऽपि ॥ १ ॥

हर्म्यं तु धनिनां गृहम् ॥ ५९ ॥

हरति मनो हर्म्यम्, "शिक्यास्याढ्य" ॥(उणा–३६४)॥ इति ये निपात्यते ॥ १ ॥ ५९ ॥

मठाऽऽवसथ्याऽऽवसथा स्युश्छात्र-व्रतिवेश्मनि ।

मठन्ति निवसन्त्यत्र मठ त्रिलिङ्गः, बाहुलकात् 'पुंनाम्नि' ॥५।३।१३०॥ इति घ ॥ १ ॥ आवसथ एव आवसथ्यम्, भेषजादित्वाद् ट्यण् ॥२॥ आवसन्त्य स्मिन्नावसथः, छात्राणां व्रतिनां च वेश्मनि ॥ ३ ॥

पर्णशालोटज

पर्णमुपलक्षण तेन पर्णतृणाद्ये शाला पर्णशाला ॥ १ ॥ वट्यते वेष्ट्यते तृणपर्णादिभिरित्युटजः मुनिकुटीर पुङ्क्लीबलिङ्गः, "उटजादयः" ॥ (उणा–११४) ॥ इत्यजे निपात्यते ॥ २ ॥

चैत्यविहारौ जिनसद्मनि ॥ ६० ॥

चीयते चैत्यम्, "शिक्यास्या" ॥ (उणा–३६४) ॥ इति ये साधु ॥ १ ॥

विहरन्त्यस्मिन् विहारः पुंस्त्रीबलिङ्गः अमरस्तु—"चैत्यमायतनं तुल्ये" इति, "बौद्धानां विहारोऽस्त्री" इति च चैत्यविहारौ भिन्नावाह ॥ २ ॥ ६० ॥

गर्भागारेऽपवरको वासौकः शयनास्पदम् ।

अगारस्य गर्भो गर्भागारम्, राजदन्तादित्वात् पूर्वनिपातः ॥१॥ तत्र अपवृणोति आच्छादयति अपवरकः "वृकृन्" ॥ (उणा– २७) ॥ इत्यकः ॥ २ ॥ वासाय वासमध्ये वा ओको गृहं वासौकः ॥ ३ ॥ शयनस्य शय्याया आस्पदं शयनास्पदम् ॥ ४ ॥

भाण्डागारं तु कोशः स्यात्

भाण्डस्याऽगारं भाण्डागारम् ॥ १ ॥ कुशयति भाण्डमत्र कोशः, पुंस्त्रीबलिङ्गः ॥ २ ॥

चन्द्रशाला शिरोगृहम् ॥ ६१ ॥

चन्द्रेणाऽऽदृतवर्तिना शाल्यते चन्द्रशाला ॥ १ ॥ शिरसि सौधस्य गृहं शिरोगृहम् ॥ २ ॥ ६१ ॥

कुप्यशाला तु सन्धानी

कुप्यं ताम्रादि तस्य शाला कुप्यशाला ॥ १ ॥ सन्धीयतेऽस्यां सन्धानी ॥२॥

कायमानं तृणौकसि ।

कायो मानमस्य कायमानम् ॥ १ ॥ तृणं काष्ठादेरुपलक्षणम्, तेन तृणकाष्ठादिभिः गृहस्योपरि रचितमोको लभ्यते ॥ २ ॥

होत्रीयं तु हविर्गेहं

जुहोति अस्यां होत्रा, 'हुयामा" ॥ (उणा–४५१) ॥ इति त्रः, होत्रैव होत्रीयम्, "होत्राभ्यः छः" ॥ ५।४।१६३ ॥ इति स्वार्थे छः ॥ १ ॥ हविषो होतव्यस्य गेहं हविर्गेहम् ॥ २ ॥

प्राग्वंशः प्राग्हविर्गृहात् ॥ ६२ ॥

वंशः कुलं स्थूणा वा, प्राग् वंशोऽत्र प्राग्वंशः, पत्नीशालासदसोऽभिधानमाया भावो भागः ॥ १ ॥ ६२ ॥

आथर्वणं शान्तिगृहम्

आथर्वणिकानां धर्म आम्नाय सङ्घो वा आथर्वणः "आथर्वणिकस्येकलोपश्च" ॥ ४।३।१३३ ॥ इत्यणि साधुः सोऽस्याऽस्ति आथर्वणम् अर्शआदित्वात् अः ॥ १ ॥ शान्त्यै गृहं शान्तिगृहं शान्तीगृहकमपि । यद् वाचस्पतिः—

आथर्वणं शान्तिगृहं शान्तीगृहकमप्यदः" इति ॥ २ ॥

आस्थान गृहमिन्द्रकम् ।

आस्थानाय गृहमास्थानगृहम् ॥१॥ इन्द्र कायतीव सश्रीकत्वाद् इन्द्रकम् ॥२॥

तैलिशाला यन्त्रगृहं

तैलिनः शाला तैलिशाला ॥ १ ॥ तिलनिष्पीडनयन्त्रस्य गृहम् ॥ २ ॥

अरिष्ट सूतिकागृहम् ॥ ६३ ॥

न रिष्यते हिंस्रे रक्षत्वात् अरिष्टम् ॥ १ ॥ सूतिकायै गृह सूतिकागृहम् ॥ २ ॥ ६३ ॥

सूदशाला रसवती पाकस्थान महानसम् ।

सूदानां शाला सूदशाला ॥ १ ॥ रसाः सन्त्यस्यां रसवती, रस आस्वादो ऽस्त्यस्यामिति वा ॥२॥ पाकाय स्थानं पाकस्थानम् ॥३॥ अनसा उपकरणसम्भार सर्व लभ्यते ततो महच्च तदनश्चेति महानसम्, "सरोऽनोऽश्माऽयसो जातिनाम्नोः" ॥७।३।११५॥ इत्यद् समासान्तः ॥ ४ ॥

हस्तिशाला तु चतुर

हस्तिनां शाला हस्तिशाला ॥ १ ॥ चत्यते चतुरम् ॥ २ ॥

वाजिशाला तु मन्दुरा ॥ ६४ ॥

वाजिनां शाला वाजिशाला ॥ १ ॥ मन्यते स्तूयते मन्दुरा औणादिक उरः, "वाश्यसि" ॥ (उणा-४२३) ॥ इत्युरः ॥ २ ॥ ६४ ॥

सन्दानिनी तु गोशाला

सन्दानन गोबन्धनरज्जुरस्त्यस्यां सन्दानिनी ॥१॥ गवां शाला गोशाला ॥२॥

चित्रशाला तु जालिनी ।

चित्राऽलङ्कृता शाला चित्रशाला ॥ १ ॥ जालानि सन्त्यस्यां जालिनी ॥ २ ॥

कुम्भशाला पाकपुटी

कुम्भानां पचनाय शाला कुम्भशाला ॥ १ ॥ पाकेन पुटति संश्लिष्यति पाकपुटी ॥ २ ॥

तन्तुशाला तु गर्तिका ॥ ६५ ॥

तन्तुवानाय शाला तन्तुशाला ॥ १ ॥ कुविन्दस्थितये गर्तोऽस्त्यस्यां गर्तिका, "अतोऽनेकस्वरात्" ॥ ७।२।६ ॥ इतीकः ॥ २ ॥ ६५ ॥

नापितशाला वपनी शिल्पा खरकुटी च सा ।

नापितस्य शाला नापितशाला ॥१॥ वपन्त्यस्यां वपनी ॥२॥ शिल्प विज्ञाम स्त्यस्यां शिल्पा ॥ ३ ॥ खरस्य कुटीव खरकुटी ॥ ४ ॥

आवेशनं शिल्पिशाला

आविशन्त्यस्मिन् आवेशन गृहादन्यत् कारूणां कर्मस्थानम् ॥१॥ शिल्पिनां शाला शिल्पिशाला ॥ २ ॥

सत्रशाला प्रतिश्रय ॥ ६६ ॥

सत्रं सदादान तस्य शाला सत्रशाला ॥१॥ प्रतिश्रीयते प्रतिश्रय ॥२॥६६॥

आश्रमस्तु मुनिस्थानम्

आश्राम्यन्ति तपस्यन्त्यस्मिन् आश्रम पुल्लीबलिङ्ग ॥ १ ॥

उपघ्नस्त्वन्तिकाश्रय ।

उपहन्यते समीप इति ज्ञायते उपघ्न, "निघोद्ध" ॥ ५।३।३६ ॥ इत्यत्रि निपात्यते ॥ १ ॥ अन्तिक आश्रम आश्रयोऽन्तिकाश्रयः ॥ २ ॥

प्रपा पानीयशाला स्यात्

प्रपिबन्त्यस्यां प्रपा स्यादित्यादक ॥ १ ॥ २ ॥

गञ्जा तु मदिरागृहम् ॥ ६७ ॥

गञ्जन्ति मदन्त्यस्यां क्षीबा गञ्जा ॥ १ ॥ २ ॥ ६७ ॥

पक्कण शबरावास

पच्यतेऽस्मिन् पक्कण पुल्लीबलिङ्ग, 'विक्कण-' ॥ ( उणा–१५० ) ॥ इत्यने निपात्यते ॥ १ ॥ २ ॥

घोषस्त्वाभीरपल्लिका ।

घोषन्ति गावोऽत्रेति घोषः ॥ १ ॥ आभीराणां गोपानां पल्लिरल्पग्रामी आभीरपल्लिका 'कुटीग्रामकयोः पल्लि." इति तु शाश्वतः ॥ २ ॥

पण्यशाला निषद्याऽट्टो हट्टो विपणिरापण ॥ ६८ ॥

पण्यस्य शाला पण्यशाला ॥ १ ॥ निषीदन्त्यस्यां निषद्या, 'समज ॥ ५।३।९९ ॥ इति क्यप् ॥ २ ॥ अट्यतेऽस्मिन् अट्टः पुल्लीबलिङ्ग ॥ ३ ॥ हट्यति दीप्यतेऽत्र हट्ट, "घटादय " ॥ ( उणा– १४१ ) ॥ इति टे निपात्यते ॥ ४ ॥ विविधं पण्यायन्त्यस्यां विपणिः स्त्रीलिङ्ग ॥५॥ एत्य पणायन्त्यस्मिन् आपण, गोचर-संचर ॥ ५।३।१३१ ॥ इति घः ॥ ६ ॥ ६८ ॥

वेश्याऽऽश्रय पुर वेश

वेश्यानामाश्रयो वेश्याश्रयः ॥ १ पुरति पुरम् ॥ २ ॥ विशन्त्यस्मिन् भुजङ्गा वेश ॥ ३ ॥

मण्डपस्तु जनाश्रय ।

मण्ड्यते नानालोकैर्मण्डप पुल्लीबलिङ्ग , "विष्टप" ॥ (उणा–३०७) ॥ इत्यादिशब्दाद् अपे निपात्यते ॥ १ ॥ जनानामाश्रयो जनाश्रय ॥ २ ॥

कुड्य भित्ति

कोलति संस्त्यायति कुड्यम्, "कुलेड् च वा" ॥ (उणा–३६२) ॥ इति किद् यः, कुट्यां साध्विति वा पृषोदरादित्वाद् साध्यम्, क्लीबलिङ्गोऽयम् , वाचस्पतिस्तु " कुड्यमस्त्रियाम्" इति पुस्त्वऽप्याह ॥ १ ॥ भिद्यते भित्तिः ॥ २ ॥

तदेडूकमन्तर्निहितकीकसम् ॥ ६९ ॥

तत् कुड्य अन्तर्निहिताऽस्थि एडयति एडूकम् , " शम्बूकशाम्बूक " ॥ ( उणा–६१ ) ॥ इत्यूके निपात्यते ॥ १ ॥ ६९ ॥

वेदी वितर्दि

विदन्त्यस्यां वेदिः, ङ्यां वेदी दारुपरिष्कृता चतुरस्रा विश्रान्तभू ॥ १ ॥ वितर्द्यते वितर्दि , "पदिपठि" ॥ ( उणा– ६०७ ) ॥ इति इः, ङीविकल्पाद्वेदी ॥२॥

अजिर प्राङ्गण चत्वराऽङ्गने ।

अजन्त्यस्मिन्नजिरम्, "स्थविर" ॥ ( उणा–४१७ ) ॥ इतीरे निपात्यते ॥१॥ प्राङ्गन्त्यत्र प्राङ्गणम्, "सुकृष्" ॥ ( उणा–१८७ ) ॥ इत्यण , अङ्गणमपि ॥२॥ चत्यते चत्वरम् ॥ ३ ॥ अङ्गन्त्यस्मिन्नङ्गनम् ॥ ४ ॥

वलज प्रतीहारो द्वाद्वारे

वल्यतेऽस्मिन् वलजम्, "वलेर्वोऽन्तश्च वा" ॥ (उणा–१३३)॥ इत्यजः ॥१॥ प्रतिहियन्ते रुध्यन्तेऽनेन बाहुलकात् घञि दीर्घत्वे च प्रतीहार ॥ २ ॥ भियते द्वारगति वा द्वा स्त्रीलिङ्गः, "वाद्वारौ" ॥ ( उणा–९४४ ) ॥ इति क्विपि निपात्यते ॥३॥ उभ्यते पूर्यते द्वारम्, "द्वारशृङ्गार" ॥ ( उणा–४११ ) ॥ इत्यारे निपात्यते, द्वारयतीति वा तत्र ॥ ४ ॥

अथ परिघोऽर्गला ॥ ७० ॥

परिहन्यतेऽनेन परिघः दारुमयो लौहो वा दण्ड , "परेर्घः" ॥ ५।३।४० ॥ इत्यल् ॥ १ ॥ इयर्ति अर्गला त्रिलिङ्ग , "ऋजनेर्गोऽन्तश्च" ॥ (उणा–४६७) ॥ इत्यलः, अरेण कपाटेन गलतीति वा ॥ २ ॥ ७० ॥

साऽर्गला स्वर्गलिका सूचिः

सा अर्गला अल्पा अर्गलिका ॥ १ ॥ सूचयति सूचिः स्त्रीलिङ्गः ॥ २ ॥

कुञ्चिकायां तु कूचिका ।

साधारण्यकुट्टश्चासौ

कुञ्च्यतेऽनया कुञ्चिका, "नाम्नि पुंसि च" ॥ ५।३।१२१ ॥ इति णकः तत्र ॥ १ ॥ कूचति कूचिका ॥२॥ साधारमन्ति अनया साधारणी ॥३॥ मड्ड्यते ऽङ्कुटः, "मर्कटकुक्कुट" ॥ (उणा–१५५) ॥ इत्युटे निपात्यते ॥ ४ ॥

द्वारयन्त्रं तु तालकम् ॥ ७१ ॥

द्वारपिधानाय लोहमयं यन्त्रं द्वारयन्त्रम् ॥ १ ॥ ताड्यतेऽनेनेति ताडकम्, तस्मै तालकम् ॥ २ ॥ ७१ ॥

अस्योद्घाटनयन्त्रं तु ताल्यपि प्रतिताल्यपि ।

अस्य तालकस्य उद्घाटनाय यन्त्रमुद्घाटनयन्त्रं ताड्यतेऽनया ताली ॥ १ ॥ प्रतिताड्यतेऽनया प्रतिताली ॥ २ ॥

तिर्यग्द्वारोर्ध्वदारूत्तरङ्गं स्यात्

द्वारस्य ऊर्ध्वं उपरि तिर्यग् निहितं दारु उत्तरमूर्ध्वं गच्छत्युत्तरङ्गम्, "नाम्नो गमः" ॥ ५।१।१३१ ॥ इति खड् ॥ १ ॥

अररं पुनः ॥ ७२ ॥

कपाटोऽररिः कुवाटः

इयर्ति अररम्, "अर्तिष्ठाभ्यां" ॥ (उणा–३९७) ॥ इत्यरः ॥१॥७२॥ कम्प्यते कपाटः "शिकिरा ... कपाटकिराट" ॥ (उणा–१४८) ॥ इत्याटे निपात्यते, कं शिरः पाटयति अविज्ञातामिति वा अपादित्वात् वसे कवाटोऽपि ॥२॥ इयर्ति अररि पुंस्त्रीलिङ्गः, 'मविपाभि' ॥ (उणा–६९८) ॥ इत्यरि ॥३॥ कुत्सितं वट्यतेऽनेन कुवाटः ॥ ४ ॥

पक्षद्वारं तु पक्षकः ।

पक्षद्वारं पार्श्वद्वारम् ॥ १ ॥ पक्षस्य तुल्यः पक्षकः, बाहुद्विकमप्यपि ॥ २ ॥

प्रच्छन्नमन्तर्द्वारं स्यात्

प्रकर्षेण छाद्यते स्म प्रच्छन्नम्, एतस्य मध्यद्वार एकमेतदिति । कात्यो यथाह– 'प्रच्छन्नमन्तर्द्वारं यत् पक्षद्वारं तदुच्यते' ॥ १ ॥

बहिर्द्वारं तु तोरणम् ॥ ७३ ॥

द्वाराग्रे स्तम्भोपरि निबद्धं बहिर्द्वारम् ॥ १ ॥ मङ्गलार्थं तारयन्त्यत्र तोरणं पुंक्लीबलिङ्गः ॥ २ ॥ ॥ ७३ ॥

तोरणोर्ध्वे तु मङ्गल्य दाम वन्दनमालिका ।

तोरणस्योपरि मङ्गलार्थं सहकारादि पल्लवनिर्मितं दाम माला वन्दनाय माला वन्दनमालिका ॥ १ ॥

स्तम्भादे स्यादधोदारौ शिला

स्तम्भादीनामध आधारदारुणि शिलति शिला, "स्तम्भोर्ध्वे दार्वन्तरस्याप नार्थे यद्दारुज्यते सा शिला" इति गौडः ॥ १ ॥

नासोर्ध्वदारुणि ॥ ७४ ॥

नासेव नासा स्तम्भादीनामुपरिस्थितं दारु, द्वारशाखाया मवष्टम्भ दारुणी शिलानासेति तु माला, यदाह–नासा दार्वुपरि द्वारस्याऽधो दारुशिला स्त्रियाम्" इति ॥ १ ॥ ७४ ॥

गोपानसी तु वलभीच्छादने वक्रदारुणि ।

गोपेन गोपनेन अमिति गोपानसि, "गोपादेरनेरसि" ॥ (उणा–७०८) ॥ इत्यसि ङयां गोपानसी वलभी, पटलाधारो वंशपञ्जरं तदाच्छादने वक्रे दारुणि॥१॥

गृहावग्रहणी देहल्युम्बरोदुम्बरोम्बुरा ॥ ७५ ॥

गृहे अवगृह्यते द्वारशाखा अनया गृहावग्रहणी ॥ १ ॥ दिह्यते घृतादिना देहली, "मृदिकन्दि" ॥ (उणा–४६५) ॥ इत्यलः ॥ २ ॥ उयते क्रियते उम्बर, उदुम्बर, "तीवरधीवर" ॥ (उणा–४४४) ॥ इति वरटि निपात्यते ॥ ३ ॥ ४ ॥ "अङ्कुर" ॥ (उणा–४२६) ॥ इत्युरे निपातनाद् उम्बुरः ॥ ५ ॥ ॥ ७५ ॥

प्रघाण प्रघणोऽलिन्दो बहिर्द्वारप्रकोष्ठके ।

प्रहण्यते प्रघाण, प्रघण, "प्रघणप्रघाणौ गृहांशे" ॥ ५ । ३ । ३५ ॥ इत्यलि निपात्यते ॥ १ ॥ २ ॥ अलति भूषयति द्वारमलिन्दः पुंक्लीबलिङ्गः, "कल्यलि" ॥ ( उणा–२४६ ) ॥ इतीन्दक् , द्वारप्रकोष्ठकाद् बहिर्द्वाराग्रवर्तिष्व भिङ्कान्ते उपालिन्दकादयः ॥ ३ ॥

कपोतपाली विटङ्कं

कपोतान् पक्षिण पालयति कपोतपाली ॥ १ ॥ विशिष्टं टङ्क्यते विटङ्कं पुंक्लीबलिङ्गः, पक्षिविश्रामार्थं बहिर्निर्गतं दारु वलभ्याधारः, पक्षिपङ्क्तिरिहं तत्रो त्कीर्यते ॥ २ ॥

पटलच्छविषी समे ॥ ७६ ॥

पटति स्थगयति पटलं त्रिलिङ्ग,"मृदिकन्दि" ॥ (उणा–४६५) ॥ इत्यच्‌ पट आसीदिति वा ॥ १ ॥ छाद्यतेऽनेन च्छदिः स्त्रीलिङ्गः, "कृर्यर्थि" ॥ (उणा–६८९) ॥ इति इस् "छदेरिस्मन्" ॥४।२।२३॥ इति ह्रस्वः ॥२॥।७६॥

नीव्रं वलीकं तत्प्रान्ते

नीयते जलमनेन नीव्रम्, "स्फायितञ्चि..." ॥ (उणा–१९६) ॥ इति रे निपात्यते ॥ १ ॥ वल्ते संवृणोति वलीकं पुंक्लीबलिङ्ग, "स्यमिकषि" ॥ (उणा –४६) ॥ इलीकः, तस्य पटलस्य प्रान्तस्तत्प्रान्तः ॥ २ ॥

इन्द्रकोशस्तमङ्गकः ।

इन्द्रेण कुश्यतीव इन्द्रकोशः ॥ १ ॥ ताम्यन्ति कात्स्न्र्येन तमङ्गो हर्म्ये निर्यूहः, "पतितमि" ॥ (उणा– १८ ) ॥ इत्यङ्गः ॥ २ ॥

वलभी छादिराधारः

'वल सौत्र' वलति वलभी, 'कृशृगृ–' ॥ ( उणा– १२९ ) ॥ इत्यभः स्त्रिये वलभी अयमिकारान्तोऽपि छदिष आधारो वंशपञ्जरादिश्छदिराधारः ॥ १ ॥

नागदन्तास्तु दन्तकाः ॥ ७७ ॥

नागस्येव दन्ता नागदन्ता ॥ १ ॥ दन्तप्रतिकृतयो दन्तकाः ॥२॥७७॥

मत्तालम्बोऽपाश्रयः स्यात् प्रग्रीवो मत्तवारणे ।

मत्तैः प्रमादिभिरालम्ब्यते मत्तालम्बः ॥ १ ॥ अपाश्रीयतेऽपाश्रयः ॥२॥ प्रगता ग्रीवाऽत्र प्रग्रीवः पुंक्लीबलिङ्गः ॥ ३ ॥ मत्तान् वारयति मत्तवारणस्तत्र ॥४॥

वातायनो गवाक्षश्च जालके

वातस्य अयनं मार्गोऽस्मिन् वातायनः पुंक्लीबलिङ्गः ॥१॥ गोरक्षीव गवाक्षः "अक्ष्णोऽदर्शनात्" ॥ ५ । ४ । ७६ ॥ इत्यच् समासान्तः, "गोरम्यवयोऽक्षे" ॥ ६।१।१२२ ॥ इत्यवादेशः ॥ २ ॥ जलति आस्ते ज्वलादित्वात् ण के जालकं तत्र ॥ ३ ॥

अथास्त्रकोष्ठकः कुसूलः ॥ ७८ ॥

कुष्णाति कोष्ठः, 'कुषेर्थ' ॥ ( उणा– १६४ ) ॥ इति थः अन्नस्य कोष्ठो-ऽन्नकोष्ठकः ॥ १ ॥ कुसन् संश्लेषे दन्त्यान्तः कुस्यति धान्येन कुसूलः, "कुस-पुसकुसिभ्यः किन्" ॥ (उणा– ४९०) ॥ इत्यूलः, तालव्यमध्योऽप्ययम् ॥२॥७८॥

अभिस्तु कोणोऽश्रिः कोटिः पाल्यस्त इत्यपि ।

अश्नुतेऽधि स्त्रीलिङ्ग, "तह्निमह्नि" ॥ (उणा–६९२) ॥ इति रिः ॥१॥ कुणति कोणो गृहादेर्विदिक् ॥ २ ॥ अणत्यणि पुंस्त्रीलिङ्गः ॥ ३ ॥ कुटति कोटिः स्त्रीलिङ्ग ॥ ४ ॥ पसति पालि, "कृशृकुटि" ॥ (उणा– ६१९) ॥ इति णिदिः, ङ्यां पाली ॥ ५ ॥ अस्यतेऽस्मिन् अस्र, "भीवृधि" ॥ (उणा–३८७) ॥ इति, र ॥ ६ ॥

आरोहणं तु सोपानं

आरुह्यतेऽवरुह्यते चाऽनेन आरोहणम् ॥१॥ सह उपानमस्त्यस्मिन् सोपानम्, पृषोदरादित्वात् ॥ २ ॥

निःश्रेणिस्त्वधिरोहणी ॥ ७९ ॥

निःश्रयति भित्तिं निःश्रेणि स्त्रीलिङ्ग, "कावावी" ॥ (उणा–६१४) ॥ इत्यणि, नियोजिता श्रेणिः सोपानपङ्क्तिरत्रेति वा ॥ १ ॥ अधिरोहन्त्यवरोहन्ति चाऽनया दारुमय्या अधिरोहणी ॥ २ ॥ ७९ ॥

स्थूणा स्तम्भ

तिष्ठति असामाधेय स्थूणा, "स्थाक्षुतोरूच्च" ॥ (उणा– १८५) ॥ इति णः ॥ १ ॥ स्तम्भ्यते स्तम्भः ॥ २ ॥

सालभञ्जी पाञ्चालिका च पुत्रिका ।

काष्ठादिघटिता

सालं वृक्षं भनक्ति तन्निर्मितत्वात् सालभञ्जी ॥ १ ॥ पञ्च्यते "ऋतृम्" ॥ (उणा– ४७५) ॥ इत्याले पञ्चाली ततः स्वार्थे अणि के च पाञ्चालिका ॥ २ ॥ कृत्रिमा पुत्री पुत्रिका काष्ठवस्त्रादिमयी ॥ ३ ॥

लेप्यमयी त्वञ्जलिकारिका ॥ ८० ॥

लेप्यनिर्मिता पुत्रिका ॥१॥ अञ्जलिं करोति अञ्जलिकारिका ॥२॥८०॥

नन्द्यावर्त्तप्रभृतयो विच्छन्दा आढ्यवेश्मनाम् ।

नन्दी आवर्तोऽत्र नन्द्यावर्तः प्रभृतिग्रहणात् स्वस्तिक-सर्वतोभद्राद्याः ॥१॥ विशेषेण छन्दयन्त्याच्छादयन्ति विच्छन्दा रचनाविशेषाः ॥ १ ॥

समुद्गः सम्पुटः

समुन्द्यते समुद्गः यमि-न्य ॥ ५ । १ । १७१ ॥ इति डः ॥ , समुद्ग- न्यते चित्" पुनोऽपि ॥ २ ॥

कण्डोलक पिटम् ॥ ८३ ॥

कण्ड्यते कण्डोल, " कटिपटि " ॥ (उणा-४९३) ॥ इत्योलः, के
लक ॥ १ ॥ पेटति पिटम्, पुक्लीबलिङ्ग, वंशदलादिमय भाण्डम्, के
कोऽपि ॥ २ ॥ ॥ ८३ ॥

चालनी तितउ

चाल्यतेऽनया चालनी क्षुद्रच्छिद्रशतोपेतं परिपवनं स्त्रीक्लीबलिङ्ग ॥
तनोति सारं तितउ पुक्लीबलिङ्ग, "तनेर्डउः" ॥ (उणा-७४८) ॥ इति
संन्यज्ञावच ॥ २ ॥

शूर्प प्रस्फोटनम्

शीर्यतेऽनेन शूर्पम्, "कृशृसृभ्य ऊर्चान्तस्य" ॥ ( उणा-२९८ ) ॥ इति
' शूर्पण् माने ' इत्यस्य वा ॥ १ ॥ प्रस्फोट्यतेऽनेन प्रस्फोटम पुंक्लीबलि
धान्यादिनिष्पवनभाण्डमित्यर्थ ॥ २ ॥

अथाऽन्तिका ।

चुल्ल्यऽश्मन्तकमुद्धान स्याद् अधिश्रयणी च सा ॥ ८४

अन्तोऽस्त्यस्यामन्तिका, "अन्त्यधिश्रयणी भवेत्" इति तु माला ॥ १
चुल्लति चुल्लिः, " किलपिलि- " ॥ (उणा-६०८) ॥ इति [illegible] ङ्यां चुल्ली ॥ २
अश्नुतेऽश्मन्तम्, " सीमन्त " ॥ (उणा-२२२) ॥ इत्यन्ते निपात्यते केऽश्मन्त
॥ ३ ॥ उद्धीयतेऽनेन उद्धानम् ॥ ४ ॥ अधि श्रीयतेऽस्यामधिश्रयणी ॥ ५
॥ ८४ ॥

स्थाल्युखा पिठर कुण्ड चरु कुम्भी

तिष्ठन्त्यस्यां स्थाली, "स्थो वा" ॥ (उणा-४७१) ॥ इत्यलः, स्थलति इ
वी ज्वलादित्वाद् णः ॥ १ ॥ उपन्ति पचन्त्यस्यामुखा, " उषे किद् खुक्च
॥ ( उणा-८८) ॥ इति कः, ओखतीति वा ॥ २ ॥ पिठ्यते अत्र पिठरम्
"मृधुन्दि " ॥ (उणा-३९९) ॥ इति किदर ॥ ३ ॥ कुणति उपकरोति कुण्डम्
" कुगुहु- " ॥ (उणा-१७०) ॥ इति डः, त्रिलिङ्गोऽयम् ॥ ४ ॥ चरति याति
क्लेदमनेन चरुः, पुंलिङ्गः " मिवहि " ॥ (उणा-७२६) ॥ इत्युः ॥ ५
कायति कुम्भी, " काकुशिभ्यां " ॥ ( उणा-३३७) ॥ इति कुम्भः द्वौ
मिमार्याभित्येके ॥ ६ ॥

घट घन ।

पटते पटः पुंस्त्रीलिङ्गः ॥ १ ॥ कुट्यति कुटः पुंस्त्रीलिङ्गः ॥ २ ॥ कायरवम्भसा भ्रियमाण कुम्भः पुंस्त्रीलिङ्गः, "काकुधिम्भां" ॥ (उणा–३३७) ॥ इति कुम्भः, केरम्भ्यते वा पृषोदरादित्वात् ॥ ३ ॥ कीर्यते करीर पुंस्त्रीलिङ्गः, "कृशॄपू" ॥ (उणा–४१८) ॥ करीरः ॥ ४ ॥ कलते सङ्ख्याति शब्द्यायते वा कलश, 'कलेश्छत्' ॥ (उणा– ५३२) ॥ इत्यशः ॥ ५ ॥ केन जलेन कसति कलस त्रिलिङ्गाविमौ ॥ ६ ॥ निपिबन्त्यस्माद् निप पुंस्त्रीलिङ्ग स्यादित्वाद् क ॥ ७ ॥ ८५ ॥

हसन्त्यङ्गारात् शकटीधानीपात्र्यो हसन्तिका ।

हसत्यङ्गारैर्हसनी ॥ १ ॥ अङ्गाराणामियात् शकटीधानीपात्र्य अङ्गाराणां शकटी अङ्गारशकटी ॥ २ ॥ अङ्गारा धीयन्तेऽस्यामङ्गारधानी ॥ ३ ॥ अङ्गाराणां पात्री अङ्गारपात्री ॥ ४ ॥ अङ्गारैर्हसतीव हसन्ती के हसन्तिका ॥ ५ ॥

भ्राष्ट्रोऽम्बरीष

भृज्यतेऽस्मिन् भ्राष्ट्र, 'भिस्सभ्रस्जि' ॥ (उणा– ४८०) ॥ इति त्रद् इडिच ॥ १ ॥ अम्ब्यतेऽम्बरीषः, अमेर्बरादि ॥ (उणा– ५५५) ॥ ईषः पुंक्लीबलिङ्गावेतौ ॥ २ ॥

ऋचीषमृजीष पिष्टपाकभृत् ॥ ८६ ॥

ऋच्यते स्तूयते पाकोत्कर्षाद् ऋचीषम् "ऋजिषु" ॥ (उणा– ५५४) ॥ इति बहुवचनादीषः ॥ १ ॥ ऋज्यते ऋजीषम् ऋजिषु ' ॥ (उणा– ५५४) ॥ इति क्लीबे पिष्टकानाम् भक्ष्यस्य पाकं बिभर्ति पिष्टपाकभृद् भाजनविशेषः ॥ १ ॥ ८६ ॥

कम्बिर्दर्विः खजाका

काम्यते कम्बि, 'कमिकिवि' ॥ (उणा– ७०६) ॥ इति वौ निपात्यते ॥ १ ॥ दृणाति पाकस्य दर्विः 'दृपृभ्यो वि' ॥ (उणा– ७०४) ॥ स्त्रीलिङ्गावेतौ ॥ २ ॥ खजति मथ्नाति खजाका 'बलाकादयश्च' ॥ (उणा– १४) ॥ इत्या ऽऽकः ॥ ३ ॥

अथ स्यात् तर्दूर्दारुहस्तक ।

तरति पाकेषु तर्दूः, कौरिक 'तृभ्यां' ॥ (उणा–६४६) ॥ इति दूः दारुमयो हस्तप्रतिकृतिदारुहस्तकः परिवेषणभाण्डम् ॥ १ ॥

गर्गर्यां तु गलन्त्यालू, कर्करी करक

गा पानीयं धीयतेऽस्यां गागरी तत्र ॥ १ ॥ गलति अम्भोऽस्या गलन्ती, 'सीमन्त' ॥ (उणा– २२१) ॥ इत्यन्ते निपात्यते ॥ २ ॥ अल्पत्वमया आलु

यौगिक , "अटो स य या" ॥ (उणा–८३७) ॥ इति णिद् ॥ ३ ॥ किरत्यम्मः कर्करी, "करादित्" ॥ ( उणा– ९ ) ॥ इत्यप्रत्यय सम्मद्वित्व च ॥ ४ ॥ "दृक्" ॥ ( उणा– २७ ) ॥ इत्यके करक , पुंस्त्रीलिङ्गः ॥ ५ ॥

अथ स ॥ ८७ ॥

नालिकेरज करङ्क

स करङ्क ॥ ८७ ॥ नालिकेरफलाद् जातो नालिकेरजः, किरत्यम्बु करङ्कः "किरोऽङ्को" ॥ ( उणा– ६२ ) ॥ इत्यङ्क ॥ १ ॥

तुल्यो कटाहकर्परौ ।

कटस्यावृणोति कटाह मितिङ्ग , "रुकटि' ॥ ( उणा ५९१ ) ॥ इत्याहः ॥ १ ॥ कीर्यते कर्परः, "अठर-" ॥ ( उणा–४०३ ) ॥ इत्यरे निपात्यते ॥ २ ॥

मणिकोऽलिञ्जर

मणत्यम्भसा म्रियमाणो मणि , "पदिपठि" ॥ (उणा–६०७) ॥ इति इः, यत् धामत –"अलिञ्जर मणि विद्याद् महनावयवो मणि ," स्वार्थे के मणिकः ॥ १ ॥ अल जरयति जलमलिञ्जरः पुंस्त्रीलिङ्गो, पृषोदरादित्वात् ॥ २ ॥

गर्गरीकलश्यौ तु मन्थनी ॥ ८८ ॥

गिरति दधि गर्गरी, 'करादित्" ॥ ( उणा– ९ ) ॥ इत्यप्रत्ययः सरूप द्वित्वं च ॥ १ ॥ कल्यते कलशिः कया कलशी, कस्य अम्भसो राशिरत्रेति वा पृषोदरादित्वात् ॥ २ ॥ मथ्यते दध्यस्यां मन्थनी ॥ ३ ॥ ॥८८॥

वैशाख खजको मन्था मन्थानो मन्थदण्डक ।

मन्थ क्षुब्धः

विशाखा प्रयोजनमस्य वैशाखः, " विशाखाषाढादण् मन्थदण्डे " ॥ ६ । ४ । १२० ॥ इत्यणि विशाखस्य अयमिति वा, विशिष्टा शाखा अस्य विशाखस्ततः स्वार्थेऽण् वा ॥ १ ॥ खजति मथ्नाति खजकः, कीचक " ॥ ( उणा–३३ ) ॥ इत्यके निपात्यते खज' खजकाऽपि ॥२॥ मथ्यतेऽनेन मन्था , "पन्थिमन्थिभ्याम् ' ॥ ( उणा–९२६ ) ॥ इतीन ॥ ३ ॥ ' ऋस्तुस्पृशि " ॥ ( उणा–२७६ ) ॥ इत्यानेन मन्थानः ॥ ४ ॥ मन्थनाय दण्डः मन्थदण्डः ॥ ५ ॥ मथ्यतेऽनेन मन्थ ॥ ६ ॥ क्षुभ्नाति क्षुब्ध , " क्षुब्धविरिब्ध " ॥ ४ । ४ । ७० ॥ इति क्ते साधुः ॥ ७ ॥

अस्य विष्कम्भो मञ्जीर कुटरोऽपि च ॥ ८९ ॥

अस्य मन्यस्य विष्कम्नाति बध्नातीति विष्कम्भो दण्डकाष्ठिका, यस्मिन् बद्ध्वा मन्थ आकृष्यते दण्डकाष्ठमित्यन्ये ॥ १ ॥ मञ्जि' शोभः' मञ्जति मञ्जीरः, 'कृगॄशॄ'' ॥ (उणा-४१८) ॥ इतीर ॥ २ ॥ कुट्यति कुटर, ''कुटिकुषादि'' ॥ (उणा- ३९७) ॥ इत्यरः कुट्यादित्वाद् गुणाऽभाव कुटकाऽपि,'मवीरम्' देश्याम् ॥ ३ ॥ ॥ ८९ ॥

शालाजीरो वर्धमान शराव

शालया जीर्यते शालाजीरः, पृषोदरादित्वात् ॥ १ ॥ वर्धते मृत्पिण्डाद् वर्धमान, वर्ध्यते छेद्यते चक्रादिति वा ॥ २ ॥ शीर्यते मनागपि आघातेन शराव, 'शृणातराव'' ॥ (उणा- ५२० ) ॥ पुक्लीबलिङ्गावतौ ॥ ३ ॥

कोशिका पुन ।

मल्लिका चषक कंस पारी स्यात् पानभाजनम् ॥ ९० ॥

कुश्यति कोशिका ॥ १ ॥ मल्लते मल्लिका ॥ २ ॥ चषन्ति अनेन चषकः ॥ ३ ॥ काम्यते कंसः 'मावावध ॥ (उणा-५६४) ॥ इति स पुक्लीब-लिङ्गावेतौ ॥ ४ ॥ पारयति पारी ॥ ५ ॥ पानस्य भाजन पानभाजनम् ॥६॥९०॥

कुतूश्चर्मस्नेहपात्रम्

चर्मण स्नेहपात्र कुत्सितं तन्यते कुतू क्लीलिङ्ग', ' भनिगमि '' ॥ (उणा-८४३) ॥ इति डिवू ॥ १ ॥

कुतुपस्तु तदल्पकम् ।

तद् चर्मस्नेहपात्र ह्रस्वा कुतू कुतुप पुंल्लिङ्ग ,''कुत्वा डुप ॥७।३।४९॥१॥

दृति स्वह्ल

द्रियते दृतिः पुल्लिङ्ग , 'दृमुचि ' ॥(उणा-६५१)॥ इति किस् ति ॥ १ ॥ खल्लति खल्लः 'भिलाच्छभल' ॥ (उणा-४६४) ॥ इति ले निपात्यते पुल्लिङ्गोऽयम्' वैजयन्ती तु 'खल्ल क्लीबम् ' इत्याह ॥ २ ॥

चर्म्ममयी त्वाल्ल, करकपात्रिका ॥ ९१ ॥

करकमह् पिबन्त्यनया करकपात्री के करकपात्रिका ॥ १ ॥ ९१ ॥

सर्वमावपनं भाण्ड

भा उप्यते धान्यमस्मिन्नावपनम् ॥१॥ भामतेऽस्माद् भाण्डम् 'पञ्चमाद्' ॥ (उणा-१६८) ॥ इति ड ॥ २ ॥

पात्राऽमत्रे तु भाजनम्

पाति आधेयम्, पीयतेऽस्मादिति वा पात्रं त्रिलिङ्गः ॥१॥ अमति आधेयमस्मिन् अमत्रम्, "पृमक्षि" ॥ (उणा– ४५६) ॥ इत्यत्रः ॥ २ ॥ भाज्यतेऽस्मिन्नाधेयमिति भाजनम्, अमरस्तु आवपनादीन् पर्यायानाह ॥ ३ ॥

तद्विशालं पुनः स्थालं

तद् भाजनं विस्तीर्णं स्थलति स्थालं स्त्रीक्लीबलिङ्गः, ज्वलादित्वात् णः, तिष्ठति अत्रेति वा ॥ १ ॥

स्यात् पिधानमुदघनम् ॥ ९२ ॥

पिधीयतेऽनेन पिधानम् ॥ १ ॥ उदघ्यतेऽनेन उदघनम् ॥ २ ॥ ९२ ॥

शैलोऽद्रिः शिखरी शिलोच्चयगिरी गोत्रोऽचलः सानुमान्
ग्रावा पर्वतभूध्रभूधरधराहार्या नगः

शिलानामयं शैलः, शिला सन्त्यत्रेति वा ज्योत्स्नादित्वादण् ॥ १ ॥ अद्यते यत्नेन अद्रिः, "तद्विषद्धि" ॥ ( उणा–६९२ ) ॥ इति रिः ॥ २ ॥ शिखराणि सन्त्यत्र शिखरी ॥ ३ ॥ शिलानामुच्चयोऽत्र शिलोच्चयः ॥ ४ ॥ गीर्यते गिरिः, "नाम्युपान्त्य" ॥ (उणा–६०९) ॥ इति किः ॥ ५ ॥ गां पृथ्वीं त्रायते गोत्रः ॥ ६ ॥ न चलति अचलः ॥ ७ ॥ सानूनि सन्त्यस्य सानुमान् ॥ ८ ॥ गृह्णाति ग्रावा, ' ग्रहेरा च" ॥ (उणा–९०५) ॥ इति वन् ॥ ९ ॥ पर्व्यते पूर्यते शिलाभिः पर्वतः, "दृपृभृ" ॥ (उणा–२०७) ॥ इत्यतः, पर्वाणि सन्त्यत्रेति वा " मरुत्पर्वणस्तः" ॥ ७।२।१५ ॥ १० ॥ भुवं धरति भूध्रः मूलविभुजादित्वात् कः, यौगिकत्वात् कुध्र–महीध्रादयः, "आधुधादिभ्यः" ॥ ५।१।९४ ॥ इत्यचि भूधरः, यौगिकत्वात् महीधर-भूभृदादयः ॥ ११ ॥ १२ ॥ धरति ध्रियते वा धरः ॥ १३ ॥ हर्तुमशक्योऽहार्यः ॥ १४ ॥ न गच्छति स्थावरत्वात् नगः, "नगोऽप्राणिनि वा" ॥ ३।२।१२७ ॥ इति वा नगोऽश्माप, अगोऽपि ॥ १५ ॥

शेषश्चात्र–
गिरौ प्रपाती कुधरः सर्वज्ञः कन्दराकरः ।

अथोदयः ।

पूर्वाद्रिः

उदयत्यस्मादुदयः ॥ १ ॥ पूर्वश्चासावद्रिश्च पूर्वाद्रिः ॥ २ ॥

चरमाद्रिरस्तः

चरमः पश्चिमोऽद्रिश्चरमाद्रिः ॥१॥ अस्यत्यर्कादीन्, अस्यते वाऽस्तः, "हस्य

मि" ॥ (उणा- २००) ॥ इति स ॥ २ ॥

उदगद्रिस्त्वद्रिराड् मेनका-

प्राणेशो हिमवान् हिमालयहिमप्रस्थौ भवानीगुरुः ॥९३ ॥

उदङ् उत्तरोऽद्रिरुदगद्रिः ॥ १ ॥ अद्रीणां राजा अद्रिराट् ॥ २ ॥ मेनकाया। प्राणेशो पत्नीमो मेनकाप्राणेशः ॥३॥ हिममस्त्यस्मिन् हिमवान् ॥ ४ ॥ हिमस्याऽऽलयो हिमालयः ॥ ५ ॥ हिम प्रतिष्ठतेऽस्मात्, हिमं प्रस्थे अस्य वा हिमप्रस्थः ॥६॥ भवान्या गौर्या गुरुः पिता भवानीगुरुः ॥ ७ ॥ ॥ ९३ ॥

हिरण्यनाभो मैनाकः सुनाभश्च उदारमजः ।

हिरण्यं नाभावस्य हिरण्यनाभः, "नाभेर्नाम्नि" ॥ ७।३।१३४ ॥ इत्यद् समासान्तः ॥ १ ॥ मेनकाया अपत्यं मैनाकः, पृषोदरादित्वात् ॥ २ ॥ शोभना नाभिरस्य सुनाभः, तस्य हिमालयस्यात्मजः उदात्मजः ॥ ३ ॥

रजताद्रिस्तु कैलासोऽष्टापदः स्फटिकाचलः ॥ ९४ ॥

रजतमयोऽद्रिः रजताद्रिः ॥ १ ॥ क जलं इला भूमिस्तयोरालये, के लसन मस्य वा केलासः स्फटिकस्तस्माव कैलासः ॥ २ ॥ अष्टौ पदानि सन्त्यस्मिन् अष्टापदः, "नाम्नि" ॥३।२।७५॥ इति दीर्घः ॥ ३ ॥ स्फटिकमयाऽचलः स्फटिकाचलः ॥ ४ ॥ ॥ ९४ ॥

शेषश्चात्र–कैलासे धनदावासो हराद्रिर्हिमवद्धसः ।

क्रौञ्चः कुञ्चः

कुञ्चति कुञ्चः प्रज्ञादित्वात् क्रौञ्चः क्रौञ्चोऽपि ॥ १ ॥ २ ॥

अथ मलय आषाढो दक्षिणाचलः ।

मलते धारयति चन्दनान् मलयः, ग्रहीवाद्यो "कुगुवलि-" ॥ (उणा-३६५) ॥ इत्ययः ॥१॥ आषाढास्तु जात आषाढः "भविष्यावाढा" ॥ ६।३।१०५ ॥ इत्यणः मतान्तराभिप्रायोऽण् ॥ २ ॥ दक्षिणस्यामाशायामचलश्च दक्षिणाचलः ॥ ३ ॥

शेषश्चात्र–मलयश्चन्दनगिरिः

स्याद् माल्यवान् प्रस्रवणः

माल्याऽऽकारताऽस्ति अस्य माल्यवान् ॥१॥ प्रस्रवति निर्झरैः प्रस्रवणः ॥२॥

१ विन्ध्यस्तु जलवालकः ॥ ९५ ॥

विन्ध्यति विन्ध्यः "शिक्ष्याऽऽस्याऽऽढ्य" ॥ (उणा-३६४) ॥ इति मे

निपात्यते ॥ १ ॥ अलेन याकसे आह्वाययति अलम्पोलकः ॥ २ ॥ ९५ ॥

शत्रुञ्जयो विमलाद्रि

शत्रून् जयति शत्रुञ्जय, "भृवृजि" ॥ ५।१।११२ ॥ इति ख ॥ १ ॥ विमलश्चासावद्रिश्च विमलाद्रि ॥ २ ॥

इन्द्रकीलस्तु मन्दर ।

इन्द्रेण कील्यते इन्द्रकील ॥ १ ॥ मन्यते मन्दर, "स्वरिछशटि" ॥ (उणा–३९७) ॥ इत्यर

सुवेल स्यात् त्रिमुकुटस्त्रिकूटस्त्रिककुच स ॥ ९६ ॥

शोभना वेलाऽस्य आसन्नपयोधित्वात् सुवेल ॥ १ ॥ त्रयो मुकुटभूताः कूटा अस्य त्रिमुकुट ॥ १ ॥ त्रीणि कूटान्यस्य त्रिकूटः ॥ ३ ॥ त्रीणि ककुदानि ककुदाकाराणि शिखराण्यस्य त्रिककुद्, "त्रिककुद् गिरौ" ॥ ७।३।१६८ ॥ इति ककुदादश ॥ ४ ॥ ९६ ॥

उज्जयन्तो रैवतक

उज्जयतीति उज्जयन्तः, "तृजि" ॥ (उणा–२२१) ॥ इत्यन्तः ॥ १ ॥ मन्यते स्म वत राया सुवर्णेन वतो रैवतः के रैवतकः, रैवता उन्नमति वा भरी इणादित्वान्धातुरर्थिकाऽण् ॥ २ ॥

सुदारु पारियात्रकं ।

शोभनानि दारूण्यस्मिन् सुदारु ॥१॥ परितो यात्रायां भवः काऽऽरोहत्वाद् पारियात्रक ॥ २ ॥

लोकालोकश्चक्रवाल

अन्तर्लोक्यत अस्य भाग च न लोक्यतेऽनर्केत्वाद् लोकालोक, यत्कालिदासः–
"प्रकाशश्चान्धकारश्च लोकालोक इवाऽचल" इति ॥१॥ चक्राऽऽकारेण वलति वाऽ
ते वा चक्रवाल, आवेष्ट्य द्वीपान्यीन् स्थितो सप्ताविति प्रसिद्धिः ॥ २ ॥ ९६ ॥

अथ मेरु कर्णिकाचल ॥ ९७ ॥

रत्नसानु सुमेरु स्वः-स्वर्गि-काञ्चनतो गिरि ।

मिनोति क्षिपत्सुखत्वाद् ज्योतींषि इति मेरुः, "मिमीपी" ॥(उणा–८०६)॥ इति रुः ॥ १ ॥ जम्बूद्वीपपद्मस्य कर्णिकाभूतोऽचल कर्णिकाचलः ॥ २ ॥ ९७ ॥ रत्नानि सानुन्यस्य रत्नसानु ॥ ३ ॥ सुमेरुर्मेरोरभिधाऽथ, इन्द्रमोऽत्रवद् ॥ ४ ॥

लोकालोकश्चक्रवाल

अन्तर्लोकस्तेऽस्य बाह्ये च न लोकयतेऽनर्थत्वात् लोकालोक, यत्कालिदासः– "प्रकाशश्चान्धकारश्च लोकालोक इवाऽचलः" इति ॥ १ ॥ चक्राकारेण वलति चाल्यते वा चक्रवाल भावेष्य द्वीपाब्धीन् स्थितो यस्माविति प्रसिद्धिः ॥ २ ॥

अथ मेरु कर्णिकाचल ॥ ९७ ॥

रत्नसानु सुमेरु स -स्वर्गि-काञ्चनतो गिरि ।

मिनोति क्षिपत्युदत्याज्ज्योतींषीति मेरु, "चिनीपी-" ॥ (उणा-८०९) ॥ इति रु ॥ १ ॥ जम्बूद्वीपपद्मस्य कर्णिकाभूतोऽचल कर्णिकाचलः ॥२॥९७॥ रत्नानि सानुष्वस्य रत्नसानुः ॥३॥ सुमेरुर्मेरुरभिधाय इन्द्रा महेन्द्रवत् ॥ ४ ॥ स स्वर्गि-काञ्चनशब्देभ्यो गिरि – स्वर्गिरि स्वर्गिरिः ॥ ५ ॥ स्वर्गिणो गिरि स्वर्गिगिरिः ॥ ६ ॥ काञ्चनस्य गिरि काञ्चनगिरि ॥७॥ सर्वाणि पर्वतनामानि पुल्लिङ्गानि ॥

शृङ्ग तु शिखर कूट

शीर्यते निपातेन शृङ्गम् "शृङ्गगादय" ॥ (उणा-९९) ॥ इति गे नि पात्यते ॥ १ ॥ शाखति व्याप्नोति गगन शिखरम्, "शाखेरिदेतौ चात" ॥ (उणा-४००) ॥ इत्यर ॥ २ ॥ कूट्यते दह्यतेऽर्क-रश्मिभ्यां कूटम्, त्रय पुक्लीब लिङ्गाः ॥ ३ ॥

प्रपातस्त्वतटो भृगु ॥ ९८ ॥

प्रपतन्त्यस्मात् प्रपात, "व्यञ्जनाद् घञ्" ॥ ५।३।१३२॥१ ॥ तटादन्यो अतटः ॥ २ ॥ भृज्यते तपेन भृगुः, पुल्लिङ्ग "प्रथिम्रदि भ्रस्जे स्रुक् च" ॥ (उणा-७३१) ॥ इति किदु । "प्रपतन्ते यस्मात् तस्मात् स भृगुः" इत्येके ॥ ३ ॥ ९८ ॥

मेखला मध्यभागोऽद्रेर्नितम्ब कटकश्च स ।

अद्रेर्मध्यभागो मिनोति मेखला "मिय खच्चैव" ॥ (उणा-४९७) ॥ इति खल ॥ १ ॥ नितरां तमोति नितम्बः "नसिमितानिभ्यां" ॥(उणा-३१७)॥ इति ब ॥ २ ॥ कटकमाप्नोति कटकः, पुक्लीबलिङ्गः ॥ ३ ॥

दरी स्यात् कन्दर

दीर्यते दरी ॥ १ ॥ कन्दन्ते विपन्नाःस्मिन् कन्दरः त्रिलिङ्ग "कपिप्ब-पदि" ॥ (उणा-३९७) ॥ इत्यर , कं दीर्यते कं दारयतीति वा कन्दराः कन्दरम् वा, अस्तादित्वात् र ॥ २ ॥

अस्त्रातसिके तु गह्वर गुहा ॥ ९९ ॥

असारामकृत्तक यद् बिलं तत्र गूहति गाह्यते वा गह्वरम्, पुंक्लीबलिङ्गः, "ह्वीवर-" ॥ (उणा–४४४) ॥ इति वरटि निपात्यते, गह्वा सन्त्यत्र वा, अस्मादित्वाद् र ॥ १ ॥ गुह्यतेऽनया गुहा, भिदादित्वादङ् ॥ २ ॥ ९९ ॥

द्रोणी तु शैलयोः सन्धिः

द्रवन्त्यस्यां द्रोणी, द्रुणतीति वा, पर्वतयोः सन्धेपभूमिः ॥ १ ॥

पादाः पर्यन्तपर्वताः ।

पादा इव अधःस्थत्वाद् धारणत्वाच्च पादाः, मुख्यशैलान्ते क्षुद्रपर्वताः ॥१॥

दन्तकास्तु बहिस्तिर्यक्प्रदेशा निर्गता गिरेः ॥ १०० ॥

दन्तप्रकृतयो दन्तकाः ॥ १ ॥

अधित्यकोर्ध्वभूमिः स्यात्

पर्वतमधिरूढा ऊर्ध्वभूमिरधित्यका, "उपत्यकाधित्यके" ॥ ७।१।१३१ ॥ इति साधुः ॥ १ ॥

अधोभूमिरुपत्यका ।

पर्वतस्याऽऽसन्ना अधोभूमिरुपत्यका ॥ १ ॥

स्नु प्रस्थं सानु

स्नौत्यम्भः स्नु पुंलिङ्गः, पृषोदरादित्वात् ॥ १ ॥ प्रतिष्ठन्तेऽस्मिन् समभूमागत्वात् प्रस्थम् ॥ २ ॥ सनति मृगादीन्, सुनोति सुखं वा सानुः, "ह्लापाजि" ॥ ( उणा– १ ) ॥ स्नुणु, पुंक्लीबलिङ्गावेतौ ॥ ३ ॥

अश्मा तु पाषाणः प्रस्तरो दृषद् ॥ १०१ ॥

ग्रावा शिलोपलः

अश्नुतेऽश्मा पुंलिङ्गः, "मन्" ॥ ( उणा– ९११ ) ॥ इति मन् ॥ १ ॥ पषति बाधते पादौ पाषाणः, "पषो णित्" ॥ ( उणा–१९२ ) ॥ दृषाणः ॥ २ ॥ प्रस्तीर्यते प्रस्तरः ॥ ३ ॥ दृणाति दीर्यते वा दृषद्, स्त्रीलिङ्गः, "दॄ ह्रस्वश्च" ॥ ( उणा– ८९८ ) ॥ इति षद् ॥४॥१०१॥ "ग्रहेरा च" ॥ ( उणा–९०५ ) ॥ इति वन्, पुंलिङ्गः ॥ ५ ॥ शिलति शिला ॥ ६ ॥ उप्यते उपलः, पुंक्लीबलिङ्गः, "दृपिवपि" ॥ ( उणा– ४६८ ) ॥ इति किदलः ॥ ७ ॥

गण्डशैलाः स्थूलोपलास्च्युताः ।

शैलस्य गण्डा इव गण्डाः, शैला इव वा गण्डशैलाः, गिरेः स्थूलाऽश्मानश्च्युताः भूकम्पादिना गलिताः ॥ १ ॥

स्यादाकर खनि : खानिर्गञ्जा

आकीर्यन्ते धातवोऽस्मिन्नाकरः ॥ १ ॥ खन्यन्ते धातवोऽस्यां खनिः, खानिः, स्त्रीलिङ्गौ "खष्कुटि" ॥ ( उणा–६११ ) ॥ इति वा णिच् ॥ २ ॥ ३ ॥ गञ्जन्ति शब्दायन्तेऽस्यां गञ्जा, पुंस्त्रीलिङ्ग ॥ ४ ॥

धातुस्तु गैरिकम् ॥ १०२ ॥

दधाति पीतत्वं धातु , पुंलिङ्ग, "हसिकमि" ॥ ( उणा– ७७१ ) ॥ इति तुन् ॥ १ ॥ गिरौ भवं गैरिकम्, अध्यात्मादित्वादिकण् ॥ २ ॥ १०२ ॥

शुक्लधातौ पाकशुक्ला कठिनी खटिनी खटी ।

शुक्लश्चासौ धातुश्च शुक्लधातुस्तत्र ॥ १ ॥ पाके शुक्ला पाकशुक्ला ॥ २ ॥ कठ्यन्तेऽनया कठिनी, 'स्याकठि" ॥ ( उणा–२८१) ॥ इतीनः ॥ ३ ॥ खट मा काङ्क्षोऽस्त्यस्याः खटिनी ॥ ४ ॥ खटति खटी, खटीत्यपि ॥ ५ ॥

लोह कालायस शस्त्र पिण्डं पारशव घनम् ॥ १०३ ॥

गिरिसार शिलासार तीक्ष्ण कृष्णामिषे अय ।

लुनाति लोहम्, पुंक्लीबलिङ्गः, 'लूधो ह" ॥ (उणा–५८६ ) ॥ अजेः वो ... स्य वाऽऽत् ॥ १ ॥ काल च तदयश्च कालायसम्, 'सरोऽनोऽश्मायसो" ॥ ५।४।९४ ॥ इत्यत्समासान्त ॥ २ ॥ शस्यतेऽनेन शस्त्रम् ॥ ३ ॥ पिण्ड्यते पिण्डम् ॥४॥ परशवे इव परशव्यम्, तस्य विकारः पारशवम्, पुंक्लीबलिङ्ग, "परशव्याद् यलुक्च" ॥६।२।४०॥ इति अण् ॥५॥ हन्यते घनम् ॥६॥१०३॥ गिरेः सार गिरिसारम् ॥ ७ ॥ शिलाया अश्मनः सारं शिलासारम्, यत्स्मृति – 'अश्मनो लोहमुत्थितम्" एतौ क्लीबे, पुंस्यपि इत्यमरः ॥८॥ तेजयति तेज्यते वा तीक्ष्णम्, "भूमृतृण-" ॥ ( उणा– १८६ ) ॥ इति णे निपात्यते ॥ ९ ॥ कृष्णेन वस्तुना आमिषयति स्पर्धते कृष्णामिषम् ॥ १० ॥ अयते गच्छति अयः, क्लीबलिङ्गः 'अस्" ॥ ( उणा– ९५२ ) ॥ इत्यस् ॥ ११ ॥

शेषश्चात्र– स्याल्लोहे धीनधीवरे ॥

सिंहानघूर्तमण्डूरसरणान्यस्य किट्टके ॥ १०४ ॥

अस्य लोहस्य ध्मायमानस्य किट्टके मले हिनस्ति सिंहानम्, पृषोदरादित्वात् ॥ १ ॥ घूर्वति हिनस्ति घूर्तम्, 'हसिमृ- ॥ ( उणा– २०१ ) ॥ इति क्तिन् त ॥ २ ॥ मण्डयति मण्डूरम्, 'मीमसि- ॥ ( उणा–४२७ ) ॥ इत्यूर ॥ ३ ॥ सरत्यनेन सरणम् ॥ ४ ॥ १०४ ॥

सर्वं च तैजसं लोहं

हेमसो विकारस्तैजस हेमायपि, रोहति लोहम् पुंक्लीबलिङ्गः, यदाहु —
"सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु ।
सीसं च धीवरं चैव अष्टौ लोहानि चक्षते" ॥ १ ॥

शस्त्रं तु विशेषलोहम् ॥ १ ॥

विकारस्त्वयसः कुशी ।

अयसो विकारः कुश्यति कुशी फालः, यच्छाश्वतः–"कुशो दर्भः कुशी फालः" कुत्सितं श्यति इति वा "भाजगोण" ॥ २।४।३० ॥ इति ङी ॥ १ ॥

ताम्रं म्लेच्छमुखं शुल्वं रक्तं द्व्यष्टमुदुम्बरम् ॥ १०५ ॥

म्लेच्छशावरभेदाख्यं मर्कटास्यं कनीयसम् ।

ब्रह्मवर्धनं वरिष्ठं

ताम्यति वह्निना ताम्रम्, "चिजि" ॥ (उणा–३९२) ॥ इति रो दीर्घस्य च, वर्णेन वा ॥ १ ॥ म्लेच्छदेशे मुखमुत्पत्तिरस्य म्लेच्छमुखम् ॥२॥ शिलति शुल्वम्, "सल्यलेल्वात" ॥ (उणा–११९) ॥ इति वः, 'शुल्वण् सर्जने' इत्यस्य वाऽन् ॥ ३ ॥ रक्तं वर्णेन ॥ ४ ॥ द्वे हेमरूप्येऽश्नुते स द्व्यष्टम् ॥ ५ ॥ उमाति क्लिश्यते उदुम्बरम्, 'उन्नताम्बरम्' इति नैरुक्ताः, ओदुम्बरमित्यन्ये ॥ ६ ॥ १०५ ॥ म्लेच्छशावरभेदेन आख्याऽस्य म्लेच्छशावरभेदाख्यं म्लेच्छम्, शावरं चेत्यर्थः ॥ ७॥८ ॥ मर्कट्यास्यवर्णत्वाद् मर्कटास्यम् ॥ ९ ॥ कनति दीप्यते कनीयसम्, "कनस" ॥ (उणा–५७१) ॥ इत्यसे निपात्यते ॥ १० ॥ ब्रह्म वर्धयति पवित्रत्वाद् ब्रह्मवर्धनम् ॥ ११ ॥ अतिशयेन वरं वरिष्ठम्, कालिकानिवृत्तं स्वर्णं हि तत् ॥ १२ ॥

शेषश्चात्र– ताम्रे पवित्रं कांस्यं च ॥

सीसं तु सीसपत्रकम् ॥ १०६ ॥

नागं गण्डूपदभवं वप्रं सीन्दूरकारणम् ।

वर्ध्रं स्वर्णारियोगेष्टे यवनेष्टं सुवर्णकम् ॥ १०७ ॥

सिनोति बध्नाति पारतं सीसम्, "सेर्डित्" ॥ (उणा–५७७) ॥ इतीसः क्लीबलिङ्गोऽयम्, वैजयन्ती तु "सीसोऽस्त्री" इति पुंस्यप्याह ॥ १ ॥ सीसं च तत् पत्रं च सीसपत्रम् ॥ २॥१०६ ॥ न गच्छति द्रवत्वाद् नागम्, नगादित्वात् साधुः ॥ ३ ॥ गण्डूपदेभ्यो भवति गण्डूपदभवम् ॥ ४ ॥ उप्यते वप्रम्, हेम्नो वर्णोत्कर्षे बीजत्वात् ॥ ५ ॥ सिन्दूरस्य कारणं सिन्दूरकारणम् ॥ ६ ॥ वर्धते वर्ध्रम्, पुंक्लीबलिङ्गः ॥ ७ ॥ स्वर्णस्य अरिः स्वर्णारि ॥ ८ ॥ हेम्ना वर्णोत्कर्षार्थं योगे

स्तेयेद्र योमेष्टम् ॥ ९ ॥ यवनानामिष्टं यवनेष्टम् ॥ १० ॥ सुवर्णं करोति कारयति वा सुवर्णकम् ॥ ११ ॥ १०७ ॥

शेषश्चात्र—सीसके तु महाबलम् ॥

पीनपत्रं समोलूकं कृष्णं च त्रपुबन्धकम् ॥

वङ्गं त्रपु स्वर्णजनागजीवने

मृद्वङ्गरङ्गे गुरुपत्रपिच्चटे ।

स्याच्चक्रसंज्ञं तमरं च नागजं

कस्तीरमालीनकसिंहले अपि ॥ १०८ ॥

वङ्गति व्रजति वङ्गम् ॥ १ ॥ त्रपते इत्यामेरावग्रहणात् त्रपु, क्लीबमिदम्, "शृस्तृ" ॥ ( उणा- ७१६ ) ॥ इत्यु ॥ २ ॥ स्वर्णोज्जायते स्वर्णजम् ॥ ३ ॥ नाम जीवयति नागजीवनम् ॥ ४ ॥ मृदु कोमलमङ्गमस्य मृद्वङ्गम् ॥ ५ ॥ रङ्गति रङ्गम् ॥ ६ ॥ गुरु पत्रमस्य गुरुपत्रम् ॥ ७ ॥ पिच्यते कुट्यते पिच्चटम् "कपट" ॥ ( उणा- १४४ ) ॥ इत्यटे निपात्यते ॥ ८ ॥ चक्रस्य संज्ञा यस्य चक्रसंज्ञम् ॥ ९ ॥ ताम्यत्यग्निसम्पर्कात् तमरम् "जठर" ॥ ( उणा- ४०३ ) ॥ इत्यरे निपात्यते ॥ १० ॥ नागाज्जायते नागजम् ॥ ११ ॥ कसति कस्तीरम्, "कश्मीरा भीर" ॥ ( उणा- ४२२ ) ॥ इतीरे निपात्यते ॥ १२ ॥ आलीयते स्म आलीनम् ॥ १३ ॥ सिंहलदेशोद्भवत्वात् सिंहलम् ॥ १४ ॥ १०८ ॥

शेषश्चात्र—त्रपुणि श्वेतरूप्यं स्यात् खर्ज्जं सक्सर्ण रङ्ग ।

पराम मधुकं ज्येष्ठं वनं च मुखभूषणम् ॥

स्याद् रूप्यं कलधौततारजतश्वेतानि दुर्वर्णकं

खर्जूरं च हिमांशुहंसकुमुदाभिख्यम्

रूप्यति रूप्यम्, "शिक्याऽऽस्यादय" ॥ ( उणा-३६४ ) ॥ इति ये निपात्यते ॥ १ ॥ कलं मनोज्ञं धौतं कलधौतम् ॥ २ ॥ तारयति तारम् ॥ ३ ॥ रज्यते हेम्ना रजतम् पुंक्लीबलिङ्ग-, 'पृषिरञ्जि' ॥ ( उणा- २०८ ) ॥ इति कितः ॥ ४ ॥ श्वेतते श्वेतम्, सितापपि ॥ ५ ॥ दुष्टो वर्णोऽस्य दुर्वर्णं सुवर्णमपेक्ष्या ॥ ६ ॥ खर्जति खर्जूरम्, "मीमसि" ॥ ( उणा-४२७ ) ॥ इति ऊरः ॥ ७ ॥ हिमांशुहंसकुमुदानामभिख्या यस्य तत्तथा— चन्द्राह्वयम् हंसाह्वयम् कुमुदाह्वयम् इत्यर्थः ॥ ८॥९॥१० ॥

शेषश्चात्र— रजते प्राधुष महाशौभ्रं वसु भीरुकम् ।

भर्म सौभ्रं च सात्वं च रूप्य भीरु पवीमसम् ॥

सुवर्णं पुन ।

स्वर्णं हेम हिरण्यहाटकवसून्यष्टापदं काञ्चन
कल्याणं कनकं महारजतरैगाङ्गेयरुक्माण्यपि ॥ १०९ ॥
कलधौतलोहोत्तमवह्निबीजा-
न्यपि गारुडं गैरिकजातरूपे ।
तपनीयचामीकरचन्द्रभर्मा-
ऽर्जुननिष्ककार्तस्वरकर्बुराणि ॥ ११० ॥
जाम्बूनदं शातकुम्भं रजतं भूरि भूत्तमम् ।

शोभनो वर्णोऽस्य सुवर्णम्, पृषोदरादित्वाद् उलोपे स्वर्णम्, पुंक्लीबलिङ्गावेतौ ॥ १ ॥ २ ॥ हिनोति हेम, क्लीबलिङ्ग, "मन्" ॥ ( उणा–९११) ॥ इति मन्, "द्युहिभ्यां" ॥ ( उणा–३४१ ) ॥ इति मे हेमम्, अकारान्तः पुक्लीबलिङ्गोऽपि ॥ ३ ॥ ह्रियते हिरण्यम्, पुंक्लीबलिङ्ग, "हिरण्यपर्जन्य" ॥ (उणा–३८०)॥ इत्यन्ये निपात्यते ॥ ४ ॥ हटति दीप्यते हाटकम्, हाटकाकरभवत्वाद् वा, क्लीबलिङ्गोऽयम्, पुंस्यपि वाचस्पतिः, यदाह– "हाटकमस्त्रियाम्, हाटकाकरसंभूतं पलाशकुसुमच्छविः" ॥ ५ ॥ वसत्याकरे वसु, क्लीबलिङ्गः ॥ ६ ॥ अष्टसु लोहेषु पदं प्रतिष्ठाऽस्याऽष्टापदम्, पुंक्लीबलिङ्ग, "नाम्नि" ॥ ३।२।७५ ॥ इति दीर्घे ॥ ७ ॥ काञ्चते दीप्यते काञ्चनम्, "विचलगगन" ॥ ( उणा– २७५ ) ॥ इत्यने निपात्यते ॥ ८ ॥ कल्यते कल्याणम्, "कल्याणपर्याण" ॥ ( उणा–१९३ ) ॥ इत्याणे निपात्यते ॥ ९ ॥ कनति दीप्यते कनकम्, "दृकन्" ॥ ( उणा–२७ ) ॥ इत्यकः ॥ १० ॥ महच्च तद् रजतं रञ्जकं च महारजतम् ॥ ११ ॥ रायते उदारैः राः, पुंस्त्रीलिङ्गः, "रातेडैः" ॥ ( उणा–८६६ ) ॥ इति डैः ॥ १२ ॥ गङ्गाया अपत्यं गाङ्गेयम्, शुभ्रादित्वादेयण् ॥ १३ ॥ रोचते रुक्मम् "रुक्मग्रीष्म" ॥ ( उणा–३४६ ) ॥ इति मे निपात्यते ॥ १४ ॥ १०९ ॥ कलं सुवर्णकालिका तद्धौतमस्मिन् कलधौतम् ॥ १५ ॥ लोहेषूत्तमं लोहोत्तमम् ॥ १६ ॥ वह्नेर्बीजं वह्निबीजम्, यदाह "अग्नेरपत्यं प्रथमं सुवर्णम्" इति ॥ १७ ॥ गरुडस्येदं गारुडम् ॥ १८ ॥ गिरौ जातं गैरिकम् ॥ १९ ॥ जातं रूपमस्य जातरूपमकृत्रिमरूपं शुद्धदेशजम् ॥ २० ॥ तप्यते तपनीयम् ॥ २१ ॥ चामीकराकरे भवं चामीकरम् ॥ २२ ॥ चन्द्यते चन्द्रः, पुंक्लीबलिङ्ग ॥ २३ ॥ बिभर्ति भर्म, क्लीबलिङ्ग, "मन्" ॥ ( उणा–९११ ) ॥ इति मन् ॥ २४ ॥ अर्ज्यते पुण्यैरर्जुनम् ॥ २५ ॥ निषीदति मनोऽत्र निष्कः, पुंक्लीबलिङ्ग, "निष्कतुरुष्क" ॥ ( उणा–२६ ) ॥ इति के निपात्यते ॥ २६ ॥ कृतस्वराऽऽकरे भवं कार्तस्वरम् ॥ २७ ॥ कर्बति लोहमध्ये दर्पयति कर्बुरम्, "वाश्यसि" ॥ (उणा–४२३) ॥ इत्युरः, नानारूपत्वाद् वा ॥ २८ ॥ ११० ॥ जम्बूद्वीपे जम्बूफलरसोत्पन्नद्यां जातं जाम्बूनदम्, यत्पुराणम्–

हीरभृत् तद्रस प्राप्य मुक्तवायुविशोषिता ।

जाम्बूनदाख्य भवति सुवर्णं सिद्धभूषणम् ॥ १ ॥ ९९ ॥

शातकुम्भे गिरौ भव शातकुम्भम्, अनुशतिकादित्वादुभयपदवृद्धौ शातकौम्भमपि ॥ १० ॥ रज्यते रजतम् ॥ ११ ॥ भवत्याकरे भूरि, 'भुसूकृशि' ॥ (उणा–९९१) ॥ इति किद् रि, क्लीबलिङ्गोऽयम्, वाचस्पतिस्तु–"भूरिरष्टपदोऽस्त्रियाम्" इति पुंस्त्वमाह ॥ १२ ॥ भुवि उत्तम भूत्तमम् ॥ १३ ॥

शेषश्चात्र–सुवर्णे लोमन छुक मारजीवनमौजसम् ।

दाक्षायण रुक्मवर्णं श्रीमकुम्भं शिलोद्भवम् ॥

वैणव तु कर्णिकारच्छाय वेणुभटीभवम् ।

हिरण्यकोशाकुप्यानि हेम्नि रूप्ये कृताकृते ॥ १११ ॥

ह्रियते हिरण्यम् ॥ १ ॥ कुश्यते कोशम् "कोशः" ॥ (उणा– ५२९) ॥ इति शः ॥ २ ॥ न कुप्यमकुप्यम्, हेम्नि रूप्ये च कृताकृते घटिताऽघटिते इत्यर्थः ॥ ३ ॥

कुप्यं तु तद्द्वयादन्यद्

हेमरूप्याभ्यामन्यत् ताम्रादि गोपाय्यते तदिति कुप्यम्, "कुप्यमिद०" ॥ ५।१।३९ ॥ इति क्यपि निपात्यते ॥ १ ॥

रूप्यं तु द्वयमाहतम् ।

आहतं रूपमस्य रूप्य दीनारादि, "रूपात्प्रशस्ताहतात्" ॥ ७।२।५४ ॥ इति यः, द्वयमिति कुप्याकुप्यम् ॥ १ ॥

अलङ्कारसुवर्णं तु शृङ्गीकनकमाबुधम् ॥ ११२ ॥

अलङ्काराय सुवर्णमलङ्कारसुवर्णम् ॥ १ ॥ शृङ्गी अलङ्कारमकरिका तदर्थं कनकं शृङ्गीकनकम् ॥ २ ॥ आयुधमिव आबुधम् ॥ ३ ॥ ११२ ॥

रजतं च सुवर्णं च संश्लिष्टे घनगोलकः ।

घनश्चासौ गोलकश्च घनगोलकः पुंक्लीबलिङ्ग, यद्वाचस्पतिः– "तारहेम्नी तु संश्लिष्टे घनगोलकमस्त्रियाम्" इति ॥ १ ॥

पित्तलाऽऽरे

पित्त लाति पित्तला स्त्रीक्लीबलिङ्गः ॥१॥ आ इयर्ति आरः पुंलिङ्गःख्य,' वाचस्पतिस्तु– 'पित्तले त्वारमस्त्रियाम्' इति क्लीबेऽप्याह ॥ २ ॥

अथाऽऽरकूट कपिलोहं सुवर्णकम् ॥ ११३ ॥

रिरी रीरी च रीतिश्च पीतलोहं सुलोहकम् ।

आ इयर्ति आरस्तस्य कूट आरकूट , पुंक्लीबलिङ्गः, कश्चिदमु पित्तलपर्याय-माह ॥ १ ॥ कपिवर्णं लोहं कपिलोहम् ॥ २ ॥ सुवर्णप्रतिकृतिः सुवर्ण-कम् ॥ ३॥११३ ॥ रीयते स्रवति रिरी, रीरी, "सरःखुर" ॥ (उणा— ३९६ ) ॥ इति रे निपात्यते ॥ ४ ॥ ५ ॥ रिणन्त्यनेना रीति ॥ ६ ॥ पीतवर्णं लोहं पीत-लोहम् ॥ ७ ॥ शोभन लोहं सुलोहम् ॥ ७ ॥

ब्राह्मी तु राज्ञी कपिला ब्रह्मरीतिर्महेश्वरी ॥ ११४ ॥

ब्रह्मण इय ब्राह्मी ॥ १ ॥ राजते राज्ञी ॥ २ ॥ कपिला वर्णेन ॥३॥ ब्रह्मणो रीतिर्ब्रह्मरीतिः ॥ ४ ॥ महती चासावीश्वरी च महेश्वरी ॥ ५ ॥ ११४ ॥

कांस्ये विद्युत्प्रिय घोष प्रकाश वङ्ग-शुल्वजम् ।
घण्टाशब्दमसुराह्वरवणं लोहज मलम् ॥ ११५ ॥

कसाय इद द्रव्य कसीय तस्य विकारः कांस्यम्, "कंसीयाञ्ञ्य" ॥ ६ । २ । ४१ ॥ इति साधु , कसमेव वा भेषजादित्वाद् ट्यण् तत्र ॥ १ ॥ विद्युत प्रिय विद्युत्प्रियम् ॥ २ ॥ घोषति घोषः ॥ ३ ॥ प्रकाशते प्रकाशम् ॥ ४ ॥ वङ्ग शुल्वाभ्यां जायते वङ्गशुल्वजम् ॥ ५ ॥ घण्टाया इव शब्दोऽस्य घण्टाशब्दम्, घण्टायां शब्दोऽस्येति वा ॥ ६ ॥ असुरस्य कसनाम्न आह्वाऽस्य असुराह्व कसमित्यर्थः ॥ ७ ॥ रौति रवणम् ॥ ८ ॥ लोहाभ्यां जायते लोहजम् ॥ ९ ॥ मलोऽस्त्यस्य मलम् ॥ १० ॥ ११५ ॥

सौराष्ट्रके पञ्चलोह

सुराष्ट्रायां भव सौराष्ट्र के सौराष्ट्रकम्, तत्र ॥ १ ॥ पञ्च ताम्र रीति-त्रपु सीसक-कालायसरूपाणि लोहान्यस्मिन् पञ्चलोहम् ॥ २ ॥

वर्तलोह तु वर्तकम् ।

वर्तते आवर्तते वर्तम्, तच्च तद् लोहं च वर्तलोहम् ॥ १ ॥ वर्तते आवर्तते वर्तकम् ॥ २ ॥

पारद पारत सूतो हरबीज रसश्चल ॥ ११६ ॥

पार ददाति पारदः, पार तनोति पारतः, "क्वचित्" ॥ ५ । १ । १७१ ॥ इति डः, अर्थप्राधान्यात् पुंक्लीबलिङ्गावेतौ ॥१॥२॥ सूते हेमायुषी सूत , शिवाद् प्रसूतो वा ॥ ३ ॥ हरस्य बीजं हरबीजम् ॥ ४ ॥ रसते रसायनार्थिभिरिति रसः ॥ ५ ॥ चलोऽस्थैर्यात्, चपलोऽपि ॥ ६ ॥ ११६ ॥

अभ्रक स्वच्छपत्रं समेघाख्य गिरिजामले ।

अभ्रप्रतिकृतिरभ्रकम् ॥ १ ॥, स्वच्छानि पत्राण्यस्य स्वच्छपत्रम् ॥ २ ॥

गगनस्य मेघस्याम्बुदस्य नामान्यस्य स-मेघाख्यम्, तेन सामु, गगनम्, मेघ मम्बुधमित्यादि सिद्धम् ॥१॥४॥ गिरिनामा गौर्या मस्य गिरिनामक तत्र, गिरिक च तद्वर्णं चेति वा ॥ ५ ॥

सोतोऽञ्जनं तु कापोत सौवीर कृष्णयामुने ॥ ११७ ॥

यमुनास्रोतसोऽञ्जनम् स्रोतोऽञ्जनम् ॥ १ ॥ कपोतवर्णं कापोतम्, कपोतवर्णं वा ॥ २ ॥ सुवीरदेशे भव सौवीरम् ॥ ३ ॥ कृष्णं वर्णेन ॥ ४ ॥ यमुनायां भव यामुनम् ॥ ५ ॥ ११७ ॥

अथ तुत्थ शिखिग्रीव तुत्थाञ्जनमयूरके ।

तुदति अक्षिरोगांस्तुत्थम्, ' नीव्रम्' ॥ ( उणा– २२७ ) ॥ इति क्थन् ॥ १ ॥ शिखिग्रीवाभं शिखिग्रीवम् ॥ २ ॥ अज्यतेऽनेनाऽञ्जनं तुत्थं च तदञ्जनं च तुत्थाञ्जनम् ॥ ३ ॥ मयूरस्य तुल्यं मयूरकम् ॥ ४ ॥

मूषातुत्थ कांस्यनीलं हेमतार वितुन्नकम् ॥ ११८ ॥

मूषायां तुत्थं मूषातुत्थम् ॥ १ ॥ कांस्यवन्नीलं कांस्यनीलम् ॥ २ ॥ हेमवत्तार हेमतारम् ॥ ३ ॥ वितुदत्यक्षिरोगान् वितुन्नम्, के वितुन्नकम् ॥४॥११८॥

स्यात्तु कर्परिकातुत्थममृतासङ्गमञ्जनम् ।

कल्पते रोगम् येन कर्परिका, कर्परिकाख्यम् तुत्थं कर्परिकातुत्थम् ॥ १ ॥ अमृतमासङ्गमनेनाऽमृतासङ्गम् ॥ २ ॥ अज्यते चक्षुरनेनाऽञ्जनम् ॥ ३ ॥

रसगर्भं तार्क्ष्यशैलं तुल्ये दार्वीरसोद्भवे ॥ ११९ ॥

दार्वीरसस्य गर्भोऽत्र रसगर्भम् ॥१॥ तार्क्ष्यशैले कृतत्वायां भवत्वात् तार्क्ष्यशैलम्, दार्वी दारुहरिद्रा तस्या रस क्वाथस्तदुद्भवे तुल्ये रसजात-रसाग्रे अपि ॥२॥११९॥

पुष्पाञ्जन रीतिपुष्प पौष्पक पुष्पकेतु च ।

पुष्परूपमञ्जनं पुष्पाञ्जनम् ॥ १ ॥ रीतिप्रायमयात्वात् पुष्पाभ मस्य रीतिपुष्पम् ॥ २ ॥ पुष्यति पुष्पकम्, स्वार्थेऽणि पौष्पकम् ॥ ३ ॥ पुष्पं केतुरस्य पुष्पकेतु ॥ ४ ॥

माक्षिकं तु कदम्ब स्याच्चक्रनामाऽञ्जनामक ॥१२० ॥

माक्षिकं मधु तद्वर्णं माक्षिकम् ॥ १ ॥ कदम्बकुसुमाकारत्वात् कदम्बः ॥२॥ चक्रस्य नाम अस्य चक्रनामा ॥ ३ ॥ अजस्य विष्णोर्नाम अस्य अजनामकः, अत एव वैष्णवोऽपि ॥ ४ ॥ १२० ॥

चाप्यो नदीज कामारिस्तारारिर्विटमाक्षिक. ।

ताप्यां साधुस्ताप्य ॥ १ ॥ तापीनद्या जातो नदीजः ॥ २ ॥ कामस्याऽरिः कामारिः ॥ ३ ॥ तारस्याऽरिस्तारारि ॥ ४ ॥ विटाह्वयो माक्षिको विटमाक्षिक ॥५॥

सौराष्ट्री पार्वती काक्षी कालिका पर्पटी सती ॥ १२१ ॥
आढकी तुवरी कसोद्भवा काच्छी मृत्स्नाह्वया ।

सुराष्ट्रायां भवा सौराष्ट्री ॥ १ ॥ पर्वते भवा पार्वती ॥ २ ॥ कक्षे भवा काक्षी ॥ ३ ॥ कालयति मलं कालिका ॥ ४ ॥ पिपर्ति पर्पटी, "कपट–" ॥ (उणा– ॥ १४४) ॥ इत्यटे निपात्यते ॥ ५ ॥ अस्ति सती ॥ ६ ॥ १२१ ॥ आढौक्यते आढकी ॥ ७ ॥ तूयते तुवरी ॥ ८ ॥ कसादुद्भवति कसोद्भवा ॥ ९ ॥ कच्छदेशे भवा काच्छी ॥ १० ॥ मृद आह्वयोऽस्या मृदाह्वया, तेन मृत्तिका, मृत्स्ना, मृत्सा अपि ॥ ११ ॥

कासीसं धातुकासीसं खेचरं धातुशेखरम् ॥ १२२ ॥

कसति कासीसम्, "तकिकसिम्यामी–" ॥ (उणा– ५१६) ॥ ईसण् ॥ १ ॥ धातुरूपं कासीसं धातुकासीसम् ॥ २ ॥ खे चरति खेचरम् ॥ ३ ॥ धातुषु शेखरमिव धातुशेखरम् ॥ ४ ॥ १२२ ॥

द्वितीयं पुष्पकासीसं कसकं नयनौषधम् ।

पुष्परूपं कासीसं पुष्पकासीसम् ॥ १ ॥ कंसते रञ्जयति कसकम् ॥ २ ॥ नयनस्यौषधं नयनौषधम् ॥ ३ ॥

गन्धाश्मा शुल्वपामाकुष्ठारिर्गन्धिकगन्धकौ ॥ १२३ ॥
सौगन्धिकः शुकपुच्छः

गन्धप्रधानोऽश्मा गन्धाश्मा ॥ १ ॥ शुल्वस्य पामायाः कुष्ठस्य च अरिः शुल्वारिः, पामारिः, कुष्ठारिः ॥ २ ॥ ३ ॥ ४ ॥ गन्धोऽस्त्यस्य गन्धिकः ॥५॥ गन्धयते गन्धकः ॥ ६ ॥ १२३ ॥ सुगन्धो विपरीतलक्षणया स प्रयोजनमस्य सौगन्धिकः ॥ ७ ॥ शुकपुच्छवर्णत्वात् शुकपुच्छः ॥ ८ ॥

हरितालं तु पिञ्जरम् ।
बिडालकं विस्रगन्धि खर्जूरं वंशपत्रकम् ॥ १२४ ॥
आलपीतनताकानि गोदन्तं नटमण्डनम् ।
मञ्जरिर्लोमहृच्च

हरेः पीतवर्णस्य तालं प्रतिष्ठाऽस्य हरितालम्, हरितामलति भूषयति वा ॥१॥ पिञ्जयति पिञ्जरम्, वर्णेन वा ॥२॥ बिडालनेत्रप्रतिकृतिर्बिडालकम् ॥ ३ ॥

विस्रस्येव गन्धोऽस्य विस्रगन्धि ॥ ४ ॥ खर्जयति खर्जूरम् ॥ ५ ॥ वंशपत्रनामा वंशपत्रकम् ॥ ६ ॥ १२४ ॥ आलाति शोभां आलम्, अलन्ति भूषयन्ति अनेन वा ॥७॥ पीतयति पीतनम्, पीतवर्णं नयतीति वा, "कमित्" ॥५।१।१७१॥ इति डः ॥ ८ ॥ तालं हरितालैकदेशो भीमवत्, ताडयति इति वा ॥९॥ गोदन्त सदृशत्वाद् गोदन्तम्, गोपित्तमपि ॥ १० ॥ नटयति मण्डनं नटमण्डनम् ॥११॥ मल्लस्य अरिर्मल्लारिः ॥ ११ ॥ लोमानि हरति लोमहृत् ॥ १२ ॥

अथ मनोगुप्ता मनःशिला ॥ १२५ ॥

करवीरा नागमाता रोचनी रसनेत्रिका ।

नेपाली कुनटी गोला मनोह्वा नागजिह्विका ॥ १२६ ॥

मनोऽभिधा गुप्ता मनोगुप्ता ॥ १ ॥ मनोवाच्या शिला मनःशिला शिला अपि ॥ २ ॥ १२५ ॥ करे विशेषेण ईर्यते करवीरा ॥ ३ ॥ नागस्य माता नागमाता ॥ ४ ॥ रोचते रोचनी ॥ ५ ॥ रसस्य नेत्री रसनेत्री, के रसनेत्रिका ॥ ६ ॥ नेपालदेशभवत्वाद् नमेदेव नेपाली नैपाली अपि ॥ ७ ॥ कौ नटति कुनटी ॥८॥ गां लाति गुलति वा गोला ॥ ९ ॥ मनःशब्देन ह्वयते मनोह्वा ॥१०॥ नागजिह्वाप्रतिकृतिर्नागजिह्विका ॥ ११ ॥ १२६ ॥

सिन्दूरं नागजं नागरक्तं शृङ्गारभूषणम् ।

चीनपिष्टं

स्यन्दते सिन्दूरम्, "सिन्दूर" ॥ (उणा–४२०) ॥ इति ऊरे निपात्यते ॥१॥ नागात् सीसात् जायते नागजम् ॥ २ ॥ नागेन रज्यते नागरक्तम् ॥३॥ शृङ्गारस्य भूषणं शृङ्गारभूषणम् शृङ्गारमपि ॥ ४ ॥ चीनस्य नागस्य पिष्टं चीनपिष्टम् ॥ ५ ॥

हंसपादः कुरुविन्दे तु हिङ्गुलः ॥ १२७ ॥

हंसपाद इव रक्तो हंसपादः ॥१॥ कुरून् विन्दति कुरुविन्दम् 'निगवादेर्नाम्नि' ॥५।१।६१॥ इति शः ॥२॥ हिनोति हिङ्गुलः, 'कुमुल' ॥ (उणा–४८७) ॥ इति उले निपात्यते, पुंस्ययम्, वाचस्पतिस्तु– 'हिङ्गुलस्त्वस्त्रियाम्' इति क्लीबेऽप्याह, हिङ्गुरपि ॥ ३ ॥ १२७ ॥

शिलाजतु स्याद् गिरिजमर्थ्यं गैरेयमश्मजम् ।

शिलातः जतुसमानाकृतिः शिलाजतु, क्लीबलिङ्गः ॥ १ ॥ गिरेर्जायते गिरिजम् ॥ २ ॥ अर्थ्यते रसायनार्थिभिः अर्थ्यम् ॥ ३ ॥ गिरौ भवं गैरेयम्, नद्यादित्वाद् एयण् ॥ ४ ॥ अश्मनो जायते अश्मजम् ॥ ५ ॥

क्षारः काच

क्षरति क्षार, ज्वलादित्वाद् ण ॥ १ ॥ कथ्यते बध्यते काचः ॥ २ ॥

कुलाली तु स्यात् चक्षुष्या कुलत्थिका ॥ १२८ ॥

कुलमलति कुलाली ॥ १ ॥ चक्षुषे हिता चक्षुष्या दृक्प्रसादाख्या ॥ २ ॥ कुले तिष्ठति कुलत्था पृषोदरादित्वात्, कुलत्थप्रकृतिर्वा ॥ ३ ॥ १२८ ॥

बोलो गन्धरस प्राण पिण्डो गोपरस शश ।

बोल्यते बोल ॥ १ ॥ गन्धप्रधानो रसो गन्धरस ॥ २ ॥ प्राणिति अनेन प्राण ॥ ३ ॥ पिण्ड्यते द्रव्यान्तरैरिति पिण्ड पिण्डसदृशत्वाद् वा ॥ ४ ॥ गां पाति रसोऽस्य गोपरस, गोप, रसोऽपि भीमवत् ॥ ५ ॥ शशति शश ॥ ६ ॥

रत्नं वसु मणि

रमते मनोऽत्र रत्नम्– अष्टविध हीरकादि, यद् वाचस्पति —

"हीरक मौक्तिक स्वर्ण रजत चन्दनानि च ।

शङ्खश्चम च वस्त्र चेत्यष्टौ रत्नस्य जातय " ॥ १ ॥

"रमेस्त् च" ॥ (उणा–२६८) ॥ इति नः ॥१॥ वसति लक्ष्मीरत्र वसु, क्लीब लिङ्ग ॥ २ ॥ मणति महार्घतां मणि पुंस्त्रीलिङ्गः, माणिक्यमपि ॥ ३ ॥

तत्र वैडूर्य वालवायजम् ॥ १२९ ॥

तेषु रत्नेषु विदूरात् प्रभवति वैडूर्यम्, विदूरग्रामे हि अदः संस्क्रियमाण मभिव्यक्तं प्रथम भवति, विदूराद्देर्भवते वा "वैडूर्यः" ॥६।३।१५८॥ इति ये निपात्यते ॥१॥ वालवायाद्देर्भवते वालवायजम्, "विदूरमवनुत्कृष्टं निकृष्ट वालवायजम् " इति विशेषो नाश्रितः ॥ २ ॥ १२९ ॥

मरकत त्वश्मगर्भ गारुत्मत हरिन्मणि ।

मरक तरन्ति अनेन मरकतम्, " क्वचित् " ॥ ५।१।१७१ ॥ इति डः ॥ १ ॥ अश्मनो गर्भो अश्मगर्भम्, अश्मयोनिरित्यर्थ ॥ २ ॥ गरुत्मत इद जात विष हन्तु गारुत्मतम् ॥ ३ ॥ हरिद् नीलवर्णो मणिः हरिन्मणि ॥ ४ ॥

पद्मरागो लोहितकलक्ष्मीपुष्पाऽरुणोपला ॥ १३० ॥

पद्मस्य इव रागोऽस्य पद्मरागः पुल्लीबलिङ्ग, तत्र ॥ १ ॥ लोहित एव लोहितकः, " लोहिताद् मणौ " ॥७।३।१७॥ इति स्वार्थे कः ॥ २ ॥ लक्ष्म्याः पुष्पमिव लक्ष्मीपुष्पम् ॥ ३ ॥ अरुणः शोण उपलः अरुणोपल, शोणरत्नमपि ॥ ४ ॥ १३० ॥

नीलमणिस्त्विन्द्रनील

नीलवर्णो मणिर्नीलमणिः ॥ १ ॥ मणीनामिन्द्रो नीलश्च मणिरिन्द्रनीलः पुंक्लीबलिङ्गः, " इन्द्रनील महानीलम् " इति क्लीबे वैजयन्ति ॥ २ ॥

सूचीमुख तु हीरक ।

वरारकं रत्नमुख्यं वज्रपर्यायनाम च ॥ १३१ ॥

सूच्या इव मुखमस्य सूचीमुखम् ॥ १ ॥ हरति मनो हीरः, " शरक्षुर " ॥ (उणा–३९९) ॥ इति रे निपात्यते, के हीरकः पुंक्लीबलिङ्गः, वाचस्पतिस्तु– "अथा ऽस्त्री हीरकः" इति क्लीबेऽप्याह ॥ २ ॥ वरा अरका अस्मिन् वरारकम् ॥ ३ ॥ रत्नेषु मुख्यं रत्नमुख्यम् ॥ ४ ॥ वज्रपर्याया दम्भोलिप्रभृतयो नामानि अस्य वज्र- पर्यायनाम तेन वज्रम्, दम्भोलिरित्यादि ॥ ५ ॥ १३१ ॥

विराटजो राजपट्टो राजावर्त

विराटदेशे जातो विराटजः, वैराटोऽपि ॥ १ ॥ पट्टेन राजते राजपट्टः ॥२॥ आवर्तेन राजते राजावर्तः, राजदन्तादित्वात् पूर्वनिपातः ॥ ३ ॥

अथ विद्रुम ।

रक्ताङ्गो रक्तकन्दश्च प्रवालं हेमकन्दल ॥ १३२ ॥

विशिष्टो द्रुमो विद्रुमः, विद्रवति अग्नौ वा, "कुसमसीष्म" ॥ ( उणा– ३४१) ॥ इति मे निपात्यते, विद्यतेः "कुमुद"– ॥ ( उणा–२४४ ) ॥ इति उमे वा ॥ १ ॥ रक्तः अङ्गोऽस्य रक्ताङ्गः ॥ २ ॥ रक्तश्चासौ कन्दश्च रक्तकन्दः ॥ ३ ॥ प्रवलति प्रवालं पुंक्लीबलिङ्गः ज्वलादित्वाद् णः, प्रवते अग्नेरूर्ध्वं वा "कल्याल" ॥ ( उणा– ४८० ) ॥ इति निपात्यते ॥ ४ ॥ हेम कन्दल इव हेमकन्दलः ॥ ५ ॥ १३२ ॥

सूर्यकान्त सूर्यमणि सूर्याश्मा दहनोपलः ।

सूर्यस्य कान्तो वल्लभः सूर्यकान्तः ॥ १ ॥ सूर्यप्रियो मणिः सूर्यमणिः ॥ २ ॥ सूर्यस्य अश्मा सूर्याश्मा ॥ ३ ॥ दहनजननोपलो दहनोपलः ॥ ४ ॥

चन्द्रकान्तश्चन्द्रमणिश्चन्द्राश्मा चन्द्रोपलश्च स ॥ १३३ ॥

चन्द्रस्य कान्तः चन्द्रकान्तः ॥ १ ॥ चन्द्रस्य मणिः चन्द्रमणिः ॥ २ ॥ चन्द्रस्य अश्मा चन्द्राश्मा ॥ ३ ॥ चन्द्रस्य उपलः चन्द्रोपलः ॥ ४ ॥ १३३ ॥

क्षीरतैलस्फटिकाभ्यामन्यौ खस्फटिकाविमौ ।

क्षीरवर्णः स्फटिकः क्षीरस्फटिकः तैलवर्णः स्फटिकः तैलस्फटिकस्ताभ्या- मन्यौ भिन्नवर्णौ इमौ सूर्यकान्त-चन्द्रकान्तौ द्वौ अपि आकाशस्फटिकाख्यौ इत्यर्थः, यद् वाचस्पतिः—

"स्फटिकास्तु त्रयस्तेषामाकाशस्फटिको वरः ।
द्वौ क्षीरतैलस्फटिकावाकाशस्फटिकस्य तु ।
द्वौ भेदौ सूर्यकान्तश्च चन्द्रकान्तश्च तत्र च" ॥ १ ॥ इति ॥ १ ॥

शुक्तिजं मौक्तिकं मुक्ता मुक्ताफलं रसोद्भवम् ॥ १३४ ॥

शुक्तेर्जायते शुक्तिजम्, शुक्तिरुपलक्षणं हस्तिमस्तकाद्युद्भवमपि, यदाह–
"हस्तिमस्तकदन्तौ तु दंष्ट्रा शूकरवराहयोः ।
मेघो भुजङ्गमो वेणुर्मत्स्यो मौक्तिकयोनयः" ॥ १ ॥ इति ॥ १ ॥
मुक्ता एव मौक्तिकम्, विनयादित्वाद् इकण् ॥ २ ॥ मुच्यते शुक्तिभिर्मुक्ता ॥ ३ ॥ मुक्ता फलमिव मुक्ताफलम् ॥ ४ ॥ रसाद् अम्भस उद्भवति रसोद्भवम् ॥ ५ ॥ १३४ ॥

॥ समाप्तोऽयं पृथ्वीकायः ॥

अथ अप्कायमाह—

नीरं वारि जलं दकं कमुदकं पानीयमम्भः कुशं
तोयं जीवनजीवनीयसलिलार्णांस्यम्बु वा: संवरम् ।
क्षीरं पुष्करमेघपुष्पकमलान्यापः पयः पाथसी
कीलालं भुवनं वनं घनरसो यादो निवासोऽमृतम् ॥१३५॥
कुलीनसं कबन्धं च प्राणदं सर्वतोमुखम् ।

नीयते नयति वा नीरम्, "ऋज्यजि" ॥ (उणा–३८८) ॥ इति किद् र ॥ १ ॥ वार्यते वारि क्लीबलिङ्गः, "स्वरेभ्य इः" ॥ (उणा–६०६) ॥ २ ॥ जलति आम्यं गच्छति जलम् ॥ ३ ॥ दाति तृष्णां दकम्, "कीचक-" ॥ (उणा–३३) ॥ इति अके निपात्यते ॥ ४ ॥ कायति कम्, "क्वचित्" ॥५।१।१७१॥ इति ड ॥ ५ ॥ उनत्ति उदकम्, "भूमृन्दि" ॥ (उणा–२९) ॥ इति किद् अक ॥ ६ ॥ पीयते पानीयम् ॥ ७ ॥ अमति निम्नप्रदेशमम्भः क्लीबलिङ्गः, "अमेर्भश्चो वाऽन्तो" ॥ (उणा–९६२) ॥ इति अस् ॥ ८ ॥ कुश्यति भिनत्ति कुशम्, कुं श्यतीति वा ॥ ९ ॥ तुदति तुद्यते वा तोयम्, "स्थि छन्दमास्य" ॥ (उणा–३६४) ॥ इति ये निपात्यते ॥ १० ॥ जीव्यते अनेन जीवनम् ॥ ११ ॥ बाहुलकात् करणेऽपि अनीये जीवनीयम् ॥ १२ ॥ सरति सलिलम्, "सलिकल्यनि" ॥ (उणा–४७२) इति इल, सरकिलादित्वाद् लत्वे सलिलम् ॥ १३ ॥ अर्यते तद् इति अर्णः, "अर्तीण्भ्याम्" ॥ (उणा ९६९) ॥ इति नस्, ऋणोतीति वा "अस्" ॥ (उणा–९५२) ॥ इति अस् ॥१४॥ अमति अम्बु क्लीबलिङ्गो, "कम्यमिभ्याम्" ॥ (उणा–७५१) ॥

इति कु ॥ १५ ॥ शृणोति वा स्त्रीलिङ्ग, "शार्ङ्गरी" ॥ ( उणा-१४४ ) ॥ इति क्विपि निपात्यते ॥ १६ ॥ सरणोति सवरम् ॥ १७ ॥ घस्यते क्षीरम्, "घसिवसि" ॥ ( उणा-४१९ ) ॥ इति किद् इर ॥ १८ ॥ पुष्णाति पुष्टिं पुष्करम्, "पुषुषिभ्यां" ॥ ( उणा-४१६ ) ॥ इति किन् करः ॥ १९ ॥ मेघानां पुष्प प्रसवो मेघपुष्पम् ॥ २० ॥ काम्यते कमलम्, "मृदि कन्दि" ॥ ( उणा-४६५ )॥ इत्यल ॥ २१ ॥ आप्यन्ते सुखाद् आपः, स्त्रियां बहुवचनान्त, "आपः क्विप् ह्रस्वश्च" ॥ (उणा-९११ ) ॥ इति साधुः ॥२२॥ पीयते पयः, "पाहाग्भ्यां पयशो च" ॥ ( उणा-९५३ ) ॥ इति असु, पयते गच्छति वा, "असु" ॥ ( उणा-९५२ ) ॥ इत्यसु ॥ २३ ॥ पान्ति एतद् पाथः, क्लीबलिङ्गो, "पातेर्बस्वसी" ॥ ( उणा-९७७ ) ॥ इति थसु ॥ २४ ॥ कील्यते बध्यते सेतुभिः कीलालम्, "कलश" ॥ ( उणा-४७५ ) इति आलच्, कीलं ज्वाला अलति वारयति वा ॥ २५ ॥ भवति अस्मात् सर्वं भुवनम्, "सूभूधूभ्रस्जिभ्यो वा" ॥ (उणा-२७४) ॥ इति किद् अनः ॥ २६ ॥ वनति वनम् ॥ २७ ॥ घनस्य रसो घनरसः, 'घनरसम्' इति क्लीबे माला ॥ २८ ॥ यादसां निवासो यादोनिवास ॥ २९ ॥ न विद्यते मृतमस्माद् अमृतम् ॥ ३० ॥ १२५ ॥ कौ लीने स्थित स्यति कुलीनसम् ॥ ३१ ॥ कं मूर्धं वायुं बर्हि वा बध्नाति कबन्धम्, 'कम्, अन्धम्, इति द्वे नाम्नी इत्येके' ॥ ३२ ॥ प्राणान् ददाति प्राणदम् ॥३३॥ सर्वतो मुखमस्य सर्वतोमुखं सर्वदिग्गते ॥३४॥

शेषश्चात्र—

अब्जे विष्णमिरासैन्यं कृपीटं घृतमङ्कुरम् ।
चिरं पिप्पलपातालमक्षिताति च कम्बलम् ॥ १ ॥
मायमे पवृस नापि बस्त्हर तुसितं पयः ।
भिषिम वदतिक्षार सातक पद्मगन्धिकम् ॥ २ ॥
अन्ध तु क्लुम लोममतिस्पर्शं तु काथिमम् ।

अस्थाघास्थागमस्ताघमगाधं चाऽतलस्पर्शी ॥ १२६ ॥

तिष्ठति जनोऽत्र स्थाघम्, 'स्थार्ति-' ॥ ( उणा-१०९ ) ॥ इति घः, न स्थाघमस्थाघम् ॥ १ ॥ स्थग्यते स्थागं न स्थागमस्थागम् ॥ २ ॥ तिष्ठति स्ताघम् पृषोदरादित्वात्, न स्ताघमस्ताघम् ॥३॥ गाधते गाधम् न गाधमगाधम्, ॥ ४ ॥ नास्ति तले अधः स्पृक् स्पर्शोऽस्य अतलस्पृक् तत्र, एते नाम्यलिङ्गाः ॥ ५ ॥ ॥ १२६ ॥

निम्नं गभीरं गम्भीरम्

नितरां नीयते निम्नम्, "सुसुनिभ्यो माबो किद्," ॥ (उणा-१०९) ॥

इति म, निमनति इति वा ॥ १ ॥ गच्छति जलमत्र गभीरम्, गम्भीरम्, 'जम्बीराभीर" ॥ (उणा-४११) ॥ इति ईरे निपात्यते, अस्थामादीन् एकार्थान् इत्येके ॥ २ ॥ ३ ॥

उत्तानं तद्विलक्षणम् ।

ऊर्ध्वं तन्यते उत्तानं ततो गम्भीराद् विलक्षणमन्यत् ॥ १ ॥

अच्छे प्रसन्ने

अयते अच्छम् "तुदिमदि" ॥ (उणा-१२४) ॥ इति छक्, न छायते वा "क्वचित्" ॥ ५ । १ । १७१ ॥ इति डः ॥ १ ॥ प्रसीदति स्म प्रसन्नं तत्र ॥ २ ॥

अनच्छ स्याद् आविलं कलुषं च तत् ॥ १३७ ॥

न अच्छमनच्छम् ॥ १ ॥ आविलत्याविलम् ॥ २ ॥ कल्यते कलुषम्, "कृपृमहि-" ॥ (उणा-५५७) ॥ इत्युष ॥ ३ ॥ १३७ ॥

अवश्यायस्तु तुहिनं प्रालेयं मिहिका हिमम् ।

स्याद् नीहारस्तुषारश्च

अवश्यायतेऽवश्यायः "तन्व्यधीण्-" ॥ ५ । १ । ६४ ॥ इति णः ॥ १ ॥ तोहति अर्दयति तुहिनम्, "रुचितुहि-" ॥ (उणा-२८३) इति किदिन ॥ २ ॥ प्रलयादागतं प्रालेयम्, "तत आगते" ॥६।३।१४९॥ इत्यण् ततः "केकयमित्रयुप्रलयस्य यादेः" ॥७।४।२॥ इति इयो इयादेशे च साधु ॥ ३ ॥ मेहति मिहिका, "कुशिक" ॥ (उणा-४५) ॥ इति इके निपात्यते, धूमम हिपी धूमिका धूमयोंऽपि ॥ ४ ॥ हिनोति वर्धते जलमनेन हिमम्, "शुहिभ्यां वा" ॥ (उणा-३४१) ॥ इति किद् म ॥ ५ ॥ निह्रियते नीहारः, "वम्युपसर्गस्य" ॥३।२।८६॥ इति दीर्घः ॥ ६ ॥ तुष्यन्त्यनेन तुषारः, "तुषिकुठिभ्यां कित्" (उणा-४०८) ॥ इत्यार, एते त्रय पुल्लीबलिङ्गाः ॥ ७ ॥

हिमानी तु महद्धिमम् ॥ १३८ ॥

महद् हिमं हिमानी हिमसंहतिः, "यवयवनारण्य" ॥२।४।५५॥ इति ङीः, आन् चान्तः ॥ १ ॥ १३८ ॥

पारावारः सागरोऽपारपारो-
ऽकूपारोऽब्ध्यर्णवो वीचिमाली ।
यादःस्रोतोऽपान्नदीशः सरस्वान्
सिन्धूदन्वन्तौ मितद्रुः समुद्रः ॥ १३९ ॥

आकरो मकराद् रत्नाज्जलाद् निधि धि-राशय ।

पारमापिपर्ति पारापार , अपादित्वाद् पत्ने पारावारः, पारमिव अवारम र्वाक् कूलमस्य वा, पारमाप्नोतीति वा ॥ १ ॥ सगरपुत्राणामयं ते खातत्वात् सागर ॥ २ ॥ अवारमिव पार परतटमस्याऽवारपार ॥ ३ ॥ मर्यादास्थितत्वाद् न कु पिपर्ति अकूपार बाहुलकाद् दीर्घ , अपादित्वाद् पत्लेऽकूपारोऽपि ॥ ४ ॥ उदक धीयतेऽस्मिन् उदधि "व्याप्यावाधारे" ॥५।३।८८॥ इति कि 'उद कस्योद पेषाधि ' ॥३।२।१०४॥ इत्युदादेशः ॥ ५ ॥ अर्णासि सन्त्यस्य अर्णव "तमिस्रार्णवज्योत्स्ना ' ॥ ७।२।५२॥ इति साधु ॥ ६ ॥ वीचीमिरुन्तं धारयति वीचिमाली ॥ ७ ॥ यादसां स्रोतसां वारां नदीनां च ईश यादईशः स्रोत ईशः, वारीशः नदीशः, यौगिकत्वात् यादःपतिरित्यादय ॥ ८ ॥ ९ ॥ १० ॥ ॥ ११ ॥ सरांसि जलप्रसरणानि सन्त्यस्य सरस्वान् ॥ १२ ॥ स्यन्दते सिन्धुः पुंस्त्रीलिङ्गः "स्यन्दिश्रन्थिभ्यां" ॥ (उणा ७१७) ॥ इत्युः, सिन्धादेशश्च ॥१३॥ उदकानि सन्त्यस्य उदन्वान् " उदन्वानब्धौ च ' ॥ २।१।९७ ॥ इति मतौ निपात्यते ॥ १४ ॥ मितं समकार्य द्रवति मितद्रुः पुंलिङ्गः " हरिपीतमित ' ॥ (उणा-७४५) ॥ इति डुः ॥ १५ ॥ समुन्दन्ति आर्द्रीभवन्ति चन्द्रोदयाज्जलपोऽस्मात् समुद्र "ऋज्यसि " ॥ (उणा ३८८) ॥ इति किद् रः सह मुद्रया मर्यादया वर्तते वा ॥ १६ ॥ १२९ ॥ मकरशब्दाद् रत्नशब्दाच्च पर आकर मकराणामाकरो मकराकरः मकरालयोऽपि; एवं रत्नाकरः, रत्नराशिरपि ॥१७॥१८॥ जलशब्दात् परे निध्यादय जलस्य निधिर्जलनिधिः, जल धीयतेऽस्मिन् जलधि , जलानां राशिर्जलराशि यौगिकत्वात् वारिनिधिः, वारिधि , वारिराशिरित्यादयः ॥ १९ ॥ ॥ २० ॥ २१ ॥

शेषश्चात्र—

समुद्रे तु महाकच्छो दारदो धरणीप्लवः ॥
महीप्राचार उदधिस्तिमिकोशो महाशयः ॥ १ ॥

द्वीपान्तरा असङ्ख्यास्ते

ते समुद्रा द्वीपानि अन्तरे येषां ते द्वीपान्तरा असंख्याः सङ्ख्यारहिता अस ङ्ख्याता इत्यर्थः, यदाहुः—"असंख्याता द्वीपसमुद्राः' इति ॥

सप्तैवेति तु लौकिका ॥ १४० ॥

प्राहुरिति शेषः । लौकिका मिथ्यादृष्टयो गतानुगतिकाः सप्तैव समुद्रा इति प्राहुः ॥ १४० ॥

तानाह—

लवणक्षीरदध्याज्यसुरेक्षुस्वादुवारय ।

इति नः, निमनति इति वा ॥ १ ॥ गच्छति जलमत्र गभीरम्, गम्भीरम्, "जम्बीरामीर" ॥ (उणा–४२२) ॥ इति ईरे निपात्यते, अस्थामादीन् एकार्थान् इत्येके ॥ २ ॥ ३ ॥

उत्तानं तद्विलक्षणम् ।

ऊर्ध्वं तन्यते उत्तानं ततो गम्भीराद् विलक्षणमन्यत् ॥ १ ॥

अच्छं प्रसन्ने

अच्यते अच्छम्, "तुदिमदि" ॥ (उणा–१२४) ॥ इति छक्, न छाद्यते वा "क्वचित्" ॥ ५ । १ । १७१ ॥ इति डः ॥ १ ॥ प्रसीदति स्म प्रसन्नं तत्र ॥ २ ॥

अनच्छं स्याद् आविलं कलुषं च तत् ॥ १३७ ॥

न अच्छमनच्छम् ॥ १ ॥ आविलत्याविलम् ॥ २ ॥ कल्यते कलुषम्, "मपूनहि–" ॥ (उणा–५५७) ॥ इत्युषः ॥ ३ ॥ १३७ ॥

अवश्यायस्तु तुहिनं प्रालेयं मिहिका हिमम् ।
स्याद् नीहारस्तुषारश्च

अवश्यायतेऽवश्यायः "सन्व्यधि–" ॥ ५ । १ । ६४ ॥ इति णः ॥ १ ॥ तोहति अर्दयति तुहिनम्, "कमितुहि–" ॥ (उणा–२८३) इति किदिनः ॥ २ ॥ प्रलयादागतं प्रालेयम्, "तत आगते" ॥६।३।१४९॥ इत्यण् तत "केकयमित्रयुप्रलयस्य यादेः" ॥७।४।२॥ इति तस्य इयादेशो य साधु ॥ ३ ॥ मेहति मिहिका, "कृषिक" ॥ (उणा–४५) ॥ इति इके निपात्यते, धूममहिषी धूमिका धूमर्योऽपि ॥४॥ हिनोति वर्धते जलमनेन हिमम्, "छुहिभ्यां वा" ॥ (उणा–३४१) ॥ इति किद् मः ॥ ५ ॥ निह्रियते नीहारः, "घञ्युपसर्गस्य" ॥३।२।८६॥ इति दीर्घ ॥ ६ ॥ तुष्यन्त्यनेन तुषारः, "तुषिकुठिभ्यां किद्" (उणा–४०८) ॥ इत्यारः, एते त्रयः पुंक्लीबलिङ्गाः ॥ ७ ॥

हिमानी तु महद्धिमम् ॥ १३८ ॥

महद् हिमं हिमानी हिमसंहतिः, "यवयवनारण्य" ॥२।४।५५॥ इति ङीः, आन् चान्तः ॥ १ ॥ १३८ ॥

पारावारः सागरोऽपारपारो-
ऽकूपारोदध्यर्णवो वीचिमाली ।
यादः-स्रोतो-वा-र्नदीशः सरस्वान्
सिन्धूदन्वन्तौ मितद्रुः समुद्रः ॥ १३९ ॥

आकरो मकराद् रत्नाज्जलाद् निधि धि-राशय ।

पारमापिपर्ति पारावारः, अपारत्वात् पक्षे पारावारः, पारमिव अवारम् अर्वाक् कूलमस्य वा, पारमाप्नोतीति वा ॥ १ ॥ सगरपुत्राणामयं तैः खातत्वात् सागरः ॥ २ ॥ अवारमिव पारं परतटमस्मादवारपारः ॥ ३ ॥ अपारत्वाम्भिपतत्वात् न कुं पिपर्ति अकूपारः बाहुलकात् दीर्घः अपारत्वात् पक्षेऽकूपारोऽपि ॥ ४ ॥ उदकं धीयतेऽस्मिन् उदधिः "कर्मण्यधिकरणे च" ॥३।३।९३॥ इति किः "उद कस्योद मेघाधि" ॥६।३।१०४॥ इत्युदादेशः ॥ ५ ॥ अर्णांसि सन्त्यस्य अर्णवः "अर्णसो लोपश्च" ॥ ५। २ ।१०९॥ इति साधुः ॥ ६ ॥ वीचीमालां धारयति वीचिमाली ॥ ७ ॥ यादसां स्रोतसां वारां नदीनां च ईशः यादईशः स्रोत ईशः, वारीशः नदीशः, यौगिकत्वात् यादस्पतिरित्यादयः ॥ ८ ॥ ९ ॥ १० ॥ ॥ ११ ॥ सरांसि जलप्रसरणानि सन्त्यस्य सरस्वान् ॥ १२ ॥ स्यन्दते सिन्धुः पुंस्त्रीलिङ्गः "स्यन्देः सम्प्रसारणं धश्च" ॥ (उणा ७१७) ॥ इत्युः, सि धादेशश्च ॥१३॥ उदकानि सन्त्यस्य उदन्वान् "उदन्वानुदधौ च" ॥ ८।२।१३ ॥ इति मतौ निपात्यते ॥ १४ ॥ मितं समयात् द्रवति मितद्रुः पुंलिङ्गः "हरिपीतमित " ॥ (उणा-७४५) ॥ इति डुः ॥ १५ ॥ समुन्दन्ति आर्द्रीभवन्ति पर्वोकालनयोऽस्मात् समुद्रः "स्फायितञ्चि" ॥ (उणा १८८) ॥ इति रक्, सह मुद्रया मर्यादया वर्तते वा ॥ १६ ॥ १३९ ॥ मकरशब्दात् रत्नशब्दाच्च परे आकरः, मकराणामाकरो मकराकरः मकरालयोऽपि, एवं रत्नाकरः रत्नराशिरपि ॥१७॥१८॥ जलशब्दात् परे निध्यादयः जलस्य निधिर्जलनिधिः, जलं धीयतेऽस्मिन् जलधिः, जलानां राशिर्जलराशिः यौगिकत्वात् वारिनिधिः, वारिधि, वारिराशिरित्यादयः ॥ १९ ॥ ॥ २० ॥ २१ ॥

शेषश्चात्र—

समुद्रे तु महाकच्छो धरणो धरणीप्लवः ॥
महीप्राचीर उर्वीकस्तिमिकोशो महाशयः ॥ १ ॥

द्वीपान्तरा असङ्ख्यास्ते

ते समुद्राः द्वीपानि अन्तरे येषां ते द्वीपान्तराः असङ्ख्याः सङ्ख्यारहिता अतः ख्याता इत्यर्थः यदाहुः— असङ्ख्याता द्वीपसमुद्राः ' इति ॥

सप्तैवेति तु लौकिकाः ॥ १४० ॥

प्राहुरिति शेषः । लौकिकाः मिथ्यादृष्टयो गतानुगतिकाः सप्तैव समुद्रा इति प्राहुः ॥ १४० ॥

तानाह—

लवणक्षीरदध्याज्यसुरेक्षुस्वादुवारयः ।

लवण, क्षीर, दधि, आज्य, सुरा, इक्षुरस, स्वादु च वारि येषां ते तथा लवणवारिर्लवणोदः ॥ १ ॥ क्षीरवारिः क्षीरोदः ॥ २ ॥ दधिवारिर्दध्युदः ॥ ३ ॥ आज्यवारिराज्योदः ॥ ५ ॥ सुरावारि सुरोदः ॥ ६ ॥ इक्षुवारिरिक्षूदः ॥ ६ ॥ स्वादु वारि स्वादूदः, यदाहुः—

" लावणो रसमयः सुरोदकः सार्पिषो दधिजलः पयःपयाः ।
स्वादुवारिरुदधिश्च सप्तमस्तान् परीत्य त इमे व्यवस्थिताः ॥ १ ॥" इति ।

तरङ्गे भङ्गवीच्यूर्म्युत्कलिका

तरति तरङ्गः " पतितमि " ॥ ( उणा ९८ ) ॥ इत्यङ्गः, तरः सन् गच्छतीति वा " नाम्नो गमः " ॥ ५ । १ । १३१ ॥ इति खड्, तत्र ॥ १ ॥ भज्यते वायुना भङ्गः ॥ २ ॥ ऊयते जलैर्वीचिः स्त्रीलिङ्गः "वेगो ङित्" ॥ ( उणा ६२८ ) ॥ इतीचि ॥ ३ ॥ इयर्त्यूर्मिः पुंस्त्रीलिङ्गः " सर्तेस्त्वात " ॥ ( उणा ६८९ ) ॥ इति मि ॥ ४ ॥ उत्कलते उत्कलिका " कीकसि-" ॥ ( उणा ३८ ) ॥ इतीकः ॥ ५ ॥

महति त्विह ॥ १४१ ॥

लहर्युल्लोलकल्लोला

इह तरङ्गे महति ॥ १४१ ॥ लल हरति लहरिः, पृषोदरादित्वात्, ङ्यां लहरी ॥ १ ॥ ऊर्ध्वं लोलत्युल्लोलः ॥ २ ॥ कल्यते कल्लते वा कल्लोलः "पिञ्छोल-" ॥ [ उणा ४९५ ] ॥ इत्योले निपात्यते कुत्सितो लोल इत्येके ॥ ३ ॥

आवर्तः पयसां भ्रमः ।

तल्लूरो वोल्लकश्चासौ

आवर्तते मण्डलेन भ्रमति आवर्तः अम्भसां भ्रमः ॥ १ ॥ तलति तल्लूरः "महिकणि " ॥ ( उणा ४२८ ) ॥ इति णिदूरः ॥ २ ॥ वोल्लयत्यन्तर्निमज्जयति वोल्लकः ॥ ३ ॥

वेला स्याद् वृद्धिरम्भसः ॥ १४२ ॥

वेल्लति चलति वेला ॥ १ ॥ १४२ ॥

डिण्डीरोऽब्धिकफः फेनः

डयते जलाघातैर्डिण्डीरः "गम्भीर " ॥ ( उणा ४२२ ) ॥ इतीरे निपात्यते, डिण्डीति शब्दमीरयति राति वा ॥ १ ॥ अब्धेः कफ इवाब्धिकफः बहिः प्रसरादब्धिकफः सागरमलाख्य, यथाऽदौ लूपवारात् ॥ २ ॥ स्फायते फेनः "विननगम " ॥ ( उणा-२६८ ) ॥ इति ने निपात्यते ॥ ३ ॥

बुद्बुदस्थासकौ समौ ।

बुध्यति बुद्बुदः जलस्फोटः 'कुमुद' ॥ ( उणा–२४४ ) ॥ इत्युदे निपात्यते ॥ १ ॥ तिष्ठति स्थासकः 'कीचक-' ॥ ( उणा ३३ ) ॥ इत्यके निपात्यते ॥ २ ॥

मर्यादा कूलभूः

मर्येति सीमार्थेऽव्ययम्, मर्यां ददाति मर्यादा कूलम समुद्रतटस्य भूः कूलभूः ॥ १ ॥

कूलं प्रपातः कच्छरोधसी ॥ १४३ ॥

तटं तीरं प्रतीरं च

कूलस्याप्नोति कूलम् ॥ १ ॥ प्रपतन्त्यस्मिन् प्रपातः ॥ २ ॥ कच्यते कच्छः "कुटिमहि ॥ ( उणा १२४ ) ॥ इति छक् ॥ ३ ॥ रुणद्धीति रोधः क्लीबलिङ्गः 'असुन्" ॥ ( उणा–५५२ ) ॥ इत्यसुन् ॥ ४ ॥ १४३ ॥ तन्यते तटं त्रिलिङ्गः 'शमितमि' ॥ [ उणा १३९ ] ॥ इति कोऽन्तादेशश्च, तटत्युच्छ्रयते वा ॥ ५ ॥ तीर्यते तीरम् ॥ ६ ॥ प्रतीरं प्रतीपकत्वं ॥ ७ ॥

पुलिनं तज्जलोज्झितम् ।

सैकतं च

तत् कूलं च जलेन परित्यक्तं पोलति पुलिनम् पुंक्लीबलिङ्गः "तलिपुलि" ॥ ( उणा २८३ ) ॥ इति किनन् ॥ १ ॥ सिकता सन्त्यस्मिन् सैकतम् "सिकताशर्कराभ्यां च" ॥ ७ । १ । १५ ॥ इत्यण् ॥ २ ॥

अन्तरीपं तु द्वीपमन्तर्जले तटम् ॥ १४४ ॥

अन्तर्गता आपोऽस्मिन्नन्तरीपम् ॥ १ ॥ द्विधा गता आपोऽत्र द्वीपं पुंक्लीबलिङ्ग "द्व्यन्तरुपसर्गेभ्योऽप ईत्" ॥ ३ । ९ । १०९ ॥ इति समासान्ते सतीपादेश, अन्तःस्यान्तर्जले तत्र नलत्वम् ॥ २ ॥ १४४ ॥

तत्परं पारं

समुद्रस्य तत्तटं परत्र स्थितं पारयति समाप्यतेऽनेनेति पारं पुंक्लीबलिङ्ग ॥ १ ॥

अवारं स्वर्वाक्

समुद्रादेरर्वाक् पार्श्वे तटं न पार्यतेऽस्य अवारं पुंक्लीबलिङ्ग, न वियत इति वा ॥ १ ॥

पात्रं तदन्तरम् ।

पीयते पात्र प्रवाह त्रिलिङ्गः तयोः पारावारयोरन्तरं मध्य तदन्तरम् ॥ १ ॥

नदी हिरण्यवर्णा स्याद् रोधोवक्रा तरङ्गिणी ॥ १४५ ॥
सिन्धु शैवलिनी वहा च ह्रदिनी स्रोतस्विनी निम्नगा
स्रोतो निर्झरिणी सरिच्च तटिनी कूलङ्कषा वाहिनी ।
कर्षूर्द्वीपवती समुद्रदयिताधुन्यौ स्रवन्तीसर-
स्वन्त्यौ पर्वतजाऽऽपगा जलधिगा कुल्या च जम्बालिनी॥१४६॥

नदति स्रोतस्वरसा नदी गौरादित्वात् ङी ॥ १ ॥ हिरण्येन वर्ण्यते पूर्यते हिरण्यवर्णा ॥ २ ॥ रोधोभिर्वक्रा कुटिला रोधोवक्रा ॥ ३ ॥ तरङ्गाः सन्त्यस्यां तरङ्गिणी ॥ ४ ॥ स्यन्दते सिन्धुः पुंस्त्रीलिङ्गः ॥५॥ शैवलमस्त्यस्यां शैवलिनी ॥ ६ ॥ वहति वहा ॥ ७ ॥ ह्रदाः सन्त्यस्यां ह्रदिनी, ह्रादोऽस्त्यस्या ह्रादिनीत्येके ॥ ८ ॥ स्रोतांसि सन्त्यस्याः स्रोतस्विनी ॥ ९ ॥ निम्नं गच्छति निम्नगा ॥ १० ॥ स्रवति स्रोतः क्लीबलिङ्गः "स्रुरीभ्याम्" ॥ ( उणा–९७८ ) ॥ इति तस् ॥ ११ ॥ निर्झरोऽस्त्यस्या निर्झरिणी ॥ १२ ॥ सरति सरित् स्त्रीलिङ्गः "हृसृरुहि" ॥ ( उणा–८८७) ॥ इति इत ॥ १३ ॥ तटानि सन्त्यस्यां तटिनी ॥ १४ ॥ कूलं कषति भिनत्ति कूलङ्कषा "कूलाभ्रकरीष" ॥ ५ । १ । ११० ॥ इति खः ॥१५॥ वहत्यवश्यं वाहिनी ॥ १६ ॥ कषति रोधसी कर्षूः स्त्रीलिङ्गः "कषिचमि" ॥ (उणा ८२९) ॥ इत्यूः ॥ १७ ॥ द्वीपमस्त्यस्यां द्वीपवती ॥ १८ ॥ समुद्रस्य दयिता समुद्रदयिता ॥१९॥ धुनाति तटतरुम् धुनिः "धूसाधीभ्यो ह्रस्वश्च" ॥(उणा ६७८)॥ इति निः, ङ्यां धुनी ॥ २० ॥ स्रवति स्रवन्ती ॥ २१ ॥ सरः प्रसरणमस्त्याः सरस्वती ॥ २२ ॥ पर्वताज्जाता पर्वतजा ॥ २३ ॥ आ अपगच्छति आपमाप्नुवं गच्छतीति वा, अप्सम्बन्धिना वेगेन आपेन वेगेन गच्छतीति वा "नाम्नो गमः" ॥ ५।१।१३१ ॥ इति डः ॥ २४ ॥ जलधिं गच्छति जलधिगा ॥ २५ ॥ कोलति जलैः सत्स्मायाति कुल्या 'कुलेर्द् य वा' ॥ ( उणा–३६२ ) ॥ इति किद् यः ॥ २६ ॥ जम्बालोऽस्त्यस्यां जम्बालिनी ॥ २७॥१४६॥

गङ्गा त्रिपथगा भागीरथी त्रिदशदीर्घिका ।
त्रिस्रोता जाह्नवी मन्दाकिनी भीष्मकुमारसूः ॥ १४७ ॥
सरिद्वरा विष्णुपदी सिद्धस्व स्वार्गि स्वापगा ।
ऋषिकुल्या हैमवती स्वर्वापी हरशेखरा ॥ १४८ ॥

गच्छति समुद्रं गङ्गा "गम्यमि" ॥ ( उणा ९२ ) ॥ इति गः, गाममं वा गच्छतीति वा पृषोदरादित्वात् ॥ १ ॥ त्रिपथेन गच्छति त्रिपथगा, त्रिमार्गगाऽपि ॥ २ ॥ भगीरथस्येयं भागीरथी, भगीरथेन मार्गेऽवतारितत्वात् ॥ ३ ॥ त्रिदशानां

दीर्घिका ॥ ४ ॥ त्रीणि स्रोतांस्यस्या त्रिस्रोताः स्त्रीलिङ्गः ॥ ५ ॥ जह्नुना सगरा स्मजेनावनारितत्वात् जह्नोरिय जाह्नवी जह्नुना पीता श्रोत्रेण मुक्ता चेति जाह्नवी ति सौतिकाः जह्नुकन्याऽपि ॥ ६ ॥ मन्दमकति मन्दाकिनी मन्दाक्षा औपाधिविद्धे पा सन्त्यस्यामिति वा ॥ ७ ॥ भीष्म कुमारं च सूते भीष्मसूः कुमारसूः स्त्रीलिङ्गा-विमौ ॥ ८ ॥ ९ ॥ १४७ ॥ सरितां वरा सरिद्वरा ॥१०॥ विष्णोः पादौ हेतुरस्या विष्णुपदी विष्णुपादाग्रेतिगतत्वात् कुम्भपद्यादिः" ॥ ७ । ३ । १४९ ॥ इति साधु ॥ ११ ॥ सिद्धानां स्वर्गस्य स्वर्गिणां वास्य च आपगा सिद्धापगा, स्वरापगा, स्वर्गापगा स्वापगा ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ नदीनां कुल्या ऋषिकुल्या ॥ १६ ॥ हिमवत प्रभवति हैमवती 'प्रभवति" ॥ ६ । ३ । १५७ ॥ इत्यण् ॥ १७ ॥ स्वर्गे वापी स्वर्वापी ॥ १८ ॥ हरस्य शेखरोऽनया हरशेखरा ॥ १९ ॥ ॥ १४८ ॥

यमुना यमभगिनी कालिन्दी सूर्यजा यमी ।

यम्यते यमुना "यम्यमि" ॥ (उणा २८८) ॥ इत्युमः ॥ १ ॥ यमस्य भगिनी यमभगिनी ॥ २ ॥ कलिन्दाद्गिरेर्य कालिन्दी कलिन्दतनयाऽपि ॥ ३ ॥ सूर्याज्जाता सूर्यजा ॥ ४ ॥ यमेन यमजातत्वात् यमी ॥ ५ ॥

रेवेन्दुजा पूर्वगङ्गा नर्मदा मेखलाद्रिजा ॥ १४९ ॥

रेवते वेगेन गच्छति रेवा ॥ १ ॥ इन्दोर्जाता इन्दुजा ॥ २ ॥ पूर्वे गङ्गा पूर्वगङ्गा ॥३॥ नर्म ददाति नर्मदा नर्मार्थं सोमवंश्येन पुरूरवसाऽवतारितत्वात् ॥४॥ मेकलाद्रेर्जाता मेकलाद्रिजा मेकलकन्याऽपि ॥ ५ ॥ १४९ ॥

गोदा गोदावरी

गां ददाति गोदा गोदन्ते क्रीडन्त्यस्यामिति वा ॥ १ ॥ पयःपूरेण गां पृथ्वीं ददाति गोदावरी 'मन्वन्' ॥ ५ । १ । १४७ ॥ इति वन् "वन्यराघापादुतो रश्च" ॥ २ । ४ । ४ ॥ इति ङ्यां साधुः ॥ २ ॥

तापी तपनी तपनात्मजा ।

ताप्यति तापिः स्वरेभ्य इः' ॥ (उणा ६०६) ॥ ङ्यां तापी ॥ १ ॥ तपति तपनी ॥ २ ॥ तपनस्यात्मजा तपनात्मजा ॥ ३ ॥

शुतुद्रिस्तु शतद्रुः स्यात्

शु पूजितमाशु वा द्रवति शुतुद्रिः "शिमुतेभ्यमेर्योदय" ॥ (उणा ८११) ॥ इति रौ निपात्यते ॥ १ ॥ शतधा वमनेन गतत्वा द्रवतीति शतद्रु, स्त्रीलिङ्गाविमौ 'हरिपीत' ॥ (उणा ७४५) ॥ इति शिद्रुः ॥ २ ॥

कावेरी स्वर्द्धजाह्नवी ॥ १५० ॥ १

कवेरस्य जलदेहस्येयं कावेरी ॥ १ ॥ अर्धं जाह्नवी अर्धजाह्नवी ॥ २ ॥१५०॥

करतोया सदानीरा

*गौरीविवाहे* हरहस्तात् प्रदानतो या जाता करतोया ॥ १ ॥ सदा *नीरमस्या*, सदानीरा ॥ २ ॥

चन्द्रभागा तु चन्द्रका ।

चन्द्रेण भागतो न्यस्ता चन्द्रभागा । 'चन्द्र-भागाभ्यां गिरिभ्यां प्रभवति चान्द्रभागा' इत्येके ॥ १ ॥ चन्द्र कायति च न्द्रका ॥ २ ॥

वासिष्ठी गोमती तुल्ये

वसिष्ठस्येयं वासिष्ठी, गौतमीत्यपि ॥१॥ गावो जलानि सन्त्यस्यां गोमती ॥२॥

ब्रह्मपुत्री सरस्वती ॥ १५१ ॥

ब्रह्मणः पुत्री ब्रह्मपुत्री ॥१॥ सरः प्रसरणमस्त्यस्याः सरस्वती ॥२॥ १५१ ॥

विपाट् विपाशा

*वशिष्ठ विपाशितवती विपाट्*, स्त्रीलिङ्ग ॥ १ ॥ *विपाशयति संसारपाशान्* मोचयति स्नानेन विपाशा ॥ २ ॥

आर्जुनी तु बाहुदा सैतवाहिनी ।

अर्जुनस्येयमार्जुनी ॥ १ ॥ *बाहुभिर्दीयते दीयते बाहुदा* '*कचित्*" ॥ ५ । १ । १७१ ॥ इति डः, बाहुदेन कार्तवीर्योऽर्जुनेनावतारितेत्यन्ये ॥ २ ॥ सितैव सैती सा चासौ वाहिनी च सैतवाहिनी ॥ ३ ॥

वैतरणी नरकस्था

विगततरणी ग्यर्के पातकि मवा वैतरणी "भवे' ॥ ६ । ३ । १२३ ॥ इत्यण् विगततरणिर्वितरणिर्विनौका ततः स्वार्थेऽण्वा ॥ १ ॥ नरके तिष्ठति नरकस्था नदीविशेषः ॥ २ ॥

शेषश्चात्र–

> मुरन्दला तु मुरला मुरवेला मुनन्दिनी ।
> चर्मण्वती रतिनन्दी संभेदः सिन्धुसङ्गमः ॥ १ ॥

स्रोतोऽम्भःसरणं स्वतः ॥ १५२ ॥

स्रवति स्रोतः वलीवलिङ्गः, स्वतोऽकृत्रिममम्भःसरणम् ॥ १ ॥ ॥ १५२ ॥

प्रवाहः पुनरोघः स्याद् वेणी धारा रयश्च सः ।

प्रवहत्यनेन प्रवाहः ॥ १ ॥ वहत्योघः, न्यङ्क्वादित्वादविकल्पत्वो निपा

म्रते ॥ २ ॥ वेति वेणि इर्वा वेणी ॥ ३ ॥ म्रियते अलमनया मारा, भिदादित्वा दिति साधु ॥ ४ ॥ रीयते गच्छति रयः ॥ ५ ॥

घट्टस्तीर्थोऽवतारे

घट्टन्ते चलन्त्यनेन घट्टः ॥ १ ॥ तरन्त्यनेन तीर्थं, पुक्सविकिर "र्तानू रमि-" ॥ (उणा-२१७) ॥ इति थक् यः ॥२॥ अवतरन्त्यनेनास्मिन्वाऽवतार नद्यादीनामवतरणमार्गः तत्र, "अवात् तृस्तृभ्याम्" ॥ ५ । ३ । १२१ ॥ इति घम् ॥ ३ ॥

अम्बुवृद्धौ पूर प्लवोऽपि च ॥ १५३ ॥

अम्बुनो वृद्धिराधिक्यमम्बुवृद्धिस्तत्र, पूरयति कूलयोमध्य पूर ॥ १ ॥ प्लवन्तेऽस्मिन् प्लव ॥ २ ॥ ॥ १५३ ॥

पुटभेदास्तु वक्राणि

पुट तृणादिसघातं भिन्दन्ति पुटभेदाः ॥ १ ॥ वञ्चन्ति कुटिलं गच्छन्ति वक्राणि "स्फायितञ्चि-" ॥ (उणा- १८८) ॥ इति किद् रः । वक्राणीत्यन्यः ॥२॥

भ्रमास्तु जलनिर्गमा ।

भ्राम्यन्ति भ्रमा, जलं निर्गच्छत्येभिरिति निर्गमा जलपथा ॥ १ ॥

परिवाहा जलोच्छ्वासा

जलं प्रवृद्ध परिवहति यैर्निर्गममार्गैस्ते परिवाहाः "यम्युपसर्गेस्य-" ॥ ३ । २ । ८६ ॥ इति दीर्घस्ते परीवाहाः ॥ १ ॥ जल प्रवृद्धमुच्छ्वसिति यैस्ते जलोच्छ्वासाः ॥ २ ॥

कूपकास्तु विदारका ॥ १५४ ॥

कूपप्रतिकृतयः कूपकाः शुष्कनद्यादौ हि जलार्थं गर्ता क्रियन्ते, यत् कात्य - विवरान् कूपकानाहु' ॥ १ ॥ विदारयन्ति क्ष्मां विदारकाः ॥ २ ॥ १५४ ॥

प्रणाली जलमार्गो

प्रणलन्त्यम्भोऽनया प्रणाली त्रिलिङ्गः, जलनिर्गममार्गो मकरमुखादिस्तत्र॥१॥

अथ पान कुल्या च सारणि ।

पीयते एतादिभिरनेन पानम् ॥ १ ॥ कोलति सस्यानामम्भसा कुल्या ॥ २ ॥ सरति जलमनया सरणिः "अर्तिसृ-" ॥ (उणा- ६३८) ॥ इत्यणिः, बाहुल-कादीर्घत्वे सारणिः कौशिक' ॥ ३ ॥

शेषश्चात्र- नौका तु सारणौ ॥

कवेरस्य जलदेहस्येयं कावेरी ॥ १ ॥ अर्धे जाह्नवी अर्धजाह्नवी ॥ २ ॥१५०॥

करतोया सदानीरा

गौरीविवाहे हरहस्तात् प्रदानतो या जाता करतोया ॥ १ ॥ सदा नीरमस्याः सदानीरा ॥ २ ॥

चन्द्रभागा तु चन्द्रका ।

चन्द्रेण भागतो न्यस्ता चन्द्रभागा । 'चन्द्र-भागाभ्यां गिरिभ्यां प्रभवति चान्द्र-भागा' इत्येके ॥ १ ॥ चन्द्रं कायति चन्द्रका ॥ २ ॥

वासिष्ठी गोमती तुल्ये

वसिष्ठस्येयं वासिष्ठी, गौतमीत्यपि ॥१॥ गावो जलानि सन्त्यस्यां गोमती ॥२॥

ब्रह्मपुत्री सरस्वती ॥ १५१ ॥

ब्रह्मणः पुत्री ब्रह्मपुत्री ॥१॥ सरः प्रसरणमस्त्यस्याः सरस्वती ॥२॥ १५१ ॥

विपाट् विपाशा

वसिष्ठ विपाशितवती विपाट्, स्त्रीलिङ्ग ॥ १ ॥ विपाशयति संसारपाशान् मोचयति स्नानेन विपाशा ॥ २ ॥

आर्जुनी तु बाहुदा सैतवाहिनी ।

अर्जुनस्येयमार्जुनी ॥ १ ॥ बाहुभिर्दीयते तीर्यते बाहुदा "कश्चित्" ॥ ५ । १ । १७१ ॥ इति कः, बाहुदेन कार्तवीर्योऽर्जुनेनावतारितेत्यन्ये ॥ २ ॥ सितैव सैती सा चासौ वाहिनी च सैतवाहिनी ॥ ३ ॥

वैतरणी नरकस्था

विगततरणौ व्यर्थे पाताले भवा वैतरणी "भवे" ॥ ६ । ३ । १२३ ॥ इत्यण् विगततरणिर्वितरणिर्वितरणीका ततः स्वार्थेऽण्वा ॥ १ ॥ नरके तिष्ठति नरकस्था नदीविशेष ॥ २ ॥

शेषश्चात्र–

> मुरन्दला तु मुरला मुरलेला मुनन्दिनी ।
> धर्मण्वती रतिनन्दी समेदः सिन्धुसङ्गमः ॥ १ ॥

स्रोतोऽम्भःसरणं स्वतः ॥ १५२ ॥

स्रवति स्रोतः नलीपक्षिरः, स्वतोऽकृत्रिममम्भःसरणम् ॥ १ ॥ ॥ १५२ ॥

प्रवाहः पुनरोघः स्याद् वेणी धारा रयश्च सः ।

प्रवहन्त्यनेन प्रवाहः ॥ १ ॥ वहत्योघ, न्यङ्क्वादित्वादविकृतिपत्वो निपा

स्रवते ॥ २ ॥ वेति वेणि दर्या वेणी ॥ ३ ॥ ध्रियते जलमनया धारा, भिदादित्वा दङ्‌ साधु ॥ ४ ॥ रीयते गच्छति रयः ॥ ५ ॥

## मद्गुस्तीर्थोऽवतारे

पद्यन्ते जलमनेन पद्गुः ॥ १ ॥ तरन्त्यनेन तीर्थः, पुक्लीवलिङ्ग "र्तानू रमि–" ॥ ( उणा–१२७ ) ॥ इति किन्‌ थः ॥२॥ अवतरन्त्यनेनास्मिन्वाऽवतार नद्यादीनामवतरणमार्गः तत्र, 'अवात्‌ वृस्तृभ्याम्‌' ॥ ५ । ३ । १३३ ॥ इति घञ्‌ ॥ ३ ॥

## अम्बुवृद्धौ पूर प्लवोऽपि च ॥ १५३ ॥

अम्बुनो वृद्धिराधिक्यमम्बुवृद्धिस्तत्र, पूरयति कूलयोर्मध्यं पूरः ॥ १ ॥ प्लवन्तेऽस्मिन्‌ प्लव ॥ २ ॥ ॥ १५३ ॥

## पुटभेदास्तु वक्राणि

पुटं तृणादिसंघातं भिन्दन्ति पुटभेदाः ॥ १ ॥ वक्रयन्ति कुटिलं गच्छन्ति वक्राणि "स्फायति–" ॥ ( उणा– १८८ ) ॥ इति किर्‌ रः । वक्राणीत्यन्यः ॥२॥

## भ्रमास्तु जलनिर्गमा ।

भ्राम्यन्ति भ्रमाः, जल निर्गच्छत्येभिरिति निर्गमा जलपथा ॥ १ ॥

## परिवाहा जलोच्छ्वासा

जलं प्रवृद्ध परिवहति यैर्निर्गममार्गैस्ते परिवाहाः "घञ्युपसर्गस्य–' ॥ ३ । २ । ८६ ॥ इति दीर्घत्वे परीवाहाः ॥ १ ॥ जल प्रवृद्धमुच्छ्वसिति यैस्ते जलोच्छ्वासाः ॥ २ ॥

## कूपकास्तु विदारका ॥ १५४ ॥

कूपप्रतिकृतय कूपकाः शुष्कनद्यादौ हि जलार्थं गर्ता क्रियन्ते, यद्‌ कात्यः– विदरान्‌ कूपकानाहु ॥ १ ॥ विदारयन्ति क्ष्मां विदारका ॥ २ ॥ १५४ ॥

## प्रणाली जलमार्गे

प्रणयन्त्यम्भोऽनया प्रणाली त्रिलिङ्ग, जलनिर्गममार्गो मकरमुखादिस्तत्र ॥१॥

## अथ पान कुल्या च सारणि ।

पीयते क्षत्रादिभिरनेन पानम्‌ ॥ १ ॥ कोलति संस्त्यायत्यम्भसा कुल्या ॥ २ ॥ सरति जलमनया सरणि "अर्त्तिसृ–" ॥ ( उणा– १३८ ) ॥ इत्यनिः, चातुरर्थिकाद्यैर्यत्वे सारणिः क्षीलिङ्गः ॥ ३ ॥

मेघनाथ– नीका तु सारणी ॥

सिकता वालुका

'सिकिः सेचने' सिच्यन्ते सिकता "पृषिरञ्जि-" ॥ ( उणा- २०८ ) ॥ इति किदत, स्त्रीलिङ्गो वा बहुवचनान्तोऽयं यदवाचाम- "वा ॥ अप्सरसः सिकता-सुमन समाः" (लिङ्गा० २६) इति ॥ १ ॥ वलन्ते वालुका "कञ्चुक-" ॥ (उणा- ५७) ॥ इत्युके निपात्यते । सिकतानां पृथ्वीकायिकत्वेऽपि नद्यङ्गभूतत्वादप् कायमध्ये पाठ ॥ २ ॥

बिन्दौ पृषत् पृषतविप्रुषः ॥ १५५ ॥

'विदु अवयवे' बिन्दति बिन्दुः पुलिङ्ग "भृमृतृ-" ॥ ( उणा- ७१६ ) ॥ इत्यु, तत्र ॥ १ ॥ पर्षति सिञ्चति पृषत् क्लीबलिङ्गः "द्रुहिवृहि-" ॥ ( उणा- ८८४) ॥ इति किदत् ॥ २ ॥ "पृषिरञ्जि-" ॥ ( उणा- २०८ ) इति किदते पृषत ॥ ३ ॥ विरुद्ध प्रुष्यतेऽनया विप्रुट् "कुत्सपदादि-" ५ । ३ । ११४ ॥ इति क्विप्, विगत प्रोषोऽस्या इति वा ॥ ४ ॥ ॥ १५५ ॥

जम्बाले चिक्खिलौ पङ्क कर्दमश्च निषद्वर ।

शाद

जायते जमति प्रसते वा जम्बालः, पुंक्लीबलिङ्ग "चात्वाल-" ॥ ( उणा- ४८० ) ॥ इत्याले निपात्यते ॥ १ ॥ जयतीति चिक्खिलः "स्थण्डिल-" ( उणा- ४८४ ) ॥ इतीले निपात्यते ॥ २ ॥ पच्यते विस्तार्यते जलेन पङ्क पुंक्लीबलिङ्ग, घञि न्यङ्क्वादित्वात् कत्वम् ॥ ३ ॥ कदति निर्गीडित कर्दमः "खपृग्रपि-" ॥ ( उणा- ३४७ ) ॥ इत्यमः ॥ ४ ॥ निषीदन्त्यस्मिन्निषद्वरः "कृगृशृ-" ॥ ( उणा- ४४१ ) ॥ इति रद् ॥ ५ ॥ शीयतेऽस्मिन् शाद विस्तार्था देश्यां संस्कृतेऽपि ॥ ६ ॥

हिरण्यबाहुस्तु शोण

हिरण्यं वहति हिरण्यबाहुः "मिवहि-" ॥ ( उणा- ७२६ ) ॥ इत्युण् ॥ १ ॥ शोणजलत्वात् शोणः ॥ २ ॥

नदे पुनर्वहः ॥ १५६ ॥

सिन्धु उद्ध्य सरस्वांश्च

नदति नदः, तत्र ॥ १ ॥ वहति वह ॥ २ ॥ ॥ १५६ ॥ सिनति कूलानीति सिन्धुः ॥ ३ ॥ उज्झत्युदकमुद्ध्यः "कुप्यभिद्योद्ध्य-" ॥ ५ । १ । ३९ ॥ इति क्यपि साधुः ॥ ४ ॥ सरः प्रसरणमस्त्यस्य सरस्वान् ॥ ५ ॥

ह्रदोऽगाधजलो ह्रदः ।

ह्रादते ह्रद, पृषोदरादित्वात् ॥ १ ॥ अगाधं जलमस्मिन् अगाधजलः ॥ २ ॥ ह्रादते ह्रदः, पृषोदरादित्वाद् ह्रस्व ॥ ३ ॥

कूप स्यादुदपानोऽन्धु प्रहि

कौति प्रतिशब्देन कूपः पुंस्त्रीलिङ्गः "कुयुकु–" ॥ (उणा २९७) ॥ इति प ऊत्वं च, कुत्सिता आपो वा अत्रेति वा, पृषोदरादित्वात् ॥१॥ उदकं पीयतेऽस्मिन् उदपान पुंक्लीबलिङ्गः "नाम्न्युत्तरपदस्य च" ॥ ३ । २ । १०७ ॥ इत्युदादेशः ॥ २ ॥ अन्धयत्यन्धुः "भृमृतॄ–" ॥ ( उणा– ७१६ ) ॥ इत्युः ॥ ३ ॥ प्रहरति प्रहिः "नीवीप्रहृभ्यो डित्" ॥ ( उणा– ६१६ ) ॥ इति इः, पुंलिङ्गावेतौ ॥ ४ ॥

नेमी तु तन्त्रिका ॥ १५७ ॥

नीयते चक्रमनया नेमिः स्त्रीलिङ्गः ॥ १ ॥ तस्य कूपस्यान्ते रज्ज्वादिधारणार्थं न्यस्तं दारु त्रिका तन्त्रिका ॥ २ ॥ ॥ १५७ ॥

नान्दीमुखो नान्दीपटो वीनाहो मुखबन्धने ।

नान्दी इव मुखमस्य नान्दीमुखः ॥ १ ॥ नान्दीव पटति नान्दीपटः ॥ २ ॥ कूपस्योर्ध्वं इष्टकाभिर्विनह्यते वीनाहः पुंक्लीबलिङ्गः यद्वैजयन्ती–'वीनाहमभिदाम्' । "घञ्युपसर्गस्य" ॥ ३ । २ । ८६ ॥ इति दीर्घः ॥ ३ ॥ कूपस्य मुखं बध्यतेऽनेन मुखबन्धनं, तत्र ॥

आहावस्तु निपानं स्यादुपकूपे

आहूयन्ते पशवः पानाय अस्मिन्नित्याहावः "आहावो निपानम्" ॥ ५ । ३ । ४४ ॥ इत्यादि निपात्यते ॥ १ ॥ नितरां पिबन्त्यत्र निपानं पुंक्लीबलिङ्गः । कूपस्य समीपे शिलादिरचितं पशुपानार्थं कूपोद्धृताम्बुस्थानम्, तत्र ॥ २ ॥

अथ दीर्घिका ॥ १५८ ॥

वापी स्यात्

दीर्घैव दीर्घिका ॥ १ ॥ ॥ १५८ ॥ उप्यतेऽस्यां पद्मादि वापिः "वमि वापि–" ॥ ( उणा–६१८ ) ॥ इति णिदिः, ङ्यां वापी ॥ २ ॥

क्षुद्रकूपे तु चुरी चुण्डी च चूतकः ।

चोरति चुरिः "नाम्युपान्त्य–" ॥ ५ । १ । ५४ ॥ इति कः, ङ्यां चुरी ॥ १ ॥ चमत्यस्यामम्भस्तस्यां चुण्डिः " चमेरुच्चातः " ( उणा– ६१२ ) ॥ इति डिः ङ्यां चुण्डी ॥ २ ॥ चोतति चूतकः "चीकक–" ॥ ( उणा– ३३ ) ॥ इत्यके निपात्यते ॥ ३ ॥

उद्घाटक घटीयन्त्र

उद्घाटयति प्रकाशयत्यम्भ उद्घाटकम्, उद्घाटनमपि । ऊर्ध्वं हन्यतेऽनेनेत्युद्घात

नमिति कौटिल्य ॥ १ ॥ घटीनां यन्त्रं घट्यो यन्त्र्यन्तेऽत्रेति वा घटीयन्त्रं माला-
ख्यं येन कूपादेर्जलमूर्ध्वं नीयते ॥ २ ॥

पादावर्तोऽरघट्टक ॥ १५९ ॥

पादाभ्यामावर्त्यते भ्रम्यते पादावर्तः ॥ १ ॥ अरान् घट्टयति, अरा घट्टयन्ते
ऽत्रेति वा अरघट्ट, केऽरघट्टकः ॥ २ ॥ १५९ ॥

अखात तु देवखात

न खातमखात नागादिकुण्डमकृत्रिमम् ॥ १ ॥ देवैरिव खात देवखातम् ॥२॥

पुष्करिण्यां तु खातकम् ।

पुष्करमस्त्यस्यां पुष्करिणी तडागिका "पुष्करादेर्देशे" ॥ ७ । २ । ७० ॥
इतीन्, तत्र ॥ १ ॥ खन्यते खात दूर्लं खात खातकम् ॥ २ ॥

पद्माकरस्तडाग स्यात् कासार सरसी सर ॥ १६० ॥

पद्मानामाकरः पद्माकर, योग्यत्वात् ॥ १ ॥ ताड्यते जलमस्मिंस्तडाग । तडे
राग तडाग इत्यपर । तटान्यकति तटाक इत्यपरे । 'कासृङ् शब्दकुत्सायाम्'
इति दन्त्यान्तः, कासन्ते चक्राद्योऽत्र कासार पुंक्लीबलिङ्गः "अग्यङ्गि-" ॥
(उणा- ४०५) ॥ इत्यार कमासरत्यत्रेति वा ॥ २ ॥३॥ सरतिर्जलमत्र "अस्" ॥
(उणा-९५२) इत्यसि क्लीलिङ्गे गौरादित्वात् ङ्यां सरसी, क्लीबे तु सरः । वा
चस्पतिस्तु-'कासारस्त्वल्पसरसि सरसी तु महासरः' इति विशेषमाह ॥४॥५॥१६०॥

वेशन्तः पल्वलोऽल्प

विशन्ति मत्स्यादयस्मिन् वेशन्तः "जृविशिभ्याम्" ॥ ( उणा- २१९ ) ॥
इत्यन्तः ॥ १ ॥ 'पल गतौ' पल्यते पल्वल पुंक्लीबलिङ्ग "शामिकमि-" ॥
( उणा- ४९९ ) ॥ इति वल । तल्को वेशन्तः पल्वलोऽपि ॥ २ ॥

परिखा खेयखातिके ।

परिखन्यते परिखा 'कचित्' ॥ ५ । १ । १७१ ॥ इति ड ॥ १ ॥
खन्यते खेयम् "खेयमृषोद्ये" ॥ ५ । १ । ३८ ॥ इति साधुः ॥ २ ॥ खातैव खा
तिका दुर्गवेष्टनहेतु ॥ ३ ॥

स्यादालवालमावालमावाप स्थानकं च स ॥ १६१ ॥

आलूयते खन्यते आलवालः पुंक्लीबलिङ्गः "चालवाल-" ॥ ( उणा- ४८० ) ॥
इत्यासे निपात्यते ॥ १ ॥ आवलते बहिर्निर्गमादम्भोऽत्र आवाल क्लीबलिङ्गः । व्या
डिस्तु-"आवालो जलपिण्डिका" इति पुंलिङ्गमाह ॥ २ ॥ आ उप्यतेऽम्भोऽस्मिन्ना
वापः॥३॥ वृक्षसेकार्थं तिष्ठतोऽम्भसः स्थान स्थानकम्, यदाहु- आलवालं विदुर्धीरा
धारणं तिष्ठतोऽम्भस ॥ ४ ॥ १६१ ॥

आधारस्त्वम्भसां बन्धः

आध्रियन्तेऽम्भांसि अस्मिन्नाधारः क्षेत्रादिसेकार्थं यत्राम्भः संधीयते सोऽम्भसां बन्धः ॥ १ ॥

निर्झरस्तु झरः सरिः ।

उत्सः स्रवः प्रस्रवणं

निर्झरयति क्षीयते च जलमत्र निर्झरः, झरः ॥१॥२॥ सरति सरिः स्त्रीलिङ्गः "सृभ्य इः" ॥ (उणा-६०६) ॥ ३ ॥ उनत्ति उत्सः "ऋजिरिपि" ॥ (उणा-५६७)॥ इति कित् सः पुंस्ययम्। वाचस्पतिस्तु झारः स्त्री निर्झरो झरः उत्सस्त्वसौ' इति क्लीबेऽप्याह ॥ ४ ॥ स्रवति स्रवः ॥ ५ ॥ प्रस्रवन्त्यनेन गिरयः प्रस्रवणम् ॥६॥

जलाधारा जलाशयाः ॥ १६२ ॥

जलानामाधारा जलाधाराः सामान्येन वाप्यादयः ॥ १ ॥ जलमाशयो हृदयमेषां जलाशयाः, जलमाशेते एषु वा ॥ २ ॥ १६२ ॥

॥ समाप्तोऽम्भःप्रकारः ॥

तेजःकायमाह—

वह्निर्बृहद्भानुहिरण्यरेतसौ
धनञ्जयो हव्यहविर्हुताशनौ ।
कृपीटयोनिर्दमुना विरोचना-
ऽऽशुशुक्षणी छागरथस्तनूनपात् ॥ १६३ ॥
कृशानु-वैश्वानर-वीतिहोत्रा
वृषाकपि पावक-चित्रभानू ।
अप्पित्त धूमध्वज-कृष्णवर्त्मा
अर्चिष्मत् शमीगर्भ-तमोघ्न-शुक्राः ॥ १६४ ॥
शोचिष्केश शुचि-हुतवहौ पर्बुधा सप्तमन्त्र-
ज्वालाजिह्वौ ज्वलन-शिखिनौ जागृविर्जातवेदाः ।
बर्हिः शुष्मा-ऽनिलसख-वसू रोहिताश्वा-ऽऽश्रयाशौ
बर्हिर्ज्योतिर्दहन-बहुलौ हव्यवाहोऽनलोऽग्निः ॥ १६५ ॥
विभावसुः सप्तो-दर्चिः

१वहति तेजो वह्निः "वीपुपुवसिगिभ्यः—" ॥ (उणा-६७७)॥ इति निः

॥ १ ॥ बृहन्तो भानवो रश्मयोऽस्य बृहद्भानुः ॥ २ ॥ हिरण्यं रेतोऽस्य हिरण्यरेताः, यद् स्मृतिः– "अग्नेरपत्यं प्रथमं सुवर्णम्" इति ॥३॥ धनं जयति धनञ्जयः ॥ ४ ॥ हव्यं हविर्हुतं चाऽश्नाति हव्याशनः, हविरशनः, हुताशनः, मन्त्रादित्वादनः, यौगिकत्वाद् हव्यभुग् इत्यादयः ॥ ५ ॥ ६ ॥ ७ ॥ कृपीटस्याम्भसो योनिर्भूमत्वाद् मेघानां, कृपीटयोनिः। 'कृपीट योनिरस्य' इत्येके, यदाहुः–"अद्भ्योऽग्निर्ब्रह्मणः क्षत्रमश्मनो लोहमुत्थितम्" ॥८॥ दाम्यति दमुना, दमेरुनसुनसौ, दमूना अपि ॥ ९ ॥ विरोचते विरोचनः ॥ १० ॥ आशोष्टुमिच्छति आशुशुक्षणिः "आङः शुषेः सनः" ॥ (उणा–६४३) ॥ इत्यणौं साधुः ॥ ११ ॥ छागो रथोऽस्य च्छागरथः ॥१२॥ तनूं न पातयति तनूनपात्, देहधृत्वात्; नखादित्वात् साधु ॥ १३ ॥ ॥ १६३ ॥ कृष्यति दाह्याभावे कृशानुः "कृशेरानक्" ॥ (उणा–७९४) ॥ १४ ॥ विश्वानरस्यापत्यं वैश्वानरः, विदादित्वादञ् ॥ १५ ॥ वीतयोऽस्या होत्रं हव्यमस्य वीतिहोत्रः ॥ १६ ॥ वृषेण धर्मेण अकति वृषाकपिः, वृषेण तेजसा आकम्पते वा ॥ १७ ॥ पुनाति पावकः ॥१८॥ चित्रा नाना भानवः कान्तयोऽस्य चित्रभानुः ॥ १९ ॥ अपां पित्तं सारमपित्तम् ॥ २० ॥ धूमो ध्वजोऽस्य धूमध्वजः ॥ २१ ॥ कृष्णो धूमो वर्त्माऽस्य कृष्णवर्त्मा ॥ २२ ॥ अर्चींषि विद्यन्तेऽस्यार्चिष्मान् ॥ २३ ॥ शम्या गर्भः शमीगर्भः; यत् कालिदासः–"शमीमिवाभ्यन्तरलीनपावकाम्" इति ॥२४॥ तमो हन्ति तमोघ्नः ॥ २५ ॥ शुक्रं तेजोऽस्त्यस्य शुक्रः, अभ्रादित्वाद ॥ २६ ॥ १६४ ॥ शोचींषि ज्वालाः केशा अस्य शोचिष्केशः ॥ २७ ॥ शुचिः, शोधकत्वात् ॥ २८ ॥ हुतं वहति हुतवहः, लिहादित्वादच् ॥ २९ ॥ उषसि रात्रौ बुध्यते उषर्बुधः "वाऽऽर्षस्यात्यय" ॥ ५। ३। ५८ ॥ इति साधुः ॥ ३० ॥ सप्त–मन्त्र–ज्वालाश्चेद्स्य परो जिह्वाः सप्तजिह्वा अस्य सप्तजिह्वः, यदाहुः—

"भवति हिरण्या कनका रक्ताकृष्णा सुप्रभा कन्या।
रक्ता बहुरूपेति सप्त सप्तार्चिषो जिह्वा ॥ १ ॥"

मन्त्र एव जिह्वा अस्य मन्त्रजिह्वः, ज्वाला जिह्वाऽस्य ज्वालाजिह्वः ॥३१॥३२॥ ॥ ३३ ॥ ज्वलति इत्येवंशीलो ज्वलनः "भूषाक्रोधार्थ–" ॥ ५। २। ४२ ॥ इत्यनः ॥ ३४ ॥ शिखा सन्त्यस्य शिखी ॥ ३५ ॥ जागर्ति थायुना जागृविः, "जागुरुत्तु–" ॥ (उणा– ७०५) ॥ इति क्विप् विः ॥ ३६ ॥ जाते विद्यते जातवेदाः "अस्" ॥(उणा–९५२)॥ इत्यस्, जाता वेदा अस्मादिति वा पृषोदरादित्वात् ॥३७॥ बर्हिर्दर्भं शुष्मं बलमस्य बर्हिः शुष्मा। बर्हते वर्धते बर्हिरिति व्यस्तम्, यथा 'बर्हिर्मुखा दवाः' शुष्मपर्यायेन शुष्मा यथा– शुष्मणि प्रणयमाभिसस्कृते' इति बर्हिरुत्क इत्यमरमाला, यथा 'दर्पा बर्हिणो बर्हिरुत्क ' इति ॥३८॥ अनिलः सखाऽस्य अनिलसखः ॥ ३९ ॥ अश्नन्ति देवा आश्रिम् वसुः ॥ ४० ॥ रोहिताश्वो मृगोऽश्वो

वाहनमस्य रोहिताश्वः ॥ ४१ ॥ आश्रयमाश्रयस्थानमश्नाति आश्रयाशः आश्रयमाधारमश्नात्याश्रयाश इत्येके ॥ ४२ ॥ बर्हिषो दर्भा ज्योतिरस्य बर्हिर्ज्योतिः ॥ ४३ ॥ दहति दहनः ॥ ४४ ॥ बंहते बधते बहुलः "स्थाबंहि-" ॥ ( उणा- ४८६ ) ॥ इत्युले महुक् च ॥ ४५ ॥ हव्यं वहति हव्यवाहः ॥ ४६ ॥ अनिति अने न स्तोकः इत्यनलः "मृदिकन्दि-" ॥ ( उणा- ४६५ ) ॥ इत्यलः ॥ ४७ ॥ अगस्पूर्वं याति अग्निः "वीपु-" ॥ ( उणा- ६७७ ) ॥ इति नि ॥ ४८ ॥ ॥ १६५ ॥ त्विषैव वसु धनमस्य विभावसुः ॥ ४९ ॥ सप्त ऊर्ध्वा अर्चिषोऽस्य सप्तार्चिः, तदर्चिः ॥५०॥५१॥ एते पुंलिङ्गाः । अप्पित्त नपुंसकम् ।

शेषश्चात्र—

अग्नौ समिध् दीप्र समन्तभुक् ।
दर्व्यरीकः पविपाणिः शुभ्रपश्चुरिराशिरः ॥
छागरथः पृथाकुश्च कृपाकर्दमना हविः ।
घृतार्चिर्निर्मिषिस्तथ प्रथ्ये वसातिरचातिः ॥
शुचिसारथपीवोषा वाति पवनवाहनः ॥

स्वाहाऽग्नायी प्रियाऽस्य च ।

अस्य वह्नेः प्रिया सुष्ठु आहूयन्ते देवा अनया स्वाहा, पृषोदरादित्वात्, सुष्ठु आह ब्रूते देवान् प्रतिगनयेति वा, स्वाहेत्यव्ययमपि ॥ १ ॥ अग्नेर्भार्याऽग्नायी 'वृषाकप्यग्नि-" ॥ २ । ४ । ६० ॥ इति ङी, ऐकारश्चान्तस्य ॥ २ ॥

और्वः संवर्तकोऽब्ध्यग्निर्वाडवो वडवामुखः ॥ १६६ ॥

ऊर्वस्यापत्यमौर्वः, शिवादित्वादण् ऊर्वोऽभिसूनो पिप्पलादस्य ऊरुप्रभवत्वादिति वा । वडवावान्मात्रा ऊर्वोऽपितत्वादित्येके ॥ १ ॥ संवर्तयति संवर्तकः ॥ २ ॥ अब्धेरग्निरब्ध्यग्निः ॥ ३ ॥ वडवाया अपत्यं वाडवः "वाडवेयो वृषे" ॥ ६ । १ । ८५ ॥ इत्यत्र नियमादेयण् न भवति ॥ ४ ॥ वडवाया इव मुखमस्य वडवामुखः ॥ ५ ॥ १६६ ॥

दवो दावो वनवह्निः

दुनोति वन्यान् दवः, अप् "वा ज्वलादि-" ॥ ५ । १ । ६२ ॥ इति णे दावः ॥ २ ॥ वनस्य वह्निर्वनवह्निः ॥ ३ ॥

मेघवह्निरिरम्मदः ।

मेघस्य वह्निर्मेघवह्निः ॥ १ ॥ इरया जलेन माद्यतीरम्मदः "इरम्मदः" ॥ ५ । १ । १२७ ॥ इति खशि निपात्यते ॥ २ ॥

छागणस्तु करीषाग्नि

छगणस्याय छागण ॥ १ ॥ करीषस्याग्नि करीषाग्निः ॥ २ ॥

कुकूलस्तु तुषानलः ॥ १६७ ॥

कूयते कुकूलः पुल्लीबलिङ्ग "दुकूलकुकूल-" ॥ ( उणा– ४९१ ) ॥ इति साधु ॥ १ ॥ तुषाणामनलस्तुषानलः ॥ २ ॥ १६७ ॥

संताप संज्वर

संतापयति सन्ताप ॥ १ ॥ सज्वरयति सज्वर ॥ २ ॥

बाष्प ऊष्मा

बाधते बाष्पः पुक्लीबलिङ्ग "शादिबाभि" ॥ ( उणा–२९९) ॥ इति प, पस्य च ॥ १ ॥ ऊषति रुजत्यूष्मा पुंलिङ्गः "मन्" ॥ ( उणा– ९११ ) ॥ इति मन् ॥ २ ॥

जिह्वा स्युरर्चिषः ।

अग्नेरर्चिषः लेढि हव्यमाभिर्जिह्वा ॥ १ ॥

हेति कीला शिखा ज्वालार्चिः

हिनोत्यनया हेति "सातिहेति–" ॥ ५ । ३ । ९४ ॥ इति क्तौ निपात्यते ॥ १ ॥ कीलति कीला पुंस्त्रीलिङ्गः ॥ २ ॥ श्यति शिखा ॥ ३ ॥ ज्वलति ज्वाला पुंस्त्रीलिङ्ग ज्वलादित्वात् णः ॥ ४ ॥ अर्च्यतेऽर्चिः स्त्रीक्लीबलिङ्ग "रुच्यर्चि–" ॥ ( उणा– ९८९ ) ॥ इतीन् ॥ ५ ॥

उल्का महत्यसौ ॥ १६८ ॥

असौ ज्वाला महती उल्कामति, ज्वलतीति वा "निष्कतुरुष्क" ॥ ( उणा– २६ ) ॥ इति के निपात्यते ॥ १ ॥ ॥ १६८ ॥

स्फुलिङ्गोऽग्निकण

स्फुलति सचिनोति स्फुलिङ्ग, त्रिलिङ्गः "स्फुलिकलि–" ॥ (उणा–१०२) ॥ इतीङ्गक् । आतावपि स्त्रियां न ङी, कन्दरावत् ॥ १ ॥

अलातज्वालोल्का

अलातस्य ज्वाला अलातज्वाला 'उल दाहे' सौत्रस्य, ज्वलतेर्वा "निष्क-तुरुष्क–" ॥ ( उणा– २६ ) ॥ इति के निपातनादुल्का ॥ १ ॥

अलातमुल्मुकम् ।

अलति दीप्त्या मण्डयत्यलात "कृशलि–" ॥ ( उणा– २०९ ) ॥ इत्यातक् ॥ १ ॥ ज्वलन्मुल्मुक 'कञ्चुक–" ॥ ( उणा– ५७ ) ॥ इत्युके निपात्यते ॥२॥

धूम स्याद्वायुवाहोऽग्निवाहो दहनकेतनम् ॥ १६९ ॥
अम्भ सू करमालश्च स्तरीर्जीमूतवाह्यपि ।

धुनाति धूमः "सिसिभिसि–" ॥ ( उणा– १४० ) ॥ इति किद् मः ॥ १ ॥ वायुना उह्यते वाह्यते वायुवाहः ॥ २ ॥ अग्निना उह्यतेऽग्निवाहः ॥ ३ ॥ दहनस्य केतनं ध्वजो दहनकेतनम् ॥ ४ ॥ १६९ ॥ अम्भ सूते धूमजत्वाद् मघानामम्भ सूः ॥ ५ ॥ करोति वायुना करमालः 'चात्वाल–' ॥ ( उणा– ४८० ) ॥ इत्याले निपात्यते ॥ ६ ॥ स्तृणाति च स्तरीः स्त्रीलिङ्गः 'सृस्तृमन्थि–' ॥ ( उणा– ७११ ) ॥ इति ई ॥ ७ ॥ जीमूत वहति जीमूतवाही ॥ ८ ॥

तडिदैरवती विद्युच्चला शम्पाऽचिरप्रभा ॥ १७० ॥
आकालिकी शतह्रदा चञ्चला चपलाऽशनि ।
सौदामनी क्षणिका च ह्रादिनी जलवालिका ॥ १७१ ॥

ताडयति तडित् 'हृसृरुहि' ॥ ( उणा– ८८७ ) ॥ इतीत्, स्त्रीलिङ्गोऽयम् ॥ १ ॥ ऐरावतोऽभ्रगो गजस्तस्य स्त्री ऐरावती, इरावति मेघे समुद्रे वा भवेति वा ॥ २ ॥ विद्योतते विद्युत् स्त्रीलिङ्गः ॥ ३ ॥ चलति चला ॥ ४ ॥ शाम्यति शम्पा "भापा पम्पि–" ॥ ( उणा– २९६ ) ॥ इति प । शं पिबतीति वा । शन्ध्यादिरयमिति प्राच्याः स पिबति मार्जनं तेन इति व्याख्यम् ॥ ५ ॥ न चिर प्रभाऽस्य अचिरप्रभा, क्षणप्रभाऽपि ॥ ६ ॥ १७० ॥ आकालमुत्पत्तिकालं यावद् भवति आकालिकी क्षणिकत्वात् 'आकालिकडिकश्चाद्यन्ते' ॥ ६ । ४ । १२८ ॥ इति इकण् ॥ ७ ॥ शतह्रदोऽभ्यिरस्त्यस्याः शतह्रदा वाडवज्योतिष्ट्वात् अभ्रादित्वादः, शतधा ह्रादते वा पृषोदरादित्वात् ह्रस्व ॥ ८ ॥ चञ्चला, चपला, अस्थैर्यात् ॥ ९ ॥ ॥ १० ॥ अश्नुतेऽशनिः पुंस्त्रीलिङ्गः "सर्तिशति–" ॥ ( उणा– ६८० ) ॥ इत्यनिः ॥ ११ ॥ सुदाम्ना पर्वतेन एकदिक् सौदामनी "तदस्यास्त्यस्मिन्निति" ॥ ६ । ३ । २१० ॥ इत्यण् ॥ १२ ॥ क्षणोऽस्त्यस्याः क्षणिका ॥ १३ ॥ ह्रादतेऽवश्यं ह्रादिनी ॥ १४ ॥ जलेन वलति प्राणिति जलवालिका ॥ १५ ॥ १७१ ॥

॥ समाप्तोऽयं तेजःकायः ॥

वायुकायमाह—

वायु समीर-समिरौ पवना ऽऽशुगौ नभ
श्वासो नभस्वद्-ऽनिल-श्वसना समीरण ।
वातोऽहिकान्त पवमान-मरुत् प्रकम्पना
कम्पाक-नित्यगति-गन्धवहः प्रभञ्जना ॥ १७२ ॥
मातरिश्वा जगत्प्राण पृषदश्वो महाबलः ।

मारुत' स्पर्शनो दैत्यदेव

वाति वायति वा गन्धानि वायु' "कृवापाजि–" ॥ ( उणा– १ ) ॥ इत्युण् ॥ १ ॥ समीरयति समीरः ॥ २ ॥ समेति समिर "इणुधाग्भ्यां वा" ॥ ( उणा–३८९ ) ॥ इति किद् रः ॥ ३ ॥ पवते पवन ॥ ४ ॥ आशु गच्छति आशुगः ॥ ५ ॥ नमस श्वास इव नभःश्वासः ॥ ६ ॥ नभोऽस्त्यस्य नभस्वान् ॥ ७ ॥ अनन्त्यनेन अनिल' "कल्यनि" ॥ ( उणा–४८१ ) ॥ इतीछ , न निलति इति वा ॥ ८ ॥ श्वसन्त्यनेन श्वसन ॥ ९ ॥ समीरयति समीरण' ॥ १० ॥ वाति वायति वा वात "दम्यमि–" ॥ ( उणा– २०० ) ॥ इति तः ॥११॥ अहिभिः काम्यते अहिकान्त ॥ १२ ॥ पवते पवमानः ॥१३॥ म्रियन्ते क्षुद्रजन्तवोऽनेन मरुत्, म्र उत् ॥ १४ ॥ प्रकम्पयति प्रकम्पनः ॥१५॥ कम्पाकम्पिकमस्य कम्पाक' ॥१६॥ नित्यं गतिरस्य नित्यगति , सदागतिरपि ॥१७॥ गन्धस्य वहो गन्धवह', गन्धवहोऽपि ॥ १८ ॥ प्रभनक्ति प्रभञ्जन ॥ १९ ॥ १७२ ॥ मातरि खे श्वयति मातरिश्वा "श्वन्मातरिश्वन्–" ( उणा– ९०२ ) इत्यनि निपात्यते ॥ २० ॥ जगतां प्राणो जगत्प्राण ॥ २१ ॥ पृषद् मृगविशेषोऽश्वोऽस्य पृषदश्वः । पृषन्त्यम्बुकणा अश्वा अस्य इत्यन्ये ॥ २२ ॥ महद् बलमस्य महाबलः ॥ २३ ॥ मरुदेव मारुत , प्रज्ञादित्वादण् ॥ २४ ॥ स्पृशति स्पर्शनः ॥ २५ ॥ दैत्यानां देवो दैत्यदेवः ॥ २६ ॥ एते पुंलिङ्गा ॥

शेषश्चात्र–

> वायौ सुराख्य' प्राण संमृतो जलभूषण ।
> क्षुपिवह्रो लोकमटः पश्चिमोत्तरदिक्पति ॥ १ ॥
> आहुतिः क्षिपणुर्मारुर्यो ध्वजप्रहरणश्च ।
> धीतको जलकान्तारो मेघारि समरोऽपि च ॥ २ ॥

झञ्झा स वृष्टियुक् ॥ १७३ ॥

स वायु वृष्टया युक्त' 'झमू अदने' झमतीव झञ्झा, "झमेर्झ" ॥(उणा१३७) ॥ १ ॥ १७३ ॥

प्राणो नासाग्रहृन्नाभिपादाङ्गुष्ठान्तगोचर ।

प्रकर्षेणानमति प्राण "कचित्" ॥ ५ । १ । १७१ ॥ इति कः, प्रसरणेन अनित्यनेन वा नासाग्रं हृदय नाभि पादाङ्गुष्ठान्ताश्च गोचरो यस्य स तथा ॥ १ ॥

अपान' पवनो मन्यापृष्ठपृष्ठान्तपार्ष्णिग ॥ १७४ ॥

मूत्रपुरीषगर्भादीनपानयत्यपान', अपसरणेन अनितिअनेन वा । मन्ये ग्रीवापश्चाद्भागौ, पृष्ठं तदधोभाग , पृष्ठान्तो गुद , पार्ष्णी पादपश्चाद्भागौ तेषु गच्छति य स तथा ॥ १ ॥ ॥ १७४॥

समानः सन्धिहृत्साभिषु

भक्षितपीताहारपरिणतिमेव रसं तत्र तत्र स्थाने समनुरूपमा समन्ततो नयतीति समानः, पुंल्लीवलिङ्गः, समन्तादनित्यनेन वा, सर्वसन्धिषु हृदये नाभौ च स्थानमस्येति ॥ १ ॥

उदानो हृच्छिरोऽन्तरे ।

रसादीनूर्ध्वं समन्ततो नयति इत्युदान ऊर्ध्वमनित्यनेन वा हृदये शिरसि अनयोरन्तरे कण्ठे तालुनि भ्रूमध्ये च स्थानमस्येति यदवोचाम योगशास्त्रे—

'कण्ठे हृत्-कण्ठ-तालु-भ्रू-मध्ये मूर्धनि संस्थितः ।
उदानो वस्तुतो ज्ञेयो गत्यागतिविशेषतः ॥ १ ॥' इति ।

सर्वत्वग्वृत्तिको व्यानः

सर्वतः सर्वस्यां त्वचि वृत्तिरस्य सर्वत्वग्वृत्तिकः, व्यानयति व्याप्नोति व्यानः व्याप्त्या अनित्यनेन वा ॥ १ ॥

उपसंहारमाह—

इत्यङ्गे पञ्च वायवः ॥ १७५ ॥

इति समासतो अङ्गे शरीरे प्राणादयः पञ्च वायवः स्युः ॥ १७५ ॥

समाप्तोऽयं वायुकायः ॥

वनस्पतिकायमाह—

अरण्यमटवी सत्रं धार्त्री च गहनं क्षयः ।
कान्तारं विपिनं कक्षः स्यात् षण्डः काननं वनम् ॥ १७६ ॥
दवो दावः

इयूर्ति भ्राम्यन्ति अस्मिन्नरण्यं पुंल्लीबलिङ्गः "सामाभि–" ॥ ( उणा– ३७१ ) ॥ इयमन्य महत्त्वविवक्षायां तु अरण्यानी ॥ १ ॥ अटन्त्यस्यामटविः "छविविधि–" ॥ ( उणा– ७०६ ) ॥ इति वौ निपात्यते, ङ्यामटवी ॥ ॥ २ ॥ सीदन्त्यत्र सत्रं "हुयामा–" ॥ ( उणा– ४५१ ) ॥ इति त्रः ॥ ३ ॥ धृता अत्र सन्ति धार्त्रम् ज्योत्स्नादित्वादण् ॥ ४ ॥ गाह्यते गहनं "विदन–" ॥ ( उणा– २७५ ) ॥ इत्यने निपात्यते ॥ ५ ॥ क्षयति हिनस्ति क्षयः ॥ ६ ॥ काम्यते कान्तारं पुंल्लीबलिङ्गः "दारशृङ्गार–" ॥ ( उणा– ४११ ) ॥ इत्यारे निपात्यते ॥ ७ ॥ विपन्ते यमेन अत्र विपिनं 'विपिनादि–' ॥ ( उणा– १८४ ) ॥ इत्यिने निपात्यते ॥ ८ ॥ कषति कक्षः 'माषाकारि–' ॥ ( उणा– ५६४ ) ॥ इति सः ॥९॥ सन्यते सेव्यते षण्डं पुंल्लीबलिङ्गः, बाहुलकात् सत्वाभावे "पञ्चमाङ्गः" ॥ (उणा– १६८)॥

इति ङ॰ ॥ १० ॥ कन्यते गम्यतेऽस्मिन् काननं "विदन–" ॥ ( उणा– २७५ ) ॥ इस्यते निपात्यते, कमनिक्षस्मिन्निति वा ॥ ११ ॥ वन्यते घनं घर्यादित्वादल् ॥१२॥ ॥ १७६ ॥ दुनोति दव , दाव ॥ ॥ १३ ॥ १४ ॥

प्रस्तारस्तु तृणाटव्या क्षपोऽपि च ।

प्रस्तीर्यते प्रस्तारः ॥ १ ॥ तृणबहुलाऽटवी तृणाटवी तस्याम् ॥ २ ॥ क्षपति क्षपः ॥ ३ ॥

अपोपाभ्या वन वेल्ममाराम कृत्रिमे वने ॥ १७७ ॥

अपोपाभ्यां परं वनं अपाङ्गं वनमपवनम् ॥ १ ॥ उप समीपे वनमुपवनम् ॥ २ ॥ वेल्लति वेल्लम् ॥ ३ ॥ आरमन्ति अस्मिन्नाराम ॥४॥ कृत्रिम उत्पादिते वने वृक्षसमूहे ॥ १७७ ॥

निष्कुटस्तु गृहाराम

कुटाद् गृहाद् निष्क्रान्तो निष्कुट॰, गृहस्यारामो गृहाराम ॥ १ ॥

बाह्यारामस्तु पौरक ।

पुरस्य बहिर्भव आरामो बाह्याराम , पुरस्याय पौर ॥ १ ॥

आक्रीड पुनरुद्यान

आक्रीडन्तेऽस्मिन्नाक्रीड ॥ १ ॥ उद्यान्त्यस्मिन् उद्यान राज्ञां लोकैः सह साधारण वनम् । पुर्लिङ्गाविमेतौ ॥ २ ॥

राज्ञां त्वन्त पुरोचितम् ॥ १७८ ॥

तदेव प्रमदवन

तदेव उद्यान राज्ञामन्तःपुरयोग्य प्रमदार्थं प्रमदानां वा वन प्रमदवनं "क्या सोमंहुलम्–" ॥ २ । ४ । ९९ ॥ इति ह्रस्व ॥ १ ॥ १७८ ॥

अमात्यादेस्तु निष्कुटे ।

वाटी पुष्पाद् वृक्षाच्चासौ

अमात्यादेरादिशब्दाद् गणिका-सार्थवाहादेर्निष्कुटे गृहोपवने वर्तते कण्टकादिभिर्वेष्ट्यते वाटी स्त्रीलिङ्ग । पुष्पशब्दाद् वृक्षशब्दाच्च असौ वाटीशब्द॰ पुष्पाणां वृक्षाणां च वाटी पुष्पवाटी, वृक्षवाटी ॥ १ ॥ २ ॥

क्षुद्राराम॰ प्रसीदिका ॥ १७९ ॥

क्षुद्रो लघुराराम क्षुद्राराम , प्रसीदति मनोऽस्यां प्रसीदिका, पृषोदरादित्वात् ॥ ॥ ॥ १७९ ॥

वृक्षोऽग शिखरी च शाखि-फलदावद्रिर्हरिद्रुर्द्रुमो
जीर्णो द्रुर्विटपी कुट क्षितिरुह कारस्करो विष्टर ।
नन्द्यावर्त-करालिकौ तरु-वसू पर्णी पुलाक्यङ्घ्रिप
साला ऽनोकह-गच्छ-पादप-नगा रूक्षाऽगमौ पुष्पद ॥१८०॥

वृश्च्यते छिद्यते वृक्षः "वृभिरिषि-" ॥ (उणा-५६७) ॥ इति कित् स, वृक्षते वृणोति वा ॥ १ ॥ न गच्छत्यगः ॥ २ ॥ शिखरं शिरोऽस्त्यस्य शिखरी ॥ ३ ॥ शाखाः सन्त्यस्य शाखी शिखादित्वादिन् ॥ ४ ॥ फलं ददाति फलदः ॥ ५ ॥ अद्यते अद्रिः 'तद्विवद्धि-" ॥ ( उणा- ६९२ ) ॥ इति रिः ॥ ६ ॥ हरिं वर्णं द्रवति हरिद्रुः, 'हरिपीत-" ॥ ( उणा- ७४५ ) ॥ इति डिद्रु ॥ ७ ॥ द्रुः शाखा ऽस्त्यस्य द्रुमः 'द्युद्रोर्मः" ॥७।२।३७॥ रिति मः ॥८॥ जीर्यते जीर्णः 'दृपृर्विधा-' ॥ ( उणा- १८२ ) ॥ इति णः ॥ ९ ॥ द्रवति द्रुः "मृद्रुभ्याम्" ॥ ( उणा- ७४४ ) ॥ इति डिद्रु ॥ १० ॥ विटपो विस्तारोऽस्यास्ति विटपी ॥ ११ ॥ कुटिः सौत्रः कोठति कुटः 'नाम्युपान्त्य-' ॥ ५ । १ । ५४ ॥ इति कः ॥ १२ ॥ क्षितौ रोहति क्षितिरुहः, मूलविभुजादित्वात् कः यौगिकत्वात् कुज-महीरुहादयः ॥ १३ ॥ कारं करोति कारस्करः, वर्चस्कादित्वात् साधु ॥ १४ ॥ विस्तृणोति विष्टरः 'वे स्त्रः" ॥ २।३।२३ ॥ इति षत्वम् ॥ १५ ॥ नन्दी आवर्तोऽस्य नन्द्यावर्तः ॥ १६ ॥ करालमुच्चं शिखरमस्त्यस्य करालिकः ॥ १७ ॥ तरन्त्यापदमनेन तरुः "भृमृतृ-" ॥ ( उणा- ७१६ ) ॥ इत्युः ॥ १८ ॥ वसन्ति पक्षिणोऽत्र वसुः ॥ १९ ॥ पर्णानि सन्त्यस्य पर्णी ॥ २० ॥ पोलति पुलः विस्तारः तमकति पुलाकी ॥ २१ ॥ अङ्घ्रिभिर्मूलैः पिबत्यङ्घ्रिपः, चरणपोऽपि ॥ २२ ॥ सल गतौ' दन्त्यादिः सल्यते सालः, सीयते वा "भिक्षाप्यक्कभा-" ॥ ( उणा- ४६४ ) ॥ इति लः निपात्यते ॥ २३ ॥ अनिति अम्भोभिरनोकहः अनेरोकहः, अनसः शकटस्याक गतिं हन्तीति निर्वचनमाहुः ॥ २४ ॥ गम्यते गच्छः "गृदिमदि-" ॥ ( उणा- १२४ ) ॥ इति छः ॥ २५ ॥ पादैर्मूलैः पिबति पादपः ॥ २६ ॥ न गच्छति नगः 'नगोऽप्राणिनि वा' ॥ ३ । २ । १२७ ॥ इति साधुः ॥ २७ ॥ रूक्षयति रूक्षः ॥ २८ ॥ न गच्छति अगमः ॥ २९ ॥ पुष्पाणि ददाति पुष्पदः । एते पुंलिङ्गाः ॥ ३० ॥ १८० ॥

शेषश्चात्र-

वृक्षे स्यादोहकः स्कन्धी सीमिको हरितच्छदः ।
उद्भीन्द्रुपक्षिभृच्च ॥

कुञ्ज निकुञ्ज-कुडङ्गा स्थाने वृक्षैर्वृतान्तरे ।

कपन्तेऽस्मिन् कुञ्जः "कुप- कुप्-कुर्मा च' ॥ ( उणा- १२६ ) ॥ इति

जः ॥ १ ॥ एव निकुब्ज ।पुंक्लीबलिङ्गावेतौ ॥ २ ॥ कुब्जति कुब्जः "पचितमि–" ॥ ( उणा– १८ ) ॥ इत्यः , कुब्जादित्वाद् गुणाभाव ॥ ३ ॥

पुष्पैस्तु फलवान् वृक्षो वानस्पत्य

पुष्पैर्हेतुभूतैः फलवान् वृक्ष वनस्पतिरेव वानस्पत्य , भेषजादित्वाद् टयण्, वनस्पतौ भव इत्यन्ये ॥ १ ॥

विना तु तैः ॥ १८१ ॥

फलवान् वनस्पति स्यात्

तैः पुष्पैर्विना फलवान् वृक्ष वनस्पतिः, वर्चस्कादित्वात् साधु ॥१॥१८१॥

फलावन्ध्य फलेग्रहि ।

फलैरवन्ध्य फलानि गृह्णाति फलेग्रहि "रजःफलेमलाद् ग्रहः" ॥ ५ । १ । ९८ ॥ इति इ ॥ १ ॥

फलवन्ध्यस्त्ववकेशी

फलैर्वन्ध्य फलवन्ध्य , नास्ति पाकोऽप्यत्रायक शून्य तदीदृशेऽवकेशी ॥ १ ॥

फलवान् फलिन फली ॥ १८२ ॥

फलमस्त्यस्य फलवान् , मतुः ॥ १ ॥ "फलबर्हा–" ॥ ७ । २ । १३ ॥ इतीने फलिनः ॥ २ ॥ इति फली ॥ ३ ॥ १८२ ॥

ओषधि स्यादौषधिश्च फलपाकावसानिका ।

ओषत्योषधिः, उषेरधिः, उषो धीयतेऽस्यामिति वा ॥ १ ॥ बाहुलकाद् वृद्धौ औषधिः । स्त्रीलिङ्गावेतौ ॥ २ ॥ फलस्य पाकोऽवसानमस्या फलपाकावसानिका ॥

क्षुपो ह्रस्वशिफा शाख ।

क्षौति दह्यमानः क्षुपः "क्षुकुपिपूभ्यः कित्" ॥ ( उणा– ३७१ ) ॥ इति पः, ह्रस्वाः शिफा जटा शाखाश्च यस्य स तथा ॥ १ ॥

प्रततिर्वततिर्लता ॥ १८३ ॥

वल्ली

प्रकृष्टा ततिरस्या प्रततिः ॥ १ ॥ अपादित्वाद् वत्वे वततिः , वृणोतीति वा "वृगो मत च" ॥ ( उणा– ६५५ ) ॥ इत्यति स्त्रीलिङ्गावेतौ ॥ २ ॥ लाति लता "पृषिरञ्जि–" ॥ ( उणा– २०८ ) ॥ इति कित्तः ॥ ३ ॥ १८३ ॥ वलते संवृणोति वल्लिः "पदिपठि–" ॥ ( उणा– ६०७ ) ॥ इति इः, ङ्यां वल्ली गुडूच्यादिर्मोषध्यादिश्च ॥ ४ ॥

अस्यां तु प्रतानिन्या गुल्मिन्युलप-वीरुधः ।

अस्यामिति लतायाम्, प्रतानोऽस्त्यस्यां प्रतानिनी तस्याम् ॥१॥ गुल्मोऽस्त्यस्या गुल्मिनी ॥ २ ॥ वल्लते वेष्टते उलपः 'विटपोलप–" ॥ ( उणा– ३०७ ) ॥ इत्यपे निपात्यते ॥ ३ ॥ विरोहति वीरुत्, क्लीबि "वीरुन्न्यग्रोधौ" ॥ ४ । १ । १२१ ॥ इति धत्वे साधुः विरुणद्धीति वा बाहुलकादीपः ॥ ४ ॥

स्यात् प्ररोहोऽङ्कुरोऽङ्कूरो रोहश्च

प्ररोहति प्ररोहः ॥ १ ॥ अङ्क्यतेऽनेन इति अङ्कुरः "वाश्मसि–" ॥ ( उणा– ४२१ ) ॥ इत्युरः, बाहुलकादीर्घत्वेऽङ्कूरः, पुंलिङ्गावेतौ क्लीबेऽपि वैजयन्ती, यदाह– 'स्यादङ्कूरोऽङ्कुरोऽस्त्रियौ' इति ॥ २ ॥ ३ ॥ रोहति रोहः ॥ ४ ॥

स तु पर्वणः ॥ १८४ ॥

समुत्थितः स्याद् वलिशं

स तु अङ्कुरः पर्वणो ग्रन्थेः समुत्थितः वलति प्राणितीति वलिशं "वलेर्णिश्" ॥ ( उणा– ५३६ ) ॥ इतीशः ॥ १ ॥ ॥ १८४ ॥

शिखा-शाखा-लता समाः ।

श्यति शिखा शाखा "स्यतेरिच्च वा" ॥ ( उणा– ८५ ) इति खे साधू, शाखति व्याप्नोतीति वा शाखा ॥ १ ॥ २ ॥ लाति लता ॥ ३ ॥

सालः शालः स्कन्धशाखा

सीयते सालः दन्त्यादिः ॥ १ ॥ श्यन्त्येनां शालः "शामाश्या–" ॥ ( उणा– ४६२ ) ॥ इति लः, शलतीति वा ज्वलादित्वात् णः तालव्यादिरयम् ॥ २ ॥ स्कन्धात् निःसृता शाखा स्कन्धशाखा ॥ ३ ॥

स्कन्धः प्रकाण्डमस्तकम् ॥ १८५ ॥

स्कन्द्यते स्कन्धः "स्कन्धामिन्धा–" ॥ ( उणा– २५१ ) ॥ इति धः, बाहु-लकादस्य धङ् ॥ १ ॥ १८५ ॥

मूलात् शाखावधिर्गण्डिः प्रकाण्डः

मूलतः स्कन्धशाखाममर्यादीकृत्य या गण्डिका स प्रकाण्ड्यते प्रकाण्डो दण्डवद्वा पुंक्लीबलिङ्गः । अमरस्तु–'अस्त्री प्रकाण्डः स्कन्धः स्यात्' इति प्रकाण्ड-स्कन्धौ तुल्या-र्थावाह ॥ १ ॥

अथ जटा शिफा ।

जटति जटा वृक्षादिमूलम् ॥१॥ शिनोति शेतेऽधः स्यन्त्येनामिति वा शिफा

"घफकफ-" ॥ ( उणा- ३१६ ) ॥ इति के निपात्यते ॥ २ ॥

प्रकाण्डरहिते स्तम्बो विटपो गुल्म इत्यपि ॥ १८६ ॥

प्रकाण्डो गण्डिका तद्रहित उद्भिद्विशेषे तृणजातीयां वा, स्तभ्नाति स्तम्बः "गुम्बस्तम्बादयः" ॥ (उणा-३२०) ॥ इति बे निपात्यते ॥ १ ॥ वेटति विटप "भुजिकुतिकुटि-" ॥ (उणा-३०५) इति किदपः, गुडति गुल्म पुंक्लीबलिङ्गावेतौ ॥ २ ॥ ३ ॥ १८६ ॥

शिरोनामाग्र शिखर

शिरसो नामान्यस्य वृक्षादिप्रान्तस्य शिरोनाम शिरं पर्यायमित्यर्थ ॥ १ ॥ अगत्यग्रम् ॥ २ ॥ शाखति शिखर पुंक्लीबलिङ्गः ॥ ३ ॥

मूल बुध्नोऽङ्घ्रिनाम च ।

मूलति मूल वृक्षस्य, पुंक्लीबलिङ्गः ॥ १ ॥ बुध्यतेऽनेन बुध्न "क्षीणधीदी-" ॥ (उणा-२६१) ॥ इति किद् न ॥ २ ॥ अङ्घ्रिनामान्यस्याङ्घ्रिनाम पादपर्याय मित्यर्थः ॥ २ ॥

सारो मज्जा

सरति सार "सर्ते स्थिर-" ॥ ५।३।१७ ॥ इति घञ् ॥ १॥ मज्जति मज्जा, पुंलिङ्गस्तत्र ॥ २ ॥

त्वचि छल्ली चोचं वल्कं च वल्कलम् ॥ १८७ ॥

त्वचति त्वक् स्त्रीलिङ्ग तस्यां, त्वचाऽपि ॥१॥ छाद्यतेऽनया छदयन्त्यनेनामिति वा छल्ली "भिल्लाच्छभल्ल-" ॥ (उणा-४६४)॥ इति ल निपात्यते ॥ २ ॥ चन्यते चोचं "चमेर्डोचश्चो ॥ " (उणा-१२२ ) ॥ इति डोच ॥ ३ ॥ वल्यते छाद्यते ऽनेन वल्कं "भीण्-" ॥(उणा-२१)॥ इति क, "वल्किपुषेः-" ॥(उणा-४६६)॥ इति कलक्प्रत्यये वल्कलम् । पुंक्लीबलिङ्गावेतौ ॥ ४ ॥५ ॥ १८७ ॥

स्थाणौ तु ध्रुवक शङ्कु

तिष्ठतीति स्थाणु पुंक्लीबलिङ्ग "अजिस्था-" ॥ (उणा-७६८) ॥ इति णुः तत्र ॥१॥ ध्रुवति ध्रुवः, के ध्रुवक ॥ २ ॥ शाम्यति शङ्कु पुंलिङ्ग "कैशीशमि-" ॥ (उणा-७४५) ॥ इति कुः ॥ ३ ॥

काष्ठे दलिक-दारुणी ।

काशते काष्ठ "कनिकषि-" ॥ (उणा-१६२) ॥ इति ठ, तत्र ॥ १ ॥ दल्यो दलिक "कीकलि-" ॥ (उणा-३८) ॥ इतीकः ॥ २ ॥ दीर्यते दारु, पुंक्लीबलिङ्गः "कृवापाजि-" ॥ (उणा-१ ) ॥ इत्युण ॥ ३ ॥

निष्कुह कोटर

निष्कुष्यते निष्कुहः ॥ १ ॥ कुट्यति कोटरं वृक्षगर्तः पुंक्लीबलिङ्गः "कटि-घटि–" ॥ (उणा–३९७) ॥ इत्यरे बाहुलकाद् गुण ॥ २ ॥

मञ्जा मञ्जरिर्वल्लरिश्च सा ॥ १८८ ॥

'मञ्ज शौच' मञ्जति मञ्जा ॥ १ ॥ भूतावेनगोऽदिष्ट 'बहुलम्' ॥ ५।१।२ ॥ इत्यरौ मञ्जरिः, स्त्रीलिङ्ग "कृछिभ्यादि–" ॥ (उणा–३९७) ॥ इत्यरान्तात् वर्षा मञ्जरी ॥ २ ॥ वल्लते वल्लरिः स्त्रीलिङ्ग "नदिवलि–" ॥ (उणा–६९८) ॥ इत्यरि ॥ ३ ॥ १८८ ॥

पत्र पलाश छदनं बर्ह पर्णं छदं दलम् ।

पतति पत्रं पुंक्लीबलिङ्ग "हुयामा–" ॥ (उणा–४५१) ॥ इति त्र ॥१॥ पलति पलाशं "पलेराश" ॥ (उणा–५३१) ॥ २ ॥ छाद्यतेऽनेन छदनं पुनादिपाठात् मिथोऽस्माबपसेऽनद् ॥ ३ ॥ बर्हते बर्हं पुंक्लीबलिङ्ग ॥ ४ ॥ पृणाति पर्णं "इगुर्विशा–" ॥ (उणा–१८२) ॥ इति ण ॥ ५ ॥ छाद्यतेऽनेन छदः 'पुनाम्नि–' ॥ ५ । ३ । १३० ॥ इति घे "एकोपसर्गस्य–" ॥ ४ । २ । ३४ ॥ इति ह्रस्वः दलति विशीर्यते दलम् । पुंक्लीबलिङ्गावेतौ ॥ ६ ॥ ७ ॥

नवे तस्मिन् किसलय किसल पल्लव

तस्मिन् पत्रे नवे कसति किसलयं "कशेरलादिरिभ्यास्य" (उणा–३६८) ॥ इत्ययः ॥ १ ॥ 'मुरल–" ॥ (उणा–४७४) ॥ इत्यले निपातनात् किसलम् किञ्चित् सल्लतीति वा पृषोदरादित्वात् ॥ २ ॥ पल्ल गतौ' पल्लति पल्लवः पुंक्लीबलिङ्गः "वडिवटि–' ॥ (उणा–५१५) ॥ इत्यव ॥ ३ ॥

अत्र तु ॥ १८९ ॥

नवे प्रवाल

अत्र किसलये नवे प्रवलति प्रवालः पुंक्लीबलिङ्ग, ज्वलादित्वात् णः ॥ १ ॥ १८९ ॥

अस्य कोशी शुङ्गा

अस्य प्रवालस्य, कुश्यति कोशी ॥ १ ॥ शाम्यति शुङ्गा पुंस्त्रीलिङ्गः "कमि-दमि–" ॥ (उणा–१०७) ॥ इति गः ॥ २ ॥

मार्द्विर्दलस्नसा । ।

मथ्यतेऽनया माविः स्त्रीलिङ्गः ॥ १ ॥ दलस्य पत्रस्य स्नसा दलस्नसा ॥२॥

विस्तार-विटपौ तुल्यौ

स्तृणातेर्विस्तृतिर्विस्तार "वेरशब्दे-" ॥ ५ । ३ । ६९ ॥ इति घञ् ॥ १ ॥ वेटति वातेन विटपः पुंक्लीबलिङ्गः "कुविकुति-" ॥ (उणा- ३०५) ॥ इति किदपः, विटान् पातीति वा ॥ २ ॥

प्रसून कुसुम सुमम् ॥ १९० ॥
पुष्पं सून सुमनस प्रसवश्च मणीवकम् ।

प्रसूयते स्म प्रसून "सूयत्यादि-" ॥ ४ । २ । ७० ॥ इति क्तस्य नत्वम् ॥ १ ॥ कुस्यति कुसुमं पुंक्लीबलिङ्गः "उद्रुटि-" ॥ (उणा- ३५१) ॥ इति किदुम ॥ २ ॥ सुष्ठु माति सुमं, सुते फलमिति वा "स्थमग्रीष्म-" ॥ (उणा- ३४६) ॥ इति मे निपात्यते ॥ ३ ॥ १९० ॥ पुष्यति पुष्प पुंक्लीबलिङ्ग, वाचस्पतिस्तु 'पुष्पोऽस्त्री' इति पुस्त्वमप्याह ॥ ४ ॥ सूयते स्म सूनम् ॥ ५ ॥ सुष्ठु मान्यते पूज्यते आभिः सुमनसः, स्त्रीलिङ्गो बाहुवचनान्तश्च "विहाय स्सुमनस्-" ॥ (उणा- ९७६) ॥ इत्यसि निपात्यते ॥ ६ ॥ प्रसूयते प्रसव "युवर्ण-" ॥ ५।३।२८ ॥ इत्यल् ॥ ७ ॥ मणति भ्रमरैर्मणीवक "कीचक-" ॥ (उणा- ३३) ॥ इत्यके निपात्यते ॥ ८ ॥

जालक-क्षारकौ तुल्यौ

जलति गन्धेन जालकम्, जालमिव वा नवकलिकावृन्दम् ॥ १ ॥ क्षरति प्रसूयते क्षारकः पुंक्लीबलिङ्ग ॥ २ ॥

कलिकायां तु कोरक ॥ १९१ ॥

कल्यते गण्यते कलिका "कीकसि-" ॥ (उणा-१८) ॥ इतीकः, तत्र ॥१॥ कुरति कोरक पुंक्लीबलिङ्ग "दृकृग्-" ॥ (उणा-२७) ॥ इत्यकः, कायति शब्दायते कोरः "कोरचोर-" ॥ (उणा-४१४) ॥ इत्योरे निपात्यते, कोर एव कोरक इति वा ॥ २ ॥ १९१ ॥

कुड्मले मुकुल

कुटति कुड्मल "कुचिकुटि-" ॥ (उणा-५०२) ॥ इति मलक्, तत्र । मुञ्चति कलिकात्समीपाद्विकसितत्वात् मुकुल "कमुल-" ॥ (उणा-४८७) ॥ इति उले निपात्यते । पुंक्लीबलिङ्गावेतौ ॥१॥२॥ केचित्तु- अवान्तरभेदं न मन्यन्ते, यदाहुः, "मुकुलावस्था तु कलिका कुड्मल जालकं तथा । क्षारकं कोरकं च" इति ॥

गुच्छे गुच्छ-स्तबक-गुत्सका ।
गुलञ्छ

'गुप्यते गुच्छ "गुलुच्छ–" ॥ (उणा–१२६) ॥ इति छे निपात्यते, तत्र ॥१॥ "गुदिमादे–" ॥ (उणा–१२४) ॥ इति छके गुच्छ ॥ २ ॥ स्तूयते स्तबकः पुंक्लीबलिङ्गः "दृकॄनृ–" ॥ (उणा–२७) ॥ इत्यकः ॥ ३ ॥ गुम्फति वेष्टते गुत्स "गुधिगृधस्त च" ॥ (उणा–५६८) ॥ इति कित् स ॥ ४ ॥ गुल्यते गुलुच्छ "गुलुच्छपिच्छिपिच्छेपिच्छ–" ॥ (उणा–१२६) ॥ इति छे निपात्यते, पुंस्ययम् । स्त्रीत्वेऽपि वाचस्पतिः, यदाह– 'गुलुच्छोऽस्त्री' इति । गुलुञ्छ–गुच्छी अपि ॥ ५ ॥

अथ रजः पौष्पं परागः

पुष्पाणां रजः, परागच्छति परागः ॥ १ ॥

अथ रसो मधु ॥ १९२ ॥

मकरन्दो मरन्दश्च

पुष्पाणां रसः, मन्यते मधु मृगैर्मधु क्लीबलिङ्गः ॥ १ ॥ १९२ ॥ मकन्द्यते मध्वपतेऽनेन पुष्पं मकरन्दः मरन्दः "कुमुद" ॥ (उणा–२४४) ॥ इति दे निपात्यते ॥ २ ॥ ३ ॥

वृन्तं प्रसवबन्धनम् ।

वृणोति वृन्तं "पुतपित्त" ॥ (उणा–२०४) ॥ इति ते निपात्यते । प्रसवः पुष्पादिस्तस्य बन्धनम्, यत् कात्य – 'बन्धनं पुष्पफलयोर्वृन्तमाहुः' ॥ १ ॥

प्रबुद्धो-ज्जृम्भ-फुल्लानि व्याकोश विकच स्मितम् ॥१९३॥
उन्मिषित विकसित दलित स्फुटित स्फुटम् ।
प्रफुल्लो-त्फुल्ल-संफुल्लो च्छ्वसितानि विजृम्भितम् ॥ १९४ ॥
स्मेर विनिद्रमुन्निद्र-विमुद्र-हसितानि च ।

प्रबुध्यते प्रबुद्धम् ॥ १ ॥ उज्जृम्भते उज्जृम्भम्, उद्गता जृम्भाऽस्येति वा ॥ २ ॥ फलति विशीर्यते फुल्लम्, "अनुपसर्गाः क्षीब–" ॥ ४ । २ । ८० ॥ इति क्ते निपात्यते ॥ ३ ॥ व्याकुश्यति व्याकोशम् ॥ ४ ॥ विकचते विकचम् ॥ ५ ॥ स्मयते स्मितम् ॥६॥१९३॥ उन्मिषति स्म उन्मिषितम् ॥७॥ विकसति स्म विकसितम् ॥८॥ दलति स्म दलितम् ॥९॥ स्फुटति स्म स्फुटितम् ॥ १० ॥ स्फुटयति स्फुटम् ॥११॥ प्रफुल्लति प्रफुल्लम्, एवमुत्फुल्लम् संफुल्लं च ॥ १२ ॥१३॥ १४ ॥ उच्छ्वसिति स्म उच्छ्वसितम् ॥ १५ ॥ विजृम्भते स्म विजृम्भितम् ॥ १६ ॥ १९४ ॥ स्मयमपोह स्मेरं "स्म्यजस–" ॥ ५ । २ । ७९॥ इति रः ॥१७॥ विनिद्राति विनिद्रम् ॥१८॥ उत्क्रान्त निद्रामुन्निद्रम् ॥ १९ ॥ विगता मुद्रा सङ्कोचोऽस्य विमुद्रम् ॥२०॥ हसति स्म हसितम् ॥ २१ ॥

सङ्कुचितं तु निद्राणं मीलितं मुद्रितं च तत् ॥ १९५ ॥

सङ्कोचति स्म सङ्कुचितम् ॥ १ ॥ निद्राति स्म निद्राणम् ॥ २ ॥ मीलति स्म मीलितम् ॥ ३ ॥ मुद्रयते स्म मुद्रितम् ॥ ४ ॥ १९५ ॥

फलं तु सस्यं

फलति फलं वृक्षादीनाम्, पुंक्लीबलिङ्गः ॥ १ ॥ 'षसक् स्वप्ने' ससन्त्य नेन सस्यम्" स्थाच्छामासा–" ॥ ( उणा–३५७ ) ॥ इति यः ॥ २ ॥

तच्छुष्कं वानं

तत् फलं शुष्कं वायते स्म वानं वाच्यलिङ्गः "सूयत्यादि–" ॥ ४ । २ । ७० ॥ इति क्तस्य नत्वम् ॥ १ ॥

आमं शलाटु च ।

तत् फलमाममपक्वं शलति शलाटु वाच्यलिङ्गः "शलेराटुः" ॥ ( उणा–७६३ ) ॥ १ ॥

ग्रन्थिः पर्व परु

ग्रथ्नाति सन्धत्ते ग्रन्थिः पुंल्लिङ्गः " पदिपठि–" ॥ ( उणा–६०७ ) ॥ इति इः ॥ १ ॥ पृणाति पर्व "स्नामदि–" ॥ ( उणा–९०४ ) ॥ इति वन् । "ऋप र्ति–" ॥ ( उणा–९५१ ) इत्युसि परुः, क्लीबलिङ्गावेतौ ॥ २ ॥ ३ ॥

बीजकोशी शिम्बा शमी शिमिः ॥ १९६ ॥

शिम्बिश्च

कुशन्त्यस्यां कोशी, बीजानां कोशीव पिधायकत्वाद् बीजकोशी ॥ १ ॥ शाम्यतेऽनया शिम्बा "शीमीवन्धि–" ॥ ( उणा–३२५ ) इति किम्वः ॥ २ ॥ शाम्यन्त्यस्यां सस्य शमी ॥ ३ ॥ शमयति शिमिः " शमेरम्य इः" ॥ ( उणा–६०९ ) ॥ पृषोदरादित्वादित् ॥ १९६ ॥ शिनोति शिम्बिः "छविछिवि–" ॥ ( उणा–७०६ ) ॥ इति वौ निपात्यते । स्त्रीलिङ्गावेतौ ॥ ४ ॥ ५ ॥

पिप्पलोऽश्वत्थ श्रीवृक्ष कुञ्जराशन ।

कृष्णावासो बोधितरु

पलति पिप्पलः पुंल्लिङ्गः "कुपतिभ्यां टित् पिप् च पूर्वस्य" ॥ ( उणा–११ ) ॥ इति, पिप्पलानि देवानां पत्राणि, तानि सन्त्यस्य वा । अपिप्पलवत् इति नरुक्ताः ॥ १ ॥ अश्वेषु तिष्ठत्यश्वत्थ, पृषोदरादित्वात् ॥ २ ॥ श्रिया युक्तो वृक्षः श्रीवृक्षः ॥ ३ ॥ कुञ्जरैरश्यते कुञ्जराशन ॥ ४ ॥ कृष्णस्यावासः कृष्णावास ॥ ५ ॥

बोधितरुः बोधिसत्त्वस्य, सर्वोपकारित्वात् ॥ ६ ॥

प्लक्षस्तु पर्कटी जटी ॥ १९७ ॥

प्लक्षत्यधो गच्छति प्लक्षः, प्लोषाति अग्निवमिति वा "प्लुषेः प्लश् च"(उणा-५६६ ) ॥ इति सः ॥ १ ॥ पर्कटाख्य फलमस्त्यस्य पर्कटी यत्तुवाचस्पति – 'फल त्वेतस्य पर्कटम्' इति । पृच्छ्यते पर्कटीसकारान्तात् ङ्यामीदन्तो वा, यत् शाश्वत – विशेषा पर्कटी प्लक्ष प्लक्ष पिप्पलपादप इति ॥ २ ॥ जटाः सन्त्यस्य जटी, शिखादित्वादिन् ॥ ३ ॥ १९७ ॥

न्यग्रोधस्तु बहुपात् स्याद् वटो वैश्रवणालय ।

न्यग् रोहति न्यग्रोध "वीरुन्न्यग्रोधौ" ॥ ४ । १ । १२१ ॥ इति घत्वे साधुः, न्यक् तिर्यग् मार्गे मूले रुणद्धि वा ॥ १ ॥ बहवः पादा मूलान्यस्य बहुपात् "सुसङ्ख्यात्" ॥ ७ । ३ । १५० ॥ इति पात्त्वाव ॥ २ ॥ वटति वेष्टयति मूलैर्वटः त्रिलिङ्गः ॥ ३ ॥ वैश्रवणस्य मङ्गलत्वाल्यो वैश्रवणालयः, यदाहु – 'वटे वटे वैश्रवण ' इति ॥ ४ ॥

उदुम्बरो जन्तुफलो मशकी हेमदुग्धक ॥ १९८ ॥

– उनत्युदुम्बर 'तीवर–' ॥ ( उणा–४४४) ॥ इति बरदि निपात्यते, उत्त स्थिताम्बर इति वा पृषोदरादित्वादुत्वम् ॥१॥ मशकगर्भाणि फलान्यस्य जन्तुफलः ॥ २ ॥ मशका सन्त्यस्य मशकी ॥३॥ हेमवर्णं दुग्धमस्य हेमदुग्धक ॥४॥१९८॥

काकोदुम्बरिका फल्गुर्मल्युर्जघनेफला ।

१ काकप्रिया उदुम्बरी काकोदुम्बरिका ॥ १ ॥ फलति फल्गु "फल्गिवल्गि–" ( उणा– ७५८ ) ॥ इति गु ॥ २ ॥ 'मुणि कुत्सायाम्' मल श्विन्न यात्वमते म ल्यु पृषोदरादित्वात् ॥३॥ जघने कुत्से फलान्यस्या जघनेफला । एते स्त्रीलिङ्गाः॥४॥

आम्रश्चूत सहकार

। • अम्यतेऽभिलष्यते आम्र' "चिमि–' ॥ ( उणा–३९२ ) ॥ इति रो दीर्घश्च ॥ १ ॥ च्योतति चूष्यते वा चूतः "पुतपित्त–' ( उणा– २०४ ) इति ते निपात्यते ॥ २ ॥ सहकारयति मेलयति स्त्रीपुंसौ सहकार माकन्दोऽपि ॥ ३ ॥

सप्तपर्णस्त्वयुक्छद ॥ १९९ ॥

–– सप्त पर्णानि अस्य सप्तपर्ण ॥ १ ॥ अयुग्मिज विषमाणि च्छदान्यस्यायुक्छदः ॥ २ ॥ १९९ ॥

। शिग्रु शोभाञ्जनोऽक्षीव-तीक्ष्णगन्धक-मोचका ।

शिनोति तैक्ष्ण्यात् शिग्रुः पुंक्लीबलिङ्गः ' शिग्रुर्पेरु– ॥ (उणा–८११) ॥

इति रौ निपात्यते ॥ १ ॥ शोभामाञ्जयति शोभाञ्जनः, मुखं भनक्ति मुखभिति वा, पृषोदरादित्वात् ॥ २ ॥ न क्षीवत्यनेन मदप्यत्वादक्षीवः ॥३॥ तीक्ष्णो गन्धोऽस्य तीक्ष्णगन्धः ॥ ४ ॥ मुञ्चति गन्धं मोचकः ॥ ५ ॥

श्वेतेऽत्र श्वेतमरिचं

अत्र शिग्रौ श्वेते श्वेतानि मरिचतुल्यानि फलान्यस्य श्वेतमरिचं ॥ १ ॥

पुन्नागः सुरपर्णिका ॥ २०० ॥

पुंसि पुमान् पुन्नाग इव, प्राधान्यात् ॥१॥ सुरप्रियाणि पर्णानि सन्त्यस्यां सुरपर्णिका ॥ २ ॥ २०० ॥

वकुलः केसरः

वङ्कते पुष्पैर्वकुलः "स्थावङ्कि" ॥ (उणा–४८६) ॥ इत्युलो नलुक् च ॥ १ ॥ केसरा सन्त्यस्य केसरः, अभ्रादित्वात्, किं सौत्रं क्षुद्राद्यादौ स्मरन्ति, विकेवि वा "मीव्यमि" ॥ (उणा–४३९) ॥ इति सरः, के सरतीति वा ॥ २ ॥

अशोकः कङ्केलिः

न शक्यते शोकः "भीणू" ॥ (उणा–२१) ॥ इति कः, नास्ति शोको ऽस्मादिति वा ॥१॥ कमुदकं केलति गच्छति कङ्केलिः, कीलिश, यदमरशेषः–'स्त्रियां त्वशोके कङ्केलि' पृषोदरादित्वात् ॥ २ ॥

ककुभोऽर्जुनः ।

ककते ककुभः "ककेरुभ" ॥ (उणा– ३३३) ॥ ककुभो व्यापकत्वादस्य सन्तीति वा, कं स्कुभ्नाति वा, पृषोदरादित्वात् ॥ १ ॥ अर्ज्यतेऽर्जुनः, शौक्ल्याद्वा ॥ २ ॥

मालूरः श्रीफलो बिल्वः

मल्यते मालूरः "मदिकाणि" ॥ (उणा– ४२८) ॥ इति णिदूरः ॥ १ ॥ श्रीप्रदानि फलान्यस्य श्रीफलः ॥ २ ॥ बिलति भिनत्ति बिल्वः "निघृषी–" ॥ (उणा–५११) ॥ इति किद्वः ॥ ३ ॥

किङ्किरातः कुरण्टकः ॥ २०१ ॥

कुत्सितं किरति किङ्किरातः "कृकलि" ॥ (उणा–२०९) ॥ इत्यातक्, किञ्चित् किरातः सर्वो वा ॥ १ ॥ 'रण्टिः सौत्रः' कौ रण्टति कुरण्टकः "कोरण्टिरण्टिभ्य" ॥ (उणा–२८) ॥ इत्यकः, कुरण्टकोऽपि । कुरण्डक इत्यन्ये ॥ ॥ २ ॥ २०१ ॥

त्रिपत्रकः पलाशः स्यात् किंशुको ब्रह्मपादपः ।

त्रीणि पत्राण्यस्य त्रिपत्रकः ॥ १ ॥ प्रशस्तानि पलाशानि सन्त्यस्य पलाशः, अर्शआदित्वादच् पलं मांसमश्नुत इव रक्तपुष्पत्वाद्वा ॥२॥ किंचित् शुको नीलः किंशुकः ॥ ३ ॥ ब्रह्मणः पादपो ब्रह्मपादपः ॥ ४ ॥

तृणराजस्तलस्तालः

तृणानां राजा तृणराजः तृणद्रुमध्ये मुख्यत्वात् ॥ १ ॥ तलति प्रतिबिम्बादि बहुरूपत्वात् तलः ॥ २ ॥ प्रज्ञाद्यणि तालः ॥ ३ ॥

रम्भा मोचा कदल्यपि ॥ २०२ ॥

रमन्तेऽस्यां रम्भा "गुधृरमि–" ॥ ( उणा– ३२७ ) ॥ इति भः, रम्भत इति वा ॥ १ ॥ मुञ्चति मोचा ॥ २ ॥ कदि सौत्रः कन्दते कदली 'वृदि-भन्दि–" ॥ ( उणा– ४६५ ) इत्यलः, केन वायुना दल्यते वा, के दलमस्या इति वा ॥ ३ ॥ २०२ ॥

करवीरो हयमारः

किरति करवीरः "गम्भीर–" ॥ ( उणा–४२१ ) इति निपात्यते, कृणोति हिनस्ति करः स वीर इव मारकत्वात् करवीरः ॥ १ ॥ हयानुपमक्तो मारयति हयमारः ॥ २ ॥

कुटजो गिरिमल्लिका ।

कुटति कुटजः "कुटेरजः" ॥ ( उणा–११० ) – कुटजो जायते वा ॥ १ ॥ गिरिणा मल्ल्यते धार्यते गिरिमल्लिका वा ॥ २ ॥

विदुलो वेतसः शीतो वानीरो वञ्जुलो रथः ॥ २०३ ॥

'विदु अवयवे' विन्दति विदुलः "स्थाविदि"– ॥ ( उणा– ४८६ ) ॥ इत्युलो न गुण् च ॥ १ ॥ वेति वेतसः पुंस्त्रीलिङ्गः "तस" ॥ ( उणा– ५८० ) ॥ इति तसः ॥ २ ॥ शीतोऽनुष्णवीर्यत्वात् ॥ ३ ॥ वन्यते वानीरः ' वनिखपिम्यो णित्" ॥ ( उणा–४२१ ) इतीरः ॥ ४ ॥ वञ्जति वञ्जुलः 'कुमुल–' ॥ (उणा– ४८७ ) ॥ इत्युले निपात्यते ॥ ५ ॥ रमन्तेऽस्मिन् रथः, रथहेतुत्वाद्वा ॥ ६ ॥ ॥ २०३ ॥

कर्कन्धुः कुवली कोलिर्बदरी

कर्कस्य अन्धुरिव कर्कन्धुः । कर्कन्धूरपि ॥१॥ कौति कुवली त्रिलिङ्गः "को-

र्षा" ॥ ( उणा–८६६ ) ॥ इति किदलः, कौ भूमौ यस्तीति वा ॥ २ ॥ कोलति कोलि पीलिश्च " किलिपिलि–" ॥ (उणा–६०८) ॥ इति इ ॥ ३ ॥ 'मद स्थैर्ये' मदति मदरो "अजिमदि–" ॥ ( उणा–३९७ ) ॥ इलर ॥ ४ ॥

अथ हलिप्रिय ।

नीप कदम्ब

हलिन प्रियो हलिप्रिय , सुराधिवासनात् ॥१॥ नयति सुख नीप "नियो वा" ॥ ( उणा– ३०२ ) ॥ इति कित् पः ॥ २ ॥ 'कद सौत्र' कदते कदम्ब "कदेर्णिद्वा" ॥ (उणा–३२२)॥ इत्यम्बः, कुत्सितमम्बते वा । धाराकदम्बो राज कदम्बश्चासौ । धूलिकदम्बाऽन्यः ॥ ३ ॥

सालस्तु सर्ज

षीयते सालो दन्त्यादिः पुल्लिङ्ग , ॥ १ ॥ सृजति सर्जति वा निर्यासं सर्जः ॥ २ ॥

अरिष्टस्तु फेनिल ॥ २०४ ॥

नास्ति रिष्टमशुभमस्मादरिष्टो -रक्षोहेतुः ॥ १ ॥ फेना सन्त्यस्य फेनिलः "प्रज्ञापर्णोदकफेनात्–" ॥ ७ । २ । ३२ ॥ इतील ॥ २ ॥

सर्वतोभद्रे निम्बोऽरिष्ट पिचुमन्द

धति रोगानुपशम निम्बः "शीनीवम्बि–" ॥ (उणा–३२५) ॥ इति निम्ब, निम्ब सिच्यते वा ॥१॥ न रिष्यतेऽरिष्ट ॥२॥ पिचु मन्दयति पिचुमन्द , अरोगत्वादपिचमन्त्येनमिति वा "कुमुद–" ॥ (उणा–२४४) ॥ इति निपात्यते ॥३॥

समौ पिचुल झावुकौ ।

पिचुं तूल लाति पिचुल ॥ १ ॥ ध्यायते झावुक "कम्बुक–" ॥ ( उणा–५७) ॥ इति उके निपात्यते ॥ २ ॥

कर्पासस्तु बादर स्यात् पिचव्य

करोति शोभां कर्पास पुल्लीबलिङ्ग " कृकरिभ्यां पास " ॥ ( उणा–५८३ ) ॥ १ ॥ बदति स्थैर्ये भजते बादरः " जठर–" ॥ ( उणा–४०३ ) ॥ अरे निपात्यते ॥ २ ॥ पिचुभ्यो हितः पिचव्य ॥ ३ ॥

तूलक पिचु ॥ २०५ ॥

तूल्यते तूल के तूलक पुल्लीबलिङ्गः ॥ १ ॥ पच्यते पिचु निरस्त्रीकृत कर्पास पुंलिङ्ग " पचेरिचात " ॥ ( उणा–७३५ ) ॥ इत्युः ॥ २ ॥ २०५ ॥

आरग्वध कृतमाले

आ समन्ताद् रजन्ति रुजन्तेऽस्मादारग्वध "आरग्वे –" ॥ (उणा–२५४) ॥ इति वध, आ रुग्मयन्त्यारग्वो मन्यस्तेषां वधोऽनेनेति वा ॥ १ ॥ कृतमदीसारं मन्ते मारयति कृतमालस्तत्र ॥ २ ॥

वृषो वासा ऽऽटरूपके ।

वर्षेति मधु वृष पुरुषयम् । शिमामिसान्य ॥१॥ वाति गच्छति श्लेष्माऽन या वासा " माक्षावसि–" ॥ (उणा–५६४) ॥ इति स दन्त्यान्तोऽयम्, 'वस्यते कम्यते वाशेति वाकम्यान्तः' इत्यमर ॥ २ ॥ आ अटत्याटरूपः कोरवूप–' ॥ (उणा–५६१) ॥ इत्यूपे निपात्यते तत्र, अटन् रूपयत्यटरूपोऽपि ॥ ३ ॥

करञ्जस्तु नक्तमाल

करोति करञ्ज ' कृणोऽञ्ज ' ॥ (उणा–१३६) ॥ कर जयतीति वा ॥ १ ॥ नक्तं रात्रावाकमनयोऽस्मान्नक्तमाल, मूलाश्रयत्वात् ॥ २ ॥

स्नुहिर्वज्रो महातरु ॥ २०६ ॥

स्नुह्यति क्षीरं स्नुहि क्षीक्षि नाम्युपाम्य–" ॥ (उणा–६०९) ॥ इति कि, स्नुहेति वैषा । वज्र इव वज्रो भेदकत्वात् ॥ २ ॥ महांश्चासौ तरुश्च म हातरु ॥ ३ ॥ २०६ ॥

महाकालस्तु किंपाके

महान् कालो मृत्युरस्माद् महाकाल ॥ १ ॥ कुत्सित प्राणहर पाकोऽस्य विषद्रुत्वात् किंपाकस्तत्र ॥ २ ॥

मन्दार पारिभद्रके ।

मन्यते स्तूयते देवैर्मन्दारः "मन्दमि–" ॥ (उणा–४०५) ॥ इत्यारः, मन्द मियर्तीति वा ॥ १ ॥ पारि भासपार भद्रमस्य पारिभद्रस्तत्र ॥ २ ॥

मधूकस्तु मधुष्ठीलो गुडपुष्पो मधुद्रुम ॥ २०७ ॥

मदयति मधूक 'वाम्यूक– ॥ (उणा– ६१) ॥ इत्यूके निपात्यते ॥ १ ॥ मधु माधुर्यमस्तीके गर्भेऽस्य मधुष्ठीलः पृषोदरादित्वात् मधु ष्ठीवतीति वा ॥ २ ॥ गुडवद् मधुर पुष्पमस्य गुडपुष्पः ॥ ३ ॥ मधुप्रधानो द्रुमो मधुद्रुम ॥४॥२०७॥

पीलु सिनो गुडफल

पीयते माधुर्यात् पीलुः "पीडः कित्" ॥ (उणा–८२१) ॥ इति लु, पुंलिङ्गः ॥ १ ॥ सिनोति सिन "सेर्नो" ॥ (उणा– २६२) ॥ इति किद् नः ॥ १ ॥

गुडवद् मधुर फलमस्य गुडफलः ॥ ३ ॥

गुग्गुलुस्तु पलङ्कष ।

गूयते गुग्गुलु पुल्लिङ्गः " गूहलगुग्गुलुकमण्डलव " ॥ (उणा– ८२४ ) ॥ इति साधु ॥ १ ॥ पल मांस कषति पलङ्कष , पृषोदरादित्वाद् मोऽन्तः ॥ २ ॥

राजादन पियाल स्यात्

राज्ञामदन मृष्टत्वाद् राजादनः पुक्लीबलिङ्ग ॥ १ ॥ पीयते रसोऽस्य पियाल "कुलिपिलि" ॥ ( उणा–४७६ ) ॥ इति किदालः । प्रियालोऽपि ॥ २ ॥

तिनिशस्तु रथद्रुम ॥ २०८ ॥

तनोति रथादीन् तिनिशः "तिनिश" ॥ (उणा– ५३७ ) ॥ इति निशे निपात्यते, अतिक्रान्तो निशाः, चिरकालिकत्वादिति वा पृषोदरादित्वात् ॥१॥ रथहेतुर्द्रुमो रथद्रुमः ॥ २ ॥ २०८ ॥

नागरङ्गस्तु नारङ्गः

नागरस्य सिन्दूरस्येव रङ्गो रागोऽस्य नागरङ्ग ॥ १ ॥ नृणाति नारङ्गः "सृवृ भृभ्यो मित्" ॥ (उणा– ९९ ) इत्यङ्ग । नार्यङ्गोऽपि ॥ २ ॥

इङ्गुदी तापसद्रुम ।

इङ्गति इङ्गुदी, त्रिलिङ्गः "इङ्गपार्षिभ्याम्-" ॥ (उणा– २४२) ॥ इङ्गुद ॥१॥ तापसानां द्रुमः तापसद्रुमः । तापसा हि अरण्येऽस्यास्तैलमुपयुञ्जते ॥ १ ॥

काश्मरी भद्रपर्णी श्रीपर्णी

काशते काश्मरी "जठर" ॥ (उणा–४०३ ) ॥ इत्यरे निपात्यते ॥ १ ॥ भद्राणि श्रीयुक्तानि च पर्णानि अस्या भद्रपर्णी श्रीपर्णी " पाककर्णपर्णवालान्ताद्" ॥२।४।५५॥ इति ङी ॥ २ ॥ ३ ॥

आम्लिका तु तिन्तिडी ॥ २०९ ॥

अम्लैव आम्लिका ॥ १ ॥ तिम्यति तिन्तिडी "तिन्तड–" ॥ (उणा–१७२) । इति निपात्यते ॥ २ ॥ २०९ ॥

शेलु श्लेष्मातक

शेरतेऽस्मिन् शेलु पुल्लिङ्गः "शीङो लुः" ॥ ( उणा–८२० ) ॥ १ ॥ श्लिष्यति कफोऽस्मात् श्लेष्मातकः "श्लेष्मातक–" ॥ ( उणा–८३ ) ॥ इत्यातके निपात्यते, श्लेष्माणमततीति वा ॥ २ ॥

पीतसालस्तु प्रियकोऽसन. ।

पीतवर्णः साल पीतसालः ॥ १ ॥ प्रियकः काम्यत्वात् ॥२॥ अस्यास्यसनः पुंस्त्रीलिङ्गः ॥ ३ ॥

पाटलि पाटला

पाटयति दौगन्ध्य पाटलिः पुंस्त्रीलिङ्गः " पाटपलिभ्याम्–" ॥ ( उणा–७०२ )॥ इस्यपि ॥ १ ॥ ' मृतिकन्दि–" ॥ ( उणा–४६५ ) ॥ इत्यस्ये पाटला, ताम्रपुष्पत्वाद्वा ॥ २ ॥

भूर्जो बहुत्वक्को मृदुच्छद ॥ २१० ॥

भृणाति भूर्ज , भुवि ऊर्जयतीति वा ॥ १ ॥ बह्व्यस्त्वचोऽस्य बहुत्वक्कः ॥ २ ॥ मृदूनि च्छदान्यस्य मृदुच्छदः ॥ ३ ॥ २१० ॥

द्रुमोत्पल कर्णिकारे

द्रुमस्यापि उत्पलानीव पुष्पाण्यस्य द्रुमोत्पलः । सुरभिप्रायमन्यो निर्गन्ध ॥१॥ कर्णिकामिर्याति कर्णिकारस्तत्र ॥ २ ॥

निचुले हिज्जले ज्जलौ ।

नेनेक्ति निचुलः " कुलुस–' ॥ (उणा–४८७) ॥ इत्युर्थे निपात्यते, निचु स्यतेऽम्बुनेति वा तत्र ॥ १ ॥ हिनोति हिज्जलः ॥ २ ॥ एति इज्जलः " मुर ल–' ॥ ( उणा–४७४ ) ॥ इत्यत्र निपात्यते । 'हितजलापप्रसो हिज्जलः ' इति क्षीरस्वामी, वस्त्वेतसविशेषत्वादस्य ॥ ३ ॥

धात्री शिवा चामलकी

दधाति धात्री ॥ १ ॥ शेरते गुणा अस्यां शिवा ॥ २ ॥ आमलत्वं धारयति गुणानामलकी ' कीचक–' ॥ (उणा–३३) ॥ इत्यत्रे निपात्यते, त्रिलिङ्गोऽयम् ॥३॥

कलिरक्षो बिभीतक ॥ २११ ॥

कल्यते कलिः पुंलिङ्गः कलिहेतुत्वाद्वा ॥ १ ॥ अक्षति व्याप्नोत्यक्षः ॥ २ ॥ बिभेत्यस्माद् बिभीतक त्रिलिङ्गः " भियो द्वे च " ॥ ( उणा–७८ ) ॥ इति तकच् । बिभेदक इत्यन्ये ॥ ३ ॥ २११ ॥

हरीतक्यभया पथ्या

हरति रोगान् हरीतकी; स्त्रीलिङ्गः " हृश्रुहि–" ॥ ( उणा–७९ ) ॥ हरीतकः ॥ १ ॥ नास्ति भयमस्या अभया ॥ २ ॥ पथि साधुः पथ्या हितेत्यर्थः ॥३॥

त्रिफला तत्फलत्रयम् ।

तेषामामलक्यादीनां फलत्रयं त्रीणि फलानि समाहृतानि त्रिफला, अजादित्वादाप् ॥ १ ॥

तापिञ्छस्तु तमाल स्यात्

तापिनश्छादयति तापिञ्छ, पृषोदरादित्वात् । तापिच्छोऽपि ॥१॥ ताम्यति तमाल पुष्करीकसिद्धः " कतृम्-" ॥ ( उणा-४७५ ) ॥ इत्यालः ॥ २ ॥

चम्पको हेमपुष्पक ॥ २१२ ॥

चम्पतेऽयते भृङ्गैश्चम्पकः " कीचक-" ॥ ( उणा-३३ ) ॥ इत्यके निपात्यते ॥ १ ॥ हेमवर्णं पुष्पमस्य हेमपुष्पकः ॥ २ ॥ २१२ ॥

निर्गुण्डी सिन्दुवारे

निष्क्रान्ता गुण्ठाद् वेष्टात् निर्गुण्डी । निर्गुण्ठीरपि ॥ १ ॥ स्यन्दते सिन्दुवार " द्वारशृङ्गार-" ॥ ( उणा-४११ ) ॥ इत्यारे निपात्यते, स्यन्द वृणोति वा, पृषोदरादित्वात् तत्र ॥ २ ॥

अतिमुक्तके माधवी लता

वासन्ती च

अतिक्रान्तो मुक्तान् विरक्तानतिमुक्तकस्तत्र ॥ १ मधौ वसन्ते भवा माधवी " भर्तुसन्ध्यादे -" ॥ ६ । ३ । ८९ ॥ इत्यण् ॥ २ ॥ लाति लता ॥ ३ ॥ वसन्ते पुष्यति वासन्ती " साक्षुपुष्पत्पच्यमाने " ॥ ६।३।११७ ॥ इत्यण् ॥४॥

ओड्रपुष्पं जपा

उड्रदेशे भवं पुष्पमौड्रपुष्पम् ॥१॥ जपतीव जपा । जपादित्वाद्वत्वे जवाऽपि ॥२॥

जातिस्तु मालती ॥ २१३ ॥

जायतेऽस्यां पुष्पाणि जातिः ॥ १ ॥ मालयत्यामोदैर्मालती " पृषपिल- " ॥ ( उणा- २०४ ) ॥ इति ते निपात्यते ॥ २ ॥ २१३ ॥

मल्लिका स्याद्विचकिलः

मल्यते मूर्धनि मल्लिः "पदिपठि-" ॥ ( उणा- ६०७ ) ॥ इति इः, के मल्लिका, "दृकृनृ-" ॥ ( उणा- २७ ) ॥ इत्यको वा ॥१॥ विच्यते विचकिलः "स्यमिकसकपिल-" ॥ ( उणा- ४८४ ) ॥ इतीले निपात्यते ॥ २ ॥

सप्तला नवमालिका ।

सप्त मनो बुद्धिमिन्द्रियाणि च लाति सप्तला, सपति समवैति वा "मुरल-" ॥ ( उणा- ४७४ ) ॥ इत्यले निपात्यते ॥ १ ॥ नवा नूतना मालाऽस्या नवमालिका ॥ २ ॥

मागधी यूथिका

मगधदेशे भवा मागधी ॥ १ ॥ यूयते यूथी "पथयूथ-" ॥ (उणा-२३१) ॥ इति थे निपात्यते, के यूथिका यूथो आक्रमस्त्यस्या वा ॥ २ ॥

सा तु पीता स्याद् हेमपुष्पिका ॥ २१४ ॥

सा यूथिका पीतवर्णा हेमवर्णं पुष्पमस्या हेमपुष्पी "असत्काण्डप्रान्तशतैकाचः पुष्पात्" ॥ २।४।५६ ॥ इति ङी ॥ १ ॥ २१४ ॥

प्रियङ्गुः फलिनी श्यामा

प्रीणाति प्रियङ्गुः कौलिकः "प्रीकैपै-" ॥ (उणा- ७६१) ॥ इत्यङ्गुक् ॥ १ ॥ फलति फलिनी "स्याकठि-" ॥ (उणा- २८२) ॥ इति बहुवचना दिन ॥ २ ॥ श्यामा वर्णेन ॥ ३ ॥

बन्धूको बन्धुजीवकः ।

बध्नाति चित्तं बन्धूकः "मृमन्यञ्जि-" ॥ (उणा- ५८) ॥ इत्यूकः ॥ १ ॥ जीवानां बन्धुः, बन्धून् जीवयति वा बन्धुजीवकः ॥ २ ॥

करुणो मल्लिकापुष्पः

कीर्यते करुणः "भाकृगृ-" ॥ (उणा- १९६) ॥ इत्युणर्स्तान्त ॥ १ ॥ मल्लिकाया इव पुष्पमस्य मल्लिकापुष्पः ॥ २ ॥

जम्बीरे जम्भ-जम्भलौ ॥ २१५ ॥

जम्यते जम्बीरः "जम्बीर-" ॥ (उणा- ४३२) ॥ इतीरे निपात्यते तत्र ॥ १ ॥ जम्यते जम्भः पुल्लिङ्गः ॥ २ ॥ "मुरल-" ॥ (उणा ४७४) ॥ इत्यले निपातनाज्जम्भलः, जम्भान् दन्तान् लाक्षम्भलात् वा ॥ ३ ॥ २१५ ॥

मातुलिङ्गो बीजपूरः

मातोऽस्यते मातुलिङ्गः "मातस्तुलेङ्गक् च-" ॥ (उणा-१०६) ॥ इति साधुः । मातुलिङ्गोऽपि ॥ १ ॥ बीजैः पूर्यते बीजपूरः ॥ २ ॥

करीर क्रकरौ समौ ।

किरति करीरः पुल्लीवलिङ्गः, करिणं ईरयति कण्टकैर्वा ॥ १ ॥ क्रम्यते क्रकरः "अठरक्रकर-" ॥ (उणा-४०३) ॥ इत्यरे निपात्यते, क्रर्ति करोति तीक्ष्णकण्टकत्वात् ॥ २ ॥

पञ्चाङ्गुलः स्यादेरण्डे

पञ्च अङ्गुलयोऽस्य पञ्चाङ्गुलः, अङ्गुलिसदृशपञ्चपत्रात्मकत्वात् "अङ्गुलेः

काष्ठे–" ॥ ७ । ३ । १२४ ॥ इति ट समासान्तः ॥ १ ॥ ईरयति वायुमेरण्ड "पिषण्डैरण्ड–" ॥ ( उणा– १७६ ) ॥ इत्यन्डे निपात्यते तत्र ॥ ३ ॥

धातक्यां धातुपुष्पिका ॥ २१६ ॥

दधाति धातकी "श्लेष्मातक–" ॥ ( उणा–८३ ) ॥ इत्यातके निपात्यते तत्र ॥ १ ॥ धातुवद् रक्तानि पुष्पाण्यस्या धातुपुष्पी ॥ २ ॥ २१६ ॥

कपिकच्छूरात्मगुप्ता

कपीन् कषति कपिकच्छूः स्त्रीलिङ्ग "कषेर्च्छो च पः" ॥ ( उणा– ८३१ ) ॥ इति कः ॥ १ ॥ आत्मना गुप्ता आत्मगुप्ता, स्पर्शाविषयत्वात् ॥ २ ॥

धत्तूरः कनकाह्वयः ।

धयति धातून् धत्तूरः "सिन्दूर–" ॥ ( उणा– ४३० ) ॥ इत्यूरे निपात्यते धात्तूरोऽपि ॥ १ ॥ कनकाह्वय, भुक्तेऽस्मिन् हेमवर्णपृथ्वीदर्शनात् ॥ २ ॥

कपित्थस्तु दधिफल

कपयोऽस्मिन् तिष्ठन्ति कपित्थः, कपिप्रियत्वात् कपिरिव तिष्ठतीति वा, पृषोदरादित्वात् तत्वम् ॥ १ ॥ दधिवदम्लमधुर फलमस्य दधिफल ॥ २ ॥

नालिकेरस्तु लाङ्गली ॥ २१७ ॥

नलति नालिकेरः पुस्त्रीलिङ्ग "नलेरादयः" ॥ ( उणा–४१२ ) ॥ इत्येरे निपात्यते ॥ १ ॥ नालिकान् नालयुक्तान् पुष्पादीनीरयति वा इलाकारपत्रयोगात् लाङ्गली ॥ २ ॥ २१७ ॥

आम्रातको वर्षपाकी

अमति आम्रातक "श्लेष्मातकाम्रातक–" ॥ ( उणा–८३ ) ॥ इति निपात्यते, आम्रमतति कपिचूतत्वादिति वा ॥ १ ॥ वर्षेण पाकोऽस्त्यस्य वर्षपाकी ॥ २ ॥

केतकः क्रकचच्छदः ।

केतति वने केतकः पुस्त्रीलिङ्ग, यद्वाचस्पतिः—"केतकस्तु द्वयोः" इति ॥ १ ॥ क्रकचाकाराणि च्छदान्यस्य क्रकचच्छदः ॥ २ ॥

कोविदारो युगपत्र

कवति दीप्यते कोविदार "कवेः कोविद–" ॥ ( उणा–४१० ) ॥ इत्यारे साधुः, कु भूमिं विदारयतीति वा, पृषोदरादित्वात् ॥ १ ॥ युगस्य पत्रमस्य युगपत्रः ॥ २ ॥

सल्लकी तु गजप्रिया ॥ २१८ ॥

'षल गतौ' सलति सल्लकी, पुंसीलिङ्गे "दृन्कृ-" ॥ ( उणा- २७ ) ॥ इत्यकः, सतरूणां कम्पते स्वाद्यते गजैरिति वा ॥ १ ॥ गजस्य प्रिया ॥२॥२१८॥

वंशो वेणुर्यवफलस्त्वचिसारस्तृणध्वजः ।

मस्करः शतपर्वा च

वमति वंशः "पादाममि-" ॥ ( उणा- ५२७ ) ॥ इति शः ॥ १ ॥ अजम्यनेन वेणुः पुंलिङ्ग "अजिस्था-" ॥ ( उणा- ७६ ) ॥ इति णुः ॥ २ ॥ यवाकारं फलमस्य यवफलः ॥ ३ ॥ त्वचि बल्के सारस्त्वचिसार 'अद्व्यञ्ज नात्-" ॥ ३।२।१८ ॥ इति विकल्पेन सप्तम्यलुप् । त्वक्सारोऽपि ॥ ४ ॥ तृणानां ध्वज इव तृणध्वजः ॥ ५ ॥ मा क्रियते प्रतिषिध्यतेऽनेन मस्करः, वर्चस्कादित्वात् साधुः ॥ ६ ॥ शतं बहूनि पर्वाण्यस्य शतपर्वा ॥ ७ ॥

स्वनन् वाताद् स कीचकः ॥ २१९ ॥

स वंशो वाताद् हेतोः शब्दायमानः कचते शब्दाति शब्दं कीचकः 'कीचक-" ॥ ( उणा- ३३ ) ॥ इत्यके निपात्यते, कीति कचते वा, कीचेति कायति वा ॥ १ ॥ २१९ ॥

तुगाक्षीरी वंशक्षीरी त्वक्क्षीरी वंशरोचना ।

क्षीरस्य त्वगिव तुगाक्षीरी ॥ १ ॥ वंशात् क्षीरमस्याः वंशक्षीरी ॥ २ ॥ त्वचः क्षीरमस्याः त्वक्क्षीरी स्त्रीलिङ्ग ॥ ३ ॥ वंशोत्था रोचना वंशरोचना ॥ ४ ॥

पूगे क्रमुक-गूवाकौ

पवते पूगः "पुमुदिम्याम्-" ॥ ( उणा- ९३ ) ॥ इति किद् गस्तत्र ॥ १ ॥ क्रामति क्रमुकः "क्रमेः क्रम् च वा" ॥ ( उणा- ५३ ) ॥ इति उकः ॥ २ ॥ गुवंत्यनेन ससक्तत्वाद् गूवाकः 'मवाकश्यामाक-" ॥ ( उणा- ३७ ) ॥ इत्याके निपात्यते ॥ ३ ॥

तस्योद्वेग पुनः फलम् ॥ २२० ॥

तस्य पूगस्य फलमुद्वतो वेगोऽस्य उद्वेगम्, ससक्तत्वात् ॥ १ ॥ २२० ॥

ताम्बूलवल्ली ताम्बूली नागवल्ल्यप्यपि ।

ताम्बूल पूगपर्ण-चूर्णसंयोगस्तद्धेतुर्वल्ली ताम्बूलवल्ली ॥ १ ॥ ताम्यन्ति अङ्गम्यनेना ताम्बूली 'तमेर्बोऽम्बो दीर्घश्च वा' ॥ ( उणा- ४८९ ) ॥ इत्यूल ॥ २ ॥ नागपर्यायेभ्यः सर्पादिभ्यो वल्ली, नागस्य वल्ली पातालसम्भूतत्वाद् नागवल्ली,

सर्पवल्ली, फणिलता इत्यादि ॥ ३ ॥

तुम्ब्यलाबू

ताम्यति तुम्बी "तुम्बस्तुम्याद्य" ॥ ( उणा– ३२० ) ॥ इति बे निपात्यते ॥ १ ॥ न लम्बतेऽलाबूः काकाऽश्च नञ् "नञो लम्बेर्नलुक् च" ॥ (उणा– ८१८ ) ॥ इत्यूः, स्त्रीक्लीबलिङ्गावेतौ ॥ २ ॥

कृष्णला तु गुञ्जा

कृष्ण प्रान्तं लाति कृष्णला ॥ १ ॥ गुञ्जति स्निग्ध्या गुञ्जा ॥ २ ॥

द्राक्षा तु गोस्तनी ॥ २२१ ॥

मृद्वीका हारहूरा च

रस्यते द्राक्षा "लाक्षादाक्षा–" ॥ ( उणा–५९७ ) ॥ इति निपात्यते यद्वा, द्राक् क्षरति क्षीयते क्षिपति क्षिणोतीति वा "क्वचित्" ॥ ५ ।१। १७१ ॥ इति ड ॥ १ ॥ गोस्तनाभा गोस्तनी ॥ २ ॥ २२१ ॥ मृद्यते मृद्वीका "मृदेर्वोऽन्तश्च वा" ॥ ( उणा–४९ ) ॥ इति किदीकः ॥ ३ ॥ हरति पित्त हारहूरा "सिन्दूर–" ॥ ( उणा–४३० ) ॥ इत्यूरे निपात्यते ॥ ४ ॥

गोक्षुरस्तु त्रिकण्टकः ।

श्वदंष्ट्रा स्थलशृङ्गाट

गाः क्षुरयति श्मययति गोक्षुर ॥ १ ॥ त्रयः कण्टका अस्य त्रिकण्टकः ॥ २ ॥ शुनो दंष्ट्रेव श्वदंष्ट्रा तदाकारत्वात् "शुनः" ॥ ३ । २ । ९० ॥ इति दीर्घत्वाभावः ॥ ३ ॥ स्थलस्य शृङ्गाटः स्थलशृङ्गमटतीति वा स्थलशृङ्गाट ॥४॥

गिरिकर्ण्यपराजिता ॥ २२२ ॥

गिरिरिवमेव कर्णोऽस्या गिरिकर्णी ॥ १ ॥ न पराजीयते रक्षाहेतुत्वादपराजिता अप्रतिहतेत्यर्थः ॥ २ ॥ २२२ ॥

व्याघ्री निर्दिग्धिका कण्टकारिका स्यात्

व्याघ्रीव व्याघ्री, दुःस्पर्शत्वात् ॥ १ ॥ निर्दिह्यते निर्दिग्धा के निर्दिग्धिका ॥ २ ॥ कण्टकानियर्ति कण्टकारी, के कण्टकारिका ॥ ३ ॥

अथामृता ।

वत्सादनी गुडूची च

न म्रियते अनया छिन्नप्ररोहत्वात् ॥ १ ॥ वत्सैरद्यते वत्सादनी ॥ २ ॥

पुनति रक्षति कर्फ गुडूची " गुडेरूचत्" ॥ ( उणा-१२० ) ॥ १ ॥

विशाला त्विन्द्रवारुणी ॥ २२३ ॥

विशाला, महाफलत्वात् ॥१॥ इन्द्रवत् वर्णेर्वृणोति इन्द्रवारुणी ॥२॥२२३॥

उशीरं वीरणीमूले

उश्यते उशीरं पुंक्लीबलिङ्गः " घसिवशि-" ॥ ( उणा-४१९ ) ॥ इति किरीर ॥ १ ॥ वीरणी तृणविशेषस्तस्या मूलं वीरणीमूलं तत्र ॥ २ ॥

ह्रीबेरं बालकं जलम् ।

जिहेतीव ह्रीबेर " घसेराद्यः" ॥ ( उणा-४३१ ) ॥ इति बेरे निपात्यते तत्र ॥१॥ बलते बालं स्वार्थे के बालकम् ॥२॥ जलति जलम्, यद्वार्ऽस्य केशसदृशत्वात् सूक्ष्मत्वाच्च बाल-जलपर्यायवाच्यत्वमपि ॥ ३ ॥

प्रपुन्नाडस्त्वेडगजो दद्रुघ्नश्चक्रमर्दक ॥ २२४ ॥

प्रपुनति प्रपुनाति वा प्रपुनाड- "कपाद-" ॥ ( उणा- १४८ ) ॥ इति आडे निपात्यते ॥ १ ॥ एडवत् मेषाक्षत्वात् गज्यते गर्ज्यते एडगज ॥ २ ॥ दद्रु हन्ति दद्रुघ्न ॥ ३ ॥ चक्राणि दद्रुमण्डलानि मृद्नाति चक्रमर्दकम् ॥४॥२२४॥

पद्माख्यो महारजनं कुसुम्भं कमलोत्तरम् ।

पद्यते पद्मा "कटिपठि-" ॥ ( उणा- ५०५ ) ॥ इति पत्तत्र ॥ १ ॥ रज्यतेऽनेन रजन महच्च तद् रजनं च महारजनम् ॥ २ ॥ कुसति कुसुम्भं "कुकुसिभ्यां कुम्भः" ॥ ( उणा- ३३७ ) ॥ पुंक्लीबलिङ्गोऽयम् ॥ ३ ॥ कमलेभ्य उत्तर समाधिक्यात् कमलोत्तरम् ॥ ४ ॥

लोध्रे तु गालवो रोध्र-तिल्व शावर-मार्जना ॥ २२५ ॥

रुणद्धि वर्णं रोध्रः, लत्वे लोध्रस्तत्र ॥ १ ॥ गालयति स्रावयति आक्षि गालवः "कैरव-" ॥ ( उणा- ५११ ) ॥ इत्यवे निपात्यते ॥ २ ॥ ३ ॥ तिलति स्निह्यतेऽत्रमनेन तिल्व 'प्रहाहा-' ॥ ( उणा- ५१४ ) ॥ इति वे निपात्यते ॥ ४ ॥ शबराणामयं इष्टः शाबरः ॥ ५ ॥ मार्ष्टि उद्वर्तयति अङ्गमनेन मार्जनम् ॥ ६ ॥ २२५ ॥

मृणालिनी पुटकिनी नलिनी पङ्कजिन्यपि ।

मृणालमस्त्यस्यां मृणालिनी ॥ १ ॥ पुटकमस्त्यस्यां पुटकिनी "पुष्करादिभ्यो देशेऽपि" ॥ ७।२।६७ ॥ इति इन् ॥ २ ॥ नलोऽस्त्यस्यां नलिनी "अतोऽनेकस्वरात्-" ॥ ७।२।६ ॥ इतीन् ॥ ३ ॥ पङ्कजमस्त्यस्यां पङ्कजिनी, अब्जादित्वादिन्,

यौगिकत्वात् कमलिनीत्यादयः ॥ ४ ॥

> कमल नलिन पद्ममरविन्द कुशेशयम् ॥ २२६ ॥
> पर शत सहस्राभ्यां पत्र राजीव पुष्करे ।
> बिसप्रसूत नालीक तामरस महोत्पलम् ॥ २२७ ॥
> तज्जलात् सरस पङ्कात् परैरुड् रुह-जन्म-जैः ।

कम्यते श्रिया कमलं "मृदिकन्दि-" ॥ (उणा- ४६५) ॥ इत्यल; कमम्भोऽलति भूषयति वा, कं जलं मल्यत इति वा ॥ १ ॥ नलति नलिनं "स्था कठि-" ॥ (उणा- २८२) ॥ इतीन ॥ २ ॥ पद्यते पद्मं "अर्तीरि-" ॥ (उणा- ३३८) ॥ इति म । एते पुक्लीबलिङ्गाः ॥ ३ ॥ अरान् विन्दति अरविन्दं "निगवादेर्नाम्नि" ॥ ५।१।६१ ॥ इति श ॥ ४ ॥ कुशे जले शेते कुशेशयं "शयवासिवासेष्वकालात्" ॥ ३।२।२५ ॥ इति सप्तम्यलुप् ॥ ५ ॥ २२६ ॥ शत-सहस्रशब्दाभ्यां परं पत्रम्, शतसहस्रे बहूपलक्षणं शतं सहस्रं च पत्राण्यस्य शतपत्रम् सहस्रपत्रम् ॥६॥७॥ राज्या सन्तत्यस्य राजीवम्, मण्यादित्वाद्वः ॥ ८ ॥ पुष्यति जले पुष्करं "सुपुषिभ्यां कित्" ॥ (उणा- ४३६) ॥ इति करः ॥ ९ ॥ बिसात् प्रसूतं बिसप्रसूतम् । बिसप्रसूनमपि ॥ १० ॥ नलति नालीकं पुक्लीबलिङ्गः "सृणीक-" ॥ (उणा- ५०) ॥ इतीके निपात्यते ॥ ११ ॥ तम्यते तामरसं "कलस-" ॥ (उणा- ५७३) ॥ इत्यसे निपात्यते, ताम्यं सप्रकर्षो रसोऽस्येति वा, तमः प्रकर्षार्थः तारतम्यवत्, ताम्यद्भिर्भ्रमरैरस्यते वा ॥१२॥ महच्च तदुत्पलं च महोत्पलम् ॥ १३ ॥ २२७ ॥ तत् कमलं जलशब्दात्, सरःशब्दात्, पङ्कशब्दाच्च परैः रुडादिभिरुच्यत इत्यर्थः, जलरुट्, जलरुहम्, जलजन्म, जलजम्, ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ सरोरुट्, सरोरुहम्, सरोजन्म, सरोजम्, ॥ १८ ॥ १९ ॥ २०॥२१॥ पङ्करुट्, पङ्करुहम्, पङ्कजन्म, पङ्कजम् । यौगिकत्वाद् वारिज-सरसीरुहादयः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

> पुण्डरीकं सिताम्भोजं

पुणति पुण्डते वा पुण्डरीकं "सृणीक-" ॥ (उणा- ५०) ॥ इतीके निपात्यते ॥ १ ॥ सितं श्वेतमम्भोजं सिताम्भोजम् ॥ २ ॥

> अथ रक्तसरोरुहे ॥ २२८ ॥
> रक्तोत्पलं कोकनदं

रक्तं च तत् सरोरुहं च रक्तसरोरुहं तत्र ॥ १ ॥ २२८ ॥ रक्तं शोणमुत्पलं रक्तोत्पलम् ॥ २ ॥

कैरवाणि सन्त्यस्यां कैरविणी सत्र ॥ १ ॥ कुमुदानि सन्त्यस्यां कुमुद्वती "नडकुमुद–' ॥ ६।२।७४ ॥ इति डिद् मतु, म्यन्जमान्तात्रा ' तदस–" ॥ ७ । २ । १ ॥ इति मतुः । कुमुदिन्यपि ॥ २ ॥

उत्पलं स्यात् कुवलयं कुवेलं कुवलं कुवम् ॥ २२९ ॥

उत्पिबत्युत्पलं पुक्लीबलिङ्गः "गुरल–' ॥ ( उणा– ४७४ ) ॥ इत्यले निपात्यते, उत्पलतीति वा ॥ १ ॥ कौ वलति प्राणिति कुवलयं कुगुवलि–" ॥ (उणा– ३६५ ) ॥ इत्ययः, कुत्सितो वहिर्वेलय पत्रवेष्टनमस्य वा ॥ २ ॥ कौ वेलति कुवेलम् ॥ ३ ॥ कवते मृणाराये कुवलं पुक्लीबलिङ्ग "कोला" ॥ ( उणा– ४६९ ) ॥ इति किदल, कौ वलतीति वा ॥ ४ ॥ कुत्सितं वातीति कुवं ' क्वचित्" ॥ ५ । १ । १७१ ॥ इति डः ॥ ५ ॥ २२९ ॥

अस्य विशेषानाह—

श्वेते तु तत्र कुमुदं कैरवं गर्दभाह्वयम् ।

तत्र उत्पले श्वेते काम्यते कुमुदं पुक्लीबलिङ्ग "कुमुद–" ॥ ( उणा– २४४ ) ॥ इत्युदे निपात्यते कौ मोदत इति वा । कुमुदपि ॥ १ ॥ करोति मुदं कैरवं ' कैरवभैरव–" ॥ (उणा–५१९ ) ॥ इत्यवे निपात्यते, के रौति कैरवो हंसस्त स्येद प्रियामिति वा ॥ २ ॥ गर्दभस्याह्वयोऽस्य गर्दभाह्वयम् ॥ ३ ॥

नीले तु स्यादिन्दीवरं

नीले उत्पलं इन्दति श्रिया इन्दीवरं " दीवर–" ॥ ( उणा–४४४ ) ॥ इति वरटि निपात्यते ॥ १ ॥

हल्लकं रक्तसन्ध्यके ॥ २३० ॥

हलति भूर्नेते हल्लकम् ॥ १ ॥ रक्तान् सन्धीनकति रक्तसन्ध्यकम्, रक्तसन्ध्येव वा तत्र । रक्तोत्पलं चैतत् ॥ २ ॥ २३० ॥

सौगन्धिके तु कल्हारं

सुगन्धः प्रयोजनमस्य सौगन्धिकम् ॥ १ ॥ कल्यते कल्हारं " द्वारश्वार–' ॥ ( उणा–४११ ) ॥ इत्यारे निपात्यते, के ल्हादते वा, पृषोदरादित्वात् । श्वारत छ्रक चैतत् ॥ २ ॥

बीजकोशो वराटकः ।

कर्णिका

बीजानां पद्माक्षमाख्या कोशो बीजकोशः ॥ १ ॥ वरमटति वराटकः

॥ २ ॥ असत्यपि कर्णभवत्वे स्वरूपात् कर्णे भवा कर्णिका " कणललाटात्–" ॥ ॥ ६ । ३ । १४१ ॥ इति कन् ॥ ३ ॥

पद्मनाल तु मृणाल तन्तुल विसम् ॥ २३१ ॥

पद्मस्य नालं पद्मनालम् ॥ १ ॥ 'मृणत् हिंसायां' मृण्यतेऽर्यते मृणाल त्रिलिङ्ग " कुलिपिलि–" ॥ ( उणा–४७६ ) ॥ इति किदाल, मृदमालीयते वा " क्वचित् " ॥ ५ । १ । १७१ ॥ इति डे पृषोदरादित्वात् साधुः ॥ २ ॥ तन्तून् लाति तन्तुलम् ॥ ३ ॥ वेति विस " पटिमीभ्याम्–" ॥ (उणा–५७९) ॥ इति किसः, विस्यते प्रेर्यते वा ॥ ४ ॥ २३१ ॥

किञ्जल्क केसरं

किञ्चिज्जलति, किं कुत्सितं जीर्यते वा किञ्जल्कं " निष्कतुरुष्क–" ॥ (उणा–२६) ॥ इति के निपात्यते ॥ १ ॥ के सरति केसरम् । पुक्लीबलिङ्गावेतौ ॥२॥

सवर्त्तिका तु स्याद् नव दलम् ।

सवर्त्तयति वेष्टयति सवर्त्तिका पद्मादीनां नवोद्भिन्नं दल धरमण्त्रिकाद्यम् ॥१॥

करहाट शिफा च स्यात् कन्दे सलिलजन्मनाम् ॥२३२॥

क रहयन्ति करहाः पद्मादयो अक्षोरयास्तानटति करहाटः, कीर्यते वा " कपाटविराट–" ॥ ( उणा–१४८ ) ॥ इत्याटे निपात्यते ॥ १ ॥ शिनोति दारयति क्ष्मां शिफा ॥ २ ॥ कनति कन्द " सातापि–" ॥ (उणा–२३७) ॥ इति दः, पुंक्लीबलिङ्ग , कन्द्यतेऽन्विष्यते वा तत्र, सलिलजन्मनां पद्मादीनाम् ॥३॥२३२॥

उत्पलाना तु शालूक

उत्पलानां कन्दे शलति 'शालूक " शल्यणोर्णित् " ॥ ( उणा–५९ ) ॥ इत्यूक ॥ १ ॥

नील्यां शैवाल शेवले ।

शेवाल शैवल शेपाल जलात् शूक नीलिके ॥ २३३ ॥

नीलति नीली, नीलीवर्णो वा तस्याम् ॥ १ ॥ शेतेऽम्भसि शैवालं शैवलं शेवल शेपाल 'शीङ्खलफपाञ्चालशूवलणूवलाः' ॥ ( उणा– ५०१ ) ॥ इति मत्वारोऽपि शाश्वतः। सेवाल तु शेपालस्य जपादित्वाद् वत्वे साधु ॥ २ ॥ ३ ॥ ॥ ४ ॥ ५ ॥ ६ ॥ जलशब्दात् परे शूकनीलिके– जलस्य शूकमिव जलशूकम् । शैवालाद्या एतेऽपि पुंक्लीबलिङ्गाः ॥ ७ ॥ जलं नीलयति आणि स्वार्थे के जलनी लिका ॥ ८ ॥ २३३ ॥

धान्यं तु सस्यं सीत्यं च व्रीहिः स्तम्बकरिश्च तत् ।

धन्यते धान्यम्, धीमत इति वा "धाप्रामि–" ॥ ( उणा– १७९ ) ॥ :सन्यः, व्रीह्यादि , यदाहुः–

" व्रीहिर्यवो मसूरो गोधूमा मुद्गमाषतिलचणकाः ।
अणवः प्रियङ्गु कोद्रवमयुष्ठकाः शालिराढक्यः ॥ १ ॥
किञ्च कलाय-कुलत्थौ शणसप्तदशानि धान्यानि ॥" ॥ १ ॥

सस्यते सुखमनेन सस्यं "स्याच्छा–" ॥ ( उणा– ३५७ ) ॥ इति य ॥२॥ सीतया सङ्गत सीत्यं ' सीतया सङ्गते" ॥ ७ । १ । २७ ॥ इति य ॥ ३ ॥ व्रीयते याच्यत इति व्रीहिः "व्रियो हिक्" ॥ ( उणा– ७१० ) ॥ ४ ॥ स्तम्बं करोति स्तम्बकरिं । पुंलिङ्गावेतौ ' शकृत् स्तम्बाद्वत्सव्रीहौ कृञ' ॥ ५ । १ । १०० ॥ इति इः ॥ ५ ॥

आशु स्यात् पाटलो व्रीहिः

व्रीहिः पष्टिका धान्यविशेष पाटलच्छायः ॥ १ ॥ अश्नुते आशुः पुंलिङ्गः "कृवापाजि–' ॥ ( उणा– १ ) ॥ इत्युण् , शीघ्रपाकत्वाद्वा, यद्, दुर्गः– 'आशावाशु शालि-शीघ्रयोः' इति ॥ २ ॥

गर्भपाकी तु षष्टिकः ॥ २३४ ॥

गर्भे पच्यते अवश्यमेवेत्येवंशीलो गर्भपाकी णिनि न्यङ्क्वादित्वात् साधुः ॥ १ ॥ षष्टिरात्रेण पच्यते षष्टिकः "षष्टिकषष्टिरात्रेण पच्यमाने" ॥ ७ । १ । ८१ ॥ इत्यत्र षष्टिकेति निर्देशात् साधुः ॥ २ ॥ २३४ ॥

शाल्यः कलमाद्याश्च

शलन्ति शालयः पुंलिङ्गः "कमिवमि–" ॥ ( उणा– ६१८ ) ॥ इति णिदिः कलम आद्यो येषां कलमाद्याः ॥ १ ॥

कलमस्तु कलामकः ।

कलति मापयत्यनेन कलमः "खपूप्रथि–" ॥ ( उणा– ३४७ ) ॥ इत्यमः, कले कलम ॥ १ ॥ कलां कलमामर्मति कलामकः ॥ २ ॥

लोहितो रक्तशालिः स्यात्

लोहितो वर्णेन ॥ १ ॥

महाशालिः सुगन्धिकः ॥ २३५ ॥

महांश्चासौ शालिश्च महाशालिः ॥ १ ॥ शोभनो गन्धोऽस्य सुगन्धिः " सु-

॥ २ ॥ असत्यपि कर्णभवत्वे रूढत्वात् कर्णे भवा कर्णिका " कर्णललाटात्–" ॥ ॥ ६ । ३ । १४१ ॥ इति कस् ॥ ३ ॥

पद्मनालं तु मृणालं तन्तुलं बिसम् ॥ २३१ ॥

पद्मस्य नालं पद्मनालम् ॥ १ ॥ 'मृणत् हिंसायां' मृण्यतेऽर्यते मृणालं त्रिलिङ्ग " फुलिपिलि–" ॥ ( उणा–४७६ ) ॥ इति किदालः, मृदमार्ष्टीयते वा " क्वचित् " ॥ ५ । १ । १७१ ॥ इति डे पृषोदरादित्वात् साधुः ॥ २ ॥ तन्तून् लाति तन्तुलम् ॥ ३ ॥ बेति बिसं " पटिवीभ्याम्–" ॥ (उणा–५७९) ॥ इति किसः, बिस्यते प्रेर्यते वा ॥ ४ ॥ २३१ ॥

किञ्जल्कः केसरं

किमिषज्जलति, किं कुत्सितं जीर्यते वा किञ्जल्क " निष्कतुरुष्क–" ॥ (उणा–२६) ॥ इति के निपात्यते ॥ १ ॥ के सरति केसरम् । पुंक्लीबलिङ्गावेतौ ॥२॥

संवर्तिका तु स्याद् नवं दलम् ।

संवर्त्तयति वेष्टयति संवर्तिका पद्मादीनां नवोद्भिन्न दलं धारयन्निरकाख्यम् ॥१॥

करहाटः शिफा च स्यात् कन्दे सलिलजन्मनाम् ॥२३२॥

कं रहयन्ति करहाः पद्मादयो जलोत्पन्नास्तानटति करहाटः, कीर्यते वा " कपाटविराट–" ॥ ( उणा–१४८ ) ॥ इत्याटे निपात्यते ॥ १ ॥ शिनोति धारयति क्ष्मां शिफा ॥ २ ॥ कमति कन्दः "आपापि–" ॥ (उणा–२३७) ॥ इति द, पुंक्लीबलिङ्ग, कन्द्यतेऽभिनन्द्यते वा तस्मिन्, सलिलजन्मनां पद्मादीनाम् ॥३॥२३२॥

उत्पलानां तु शालूकं

उत्पलानां कन्दे शलति 'शालूक " शल्यमेर्णित् " ॥ ( उणा–५९ ) ॥ ॥ इत्यूक ॥ १ ॥

नील्यां शैवालं सेवलं ।
शेवालं शैवलं शेपालं जलात् शूक नीलिके ॥ २३३ ॥

नीलति नीली, नीलवर्णा वा तस्याम् ॥ १ ॥ शेतेऽम्भसि शैवालं शेवलं शैवलं शेपालं "शीङस्तलकृपालमालशृबलणृबलः" ॥ ( उणा– ५०१ ) ॥ इति वकारोऽपि साधवः । शेपाल तु शेपालस्य अपादित्वात् बत्वे साधु ॥ २ ॥ ३ ॥ ॥ ४ ॥ ५ ॥ ६ ॥ जलशब्दात् परे शूक-नीलिके– जलस्य शूकमिव जलशूकम् । शैवालस्या यदपि पुंक्लीबलिङ्गः ॥ ७ ॥ जलं नीलयति आभि स्वार्थे के जलनीलिका ॥ ८ ॥ २३३ ॥

धान्यं तु सस्यं सीत्यं च व्रीहिः स्तम्बकरिश्च सः ।

धन्यते धान्यम्, धीयते इति वा "धामाभ्यि–" ॥ ( उणा– ३७९ ) ॥ इत्यन्यः, व्रीह्यादि, यदाहु–

" व्रीहिर्यवो मसूरो गोधूमा मुद्गमाषतिलचणकाः ।
अणवः प्रियङ्गु कोद्रवमयुष्ठकाः शालिराढक्यः ॥ १ ॥
किञ्च कलाय-कुलत्थौ शणसप्तदशानि धान्यानि ॥" ॥ १ ॥

सस्यते सुखमनेन सस्यं 'स्याच्छा–' ॥ ( उणा– ३५७ ) ॥ इति यः॥२॥ सीतया समितं सीत्यं 'सीतया संमिते" ॥ ७ । १ । २७ ॥ इति य ॥ ३ ॥ व्रीयते याच्यते इति व्रीहिः "व्रियो हिक्" ॥ ( उणा– ७१० ) ॥ ४ ॥ स्तम्बं करोति स्तम्बकरिः । पुंलिङ्गावेतौ ' शकृत् स्तम्बाद्वत्सव्रीही कृग ॥ ५ । १ । १०० ॥ इति इः ॥ ५ ॥

आशुः स्यात् पाटलो व्रीहिः

व्रीहिः षष्टिका धान्यविशेषः पाटलच्छायः ॥ १ ॥ अश्नुते आशुः पुंलिङ्गः "कृवापाजि–" ॥ ( उणा– १ ) ॥ इत्युण् शीघ्रपाकत्वात्; यद्, दुर्गः– 'आश्वाख्या शालि-शीघ्रयोः' इति ॥ २ ॥

गर्भपाकी तु षष्टिकः ॥ २३४ ॥

गर्भे पच्यते स्वयमेवेत्येवंशीलो गर्भपाकी णिनि ग्यन्तकादित्वात् साधुः ॥ १ ॥ षष्टिरात्रेण पच्यते षष्टिकः "यवयवकषष्टिकाद्यः" ॥ ७ । १ । ८१ ॥ इत्यत्र षष्टिकेति निर्देशात् साधुः ॥ २ ॥ २३४ ॥

शालयः कलमाद्याः स्युः

शलन्ति शालयः पुंलिङ्गः "कमिवमि–" ॥ ( उणा– ६१८ ) ॥ इति णिदिः कलम आद्यो येषां कलमाद्याः ॥ १ ॥

कलमस्तु कलामकः ।

कलति मादयत्यनेन कलमः "रुचिकुप्यपि–" ॥ ( उणा– ३४७ ) ॥ इत्यमः, स्वे कलमः ॥ १ ॥ कलां कलामामति कलामकः ॥ २ ॥

लोहितो रक्तशालिः स्यात्

लोहितो वर्णेन ॥ १ ॥

महाशालिः सुगन्धिकः ॥ २३५ ॥

महांश्चासौ शालिश्च महाशालिः ॥ १ ॥ शोभनो गन्धोऽस्य सुगन्धिः " सु

पृत्युत्सुरभेः-" ॥७। ३ । १४४॥ इति इत् समासान्त, के सुगन्धिक ॥२॥२३५॥

यवो हयप्रियस्तीक्ष्णशूक

यूयते यव ॥ १ ॥ हयानां प्रियो हयप्रिय ॥ २ ॥ तीक्ष्णः शूकः किं-शारुरस्य तीक्ष्णशूकः ॥ ३ ॥

तोक्मस्त्वसौ हरित् ।

असौ यवो हरिन्नीलः, तुज्यते तोक्मः "रुक्मग्रीष्म-" ॥ (उणा-३४६)॥ इति मे निपात्यते ॥ १ ॥

मङ्गल्यको मसूर स्यात्

मङ्गले साधु मङ्गल्य, के मङ्गल्यक ॥ १ ॥ मस्यते परिणमते मसूर, पुंस्त्री लिङ्ग "मीमसि-" ॥ ( उणा-४२७ ) इत्यूरः ॥ २ ॥

कलायस्तु सतीनक ॥ २३६ ॥

हरेणु खण्डिकश्च

कल्यते कलाय त्रिपुटाख्य "कुलिकुलि-" ॥ ( उणा- ३७२ ) ॥ इति कायः कलामतीसारमयते वा, कं लातीति वा ॥१॥ सीदन्त्यनेन सतीनः "दिन नम-" ॥ (उणा- २९८) ॥ इति साधुः, के सतीनक । सातीनोऽपि ॥२॥२३६॥ ह्रियते हरेणुः, पुंलिङ्ग "कृभू-" ॥ ( उणा- ७७२ ) ॥ इत्येणु ॥ ३ ॥ खण्ड्यते खण्डिक "कुषिक-" ॥ ( उणा- ४५ ) ॥ इतीके निपात्यते ॥ ४ ॥

अथ चणको हरिमन्थक ।

चणति वक्ष्यमाणश्चणकः " दृकुमू-" ॥ ( उणा- २७ ) ॥ इत्यक ॥ १ ॥ हरिभिर्मथ्यते हरिमन्थकः ॥ २ ॥

माषस्तु मदनो नन्दी वृष्यो बीजवरो बली ॥ २३७ ॥

मीयते माषः पुंक्लीबलिङ्गः "इकृषु-" ॥ ( उणा- ५४० ) ॥ इति षः ॥ १ ॥ मदयति शुक्रस्रावात् मदन ॥ २ ॥ नन्दयत्यवश्यं नन्दी ॥ ३ ॥ वृषाय मैथुनाय हितो वृष्यः "प्राण्यङ्गरथ-" ॥ ७।१।३७ ॥ इति य, वृष्यते तैलादिनेति "कृवृषि-" ॥ ५।१।४२ ॥ इति क्यप् वा ॥ ४ ॥ बीजेषु वरो बीजवरः, बीज शुक्रं वृणोति वा ॥ ५ ॥ बलं रेतोऽस्त्यत्र बली ॥ ६ ॥ २३७ ॥

मुद्गस्तु प्रथनो लोभ्यो वलाटो हरितो हरि ।

मोदतेऽनेन मुद्गः "मुद्ग्रिभ्यां कित्" ॥ ( उणा- ९३ ) ॥ इति गः ॥१॥ प्रथते प्रथनः ॥ २ ॥ लुभ्यते लोभ्यः ॥ ३ ॥ वलमटति वलाट ॥ ४ ॥ हरितो

मील ॥ ५ ॥ हरिः, हरिवर्णत्वात् पुंलिङ्गः ॥ ६ ॥

पीतेऽस्मिन् वसु-खण्डीर प्रवेल-जय शारदा ॥ २३८ ॥

अस्मिन् मुद्गे पीतवर्णे वसति चित्ते वसु पुंलिङ्गः ॥ १ ॥ खण्ड्यते खण्डीरः "गम्भीर–" ॥ (उणा–४२२) ॥ इतीरे निपात्यते ॥ २ ॥ प्रवेलति प्रवेल ॥ ३ ॥ अमरमनेन जय ॥ ४ ॥ शरदि भवः शारद "मतुस्प्यादेरण्" ॥ ६ । ३ । ॥ ८९ ॥ ५ ॥ २३८ ॥

कृष्णे प्रवर-वासन्त-हरिमन्थज शिम्बिका ।

कृष्णे मुद्गे प्रवियते प्रवर ॥ १ ॥ वसन्ते भवो वासन्तः ॥ २ ॥ हरि मन्थाज्जायते हरिमन्थजः ॥ ३ ॥ शिम्बाऽस्त्यस्य शिम्बिक, व्रीह्यादित्वादिक, शिम्बिभि कायति वा ॥ ४ ॥

वनमुद्गे तुवरक निगूढक-कुलीनका ॥ २३९ ॥

खण्डी च

वनस्य मुद्गो वनमुद्गस्तत्र तुवर कषाय स एव तुवरक ॥ १ ॥ निगूहति स्म निगूढकः ॥ २ ॥ कौ लीयते कुलीनकः ' कीचक–' ॥ ( उणा–३३ ) ॥ इत्यके निपात्यते ॥ ३ ॥ २३९ ॥ खण्डमस्त्यस्य खण्डी ॥ ४ ॥

राजमुद्गे तु मकुष्ठक मयुष्ठकौ ।

मुद्गानां राजा प्रधानत्वाद् राजमुद्गस्तत्र ॥ १ ॥ मकुष्ठतेऽनेन मकुष्ठः ॥ २ ॥ मीयतेऽसौ मयुष्ठः " पष्ठेमिठ–" ॥ ( उणा–१६६ ) ॥ इति ठे निपात्यते ॥ ३ ॥

गोधूमे सुमन

गुध्यति परिवेष्टयति गोधूम " कुषिगुधेस्स्म " ॥ ( उणा–३५३ ) ॥ गां धुनाति वा " किकिमिकि–" ॥ ( उणा–३४० ) इति किद् मस्तत्र ॥ १ ॥ सुष्ठु मन्यते सुमनः अच् ॥ २ ॥

सक्ले निष्पाव सितशिम्बिक ॥ २४० ॥

सक्लते सक्लस्तत्र ॥ १ ॥ निष्पूयते निष्पाव " निरभेः पूल्वः " ॥ ५ । ३ । २१ ॥ इति घञ् ॥ २ ॥ सिता शिम्बिरस्य सितशिम्बिकः ॥ ३ ॥ २४० ॥

कुलत्थस्तु कालवृन्त

कुले तिष्ठति कुलत्थः, पृषोदरादित्वात् ॥१॥ काल वृन्तमस्य कालवृन्तः ॥२॥

ताम्रवृन्ता कुलत्थिका ।

ताम्र वृन्तमस्यास्ताम्रवृन्ता ॥ १ ॥ कुलः कुलत्थ कुलत्थिका ॥ २ ॥

आढकी तुवरी वर्णा स्यात्

आ ढौकते आढकी "कीचक–" ॥ (उणा–३३) ॥ इत्यके निपात्यते ॥ १ ॥ तूयते तुवरी ॥ २ ॥ वर्ण्यते वर्णा ॥ ३ ॥

कुल्मासस्तु यावकः ॥ २४१ ॥

कोलति कुल्मासः अर्धस्विन्नो मापादिः "कल्यिकुलिभ्यां मासक्" ॥ (उणा–५८४) ॥ कुलेन मस्यति परिणमते वा पृषोदरादित्वात् । कुल्मापोऽपि ॥१॥ यौरयम्भसा यावकः 'धान्यविशेषः' इत्यन्ये ॥ २ ॥ २४१ ॥

नीवारस्तु वनव्रीहिः

नियतैर्व्रियते नीवारः, मुन्यन्नत्वात् " नेर्वुः " ॥ ५ । ३ । ७४ ॥ इति घञ् ॥ १ ॥ वनस्य व्रीहिर्वनव्रीहिः ॥ २ ॥

श्यामाक-श्यामकौ समौ ।

श्यायते श्यामाकः अधम्यो व्रीहिः "मवाकश्यामाक–" ॥ (उणा–३७) ॥ इत्याके निपात्यते ॥ १ ॥ "कीचक–" ॥ (उणा– ३३) ॥ इत्यके निपातनात् श्यामाकः ॥ २ ॥

कङ्गुस्तु कङ्गुनी कङ्गुः प्रियङ्गुः पीततण्डुला ॥ २४२ ॥

कायति कङ्गुः "प्रीकैभ्ये–" ॥ (उणा–७६१)॥ इति कङ्गुः ॥१॥ कङ्गति कङ्गुनी "विमनम–" ॥ (उणा– २६८) इति ने निपात्यते ॥ २ ॥ कुत्सितमगति कङ्गुः "फलिवल्यमे ॥ (उणा– ७५८) ॥ इति गुः ॥ ३ ॥ प्रीणाति प्रियङ्गुः ॥४॥ पीतास्तण्डुला अस्या पीततण्डुला । एते व्रीहिजाः ॥ ५ ॥ २४२ ॥

सा कृष्णा मधुका

सा कङ्गुः कृष्णवर्णा मन्यते कल्प्यते मधुका "कञ्चुक–" ॥ (उणा–५७)॥ इत्युके निपात्यते ॥ १ ॥

रक्ता शोधिका

रक्तवर्णा कङ्गुः, शोधयति शोधिका ॥ १ ॥

मुसटी सिता ।

सिता कङ्गुः, मुस्यते खण्ड्यते मुसटी "कपट–" ॥ (उणा– १४४) ॥ इत्यटे निपात्यते ॥ १ ॥

पीता माधवी

पीतवर्णा कङ्गुः मधुन इवेयं तद्वर्णत्वात् माधवी ॥ १ ॥

अथोद्दाल कोद्रव कोरदूषक ॥ २४३ ॥

उद्दाल्यते उद्दाल ॥ १ ॥ केन अम्भसा उनत्ति क्लिद्यते कोद्रव 'कैरव-" ॥ ( उणा- ५१९ ) ॥ इत्ययं निपात्यते, केन द्रवीति वा ॥२ ॥ कुरन्त्यमेन कोर दूषक " कोरदूष-" ॥ ( उणा-५६१ ) ॥ इत्यूपे निपात्यते, कोर भक्ष दूषम तीति वा ॥ ३ ॥ २४३ ॥

चीनकस्तु काककङ्गु

चीयते चीनः " दिननगन-" ॥ ( उणा-२६८ ) ॥ इति ने निपात्यते के चीनकः ॥ १ ॥ काकप्रिया कङ्गु काककङ्गु ॥ २ ॥

यवनालस्तु योनल ।

जूर्णाह्वयो देवधान्य जोनाला बीजपुष्पिका ॥ २४४ ॥

यवस्येव नालमस्य यवनाल ॥१॥ यूयते योनलः ' मुरल- ' ॥ ( उणा- ४७४ ) ॥ इत्यके निपात्यते ॥ २ ॥ 'जूरी वयोहानौ' जूर्यते जूर्णः "रीयस्चैदित ' ॥ ४ । ४ । ६१ ॥ इति क्तस्य नत्वम्, जूर्ण इत्याह्वयो यस्य जूर्णाह्वयः ॥३॥ देवप्रियं धान्यं देवधान्यम् ॥ ४॥ जनाद् नालमस्या जोनाला, पृषोदरादित्वात् ॥५॥ बीजाकार पुष्पमस्या बीजपुष्पिका ॥ ६ ॥ २४४ ॥

क्षण मञ्जा मातुलानी स्यात्

क्षणति क्षणम् ॥ १ ॥ मज्यते मञ्जा ॥ २ ॥ मान तोल्यते मातुलानी "मु मुचाम-" ॥ ( उणा २७८ ) ॥ इति निपात्यते, माया प्रियस्तुल्या मनितीति वा ॥ ३ ॥

उमा तु क्षुमाऽतसी ।

अम्यते उमा " अवेर्हस्वश्च-" ॥ ( उणा-१४२ ) ॥ इति किति मे साधुः ॥ १ ॥ क्षौत्यनया क्षुत्कृया क्षुमा "क्षुविभ्यां वा" ॥ ( उणा- १४१ ) ॥ इति किद् म ॥ २ ॥ अतत्यनयाऽतसी "तप्यभि-" ॥ ( उणा- ५६९ ) ॥ इति अस, न तस्यतीति वा ॥ ३ ॥

गवेधुका गवेधु स्यात्

गूयते गवेधुका तृणधान्यम "गुड दुघुक्-एधुकौ" ॥ ( उणा- ७४ ) ॥ गवी धुकाऽपि ॥ १ ॥ गवाऽम्भसा एधते गवेधु, बीजितं 'भमदृ- ' ॥ ( उणा- ७१६ ) ॥ इति बहुवचनादुः ॥ १ ॥

कर्षिकोऽरण्यजस्तिल ॥ २४५ ॥

जार्यते जरिल "स्थण्डिल–" ॥ ( उणा– ४८४ ) ॥ इतीले निपात्यते ॥ १ ॥ २४५ ॥

पण्ढतिले तिलपिञ्जस्तिलपेज. ।

पण्ढो निष्फलस्तिलस्तत्र ॥ १ ॥ तिलपिञ्ज तिलपेजः "निष्फले तिलात् पिञ्जपेजौ" ॥ ७ । १ । १५४ ॥ इति साधू ॥ २ ॥ ३ ॥

अथ सर्षप ।

कदम्बकस्तन्तुभ

सरति सर्षप "सर्तेः षप" ॥ ( उणा– ३१३ ) ॥ १ ॥ कुत्सितमम्बते कदम्बकः ॥ २ ॥ तोतुभ्यते तन्तुभ , पृषोदरादित्वात् ॥ ३ ॥

अथ सिद्धार्थ श्वेतसर्षप ॥ २४६ ॥

सिद्धप्रयोजनो रक्षोघ्नत्वात् सिद्धार्थः ॥ १ ॥ २४६ ॥

मापादय शमीधान्यं

*माष आदिर्येषां मुद्गादीनां ते मापादयः, शमी शम्बा तत् प्रधानं धान्यं* शमीधान्यम् ॥ १ ॥

शूकधान्य यवादय ।

शूकप्रधानं धान्य शूकधान्य यव आदिर्येषां गोधूमादीनां ते यवादय ॥१॥

स्यात् सस्यशूकं किंशारु

सवति शूक पुक्लीबलिङ्गः "शुशुदि–" ॥ ( उणा– २४ ) ॥ इति कः दीर्घत्व च सस्यस्य शूकं सस्यशूकम् ॥ १ ॥ कुत्सित शृणाति किंशारुः पुल्लिङ्गः "किंमा श्रो णित्" ॥ ( उणा– ७२५ ) ॥ इत्युः ॥ २ ॥

कणिशं सस्यशीर्षकम् ॥ २४७ ॥

कणति आर्तेन कणिश पुक्लीबलिङ्ग "कुलिकनि–" ॥ ( उणा– ५२५ ) ॥ इति किशः । कनिशमपि ॥ १ ॥ सस्यमय शीर्षमपि सस्यशीर्षकं सस्यमञ्जरी स्पर्धः ॥ २ ॥ २४७ ॥

स्तम्बस्तु गुच्छो धान्यादे

स्तभ्नाति स्तम्ब "गुम्बस्तम्ब–" ॥ (उणा–३२०) ॥ इति निपात्यते, धान्यादेर्यः स्तम्बः स नालम् ॥१॥ गुप्यतेऽनेन गुच्छ ॥ २ ॥ यं प्रति स्तम्बोऽप्रसिद्धस्त प्रत्यन्यथा विपर्ययो कार्यौ । एवं सर्वत्रोभेयम् ॥

नालः काण्डः

नलति नालमर्थाद् गुच्छस्य त्रिलिङ्गः, ज्वलादित्वात् णः ॥ १ ॥ कणति भज्यमानः काण्डः पुंक्लीबलिङ्गः ॥ २ ॥

अफलस्तु स ।

पलं पलालं

फलरहितः स काण्डः पलति पलं ॥ १ ॥ पल्यते पलालं "कृतृप–" ॥ ( उणा– ४७५ ) ॥ ह्रस्वान्तः ॥ २ ॥ पुंक्लीबलिङ्गावेतौ ॥

धान्यत्वक् तुषः

धान्यस्य त्वक्, तुष्यत्यनेनाग्निस्तुषः, इगुपधत्वात् कः ॥ १ ॥

तुसे कडङ्गरः ॥ २४८ ॥

बुस्यते उत्सृज्यते बुसं पुंक्लीबलिङ्गः, इगुपधत्वात् कः तत्र ॥ १ ॥ कडन्ति माद्यन्त्यनेन पशवः कडङ्गरः "कडेरेवर–" ॥ ( उणा– ४७५ ) ॥ ह्रस्वान्तः ॥ २ ॥ २४८ ॥

धान्यमावसितं रिद्धं

धान्यं व्रीह्यादि ॥ १ ॥ आ अवसितं निष्पन्नम् । 'रक्षार्थमाच्छादितमावसितम्' इत्यन्ये ॥ २ ॥ राध्यति स्म रिद्धं सिद्धमित्यर्थः । 'सुसम्पन्नम्' इत्येके । पृषोदरादित्वादित्वम् ॥ ३ ॥

तत्पूतं निर्बुसीकृतम् ।

तद् धान्यं निर्बुसीकृत्य पूयते स्म पूतम् ॥ १ ॥

मूलपत्रकरीराग्रफलकाण्डाधिरूढकाः ॥ २४९ ॥

त्वक् पुष्पं कवकं शाकं दशधा शिग्रुकं च तत् ।

मूलं मूलकबिसादेः, पत्रं निम्बादेः, करीरं वंशादेः अग्रं करीरादेः, फलं वार्ताक्यादेः, काण्डमेरण्डस्यादेः, विरूढाः क्षेत्रोद्भवस्य फलमूलादेः ये दामबोद्भिदा अङ्कुराः 'अधिरूढकं तालास्थिमज्जा' इति गौडाः ॥ २४९ ॥ त्वक् कदल्यादेः, पुष्पं करीरपुष्पादेः, कवकं छत्राकारभूकन्दविशेषः । एवमेतद् दशधाऽपि शाकपतेऽनेन भोक्तुं शाकम् ॥ १ ॥ शिनोति शिग्रु, के शिग्रुकम् ॥ २ ॥ पुंक्लीबलिङ्गावेतौ ॥

अथ शाकविशेषानाह–

तण्डुलीयस्तण्डुलेरो मेघनादोऽल्पमारिषः ॥ २५० ॥

तण्डुलेभ्यो हितस्तण्डुलीय "हविरन्नभेदापूपादेर्यो वा" ॥ ७।१।२९ ॥ इतीयः ॥ १ ॥ तण्डुलानीरयति प्रावकस्वात्तण्डुलेर ॥ २ ॥ मेघस्येव मादोऽस्माद् मेघनाद ॥ ३ ॥ अल्पं मृणाति हिनस्ति अल्पमारिषः "अभिमृभ्यां भिद्" ॥ ( उणा– ५४९ ) ॥ इतीयः ॥ ४ ॥ २५० ॥

बिम्बी रक्तफला पीलुपर्णी स्याजुण्डिकेरिका ।

बभाति बिम्बी "बीभीबम्भि–" ॥ ( उणा– ३२५ ) ॥ इति बिम्बः ॥ १ ॥ रक्त फलमस्या रक्तफला ॥ २ ॥ पिलोरिव पर्णान्यस्याः पीलुपर्णी ॥ ३ ॥ तुण्ड्यते तुण्डिकेरी "दातेरादय" ॥ (उणा–४२२) ॥ इति निपात्यते, के तुण्डिकेरिका ॥४॥

जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा ॥ २५१ ॥

जीवतात् जीवन्ती "रुहिनन्दि–" ॥ ( उणा– २२० ) ॥ इत्यन्त ॥ १ ॥ जीवत्यनया जीवनी, "करणा–" ॥ ५।३।१०६ ॥ इत्यप्रत्यये जीवा, "बहुलम्" ॥ ५।१।२ ॥ इति करणेऽन्यनीये जीवनीया ॥ २ ॥३॥ ४ ॥ मधु स्रवति मधुस्रवा ॥ ५ ॥ २५१ ॥

वास्तुकं तु क्षारपत्र

वसन्त्यस्मिन् गुणा वास्तुक "कम्बुर्काङ्क–" ॥ (उणा–५७) ॥ इति साधुः ॥ १ ॥ क्षीर पत्रमस्य क्षीरपत्रम् ॥ २ ॥

पालक्या मधुसूदनी ।

पालके साधुः पालक्या, पाल्यत इति वा "शिक्यास्याढ्य–" ॥ ( उणा– ३६४ ) ॥ इति ये निपात्यते ॥ १ ॥ मधु माधुर्यं सूदते मधुसूदनी ॥ २ ॥

रसोनो लशुनोऽरिष्टो म्लेच्छकन्दो महौषधम् ॥ २५२ ॥
महाकन्द

अम्लेन रसेनोनो रसोन , पञ्चरसत्वात्, यदाहुः– 'ऊनोऽम्लेन रसेनेति रसोनस्तेन कीर्तितः' ॥ १ ॥ लश्यतेऽभिलश्यते लशुन "लशेः श च"॥(उणा–२८९)॥ इत्युन ॥ २ ॥ पुंस्त्रीवलिङ्गावेतौ । न रिष्यतेऽरिष्टः ॥ ३ ॥ म्लेच्छानां प्रियः कन्दो म्लेच्छकन्द ॥ ४ ॥ महौषधम्, रोगघ्नत्वात् ॥ ५ ॥ २५२ ॥ महांश्चासौ कन्दश्च महाकन्दः ॥ ६ ॥

रसोनोऽन्यो गृञ्जनो दीर्घपत्रक ।

अन्यो द्वितीयो रसोन , गृञ्ज्यते कुत्सितः शब्द्यते गृञ्जनः पुंस्त्रीवलिङ्गः ॥ १ ॥ दीर्घपत्रमस्य दीर्घपत्रक ॥ २ ॥

भृङ्गराजो भृङ्गरजो मार्कव केशरञ्जन ॥ २५३ ॥

भृङ्गवद् राजते भृङ्गराज ॥ १ ॥ भृङ्गवद् रञ्जयति कृष्णीकरोति भृङ्गरज, अपि पृषोदरादित्वाद् नलोप ॥ २ ॥ मर्कति सम्पृच्यते मार्कव "कैरवभैरव-" ॥ (उणा- ५११) ॥ इति साधुः ॥ ३ ॥ केशान् रञ्जयति केशरञ्जनम् ॥ ४ ॥ २५३ ॥

काकमाची वायसी स्यात् ।

काकवद् मचते वर्णेन सम्पृच्यते काकमाची ॥१॥ वायसवर्णत्वाद् वायसी ॥२॥

कारवेल्ल कटिल्लक ।

कारेण वेल्लति कारवेल्ल ॥ १ ॥ कटत्वमाप्नोति कटिल्ल "भिल्लाच्छभल्ल-" ॥ (उणा- ४६४) ॥ इति के निपात्यते, कटि कालीति वा, पृषोदरादित्वाद् द्वित्वम् ॥ २ ॥

कूष्माण्डकस्तु कर्कारु

कुष्यते कूष्माण्ड 'पिचण्ड-' ॥ (उणा- १७६) ॥ इत्यण्डे निपात्यते, कोरूष्माऽण्डानीति वा, कुत्सितमूष्मा अण्डेषु बीजेष्वस्य वा, पिशाचादित्वात् ॥ १ ॥ कर्कि सौत्र कर्कति कर्कारु पुंलिङ्ग "कर्कराटु' ॥ (उणा-८१२) ॥ करोति तृप्तिं कर्क, इयर्ति मलोत्क्षेपशोधनपरत्वात्, कर्कमासादयतीति वा ॥२॥

कोशातकी पटोलिका ॥ २५४ ॥

कुश्यति कोशातकी "कोष्मातक-" ॥ (उणा- ८२) ॥ इति निपात्यते कोशाकाराणि फलान्यतति वा ॥ १ ॥ पटति पटोली "कटिपटि-" ॥ (उणा- ४९३) ॥ इत्योलः ॥ २ ॥ २५४ ॥

चिर्भिटी कर्कटी वालुङ्क्युर्वारुस्त्रपुसी च सा ।

चिरिः सौत्रः सात्रौ, चिरमोति चिर्भिटी 'चिरेरिटो मुच-" ॥ (उणा- १४९) ॥ इति साधु ॥ १ ॥ ककति कर्कटी "तिम्यमि-' ॥ (उणा- १४९) ॥ इत्यटः कृतः कक इति वा मात्यादिवत् ॥ २ ॥ वलति वालुङ्की "कम्बुक-' ॥ (उणा- ५७) ॥ इति निपात्यते ॥ ३ ॥ ऊर्णोति छिन्नत्वात्तिमिर्वारुः पुंस्त्रीलिङ्ग 'उर्वेरावेऽस्त्रोतौ च" ॥ (उणा- ८१४) ॥ इत्यारुः ॥ ४ ॥ त्रपत इव त्रपुसी 'त्रपेस्सः" ॥ (उणा- ५७८) ॥ ५ ॥

अर्शोघ्न सूरण कन्द

अर्शांसि हन्ति अर्शोघ्नः ॥ १ ॥ सूर्यते प्रेर्यते वा सूरणः "विश्रण-" ॥ (उणा- १९०) ॥ इत्यणे निपात्यते ॥ २ ॥ कन्द्यते कन्दः पुंस्त्रीलिङ्गः मूलविशेषः ॥ ३ ॥

तण्डुलेभ्यो हिततण्डुलीयः "हविरन्नभेदापूपादेर्यो वा" ॥ ७।१।२९ ॥ इतीय ॥ १ ॥ तण्डुलामीरयति प्रावकत्वात्तण्डुलेरः ॥ २ ॥ मेघस्येव नादोऽस्याद् मेघनाद ॥ ३ ॥ अल्पं मृणाति हिनस्ति अल्पमारिषः "आमिमृभ्यां षिष्" ॥ ( उणा- ५४९ ) ॥ इतीष ॥ ४ ॥ २५० ॥

बिम्बी रक्तफला पीलुपर्णी स्यात्तुण्डिकेरिका ।

वभाति बिम्बी "बीभीवधि-" ॥ ( उणा- ३२५ ) ॥ इति बिम्बः ॥ १ ॥ रक्तं फलमस्या रक्तफला ॥ २ ॥ पिलोरिव पर्णान्यस्याः पीलुपर्णी ॥ ३ ॥ तुण्ड्यते तुण्डिकेरी "घसेरादय " ॥ (उणा-४१२) ॥ इति निपात्यते, के तुण्डिकेरिका ॥४॥

जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा ॥ २५१ ॥

जीवतात् जीवन्ती "रुहिनन्दि-" ॥ ( उणा- २२० ) ॥ इत्यन्त ॥ १ ॥ जीवत्यनया जीवनी, "करणे-" ॥ ५।३।१०६ ॥ इत्यप्रत्यये जीवा, "बहुलम्" ॥ ५।१।२ ॥ इति करणेऽप्यनीये जीवनीया ॥ २ ॥३॥ ४ ॥ मधु स्रवति मधुस्रवा ॥ ५ ॥ २५१ ॥

वास्तुकं तु क्षारपत्रं

वसन्त्यस्मिन् गुणा वास्तुकं "कञ्चुकांशुक-" ॥ (उणा-५७) ॥ इति साधुः ॥ १ ॥ क्षीरं पत्रमस्य क्षीरपत्रम् ॥ २ ॥

पालङ्क्या मधुसूदनी ।

पालङ्के साधु पालङ्क्या, पाल्यत इति वा "पिञ्छ्यास्याक्य-" ॥ ( उणा-३६४ ) ॥ इति ये निपात्यते ॥ १ ॥ मधु माधुर्यं सूदते मधुसूदनी ॥ २ ॥

रसोनो लशुनोऽरिष्टो म्लेच्छकन्दो महौषधम् ॥ २५२ ॥

महाकन्द

अम्लेन रसेनोनो रसोन , पञ्चरसत्वात्, यदाहुः- 'ऊनोऽम्लेन रसेनेति रसो नसेन कीर्तितः' ॥ १ ॥ लश्यतेऽभिलष्यते लशुन "लशेः श च"॥(उणा-२८९)॥ इत्युनः ॥ २ ॥ पुंस्त्वलीबलिङ्गावेतौ । न रिष्यतेऽरिष्टः ॥ ३ ॥ म्लेच्छानां प्रियः कन्दो म्लेच्छकन्दः ॥ ४ ॥ महौषधम्, रोगजित्त्वात् ॥ ५ ॥ २५२ ॥ महांश्चासौ कन्दश्च महाकन्द ॥ ६ ॥

रसोनोऽन्यो गृञ्जनो दीर्घपत्रकः ।

अन्यो द्वितीयो रसोनः, गृञ्ज्यते कुत्सितः शब्द्यते गृञ्जनः पुंक्लीबलिङ्गः ॥ १ ॥ दीर्घपत्रमस्य दीर्घपत्रक ॥ २ ॥

भृङ्गराजो भृङ्गरजो मार्कव केशरञ्जन ॥ २५३ ॥

भृङ्गवद् राजते भृङ्गराजः ॥ १ ॥ भृङ्गवद् रञ्जयति कृष्णीकरोति भृङ्गरज, अपि पृषोदरादित्वात् नलोपः ॥ २ ॥ मकति सपृष्यते मार्कवः "केवभैरव–" ॥ (उणा– ५११) ॥ इति साधुः ॥ ३ ॥ केशान् रञ्जयति केशरञ्जनम् ॥ ४ ॥ २५३ ॥

काकमाची वायसी स्यात् ।

काकवद् मचते गर्वेण सपृष्यते काकमाची ॥१॥ वायसवर्णत्वाद् वायसी ॥२॥

कारवेल्ल कटिल्लक ।

करेण वेल्लति कारवेल्ल ॥ १ ॥ कटत्वावृणोति कटिल्ल "भिल्लाच्छभल्ल–" ॥ (उणा– ४६४) ॥ इति के निपात्यते, कटि भातीति वा, पृषोदरादित्वात् ल्लित्वम् ॥ २ ॥

कूष्माण्डकस्तु कर्कारु

कुष्यते कूष्माण्ड "पिचण्ड–" ॥ (उणा– १७६) ॥ इत्यण्डे निपात्यते, कोष्ठमाण्डमितीति वा, कुत्सितमुष्मा अण्डेषु बीजेष्वस्य वा, पित्तकारित्वात् ॥ १ ॥ कर्किः सौत्र, कर्कति ककारु पुंसि "कर्कारादयः" ॥ (उणा–८१३) ॥ करोति तृप्तिं कर्क, इयर्ति अत्यर्थसौरभत्वात्, कर्कशाकारत्वेति वा ॥२॥

कोशातकी पटोलिका ॥ २५४ ॥

कुश्यति कोशातकी "श्लेष्मातक–' ॥ (उणा– ८३) ॥ इति निपात्यते कोशाकाराणि फलान्यतति वा ॥ १ ॥ पटति पटोली "कटिपटि–" ॥ (उणा– ४९३) ॥ इत्योलः ॥ २ ॥ २५४ ॥

चिर्भिटी कर्कटी वालुक्यैर्वारुस्त्रपुषी च सा ।

चिरि सौत्र स्मार्तौ, चिरभोति चिर्भिटी "चिरेरिटो भ् च–" ॥ (उणा– १४९) ॥ इति साधुः ॥ १ ॥ कर्कति कर्कटी ' शिम्बादि–" ॥ (उणा– १४२) ॥ इत्यटः, कृत्त कर्क इति वा भामर्दीवत् ॥ २ ॥ वलति वालुकी "कम्बुक–" ॥ (उणा– ५७) ॥ इति निपात्यते ॥ ३ ॥ ऊर्वति हिमस्पर्शितत्वात् पुंस्त्रीलिङ्ग "उर्वेरारुक्स्वेतौ च" ॥ (उणा– ८१४) ॥ इत्यारुः ॥ ४ ॥ त्रपत इव त्रपुषी "त्रपेस्सः" ॥ (उणा– ५७८) ॥ ५ ॥

अर्शोघ्न सूरण कन्द

अर्शांसि हन्ति अर्शोघ्नः ॥ १ ॥ सुर्यते प्रेर्यते वा सूरणः "चिक्कण–" ॥ (उणा– १९०) ॥ इत्यणे निपात्यते ॥ २ ॥ कन्द्यते कन्दः पुंस्त्रीलिङ्गः मूलविशेषः ॥ ३ ॥

शृङ्गवेरकमार्द्रकम् ॥ २५५ ॥

शृणोति रसानां शृङ्गवेरं "शतेरादयः" ॥ (उणा– ४३२) ॥ इति निपात्यते, शृङ्गोपलक्षितं वेरं देहोऽस्येति वा ॥ १ ॥ आर्द्रमेव आर्द्रकं पुङ्क्लीबलिङ्ग ॥ २ ॥ २५५ ॥

कर्कोटक किलासघ्नस्तिक्तपत्र सुगन्धक

करोति किलासहिंसां कर्कोटः "कपोटवकोट–" ॥ (उणा– १६१) ॥ इत्योटे निपात्यते, के कर्कोटक ॥ १ ॥ किलासं हन्ति किलासघ्नः ॥ २ ॥ तिक्तं पत्रमस्य तिक्तपत्र ॥ ३ ॥ सुष्ठु गन्धयते सुगन्धक ॥ ४ ॥

मूलकं तु हरिपर्णं सेकिमं हस्तिदन्तकम् ॥ २५६ ॥

मूलमेव मूलकं पुङ्क्लीबलिङ्ग ॥ १ ॥ हरि नील पर्णमस्य हरिपर्णम् ॥ २ ॥ सेकेन निर्वृत्तं सेकिमं "भावादिमः" ॥ ६ । ४ । २१ ॥ इतीमः ॥ ३ ॥ हस्तिदन्त प्रतिकृति हस्तिदन्तकम् ॥ ४ ॥ २५६ ॥

तृण नडादि नीवारादि च

तृणं तृणजातीयमित्यर्थ ॥ १ ॥ नडादि नडप्रकार नीवारादि नीवारप्रकार इत्यर्थः ॥ २ ॥

शाष्पं तु तद् नवम् ।

तत् तृणं नवोद्भिन्नं बालमिति यावत्, शप्यते शष्पं पुंक्लीबलिङ्गः "शादिबाभि–" ॥ (उणा– २९९) ॥ इति प, पवान्तस्य ॥ १ ॥

सौगन्धिकं देवजग्धं पौरं कत्तृणरौहिषे ॥ २५७ ॥

सुगन्धः प्रयोजनमस्य सौगन्धिकम् ॥१॥ देवैर्जग्धमिवान्तः छुषिरत्वाद् देवजग्धम् ॥ २ ॥ पुरे भवं पौरम् ॥ ३ ॥ कुत्सितं तृणं कत्तृणं "तृणे जातौ" ॥ ३।२।१३२ ॥ इति को कदादेशः ॥ ४ ॥ रोहति यत्र तत्र रौहिषं, पुङ्क्लीबलिङ्ग "रुहे-र्वृद्धिश्च" ॥ (उणा– ५४८) ॥ इतीषः ॥ ५ ॥ २५७ ॥

दर्भ कुश कुथो बर्हिः पवित्रं

दृणाति पारुष्याद् दर्भः "गृदृरमि–" ॥ (उणा– ३२७) ॥ इति भः, दृश्यते ऽसाविति वा ॥ १ ॥ कौ शेते कुशः पुंक्लीबलिङ्गः "क्वचित्" ॥ ५ । १ । १७१ ॥ इति डः ॥ २ ॥ कुथ्नाति कुथः ॥३॥ बृहति बर्हिः, पुंक्लीबलिङ्ग, "बर्हिमृहेर्नलुक् च" ॥ (उणा ९९०) ॥ इतीस् ॥ ४ ॥ पूयतेऽनेन पवित्रं "ऋषिनाम्नोः करणे" ॥ ५।२।८६ ॥ इतीत्रः ॥ ५ ॥

अथ तेजन ।

गुन्द्रो मुञ्ज शर

तेजयति निशातयति वा तेजनम् ॥ १ ॥ गुणैर्दोषा द्रान्त्यस्मिन् गुन्द्र, पृषोदरादित्वात् ॥ २ ॥ मुञ्जति वायुना मुञ्जः ॥ ३ ॥ शृणाति पारुष्यात् शरः ॥ ४ ॥

दूर्वा त्वनन्ता शतपर्विका ॥ २५८ ॥

हरिताली रुहा

दूर्व्यते पशुभि, दूरे वाति वा, पृषोदरादित्वात् ॥१॥ अनन्ता, दूरप्रसरणात् ॥ २ ॥ शतं बहूनि पर्वाण्यस्या शतपर्विका ॥ ३ ॥ २५८ ॥ हरितां नीलत्वं गच्छति हरिताली ॥ ४ ॥ रोहति रुहा ॥ ५ ॥

पोटगलस्तु धमनो नड ।

पोटेन संश्लेषेण गच्छति पोटगलः ॥१॥ 'धमि शौच' धमत्यन्तःशुषिरत्वात् धमन ॥ २ ॥ नडत्यवयवानिति डलयोरैक्ये नडः पुंल्लीबलिङ्गः ॥ ३ ॥

कुरुविन्दो मेघनामा मुस्ता

कुरून् देशान् विन्दति कुरुविन्दः ॥ १ ॥ मेघस्य नामाऽस्य मेघनामा मेघपर्यायः, अम्बुधरत्वात् ॥ २ ॥ मुस्यति खण्डयति मुस्ता त्रिलिङ्ग "सीरी-" ॥ ( उणा-२०१ ) ॥ इति किते, मुस्तकोऽपि ॥ ३ ॥

गुन्द्रा तु सोत्तमा ॥ २५९ ॥

सा मुस्ता उत्तमा गोदन्तोऽन्यमा गुन्द्रा "खरक्षुर-" ( उणा- ३९६ ) ॥ इति रे निपात्यते, गुणैर्दोषा द्राम्यन्त्यस्यामिति वा ॥ १ ॥ २५९ ॥

वस्वजा उलप

वसन्ति वल्वजाः पुंसि बहुवचनान्त "वसेर्णित्वाच्च वा" ॥ ( उणा-१३३)॥ इत्यज ॥ १ ॥ वल्यते उलप "विष्टपोलप-" ॥ ( उणा- ३०७ ) ॥ इत्यपे निपात्यते ॥ २ ॥

अथेक्षु स्याद् रसालोऽसिपत्रक ।

इष्यते इक्षु पुंलिङ्ग "भस्जीष्यासिभ्यः क्सुः" ॥ ( उणा- ८२६ ) ॥ ॥ १ ॥ रसमलमत्याकाति वा रसालः ॥ २ ॥ असयाकाराणि पत्राण्यस्य असिपत्रकः ॥ ३ ॥

भेदा कान्तार-पुण्ड्राद्यास्तस्य

तस्य इक्षोर्भेदा आतप एकादश, काम्यते कान्तारः, कान्तमृषमियर्तीति वा, कान्ता आरा भागा अस्येति वा ॥ १ ॥ पुणति पुण्ड्यते वा पुण्ड्रः "सुरक्षुर–" ॥ (उणा– ३९६) ॥ इति रे निपात्यते । आदिशब्दात् कोपकारादयः, यद्वाचस्पतिः–

"पुण्ड्रेक्षौ पुण्ड्रक सेव्य पौण्ड्रकोऽतिरसो मधु ।
श्वेतकाण्डो भीरुकस्तु हरितो मधुरो महान् ॥ १ ॥
शून्येश्वरस्तु कान्तारः कोपकारस्तु वशकः ।
शतपोरस्त्वीषत्क्षार' पीतच्छायोऽथ तापस ॥ २ ॥
सितनीलोऽथ नेपालो वंशप्रायो महारस ।
अन्वयस्तु दीर्घपत्रो दीर्घपत्रा कषायवान् ॥ ३ ॥
काष्ठेक्षुस्तु ह्रस्वकाण्डो घनग्रन्थिर्वनोद्भव ।
नीलपोरस्तु सुरसो नीलपीतलराजिमान् ॥ ४ ॥
अनूपसम्भवः प्राय' खर्नेटी त्विक्षुवालिका ।
करङ्कशालिः शाकेक्षु सूचिपत्रो गुडेक्षवः ॥ ५ ॥" इति ॥ २ ॥

## मूल तु मोरटम् ॥ २६० ॥

इक्षोर्मूल मुरति संवेष्टयति मोरट "कपठ–" ॥ ( उणा– १४४ ) ॥ इत्यटे निपात्यते ॥ १ ॥ २६० ॥

## काशस्त्विषीका

काशते काश पुंक्लीबलिङ्गः ॥१॥ इष्यते इषीका "ऋज्यृजि–" ॥ ( उणा– ४८ ) ॥ इति किद्वीकः ॥ २ ॥

## घासस्तु यवस

अद्यते पशुभिर्घास ॥ १ ॥ यूयते यवस "वहियुभ्यां वा" ॥ ( उणा– ५७१ ) ॥ इत्यस , क्लीबलिङ्गोऽयम् । वाचस्पतिस्तु– अघाऽक्षी यवसो घासः' इति पुंस्यप्याह ॥ २ ॥

## तृणमर्ज्जुनम् ।

तरत्यम्भसि तृण पुनपुंसकलिङ्गः, तृण्यतेऽद्यते पशुभिरिति वा ॥ १ ॥ अर्ज्यतेऽर्जुनम् । 'सर्वं च तृणमर्जुनम्' इति भागुरिः ॥ २ ॥

## विष क्ष्वेडो रसस्तीक्ष्ण गरल

वेवेष्टि विषः पुनपुंसकलिङ्गः, स च द्वेधा, स्थावर जङ्गमभेदात्, यदाह–

"कन्दज कालकूटादि पुष्पज दासवादिकम् ।
जङ्गमदंष्ट्रासारादि दन्तादिज तु जङ्गमम् ॥ १ ॥" इति ॥ १ ॥

तस्य इक्षोर्भेदा जातय एकादश, काम्यते कान्तारः, कान्तामूपमियर्तीति वा, कान्ता आरा मार्गा अस्येति वा ॥ १ ॥ पुणति पुण्ड्यते वा पुण्ड्रः "शुरक्षुर–" ॥ (उणा– ३९६) ॥ इति रे निपात्यते । आदिशब्दात् कोपकारादयः, यद्वाचस्पतिः–

"पुण्ड्रेक्षुः पुण्ड्रकः सेव्यः पौण्ड्रकोऽतिरसो मधुः ।
श्वेतकाण्डो भीरुकस्तु हरितो मधुरो महान् ॥ १ ॥
शून्येभरस्तु कान्तारः कोपकारस्तु वंशकः ।
शतपोरस्त्वीषत्क्षारः पीतच्छायोऽथ तापसः ॥ २ ॥
सितनीलोऽथ नेपालो वंशप्रायो महाबलः ।
अन्वर्थस्तु दीर्घपत्रो दीर्घपर्वा कषायवान् ॥ ३ ॥
काष्ठेक्षुस्तु ह्रस्वकाण्डो घनग्रन्थिबमोद्भवः ।
नीलपोरस्तु सुरसो नीलपीतलराजिवान् ॥ ४ ॥
अनूपसमयः प्रायः सर्मेटी स्थिरबालिका ।
करङ्कशालिः शाकेक्षुः सूचिपत्रो गुडेक्षवः ॥ ५ ॥" इति ॥ २ ॥

मूलं तु मोरटम् ॥ २६० ॥

इक्षोर्मूलं मुरति संवेष्टयति मोरटं "कपट–" ॥ ( उणा– १४४ ) ॥ इत्यटे निपात्यते ॥ १ ॥ २६० ॥

काशस्त्विषीका

काशते काशः पुंक्लीबलिङ्गः ॥१॥ इष्यते इषीका "ऋच्यृजि–" ॥ ( उणा– ४८ ) ॥ इति किदीकः ॥ २ ॥

घासस्तु यवसं

अद्यते पशुभिर्घासः ॥ १ ॥ यूयते यवसं "वहियुभ्यां वा" ॥ ( उणा– ५७१ ) ॥ इत्यसः, क्लीबलिङ्गोऽयम् । वाचस्पतिस्तु–'अथाऽस्त्री यवसो घासः' इति पुंस्यप्याह ॥ २ ॥

तृणमर्ज्जुनम् ।

तरत्यम्भसि तृणं पुंनपुंसकलिङ्गः, तृण्यतेऽद्यते पशुभिरिति वा ॥ १ ॥ अर्ज्यतेऽर्ज्जुनम् । 'सर्वं च तृणमर्ज्जुनम्' इति माधुरिः ॥ २ ॥

विषं क्ष्वेडो रसस्तीक्ष्णं गरलं

वेवेष्टि विषः पुंक्लीबलिङ्गः, स च द्वेधा, स्थावर-जंगमभेदात्; यदाह–

"कन्दजं कालकूटादि पुष्पजं हालहादिकम् ।
फणमहोमसारादि दष्ट्रादिजं तु जंगमम् ॥ १ ॥" इति ॥ १ ॥

'ष्विदाद् सौत्र' क्ष्वेडते मोहयति क्ष्वेडः ॥ २ ॥ रसयति रस' पुंक्लीब लिङ्गः ॥ ३ ॥ तेजयति तीक्ष्णम् ॥ ४ ॥ गीर्यते रागिभिर्गरलः 'मुरल्यरल-" ॥ (उणा-४७४) ॥ इति साधु, गरं लातीति वा, पुंक्लीबलिङ्गः ॥ ५ ॥

अथ हलाहल ॥ २६१ ॥
वत्सनाभ कालकूटो ब्रह्मपुत्र प्रदीपन ।
सौराष्ट्रिक शौल्किकेय काकोलो दारदोऽपि च ॥२६२॥
अहिच्छत्रो मेषशृङ्ग कुष्ठ-वालूक-नन्दना ।
कैराटको हैमवतो मर्कट करवीरक ॥ २६३ ॥
सर्षपो मूलको गौरार्द्रक सक्तुक कर्दमौ ।
अङ्कोल्लसार कालिङ्ग शृङ्गिको मधुसिक्थक ॥ २६४ ॥
इन्द्रो लाङ्गलिको विस्फुलिङ्ग पिङ्गल-गौतमा ।
मुस्तको दालवश्चेति स्थावरा विषजातय ॥ २६५ ॥

हलति विलिखति जठर न हलति वेति हलाहल', यथा-'कस सखो हलाहलः' हालेव हलतीति हस्वे हालाहल, यथा-

"किंगम भवत्यशतकल्पमहो कलत्र
हालाहल विषमिवामगुण तदत्र ।"

हालहलोऽपि यथा-'काममपाति ममेन्द्रियकुण्डैर्येषपि दुष्टहालहलौघ' । एते पुंक्लीबलिङ्गाः ॥ १ ॥ २६१ ॥ वत्सस्येव नाभिरस्य वत्सनाभः ॥ २ ॥ कालस्य वर्णस्य कूटोऽत्र कालकूटः, पुंक्लीबलिङ्गः, कालसम्बन्धी कूटो व्याजो वा ॥ ३ ॥ ब्रह्मणः पुत्रो ब्रह्मपुत्रः, यद् याज्ञवल्क्य -' त्वं विष ! ब्रह्मणः पुत्रः सत्ये धर्मे व्यवस्थितः ॥ ४ ॥ प्रदीपयति प्रदीपनः ॥ ५ ॥ सुराष्ट्रदेशे भव' सौराष्ट्रिकः, अध्यात्मादित्वाट्ठक् ॥ ६ ॥ शुल्किकादेशे भव शौल्किकेय नद्यादित्वा ढेयण् ॥ ७ ॥ इषत् कोलति सस्त्यायति काकोलः पुंक्लीबलिङ्गः, काकोल' काकवत्कृष्णवर्णो वा ॥ ८ ॥ दरदि सिन्धुदेशे भवो दारद' ॥ ९ ॥ २६२ ॥ अहिच्छत्रदेशे भवत्वादहिच्छत्र ॥ १० ॥ मेषशृङ्गाकारत्वात् मेषशृङ्ग यद्वा वसयति - मेषशृङ्ग स्वविषशृङ्गाकृतिः ॥ ११ ॥ कुष्णाति कुष्ठ', कुष्ठसदृशत्वात् वा यदाह-

'कुष्ठं च कुष्ठसदृशमभगा' च प्रमिमयम् ॥" ॥ १२ ॥

वालुकाभो वालूकः ॥ १३ ॥ नन्दयति नन्दन ॥ १४ ॥ किराटके म्लेच्छदेशे भव कैराटकः ॥ १५ ॥ हिमवति भवो हैमवतः ॥ १६ ॥ मर्कटाभो मर्कट' ॥ १७ ॥ करवीरमूलभवत्वात् करवीरः, यदाह- 'करवीर स्वभवास्मूलमं सततो भयम्' ॥ १८ ॥

॥ २६३ ॥ सर्षपवत् पीतवर्णं सर्षप ॥ १९ ॥ मूलकामो मूलकः ॥ २० ॥ गौरश्चार्द्रकन्दाश्च गौरार्द्रकः ॥ २१ ॥ सक्तुप्रतिकृतिः सक्तुक, सक्तुवच्चूर्णी भवनस्वात् ॥ २२ ॥ कर्दमसमप्रभत्वात् कर्दम ॥ २३ ॥ अङ्गोलफलाभोऽङ्गोलसार, पृषोदरादित्वात् ॥ २४ ॥ कलिङ्गदेशे भवः कालिङ्ग, अप्रस्तमाकृतित्वात् ॥ २५ ॥ श्यामत्वमस्य श्यैमिक, यदाह– 'श्यैमिक तु कृष्णवर्णमञ्जनस्तमसमाकृतिः' ॥ २६ ॥ मधुसिक्थ मधूच्छिष्ट तत्सदृशत्वात् मधुसिक्थकः ॥ २७ ॥ २६४ ॥ इन्दति इन्द्रः, इन्द्रशैलभवत्वाद्वा ॥ २८ ॥ लाङ्गली प्रयोजनमस्य लाङ्गलिकः, यदाह– 'लाङ्गलिक तुपविषं लाङ्गलीमूलमेव सत्' ॥ २९ ॥ विस्फुरा स्फुलिङ्गा अस्य विस्फुलिङ्ग ॥ ३० ॥ बहिरन्तश्च पिङ्गलत्वात् पिङ्गलः ॥ ३१ ॥ गोतमस्याय गौतम ॥ ३२ ॥ मुस्तकाभो मुस्तकः ॥ ३३ ॥ दलति दालवः "कैरव–" ॥ ( उणा– ५१९ ) ॥ इत्यवे निपात्यते ॥ ३४ ॥ एते सर्वेऽपि स्थावरवनस्पति भवत्वात् स्थावरा विषस्य आतयो भेदा इति ॥ १ ॥ 'एते सर्वेऽपि पुंक्लीबलिङ्गाः' इति वाचस्पति ॥ २६५ ॥

कुरण्टाद्या अग्रबीजा

अग्रभागो बीजमुत्पत्तिकारणमेषां अग्रबीजाः, आदिशब्दात्पारिभद्राद्याः ॥१॥

मूलजास्तूत्पलादय ।

मूलात् कन्दाज्जायन्ते मूलजा, आदिशब्दात् सूरणाद्या ॥ २ ॥

पर्वयोनय इक्ष्वाद्या

पर्व योनिरेषां पर्वयोनयः, आदिग्रहणात् तृणवंशाद्याः ॥ ३ ॥

स्कन्धजा सल्लकीमुखा ॥ २६६ ॥

स्कन्धाज्जायन्ते स्कन्धजाः, मुखग्रहणाद् वटाद्या ॥ ४ ॥ २६६ ॥

शाल्यादयो बीजरुहाः

बीजात् तस्मात् रोहन्ति बीजरुहाः, आदिग्रहणात् षष्टिकमुद्गादय ॥ ५ ॥

संमूर्च्छजास्तृणादय ।

संमूर्च्छनाज्जायन्ते संमूर्छजाः, आदिग्रहणाद् भूच्छत्राद्याः ॥ ६ ॥

उपसंहारमाह—

स्युर्वनस्पतिकायस्य षडेता मूलजातय ॥ २६७ ॥

स्पष्टम् ॥ २६७ ॥

॥ समाप्तोऽयं वनस्पतिकायः ॥

पिप्पला वृक्षस्यादीनां तु नामशेषोऽस्मत्पूपप्रामिषष्टोरवसेयः ॥

पृथिव्यादीनेकेन्द्रियानभिधाय द्वीन्द्रियानाह—

नीलङ्गु कृमिरन्तर्जे

शरीरस्यान्तर्भवः कृमिः नीलति नीलङ्गुः, पुंलिङ्गः "प्रीकैरे" ॥ ( उणा–७६१ ) ॥ इत्यङ्गुः ॥ २१ ॥

क्षुद्रकीटो बहिर्भवे ।

बहिर्भवः क्षुद्रो ह्रस्वः कृमिः, कीट्यति कीटः, पुंस्त्रीलिङ्गः ॥ १ ॥

पुल्कास्तूभयेऽपि स्युः

उभयेऽन्तर्भवा बहिर्भवाश्च कृमयः पोलन्ति पुल्काः ॥ १ ॥

कीकसा कृमयोऽणव ॥ २६८ ॥

अणवः सूक्ष्माः कृमयः कुत्सितं कसन्ति कीकसाः, पृषोदरादित्वात् ॥१॥२६८॥

काष्ठकीटो घुण

काष्ठोद्भवः कीटः काष्ठकीटः ॥ १ ॥ घुणति घुणः ॥ २ ॥

गण्डूपद किञ्चुलक कुसू ।

भूलता

गण्डा ग्रन्थयः पदान्यस्य गण्डूपदः ॥ १ ॥ किञ्चित् चुलम्पति किञ्चुलकः "कीचक–" ॥ ( उणा–३३ ) ॥ इति अक निपात्यते । किञ्चुलुकोऽपि ॥ २ ॥ कोर्भूमेः सूते कुसूः, कु मृदं सूते वा, मयूरव्यंसकादित्वात् ॥ ३ ॥ भुवो लतेव भूलता ॥ ४ ॥

गण्डूपदी तु शिली

गण्डूः पदान्यस्या गण्डूपदी ॥ १ ॥ शिलति शिली शिल्याहुरित्यर्थः ॥ २ ॥

अलसा जलौकस ॥ २६९ ॥

जलालोका जलूका च जलौका जलसर्पिणी ।

अलसः पिच्छलस्वरूपा 'किचला' इत्येके ॥ १ ॥ जलमोकः आश्रयो यासां जलौकसः स्त्रियां बाहुल्यवचनान्तोऽयम् ॥ २ ॥ २६९ ॥ जले आलोक्यते जलालोका जले आलोकोऽस्या इति वा ॥ ३ ॥ जलति जलूका "मृमन्यादिभ्यः" ॥ (उणा–५८) ॥ इत्यूकः ॥ ४ ॥ ओकशब्दोऽकारान्तोऽप्यस्ति, जले ओकोऽस्या जलौका ॥ ५ ॥ जले सर्पति जलसर्पिणी ॥ ६ ॥

मुक्तास्फोटोऽब्धिमण्डूकी शुक्ति

मुक्ता स्फुटन्त्यत्र मुक्तास्फोटः ॥ १ ॥ अब्धेर्मण्डूकीवाब्धिमण्डूकी ॥२॥ शोचति शुक्तिः स्त्रीलिङ्गः "वृशुषि" ॥ ( उणा–६५१ ) ॥ इति कित् ति ॥३॥

कम्बुस्तु वारिज ॥ २७० ॥

त्रिरेख षोडशावर्त शङ्ख

काम्यते कम्बुः पुंक्लीबलिङ्ग "कम्यमिभ्यां–" ॥ ( उणा–७५९ ) ॥ इति बु ॥ १ ॥ वारिणो जातो वारिज ॥ २ ॥ २७० ॥ तिस्रो रेखा अस्य त्रिरेख ॥ ३ ॥ षोडश आवर्ता अस्य षोडशावर्त ॥ ४ ॥ शाम्यति शङ्ख पुंक्लीबलिङ्गः "शमिमनिभ्याम्–" ॥ ( उणा–८४ ) ॥ इति ख, श सुख खनति, श्रेयो जनयतीति वा "क्वचित्" ॥५।१।१७१॥ इति ड ॥ ५ ॥

अथ क्षुद्रकम्बव ।

शङ्खनका क्षुल्लकाश्च

क्षुद्रा कम्बवः क्षुद्रकम्बव सूक्ष्मा नद्यादिजा कृमय ॥ १ ॥ श खनन्ति शङ्खनका ॥ २ ॥ क्षुधन्ते क्षुल्लका "कीचक–" ॥ ( उणा– ३३ ) ॥ इत्यके निपात्यते ॥ ३ ॥

शम्बूकास्त्वम्बुमात्रजा ॥२७१ ॥

शाम्यन्ति शम्बूका "शम्बूक–" ॥ ( उणा– ६९ ) ॥ इत्यूके निपात्यते । शम्बुकोऽपि ॥ १ ॥ अम्बुमात्रे जायन्तेऽम्बुमात्रजा ॥ २ ॥ २७१ ॥

कपर्दस्तु हिरण्य स्यात् पणास्थिक वराटकौ ।

के पर्दते कपर्दः ॥ १ ॥ ह्रियते हिरण्यः पुंक्लीबलिङ्ग ॥ २ ॥ पणाय व्यवहारायास्थ्यस्य पणास्थिक ॥ ३ ॥ वरमटति वराटः, व्रियते वा "अनिशृ–" ॥ ( उणा– १४५ ) ॥ इत्याट. के वराटक ॥ ४ ॥

शेषश्चात्र– स्यात् श्वेत कपर्दक ॥

दुर्नामा तु दीर्घकोशा

दुष्टं नामो नमनमस्या दुर्नामा 'दु सज्ञा' इत्यके ॥ १ ॥ दीर्घः कोशोऽस्या अल्हकाकारत्वाद् दीर्घकोशा, दीर्घा कुश्यतीति वा ॥ २ ॥

॥ उक्ता द्वीन्द्रियाः ॥

त्रीन्द्रियानाह—

पिपीलकस्तु पीलक ॥ २७२ ॥

अपिपीलति पिपीलक., पृषोदरादित्वादपेः पि ॥ १ ॥ पीलति पीलकः ॥ २ ॥ २७२ ॥

पिपीलिका तु हीनाङ्गी

पीलति पिपीलिका "कुशिक-" ॥ ( उणा– ४५ ) ॥ इतीके निपात्यते ॥ १ ॥ हीनमङ्गमस्या हीनाङ्गी ॥ २ ॥

ब्राह्मणी स्थूलशीर्षिका ।

बृहति ब्राह्मणी "बिहण-" ॥ ( उणा– १५० ) ॥ इत्यणे निपात्यते । १ ॥ स्थूल शायमस्या स्थूलशीर्षिका ॥ २ ॥

घृतेली पिङ्गकपिशा

घृतेन ईर्यते प्रेर्यते घृतेली ॥ १ ॥ पिङ्ग ईषेर तद्वत् कपिशा पिङ्गकपिशा ॥ २ ॥

अथोपजिह्वोपदेहिका ॥ २७३ ॥

वम्न्युपदीका

उपलेढि उपजिह्वा उप समीपे जहातीति वा "प्रज्ञाद्या-" ॥ ( उणा– ११४ ) ॥ इति वे निपात्यते ॥ १ ॥ उपदिह्यते भुवनया उपदेहिका ॥ २ ॥ । २७३ ॥ वमति मृद वम्री "भीमृधि-" ॥ ( उणा– ३८७ ) ॥ इति रे ॥ ३ ॥ उप समीपे ददाति उपदीका "सृणीक-" ॥ ( उणा– ५० ) ॥ इतीके निपात्यते ॥ ४ ॥

रिक्षा तु लिक्षा

रेषति रिक्षा "ऋजिरिषि-" ॥ ( उणा– ५६७ ) ॥ इति किद् सः ॥ १ ॥ लस्ये लिक्षा ॥ २ ॥

यूका तु षट्पदी ।

यौति यूका "युपुहि-" ॥ ( उणा– २४ ) ॥ इति को दीर्घत्व च ॥ १ ॥ षट् पादा अस्याः षट्पदी "सुसङ्ख्यात्" ॥ ७ । ३ । १५० ॥ इति पादान्ते "वा भादः" ॥ २ । ४ । ६ ॥ इति ङी ॥ २ ॥

गोपालिका महाभीरु

गां पलति गच्छति गोपालिका ॥ १ ॥ अतिशयेन भीरुर्महाभीरुः ॥ २ ॥

गोमयोत्था तु गर्दभी ॥ २७४ ॥

गोमयादुत्तिष्ठति गोमयोत्था ॥ १ ॥ गर्दभवर्णत्वात् गर्दभी ॥२॥२७४॥

मत्कुणस्तु कोलकुण उद्दंश' किटिमो-त्कुणौ ।

मायति शोणितेन मत्कुणः "भ्रूणतृण–" ॥ ( उणा– १८६ ) ॥ इति मे निपात्यते ॥ १ ॥ कोल इव कुणति विदारयति कोलकुण ॥ २ ॥ उद्दंशस्तुद्य ॥ ३ ॥ केटति किटिभः, बाहुलकात् किटिम, किटिं त्रास बिभर्ति वा 'कचित्' ॥ ५।१।१७१ ॥ इति कः ॥ ४ ॥ उत्कुणति उत्कुण ॥ ५ ॥

इन्द्रगोपस्त्वग्निरजो वैराटस्तितिभोऽग्निक ॥ २७५ ॥

इन्द्रेण गुप्यते इन्द्रगोपः ॥ १ ॥ अग्निवद् रज्यति अग्निरजः, पृषोदरादित्वात् ॥ २ ॥ वैरेण अटति वैराट ॥ ३ ॥ तित्ताथव भाति तितिभः "क्ष्धापो बहुलम्–" ॥ २।४।९९ ॥ इति ह्रस्व ॥ ४ ॥ अग्नेस्तुल्योऽग्निक ॥ ५ ॥ २७५ ॥

॥ उक्तास्त्रीन्द्रियाः ॥

चतुरिन्द्रियानाह—

ऊर्णनाभस्तन्त्रवायो जालिको जालकारक ।
कृमिर्मर्कटको लूता लालास्रावोऽष्टपाच्च स ॥ २७६ ॥

ऊर्णा नाभावस्य ऊर्णनाभः ॥ १ ॥ तन्त्र तन्तुम् वयति तन्त्रवाय ॥ २ ॥ जालमस्त्यस्य जालिक ॥ ३ ॥ जाल करोति जालकारकः ॥४॥ करोति जाल कृमि "कृभूभ्यां कित्" ॥ ( उणा– ६९० ) ॥ इति मिः । क्रिमिरपि ॥ ५ ॥ मर्कट इव आरोहावरोहणाद् मर्कटकः ॥ ६ ॥ लुनते लूता "लूञो वा" ॥ ( उणा–२०२ ) ॥ इति कित् त ॥ ७ ॥ लालां स्रवति लालास्रावः ॥ ८ ॥ अष्ट पादा अस्य अष्टपाद् ॥ ९ ॥ २७६ ॥

कर्णजलौका तु कर्णकीटा शतपदी च सा ।

कर्णस्य जलौकेव कर्णजलौका ॥ १ ॥ कर्णे कीटयति कर्णकीटा ॥ २ ॥ शत पादा अस्या शतपदी ॥ ३ ॥

वृश्चिको द्रुण आल्यालि

वृश्चति वृश्चिकः पुंल्लिङ्गः 'पापुलि–" ॥ ( उणा– ४१ ) ॥ इति किदिकः ॥ १ ॥ द्रुणति द्रुण । द्रूणोऽपि ॥ २ ॥ आत्मनर्थोऽत्रास्ति आली ॥ ३ ॥ अलत्यालिः "कृशृकुटि–" ॥ ( उणा– ६१९ ) ॥ इति णिदिः ॥ ४ ॥

अल तत् पुच्छकण्टक ॥ २७७ ॥

अलत्यलम्, तस्य वृश्चिकस्य पुच्छकण्टकस्तत्पुच्छकण्टकः ॥ १ ॥ २७७ ॥

भ्रमरो मधुकृद् भृङ्गश्चञ्चरीक शिलीमुख ।
इन्दिन्दिरोऽली रोलम्बो द्विरेफ

भ्राम्यति पुष्पेषु भ्रमरः "भ्रमिचमि-" ॥ ( उणा- ३९७ ) ॥ इत्यर , भ्रमन् रौति वा, पृषोदरादित्वात् ॥ १ ॥ मधु करोति मधुकृत्, मधुकरोऽपि ॥२॥ बिभर्ति भृङ्गः "भृमृम्भ्यां नाऽन्तश्च" ॥ ( उणा- ९४ ) ॥ इति किद् ग ॥ ३ ॥ चञ्चति चञ्चूर्यते वा चञ्चरीकः "सृणीक-" ॥(उणा-५०)॥ इतीके निपात्यते ॥४॥ शिलीव मास्य मुखेऽस्य शिलीमुखः, शिला मुखमस्य वा ॥ ५ ॥ इन्दति कुसुमे इन्दिन्दिरः "स्थविर-" ॥ ( उणा-४१७) ॥ इतीरे निपात्यते ॥६॥ अलत्यलि "कुमृकुटि-" ॥ ( उणा- ६११ ) ॥ इति णिदिः । अली नकारान्तो वा ॥ ७ ॥ रम् रम्यते रोलम्ब , पृषोदरादित्वात् ॥८॥ द्वौ रेफौ नाम्न्यस्य द्विरेफ ॥९॥ एते स्त्रीपुंसलिङ्गाः । भसलो रेफस्थाने, भसलोऽपि दृश्यते ॥

अस्य षडङ्घ्रय ॥ २७८ ॥

अस्य भ्रमरस्य षट् अङ्घ्रयश्चरणा तेन षडङ्घ्रिः षट्पदः षट्चरण इत्यादि सिद्धम् ॥ १ ॥ २७८ ॥

भोज्य तु पुष्प-मधुनी

अस्य भ्रमरस्य भोज्यं पुष्पं मधु च, तेन पुष्पलिट्, पुष्पन्धय , मधुलिट्, मधुप , मधुव्रत इत्यादि सिद्धम् ॥ १ ॥ १ ॥

खद्योतो ज्योतिरिङ्गण ।

खे द्योतते खद्योत ॥ १ ॥ ज्योतिर्भिरिङ्गति ज्योतिरिङ्गण "चिक्कण-" ॥ ( उणा- १९० ) ॥ इत्यणे निपात्यत ॥ २ ॥

शेषश्चात्र—

खद्योते तु कीटमणिर्ज्योतिर्मालो तमोमणिः ।
परागुरा निमेषद्युद् ध्वान्तचित्रः ॥

पतङ्ग शलभ

पतो गच्छति पतङ्गः "नाम्नो गम -" ॥५।१।१३१॥ इति खड् वा, पततीति वा "पतितमि-" ॥ ( उणा- ९८ ) ॥ इत्यङ्ग ॥ १ ॥ शलति शलभः "कृशृकु-" ॥ ( उणा- ३२९ ) ॥ इत्यभः ॥ २ ॥

क्षुद्रा सरघा मधुमक्षिका ॥ २७९ ॥

क्षुधस्त्राः क्षुद्रा ॥ १ ॥ सरति सरघा "सर्तेरघः" ॥ ( उणा- १११ ) ॥ सरति घातयति वा पृषोदरादित्वात् ॥ २ ॥ मधुनो मक्षिका मधुमक्षिका ॥ ३ ॥ ॥ २७९ ॥

माक्षिकादि तु मधु स्यात्

माक्षिकमपि कृत माक्षिक "नाम्नि मक्षिकादिभ्य" ॥६।३।१९३॥ इत्यण्, आदिग्रहणात् पौत्तिकादि; यद्वाचस्पति —

"पौत्तिक-भ्रामर-क्षौद्र-दाल्लौ-ध्दालक-माक्षिकम् ।
अर्घ्यं छात्रकमित्यष्टौ जातयोऽस्य पृथग्गुणाः ॥ १ ॥
तत्र पौत्तिकमुत्तमघृताभ विषकीटजम् ।
भ्रामर तु भ्रमरज पाण्डुर गुरुशीतलम् ॥ २ ॥
क्षौद्र तु कपिल दाहि क्षुद्रानीत मलावहम् ।
दाल तु वल्कज सेव्य दुर्लभ रूक्षवातलम् ॥ ३ ॥
उद्दालक तु श्वाभाक विषजित् मधुराम्लकम् ।
माक्षिक तु मधु ज्येष्ठ विरूक्ष तैलवर्णकम् ॥ ४ ॥
अर्घ्य तु पूज्यमापाण्डु मनाक् तिक्त सवातकम् ।
छात्र त्वेकान्तमधुर सर्वार्घ्यं राजसेवितम् ॥ ५ ॥" इति ॥

मन्यतेऽभिलष्यते मधु क्लीबलिङ्गः, पुस्यपि वैजयन्ती, यदाह– 'मधुस्तु मधुनाऽसौ मधुक तत्पुरातनम्' इति ॥ १ ॥

मधूच्छिष्ट तु सिक्थकम् ।

मधुनोच्छिष्ट कल्को मधूच्छिष्ट मदनाख्यम् ॥ १ ॥ सिच्यते सिक्थं "मी नूरमि–" ॥ (उणा– २२७) ॥ इति कित् थ ॥ २ ॥

चर्वणा मक्षिका नीला

नीलवर्णा मक्षिका चर्वति चर्वणा, नन्द्यादित्वादन , वृणोतीति वा "चिक्लृप कुरुम–" ॥ (उणा– १९०) ॥ इति साधुः ॥ १ ॥

पुत्तिका तु पतङ्गिका ॥ २८० ॥

पुत कुत्सित तमोति पुत्तिका "कुषिक–" ॥ (उणा– ४७) ॥ इतीके निपात्यते, पुतेर्वा सौत्रस्य "कृतिपुतिलति–" ॥ (उणा– ७६) ॥ इति कित् तिक ॥ १ ॥ पतङ्गप्रतिकृतिः पतङ्गिका, अपत गच्छतीति वा, पृषोदरादित्वात् ॥ २ ॥ २८० ॥

वनमक्षिका तु दंश

मक्षति मक्षिका वनस्य मक्षिका वनमक्षिका ॥ १ ॥ दशति दंश ॥ २ ॥

दंशी तज्जातिरल्पिका

तज्जातिर्दंशजातीयाऽल्पिका दशति दंशी ॥ १ ॥

वैलाटी वरटा गन्धोली स्यात्

तैरमरति तैरसारी ॥ १ ॥ शृणोति बरटा पुत्रीभिन्नः "दिव्यवि-" ॥(उणा-१४२ ) ॥ इसटः ॥ २ ॥ पन्धयति अदयत म पासी "पिच्छास-" ॥ ( उणा-४९५ ) ॥ इस्रोहे निपात्यते ॥ ३ ॥

चीरी ॥ चीरुका ॥ २८१ ॥

झिल्लीका झिल्लिका वर्षकरी भृङ्गारिका च सा ।

चिनाति स्वरं चीरी "रत्नाजि-" ॥ ( उणा- १९२ ) ॥ इति रो दीर्घत्वं च, चीति रिणातीति वा "पचादित्" ॥ ५।१।१७१ ॥ इति रू ॥ १ ॥ चीति रौति चीरुका "निरूकुरुक-" ॥ ( उणा- २६ ) ॥ इति क निपात्यत ॥ २ ॥ ॥ २८१ ॥ झिल्ली वाद्यभेद, तद्वत् कायति शब्दायते झिल्लीका, बाहुलकाद् ह्रस्वत्वे झिल्लिका ॥ ३ ॥ ४ ॥ वर्षं वृष्टिं करोति सूचयति वर्षकरी ॥५॥ भाहस्या भृङ्गारिमिर्याति भृङ्गारी ॥ ६ ॥

॥ उक्ताश्चतुरिन्द्रियाः ॥

पञ्चेन्द्रियान् स्थलचर-खचर-जलचरभेदभिन्नान् क्रमेणाह—

पशुस्तिर्यङ् चरि

स्पशि सौत्रस्ताक्रम्यान्त, स्पशति बाधते पशुः "स्पशिभ्रस्जेः स्लुक् च" ॥ ( उणा- ७३१ ) ॥ इत्युः ॥ १ ॥ तिरोऽञ्चति तिर्यङ् " तिरसस्तिर्यति ' ॥३॥ २।११४ ॥ इति रिः ॥ २ ॥ चरति चरि कृमृकुटि-" ॥ ( उणा- ६१९ ) ॥ इति इः ॥ ३ ॥ एते पुंल्लिङ्गाः ॥

हिंस्रेऽस्मिन् व्याल श्वापदोऽपि च ॥ २८२ ॥

अस्मिन् पशौ व्याघ्रादिके हिंस्रे हिंसनशीले विशेषण आ समन्तादवति व्याडः, डस्ले व्यालः, विविधमाक्रमणीयोऽस्माद्वा ॥ १ ॥ शुनः पदमिव पदमस्य श्वापद "शुन ' ॥३।२।९०॥ इति दीर्घत्वम् ॥२॥२८२॥

हस्ती मतङ्गज-गज-द्वीप-कर्य-ऽनेकपा

मातङ्ग-वारण-महामृग-सामयोनय ।

स्तेम्बरम द्विरद सिन्धुर-नाग-दन्तिनो

दन्तावल करटि-कुञ्जर-कुम्भि-पीलव ॥ २८३ ॥

इभ करेणुर्गज

हस्त शुण्डाऽस्त्यस्य हस्ती "हस्तदन्तकराज्जातौ ॥ ७ ।२। ६८ ॥ इतीन् ॥ १ ॥ मतङ्गाद् ऋषेर्जातो मतङ्गजः ॥ २ ॥ गजति माद्यति गर्जति वा गजः ॥ ३ ॥ द्वाभ्यां पिबति द्विपः "स्थापास्नात्रः " ॥५।१।१४२॥ इति कः ॥ ४ ॥

करोऽस्त्यस्य करी ॥ ५ ॥ न एकेन पिबति अनेकप ॥ ६ ॥ मन्मते मातङ्गः "मनेमत्-मातौ च" ॥ (उणा– १००) ॥ इत्यङ्ग, मतङ्गस्यापत्यमिति वा, मातङ्गीति वा, मतङ्ग एव वा स्वार्थेऽण् ॥ ७ ॥ वारणस्यरिन् वारण ॥ ८ ॥ महांश्चासौ मृगश्च महामृग ॥ ९ ॥ साम वेदो योनिः कारणमस्य सामयोनिः ॥ १० ॥ स्तम्बे तृणे रमते स्तम्बेरम "शोकापनुद–" ॥ ५ । १ । १४३ ॥ इति के साधु ॥ ११ ॥ द्वौ रदावस्य द्विरदः ॥ १२ ॥ स्यन्दते मदेन सिन्धुर "मन्दुर– ॥ (उणा– ४२६) ॥ इत्युरे निपात्यते, सिन्धुमदोऽस्यास्तीति वा मध्वादित्वाद् र ॥ १३ ॥ नगे भवो नाग, न न गच्छति वा ॥ १४ ॥ दन्तावस्य स्तो दन्ती, कृष्यादित्वात् वलचि दन्तावलः "वलच्यपित्रादे" ॥ ३ । २ । ८२ ॥ इति दीर्घ ॥ १५ ॥ १६ ॥ करटः कपोलोऽस्त्यस्य करटी ॥ १७ ॥ कुञ्जति कुञ्जर पुंक्लीबलिङ्ग "जठर–" ॥ (उणा–४०३) इत्यरे निपात्यते, कुञ्जौ हनू दन्तौ वा अस्य स्त इति वा मध्वादित्वाद् रः, कौ जीर्यतीति वा, पृषोदरादित्वात् ॥ १८ ॥ कुम्भावस्य स्त कुम्भी ॥ १९ ॥ पीयते पीलु "पीङ कित्" ॥ (उणा– ८२१) ॥ इति लुः ॥ २० ॥ ॥ २८३ ॥ एति इभः "इणः कित्" ॥ (उणा– ३२८) ॥ इति भः ॥ २१ ॥ करोति प्रमोद करेणुः, ग्रीष्मयोऽपि पुंस्त्रीलिङ्गः "कृहृभू–" ॥ (उणा– ७७२) ॥ इत्येणु, करेणु सिन्धुरजोऽस्य वा ॥ २२ ॥ गजति गज ॥ २३ ॥

शेषश्चात्र–

अथ कुञ्जरे ।

वेदण्डी पुष्करी पद्मी पेचिलः सूचिकाधर ।
विलोमजिह्वाऽन्त स्वेदो महाकायो महामदः ॥
सूपकर्णो जलाकाङ्क्षो षष्टी च पष्टिहायन ।
असुरो दीर्घपवनः कुण्डाल कपिरित्यपि ॥

अस्य स्त्री धेनुका वशाऽपि च ।

अस्य हस्तिनः स्त्री हस्तिनीत्यर्थः, धयन्त्येनां धेनुः, के धेनुका ॥१॥ वष्टि कामयते वशा ॥ २ ॥

शेषश्चात्र–

वशायां वासिता करभारिणी कणिकाऽपि च ॥

भद्रो मन्दो मृगो मिश्रश्चतस्रो गजजातय ॥२८४॥

भद्र सर्वलक्षणकल्याणत्वात् ॥ १ ॥ मन्दो मन्दसत्त्वात् ॥ २ ॥ मृगो मृग इव हीनसत्त्वत्वात् ॥ ३ ॥ मिश्र सङ्कीर्णजातिः ॥ ४ ॥ २८४ ॥

कालेऽप्यजातदन्तश्च स्वल्पाङ्गश्चापि मत्कुणौ ।

मायन् कुणति मत्कुण, द्वयोरेकशेषे मत्कुणौ ॥ १ ॥

पञ्चवर्षो गजो बालः

बलति बाल ॥ १ ॥

स्यात् पोतो दशवर्षक ॥ २८५ ॥

पूयते पुनाति वा पोत ॥ १ ॥ २८५ ॥

विक्को विंशतिवर्ष स्यात्

विक्केऽव्ययवान् विक्कः "विचिपुचि" ॥ (उणा– १२) ॥ इति किद् कः, पिक्कोऽपि ॥ १ ॥

कलभस्त्रिंशदब्दक ।

कल्यते कलभः पुंक्लीबलिङ्ग "कृगृशृ–" ॥ (उणा– ३११) ॥ इत्यभः, कलो भाति, क लभते वा ॥ १ ॥

यूथनाथो यूथपति

स्पष्टम् ॥ १ ॥

मत्ते प्रभिन्न-गर्जितौ ॥ २८६ ॥

माद्यति स्म मत्तस्तत्र ॥ १ ॥ प्रभिद्यते स्म गण्डयास्यां प्रभिन्नः ॥ २ ॥ गर्जा सञ्जाताऽस्य गर्जितः ॥ ३ ॥ २८६ ॥

मदोत्कटो मदकल

मदेन दानाम्बुना उत्क्रिमकल्यो मदोत्कटः ॥ १ ॥ मदेन कलो मनोज्ञो मदकलः ॥ २ ॥

समावुद्भ्रान्त-निर्मदौ

उद्भ्रमति स्म उद्भ्रान्तः ॥ १ ॥ निर्गतो मदोऽस्य निर्मद ॥ २ ॥

सज्जित कल्पित

युद्धाय सज्ज्यते प्रगुणीक्रियते स्म सज्जितः ॥ १ ॥ कल्प्यते स्म कल्पितः ॥ २ ॥

तिर्यग्घाती परिणतो गजः ॥२८७ ॥

तिर्यग्घातीति तिर्यग् दत्तप्रहार, परितो नमति स्म परिणत ॥ १ ॥ ॥ २८७ ॥

व्यालो दुष्टगजः

विविधमालमनयोऽस्माद् व्यालः ॥ १ ॥

गम्भीरवेध्यवमताङ्कुशः ।

गाम्भीर्येण वेदयति गम्भीरवेदी, यदाहुः—

"त्वग्भेदात् शोणितस्रावान्मांस व्यथनादपि ।

सज्ञां न लभते यस्तु गजो गम्भीरवेधसौ ॥ १ ॥" ॥ १ ॥

अवमतमवगणितमङ्कुशमनेन अवमताङ्कुशः ॥ २ ॥

राजवाह्यस्तूपवाह्य

राज्ञा वाह्यते आरोहणयोग्यत्वात् राजवाह्य ॥ १ ॥ उप समीपे वाह्यते उपवाह्यः । औपवाह्य इत्यन्ये ॥ २ ॥

सन्नाह्यः समरोचित ॥ २८८ ॥

सन्नह्यते सनाह्यः, सन्नाहे साधुरिति वा ॥ १ ॥ समरोचितः संग्रामयोग्यः ॥ २ ॥ २८८ ॥

उदग्रदन्नीषादन्त

उदग्रौ दीर्घौ दन्तावस्य उदग्रदन् "वामान्त–" ॥ ७ । ३ । १५४ ॥ इति दन्तस्य दतुः ॥ १ ॥ ईषाकारौ दन्तावस्य ईषादन्तः ॥ २ ॥

बहूनां घटना घटा ।

बहूनां गजानां घटना रचना घट्यते घटा "षितोऽङ्" ॥ ५ ।३। १०७ ॥१॥

मदो दान प्रवृत्तिश्च

माद्यत्यस्माद् मदः "व्यधजप–" ॥ ५।३।४७ ॥ इत्यल् , मदयतीति वा ॥ १ ॥ द्यति खण्डयत्यनेन दानम् ॥ २ ॥ प्रवर्ततेऽनया प्रवृत्तिः ॥ ३ ॥

वमथु करशीकर ॥ २८९ ॥

वम्यते वमथु पुंसि, "ट्वितोऽथु" ॥ ५।३।८३ ॥ इत्यथुः ॥ १ ॥ करस्य शीकरोऽम्बुकणः करशीकर ॥ २ ॥ २८९ ॥

हस्तिनासा कर शुण्डा हस्त

हस्तिनो नासा हस्तिनासा ॥ १ ॥ करोति, किरत्यनेन वा करः ॥ २ ॥ शुनत्यनया शुण्डा "कुगुशु–" ॥ ( उणा– १७० ) ॥ इति कित् डः ॥ ३ ॥ हस्त , हस्तक्रियाकारित्वात् ॥ ४ ॥

अग्रं स्वस्य पुष्करम् ।

अस्य करस्याग्रभागः पुष्पसमेन पुष्करम्, पुष्करसदृश वा ॥ १ ॥

अङ्गुलि कर्णिका

गजस्याङ्गुलिः, किरत्यनया कर्णिका "कृषिक–" ॥ (उणा–४५) ॥ इतीके निपात्यते, कर्णिकेव वा कर्णिका ॥ १ ॥

दन्तौ विषाणौ

हस्तिनो दन्तौ, वेवेष्टि आभ्यां विषाणौ स्त्रियाः "कृपिविषि–" ॥ (उणा–१११) ॥ इत्याणच् ॥ १ ॥

स्कन्ध आसनम् ॥ २९० ॥

हस्तिनः स्कन्धः, आस्यतेऽस्मिन्नासनम् ॥ १ ॥ २९० ॥

कर्णमूले चूलिका स्यात्

गजस्य कर्णमूले चोपाठे पार्श्वगमनेऽङ्कुशेनास्यां चूलिका, भिदादिनिपाद नारद्, ततः स्वार्थे कः ॥ १ ॥

ईपिका त्वक्षिकूटकम् ।

ईषा लाङ्गलकोटिकेव ईषिका ॥ १ ॥

अपाङ्गदेशो निर्याणं

निर्यान्त्यश्रु अनेन निर्याणम् ॥ १ ॥

गण्डस्तु करटः कट ॥ २९१ ॥

करोति मद करटः "शिम्यषि–" ॥ (उणा–१४२) ॥ इत्यटः ॥ १ ॥ कटति वर्षति मद कटः ॥ २ ॥ २९१ ॥

अवग्रहो ललाटं स्यात्

अवगृह्यतेऽङ्कुशेनावग्रहः ॥ १ ॥ २ ॥

आसनं कुम्भयोरध ।

आरभ्यते आरकः ॥ १ ॥

कुम्भौ तु शिरस पिण्डौ

कुम्भाकृती मांसपिण्डौ कुम्भौ ॥ १ ॥

कुम्भयोरन्तर विदु ॥ २९२ ॥

वेत्ति संज्ञामस्मादङ्कुशस्थानाद् विदुः, यत् पालकाप्य:—

"सञ्चारक्षावितामे द्वे विद् द्वौ श्रवणे गतौ ।
प्राक् पश्चाच्च तिर्यक् च षड्भेदाङ्कुशवारणा ॥ १ ॥"
"पृका-" ॥ (उणा- ७२९) ॥ इति किदु, पुंसिङ्गोऽयम् ॥ १ ॥ २९२ ॥

वातकुम्भस्तु तस्याधः

तस्य विदोरधो भाग वातपूर्णः कुम्भ इव वातकुम्भ ॥ १ ॥

वाहित्थं तु ततोऽप्यधः ।

ततोऽपि वातकुम्भादधो भागः, वाह्यतेऽनेनाङ्कुशमोदनया वाहित्थ "पञ्च यूथ-" ॥ (उणा- २११) ॥ इति निपात्यते, मदवाहिनि स्थाने तिष्ठतीति वा पृषोदरादित्वात्, वाह्यस्यापभ्रंशोऽयं वा ॥ १ ॥

वाहित्थाध प्रतिमानं

वाहित्थस्याधोभागो दन्तमध्यमित्यर्थः प्रतिमीयते प्रतिक्षिप्यतेऽनेन प्रतिमान "मिगृमीगोऽस्खलचलि" ॥ ४ । २ । ८ ॥ इत्यात्वम् ॥ १ ॥

पुच्छमूल तु पेचक ॥ २९३ ॥

पुच्छस्य मूल पुच्छमूलम्, पुच्यते वातेन पेचकः "कीचक-" ॥ (उणा- ३३) ॥ इत्यके निपात्यते ॥ १ ॥ ॥ २९३ ॥

दन्तभाग पुरोभाग

दन्तयोर्भागो दन्तभाग गजस्याग्रभाग ॥ १ ॥

पक्षभागस्तु पार्श्वक ।

॥ पक्षयोर्भागः पक्षभागः, गजस्य पार्श्वप्रदेशः ॥ १ ॥

पूर्वस्तु जङ्घादिदेशो गात्रं स्यात्

हस्तिन पूर्वः पादजङ्घादिभाग, गच्छत्यनेन गात्रं क्लीबलिङ्गः ॥ १ ॥

पश्चिमोऽपरा ॥ २९४ ॥

गजस्य पश्चाद्भागः, अपरभागभवत्वादपरा स्त्रीक्लीबलिङ्गः, अपादित्वाद् वत्वेऽवराऽपि ॥ १ ॥ २९४ ॥

बिन्दुजाल पुन पद्मं

बिन्दूनां जाल बिन्दुजालम्; तारुण्ये हि हस्तिनो देहे रक्ता बिन्दवः स्युरिति, पद्ममिव पद्मं रक्तत्वात् ॥ १ ॥

शृङ्खलो निगडोऽन्दुक ।

हिञ्जीरश्च पादपाशः

शृणोति बन्धेन शृङ्खलः त्रिलिङ्गः "श्रो नोन्तो ह्रस्वश्च" ॥ (उणा–४९८) ॥ इति खलः ॥ १ ॥ निगल्यते बध्यतेऽनेनेति निगडः । निगलोऽपि ॥ २ ॥ अन्दति बध्नात्यन्दूः "कृषिचमि–" ॥ (उणा– ८२९) ॥ इत्यूः, स्वार्थे केऽन्दुकः 'ङ्यापो बहुलं नाम्नि' ॥ २।४।१०४ ॥ इति ह्रस्वः ॥ ३ ॥ हिनस्ति हिञ्जीरः 'गम्भीर–'॥ (उणा– ४२२) ॥ इतीरे निपात्यते । निगडादयः पुंक्लीबलिङ्गाः ॥ ४ ॥ हस्तिनः पादस्य पाशो बन्धनं पादपाशः ॥ ५ ॥

वारिस्तु गजबन्धनम्

वार्यतेऽनया वारिः स्त्रीलिङ्गः "स्वरेभ्य इः" ॥ (उणा– ६०६) ॥ गजानां बन्धनाय महागर्त्तो गजबन्धनम् ॥ १ ॥ २९५ ॥

त्रिपदी गात्रयोर्बन्ध एकस्मिन्नपरेऽपि च ।

त्रयः पादा अस्यां त्रिपदी गात्रयोरिति द्वयोरग्रजङ्घयोः, एकस्मिन्नपरे इति पश्चिमजङ्घायां च गजस्य बन्धनमित्यर्थः ॥ १ ॥

तोत्रं वेणुकं

तुद्यतेऽनेन तोत्रं "नीदाम्–" ॥ ५।२।८८ ॥ इति त्रट् ॥ १ ॥ वेणुमयं वेणुकम् ॥ २ ॥

आलानं बन्धस्तम्भः

आलीयते बध्यतेऽस्मिन्नालानम्, गजस्य बन्धनाय स्तम्भो बन्धस्तम्भः ॥ १ ॥

अङ्कुशः सृणिः ॥ २९६ ॥

अङ्क्यते दम्यतेऽनेन अङ्कुशः पुंक्लीबलिङ्गः "मव्यविभ्याम्–" ॥ (उणा– ५३८) ॥ इत्युशः ॥ १ ॥ सरत्यनया सृणिः पुंस्त्रीलिङ्गः 'वृतृवदि–' ॥ (उणा– ६३५) ॥ इति कित् णिः ॥ २ ॥ २९६ ॥

अपष्ठं त्वङ्कुशस्याग्रम्

अपष्ठे तिष्ठत्यपष्ठं "गोऽम्बाऽम्ब–" ॥ २।३।३० ॥ इति षत्वम् ॥ १ ॥

यातमङ्कुशवारणम् ।

यात्यनेन यातं यततेऽनेन गन्तुमिति वा अङ्कुशेन वारणम् ॥ १ ॥

निषादिनां पादकर्म यतं

पादयोः कर्म पादसञ्ज्ञा यमनं यतम् ॥ १ ॥

वीतं तु तदृद्वयम् ॥ २९७ ॥

तद् द्वयं यात यत च, अजन्ति प्रेरयन्ति अस्मिन् वीतम्, विशिष्टमितं गम नमत्र वा ॥ १ ॥ २९७ ॥

कक्ष्या दूष्या वरत्रा स्यात्

कक्षायां मध्यप्रदेशे भवा कक्ष्या ॥ १ ॥ दूष्यते दूष्यतेऽनया दूष्या, बाहुलकात् करणेऽपि घ्यण् ॥२॥ व्रियतेऽनया वरत्रा मध्यबन्धनी चर्मरज्जु ॥३॥

कण्ठबन्धः कलापकः ।

कण्ठो बध्यतेऽनेन कण्ठबन्धः ॥१॥ कल्प्यते कलापः, के कलापकः, कलामा प्नोतीति वा ॥ २ ॥

घोटकस्तुरगस्तार्क्ष्यस्तुरङ्गोऽश्वस्तुरङ्गमः ॥ २९८ ॥
गन्धर्वोऽर्वा सप्तिर्वीती वाहो वाजी हयो हरिः ।

घोट्यते भूमौ परिवर्तते घोटकः ॥ १ ॥ तुरस्त्वरमाणो गच्छति तुरगः, तुरङ्गः, तुरङ्गमः "नाम्नो गमः खड्डौ–" ॥ ५ । १ । १३१ ॥ इति साधवः ॥२॥ ॥ ३ ॥ ४ ॥ तृक्षस्यापत्यं तार्क्ष्यः ॥ ५ ॥ अश्नुतेऽध्वानमश्वः 'अशिलटि–" ॥ ( उणा– ५०५ ) ॥ इति वः ॥ ६ ॥ २९९ ॥ गन्ध्यतेऽर्थ्यन्ते गन्धर्वः "गन्धे-रर्थान्तः" ॥ ( उणा– ५०८ ) इति वः ॥ ७ ॥ इयर्ति अर्वा "स्नामदिपद्य–" ॥ ( उणा– ९०४) ॥ इति वन् ॥ ८ ॥ सपति समवैति सप्तिः "प्लुक्षायजि–" ॥ ( उणा– ६४६ ) ॥ इति ति ॥ ९ ॥ वेति गच्छति वीतिः "इमुयि–" ॥ ( उणा– ६५१ ) ॥ इति बहुवचनात् कित् तिः, विशिष्टा इतिरस्येति वा ॥ १० ॥ वाह्यते वाहः ॥ ११ ॥ वाजस्तवस्य वाजी, वाजो वेगोऽस्त्यस्य वा ॥१२॥ हयति हिनोति वा हयः ॥ १३ ॥ हरति देशान्तरं प्रापयति हरिः ॥१४॥ एते पुंलिङ्गाः ॥

शेषश्चात्र—

अश्वे तु क्रमणः कुण्डी प्रोथी हेपी प्रकीर्णकः ।
पालकः पद्मलः किण्वी क्रुटरः सिंहविक्रमः ॥
मायावी केसरी हंसो मुद्गभुग् प्रहसोजनः ।
वासुदेवः शालिहोत्रो लक्ष्मीपुत्रो मरुद्रथः ।
श्यामकर्णकशाफोऽपि स्यात् ।

वडवाऽश्वा प्रसूर्वामी

'वड आग्रहणे' सौत्रः, वडति गर्भं वडवा "वडियटि–" ॥ ( उणा–

५१५ ) ॥ इत्यचः, बडं वक हय वा वातीति वा, अश्वोऽस्या वेति नैरुक्ता ॥ १ ॥ अश्वतेऽस्या 'अमादेः" ॥ २ । ४ । १६ ॥ इत्याप् ॥ २ ॥ प्रसूते प्रसू श्रीकिप् ॥ ३ ॥ वमति गर्भं वामी, ज्याछादित्वात् वे गौरादित्वात् ङी, वातेर्वा "अर्तीरि–" ॥ ( उणा– ३३८ ) ॥ इति म' ॥ ४ ॥

बेयमात्र– अश्वायां पुमश्वेऽपी ।

किशोरोऽल्पवया हय ॥ २९९ ॥

कस्यति वयसा, केशाति रेषते वा किशोर "कोरचोर–" ॥ ( उणा– ४३४ ) ॥ इत्यारे निपात्यते, अल्पवया वाह ॥ १ ॥ २९९ ॥

जवाधिकस्तु जवन

जवतोऽतिवशीको जवनः ॥ १ ॥

रथ्यो वोढा रथस्य य ।

रथ वहति रथ्यः 'वहति रथ–' ॥ ७ । १–२ ॥ इति यः ॥ १ ॥

आजानेय कुलीन स्यात्

आजेन क्षेपेण आनीयते वशीक्रियते आजानेय ॥ १ ॥ कुलीनः प्रशस्य-कुलोद्भवः पारसीकादिः ॥ २ ॥

तद्देशास्तु सैन्धवा ॥ ३०० ॥

वानायुजा पारसीका काम्बोजा बाल्हिकादय ।

स स देशो जन्मभूमिरेषां तद्देशाः सिन्धु-वनायुज-पारसीक-काम्बोज बाल्हिकदेशेषु भवाः सैन्धवा वानायुजाः, पारसीकाः काम्बोजा, बाल्हिका । अन्ये तु बाल्हीकाः । आदिग्रहणात् तुषाराद्याः॥ १ ॥ ३०० ॥

विनीतस्तु साधुवाही

विनीयते विनीतः सुशिक्षितः साधु वहति साधुवाही " साधौ" ॥ ५ । १ । १५५ ॥ इति णिन् ॥ १ ॥

दुर्विनीतस्तु शूकल ॥ ३०१ ॥

दुर्विनीतोऽनात्तशिक्षः शक्नोति स्वेच्छया गन्तुं शूकलः " शुक्ल–" ॥ ( उणा–४७४ ) ॥ इत्यले निपात्यते ॥ १ ॥

कश्य कशार्ह

कशामर्हति कश्यः, दण्डादित्वात् यः ॥ १ ॥

हृद्वक्त्रावर्ती श्रीवृक्षकी हय ।

हृदये वक्त्रे च प्रशस्ता रोमावर्ता स यस्य हृद्वक्त्रावर्ती, श्रीवृक्षको लाञ्छनमस्त्यस्य श्रीवृक्षकी ॥ २ ॥

पञ्चभद्रस्तु हृत्पृष्ठमुखपार्श्वेषु पुष्पितः ॥ २०२ ॥

पञ्च हृदयादीनि श्वेतानि भद्राणि कल्याणहेतवोऽस्य पञ्चभद्र ॥१॥२०२॥

पुच्छोर खुरकेशास्य सितै स्यादष्टमङ्गल ।

अत्र द्वन्द्वगर्भे द्वन्द्वे प्राण्यङ्गसमुदायस्याप्राप्यत्वात् इतरेतरयोगः पुच्छादयः सितैरष्टभिमङ्गलः कल्याणोऽष्टमङ्गल ॥ १ ॥

सिते तु कर्क-कोकाहौ

श्वेतवर्णेऽश्वे करोति प्रमोद कर्कः " कृगो वा " ॥ ( उणा–२१ ) ॥ इति क ॥ १ ॥ कोकवदाहन्ति भुव कोकाहः ॥ २ ॥

खोङ्गाह श्वेतपिङ्गले ॥ २०३ ॥

खमुद्गाहते खोङ्गाहः, पृषोदरादित्वात्, श्वेतश्चासौ पिङ्गलश्च श्वेतपिङ्गलस्तत्र ॥ १ ॥ २०३ ॥

पीयूषवर्णे सेराह

पीयूषममृतं दुग्ध वा तद्वद् वर्णोऽस्य पीयूषवर्णस्तत्र सीरवदाहन्ति भुवं सेराहः ॥ १ ॥

पीते तु हरियो हये ।

हरिं वर्णं याति हरियः ॥ १ ॥

कृष्णवर्णे तु खुङ्गाह

खुरैर्गाहते खुङ्गाहः ॥ १ ॥

क्रियाहो लोहितो हय ॥ २०४ ॥

क्रियां म अर्हाति क्रियाह ॥ १ ॥ २०४ ॥

आनीलस्तु नीलक

नील एव नीलकः ॥ १ ॥

अथ त्रियूह कपिलो हयः ।

त्रीन् यूथति त्रियूहः ॥ १ ॥

वोल्लाहस्त्वयमेव स्यात् पाण्डुकेशरवालधिः ॥ १०५ ॥

अयं निरूह एव घ्योसि उह्यते वोल्लाहः ॥ १ ॥ १०५ ॥

उराहस्तु मनाक् पाण्डुः कृष्णजङ्घो भवेद् यदि ।

उरसा आहन्ति उराहः ॥ १ ॥

सुरूहको गर्दभाभः

सुखेन रोहति सुरूहकः ॥ १ ॥

वोरुखानस्तु पाटलः ॥ १०६ ॥

वैरिणः खनति वोरुखानः ॥ १ ॥ १०६ ॥

कुलाहस्तु मनाक् पीतः कृष्णः स्याद्यदि जानुनि ।

कुल्माषिहीते कुलाहः ॥ १ ॥

उकनाहः पीतरक्तच्छायः

उच्चैर्नह्यते उकनाहः ॥ १ ॥

स एव तु कश्चित् ॥ १०७ ॥

कृष्णरक्तच्छविः प्रोक्तः

स एव उकनाहः ॥ १०७ ॥ कृष्णरक्तच्छायः सन् कश्चिदुच्यते ॥ १ ॥

शोणः कोकनदच्छविः ।

शोणः शोणवर्णः ॥ १ ॥

हरिकः पीतहरितच्छायः स एव हालकः ॥ १०८ ॥

हरिरेव हरिकः ॥ १ ॥ हलति गमो हालकः ॥ २ ॥ १०८ ॥

पङ्गुलः सितकाचाभः

पङ्गून् लाति पङ्गुलः ॥ १ ॥

हलाहश्चित्रितो हयः ।

चित्रितो कर्बुरवर्णो हलमवाहन्ति हलाहः ॥ १ ॥ वोल्लाहादयः प्रायो देशीभाषाः । व्युत्पत्तिस्त्वेषां वर्णानुपूर्वीमिश्रणार्थम् ।

शेषश्चात्र—

मल्लिकाक्षः सितैर्नेत्रैः स्यात् वाजीन्द्रायुधोऽसितैः ।

कक्की कक्कुवावर्तो निर्मुक्तस्त्यजनवर्जितः ॥

ययुरश्वोऽश्वमेधीयः

याति स्वेच्छया ययु पुंलिङ्गः "हनिया–" (उणा–७३३) ॥ इति कि दुर्द्धितं च ॥ १ ॥ अश्वमेधाय हितोऽश्वमेधीय ॥ २ ॥

प्रोथमश्वस्य नासिका ॥ ३०९ ॥

प्रोथते चलति प्रोथ वृत्तौ नासान्तःप्रदेशः "कमिप्रुगार्ति–" ॥ (उणा–२२५) इति थः पुंक्लीबलिङ्गोऽयम् ॥ १ ॥ ३०९ ॥

मध्यं कक्ष्य

अश्वस्य मध्यप्रदेशः कशामर्हति कक्ष्यम्, तत्र हि कशाघाताधिकारः, दण्डादि त्वाद् यः ॥ १ ॥

निगालस्तु गलोद्देशः

निगिलत्यनेन निगालः, गलग्रन्थिसन्धिः "न्युदो ग्रः" ॥ ५ । ३ । ७२ ॥ इति घञ्, गलस्य उद्देशः प्रदेशो देवमणेरावर्तस्थानम् ॥ १ ॥

खुरा शफाः ।

खुरन्ति विलिखन्ति क्ष्मां खुराः ॥ १ ॥ शायन्ते तक्ष्यन्ते शफाः पुंक्लीबलिङ्गः "शफकफ–" ॥ (उणा–३१९) ॥ इति के निपात्यते ॥ २ ॥

अथ पुच्छं वालहस्तो लाङ्गूलं लूम वालधिः ॥ ३१० ॥

पचते देशादीनुत्सारयति पुच्छ पुंक्लीबलिङ्गः "पीपूहो कृत्वथ" ॥ (उणा–१२५) ॥ इति छक्, पुतो छादयतीति पृषोदरादित्वात् ॥ १ ॥ वालानां हस्त इव दंशवारणाद्-वालहस्तः, प्रशस्ता वाला इति वा ॥ २ ॥ लगति चलति लाङ्गूलं पुंक्लीबलिङ्गः "दुकूलकुकूल–" ॥ (उणा–४९१) ॥ इत्यूले निपात्यते ॥ ३ ॥ लूयते लूम क्लीबलिङ्गः "सामधामन्–" ॥ (उणा–९११) इति निपात्यते ॥ ४ ॥ वाला धीयन्तेऽस्मिन् वालधिः पुंलिङ्गः ॥ ५ ॥ ३१० ॥

अपावृत्तपरावृत्तलुठितानि तु वेल्लिते ।

अपावर्त्तनमपावृत्तम् ॥ १ ॥ एवं परावृत्तम् ॥ २ ॥ लोठनम् लुठितम् ॥ ३ ॥ वेल्लनं वेल्लितं तत्र ॥ ४ ॥

धोरितं वल्गितं प्लुतोत्तेजितोत्तेरितानि च ॥ ३११ ॥

गतयः पञ्च धाराख्यास्तुरङ्गाणां क्रमादिमाः ।

धौरितादया वक्ष्यमाणास्तुरङ्गाणां पञ्च गतयः ध्रियते गतौ स्थाप्यत आभि रिति धाराः, भिदादित्वादङि निपात्यते ॥ १ ॥ ३११ ॥

तत्र धौरितकं धौर्यं धोरणं धोरितं च तत् ॥ ३१२ ॥
बभ्रुकङ्कशिखिक्रोडगतिवत्

'धोरृ गतिचातुर्ये' धोर्यते धोरितं स्वार्थेऽपि के च धौरितकम् ॥ १ ॥ ष्यञि धौर्यम् ॥ २ ॥ अनटि धोरणम् ॥ ३ ॥ क्ते धोरितम् ॥ ४ ॥ ३१२ ॥ तत्र नकुलादीनां गतिसदृशम् ॥ १ ॥

वल्गितं पुनः ।
अग्रकायसमुल्लासात् कुञ्चितास्यं नतत्रिकम् ॥ ३१३ ॥

वल्गनं वल्गितम् ॥ १ ॥

प्लुतं तु लङ्घनं पक्षिमृगगत्यनुहारकम् ।

प्लवनं प्लुतम् ॥ १ ॥ लङ्घ्यते लङ्घनम् ॥ २ ॥ पक्षिणां मृगाणां च गत्यनुहारि ॥ ३ ॥

उत्तेजितं रेचितं स्याद् मध्यवेगेन या गतिः ॥ ३१४ ॥

उत्तेजनमुत्तेजितम् ॥ १ ॥ रेचनं रेचितम् ॥ २ ॥ ३१४ ॥

उत्तेरितमुपकण्ठमास्कन्दितकमित्यपि ।
उत्प्लुत्योत्प्लुत्य गमनं कोपादिवाखिलैः पदैः ॥ ३१५ ॥

उत्तेरणमुत्तेरितम् ॥ १ ॥ उपगतः कण्ठोऽस्मिन्नुपकण्ठम् ॥ २ ॥ आस्कन्दनमास्कन्दितम् ॥ ३ ॥ ३१५ ॥

आश्वीनोऽध्वा स योऽश्वेन दिनेनैकेन गम्यते ।

अश्वेनाह्ना गम्यः आश्वीनः 'अह्ना गम्येऽश्वादीनम्' ॥७।१।८५॥१॥

कवी खलीनं कविका कवियं मुखयन्त्रणम् ॥ ३१६ ॥
पद्माली

कवते शब्दायते कविः 'स्वरेभ्य इः' ॥ (उणा– ६०६) ॥ ङ्यां कवी ॥ १ ॥ खलति चलति अनेन पुंक्लीबलिङ्गः 'खलिहिंसिभ्याम्–' ॥ (उणा– २८६) ॥ खलीनः खे तालुनि लीनं वा । खलिनमपि ॥ १ ॥ कवते कविका 'कुशिक–' ॥ (उणा– ४५) ॥ कविके साधुः ॥ ३ ॥ कौति कवियं पुंक्लीबलिङ्गः 'कौतेरियः–' ॥ (उणा– ३७५) ॥ ४ ॥ मुखं यन्त्र्यतेऽनेन मुखयन्त्रणम् ॥ ५ ॥ ३१६ ॥ पद्म आस्यमनया यस्याः पद्माली ॥ ६ ॥

पक्षपट्टे तु तलिका तङ्कसारकम् ।

बकग्रस्य चर्ममये पट्टे तलमस्त्यस्यास्तलिका ॥१॥ तले सरति सार्यते वा तत्सारकम् ॥ २ ॥

दामाञ्जन पादपाश·

दाम्नेव पदोऽञ्जनेन दामाञ्जनम् ॥१॥ पादयोः पाश पादपाश ॥ २ ॥

प्रक्षर प्रखर समौ ॥ ३१७ ॥

प्रच्छादितः क्षरति चलनेन प्रक्षरं तुरङ्गसमाहः "पुगाग्नि" ॥५।३।११०॥ इति बाहुलकाद् घ ॥१॥ प्रावृतः खरत्वेनेन प्रखर "अठर"-॥ (उणा-४०३) ॥ इत्यरे निपात्यते, प्रखरेति कठोरो वा, आयुधंरभेयत्वात् पुंस्ययम्, क्लीबेऽपि वैजयन्ती, यदाह- प्रक्षर प्रखरोऽस्त्रियाम् ॥ २ ॥ ३१७ ॥

चर्मदण्डे कशा

अश्वानां ताडनाय चर्मणो दण्डश्चर्मदण्डस्तत्र ॥ १ ॥ कशति कशा ॥ २ ॥

रश्मौ वल्गाऽवक्षेपणी कुशा ।

अश्नुतेऽनया रश्मिः स्त्रीलिङ्ग "अशो रश्चादिः" ॥ (उणा-६८८) ॥ इति मिः, तत्र ॥ १ ॥ वल्गत्यनया वल्गा । वल्ग-बागे अपि ॥ २ ॥ अवक्षिप्यतेऽनया ऽवक्षेपणी ॥ ३ ॥ कुश्यति कुशा ॥ ४ ॥

पर्याण तु पल्ययन

परितोऽश्वपृष्ठमेति पर्याणं "कल्याणपर्याणादयः" ॥ (उणा- १९१) ॥ इति साधुः ॥ १ ॥ परितोऽयतेऽनेन पल्ययन "उपसर्गस्यायौ" ॥ २।३।१०० ॥ इति लत्वम् ॥ २ ॥

वीत फल्गु हयद्विपम् ॥ ३१८ ॥

वीयतेऽसारतया क्षिप्यते वीतम्, फल्गु असारम्, हयाश्च द्विपाश्च हयद्विप सेनाङ्गमुक्तम् ॥ १ ॥ ३१८ ॥

वेसरोऽश्वतरो वेगसरश्च

अजन्त्यनेन वेसर "मीव्यजि-" ॥ (उणा- ४३९) ॥ इति सर ॥ १ ॥ अश्वेन अश्वायां जातोऽश्वः स गर्दभपितृकतया समातहासोऽश्वतर वत्सोक्षा श्वषभाद् ह्रासे पित्" ॥ ७।३।५१ ॥ इति तरट् ॥२॥ वेगेन सरति वेगसरः ॥३॥

अथ क्रमेलक

कुलनाश शिशुनामा शलो मोलिर्मरुप्रिय ॥ ३१९ ॥

मयो महाङ्गो वासन्तो द्विककुद् दुर्गलङ्घन ।
भूतघ्न उष्ट्रो दाशेरो रवण कण्टकाशन ॥ १२० ॥
दीर्घग्रीव केलिकीर्ण

क्रममन्नयनेन क्रमेलकः 'क्रमेरेलक' ॥ (उणा–४६) ॥ क्रमानेलयति क्रमेलकः स्वार्थे को वा ॥ १ ॥ कुक नाशयति कुकनाश ॥ २ ॥ शिशोर्नामाऽस्य शिशुनामा ॥ ३ ॥ धवति धवः ॥ ४ ॥ भूरहान् सेदि मोति, पृषोदरादित्वात् ॥५॥ मरुः प्रियाऽस्य मरुप्रिय ॥ ६ ॥ ११९ ॥ मीनात्यहीन् मयः, 'मयते गच्छतीति वा मयः' इत्येके ॥ ७ ॥ महदङ्गमस्य महाङ्ग ॥ ८ ॥ वसन्ते भवो वासन्त ॥ ९ ॥ द्वे ककुदी अस्य द्विककुद् ॥१०॥ दुर्गे मार्गे लङ्घयन्ति अनेन दुर्गलङ्घन ॥ ११ ॥ भूतानि हन्ति भूतघ्नः ॥ १२ ॥ उष्यते दह्यते मरौ उष्ट्रः "सुमूक्ष्मस्युषिभ्यः कित्" ॥ (उणा–४४९) ॥ इति त्रट् ॥ १३ ॥ दशेरेषु मरुषु भवो दाशेरः ॥१४॥ रौतीत्येवं शीलो रवणः ॥ १५ ॥ कण्टका अशनमस्य कण्टकाशनः ॥ १६॥१२० ॥ दीर्घा ग्रीवाऽस्य दीर्घग्रीव ॥ १७ ॥ केल्या कीर्यते स्म केलिकीर्णः ॥ १८ ॥

करभस्तु त्रिहायण ।

कीर्यते करभः "कृशृगृ–" ॥ (उणा– ३२९) ॥ इत्यभ, क शिरो रभते उन्नमयतीति वा ॥१॥ त्रीणि हायनान्यस्य त्रिहायणः "चतुस्त्रेर्हायनस्य वयसि" ॥२।३।७४ ॥ इति णत्वम् ॥ १ ॥

स तु शृङ्खलक काष्ठमये स्यात् पादबन्धने ॥ १२१ ॥

स करभो दारुनिर्मितैः पादबन्धनैर्युक्तः, शृङ्खलं बन्धनमस्य शृङ्खलकः "शृङ्खलकः करभे" ॥ ७ । १ । १९१ ॥ इति साधुः ॥ १ ॥ १२१ ॥

गर्दभस्तु चिरमेही बालेयो रासभ खर ।
चक्रीवान् शङ्कुकर्ण

गर्दति शब्दायते गर्दभः "कृशृगृ–" ॥ (उणा– ३२९) ॥ इत्यभः ॥ १ ॥ चिरं मेहति चिरमेही ॥ २ ॥ बालते भाष्यते बालेयः "वमह्य–" ॥ (उणा– ३७०) ॥ इति निपात्यते, बालेभ्यो हित इति वा बाले वयसि भवो वा ॥ ३ ॥ रासते रासभः "कृशृगृ–" ॥ (उणा– ३२९) ॥ इत्यभः ॥ ४ ॥ खनति खुरैः खरः "कठर–" ॥ (उणा– ४०३) ॥ इत्यरे निपात्यते खं महत् कण्ठविवरम् अस्त्यस्येति वा मध्यादित्वात् रः, खं शब्दं रातीति वा ॥५॥ चक्रं मण्डलं मेहनान्तेऽस्य चक्रीवान् "चर्मण्वत्यष्ठीवच्चक्रीवत्–" ॥ २ । १ । ९६ ॥ इति मतौ साधुः ॥ ६ ॥ शङ्कुकाकृती कर्णावस्य शङ्कुकर्णः ॥ ७ ॥

अथ ऋषभो वृषभो वृषः ॥ ३२२ ॥
बाहुलेय. सौरभेयो भद्र शक्वर-शाक्वरौ ।
उक्षाऽनड्वान् ककुद्मान् गौर्बलीवर्दश्च शाङ्कर ॥ ३२३ ॥

ऋषति गच्छति ऋषभ ॥ १ ॥ वर्षणात् वृषभ "ऋषिवृषि–" ॥ (उणा– ३३१) ॥ इति किदभः ॥ २ ॥ वर्षति वृष ॥ ३ ॥ ३२२ ॥ बहुलाया अपत्यं बाहुलेय "बाहुलेयो वृषे" ॥ ६ । १ । ८५ ॥ इत्येयण् ॥ ४ ॥ सुरभेरपत्यं सौरभेय "चतुष्पाद्भ्य–ः" ॥ ६ ।१। ८३ ॥ इत्येयण् ॥ ५ ॥ मन्दते भद्रः ॥ ६ ॥ शक्नोति वोढुं शक्वरः "ईवर–" (उणा– ४४४) ॥ इति वरटि साधु ॥ ७ ॥ शक्वर एव शाक्वरः, प्रज्ञादित्वादण् ॥ ८ ॥ उक्षति सूत्रेण भुवमुक्षा "उक्षितक्षि–" ॥ (उणा– ९००) ॥ इत्यन् ॥ ९ ॥ अनो वहति अनड्वान् "अनसो वहेः क्विप् सश्च डः" ॥ (उणा– १००६) ॥ इति साधुः ॥ १० ॥ ककुदस्यास्ति ककुद्मान्, ऊर्म्यादित्वाद् मतोर्वस्य न भवति ॥ ११ ॥ गच्छतीति गौः पुंस्त्रीलिङ्ग "ग्रुगमिभ्याम्–" ॥ (उणा– ८६७) इति डो ॥१२॥ बल वर्धयति बलीवर्दः, पृषोदरादित्वात्, बली वृणोति वा ॥ १२ ॥ शङ्कर स्यायं शाङ्करः ॥ ४ ॥ ३२३ ॥

उक्षा तु जातो जातोक्ष

उत्पन्न उक्षा जातोक्षः "जातमहद्वृद्धादुक्ष्ण कर्मधारयात्" ॥ ७ । ३ । ९५ ॥ इत्यत् समासान्तः ॥ १ ॥

स्कन्धिक स्कन्धवाहक ।

प्रशस्यः स्कन्धोऽस्त्यस्य स्कन्धिक ॥ १ ॥ स्कन्धेन वहति स्कन्धवाहकः ॥ २ ॥

महोक्ष स्यादुक्षतरः

महांश्चासावुक्षा च महोक्षः "जातमहद्वृद्ध–" ॥ ७।३।९५ ॥ इत्यत् समासान्तः ॥ १ ॥ कृसित उक्षा उक्षतर "वत्सोक्षाश्वर्षभ–" ॥ ७ । ३ । ५१ ॥ इति तरट् ॥ १ ॥

वृद्धोक्षस्तु जरद्गव ॥ ३२४ ॥

वृद्धश्चासावुक्षा च वृद्धोक्ष "जातमहद्वृद्ध–" ॥ ७ । ३ । ९५ ॥ इत्यत् समासान्तः ॥ १ ॥ जरंश्चासौ गौश्च जरद्गव "गोस्तत्पुरुषात्" ॥ ७ । ३ । १०५ ॥ इत्यट् समासान्त ॥ २ ॥ ३२४ ॥

षण्डतोचित आर्षभ्यः

षण्डतोचितोऽण्डाकर्षणयोग्य ऋषभाय भवमार्षभ्य "ऋषभोपानहाञ्ञ्यः" ॥ ७ । १ । ४६ ॥ षण्डतायोग्य इत्येके ॥ १ ॥

कूटो भग्नविषाणकः ।

कूट्यते कूटः ॥ १ ॥ भग्नं विषाणमस्य भग्नविषाणकः ॥ २ ॥

इट्चरो गोपतिः षण्डो गोवृषो मदकोह्लः ॥ ३२५ ॥

एषणमिट्, इषा चरति इट्चरः स्वेच्छाचारी 'इत्वर' इत्येके पेठुः ॥ १ ॥ गवां पतिर्गोपतिः ॥ २ ॥ सनोति सनति वा षण्डः "पञ्चमाड्डः" (उणा-१६८) ॥ इति डः, बाहुलकात् सत्वाभावः । शण्डोऽपि ॥ ३ ॥ वृषोऽनाकृष्टाण्डः गौश्चासौ वृषश्च गोवृषः, गवां वृषो बीजनिषेक्तेति वा ॥ ४ ॥ मदेन कोह्लते नट इव मदकोह्लः ॥ ५ ॥ १२५ ॥

वत्सः शकृत्करिस्तर्णः

वदति मातरं दृष्ट्वा वत्सः "मावावदि-" ॥ (५६४) ॥ इति सः ॥ १ ॥ शकृत् करोति शकृत्करिः "शकृत्स्तम्बाद्-" ॥ ५ । १ । १०० ॥ इति इः ॥ २ ॥ तरति तर्णः "इणुर्विशा-" ॥ (उणा-१८२) ॥ इति णः, तृणुते भक्षयति, तृणो तीति वा ॥ ३ ॥

दम्य वत्सतरौ समौ ।

दममर्हति दम्यः, दण्डादित्वाद् यः, दम्यते वा ॥ १ ॥ ह्रसितो वत्सो वत्सतरः "वत्सोक्षाश्वर्षभ-" ॥ ७ । ३ । ५१ ॥ इति तरट्, ह्रासो द्वितीयवयःप्राप्तिः ॥ २ ॥

नस्योतो नस्तितः

नस्ये नासाछिद्रे रज्ज्वादिना उतः ग्रथितो नस्योतः ॥ १ ॥ नासिकायां नसा, आद्यादित्वात् तस् "नस् नासिकायास्तः क्षुद्रे" ॥ ३ । २ । ९९ ॥ इति नसादेशः, ततो नस्तो नासिकायां क्रियते स्म नस्तितः, ततो "णिज् बहुलं नाम्नः-" ॥ ३ । ४ । ४२ ॥ इति णिचि "अन्त्यस्वरादेः" ॥ ७ । ४ । ४३ ॥ इत्यन्त्यस्वरादिलोपे च क्तप्रत्ययः, नासायां कृतच्छिद्रो गौरित्यर्थः ॥ २ ॥

पष्ठवाट् तु स्याद् युगपार्श्वगः ॥ ३२६ ॥

पष्ठं पष्ठे वा वयो वहति पष्ठवाट्, पृषोदरादित्वात् ॥ १ ॥ युगस्य स्कन्धकाण्डस्य पार्श्वे गच्छति युगपार्श्वगः, दम्योऽक्षेत्यर्थः । 'दमनाय योजितः' इत्येके ॥ २ ॥ १२६ ॥

युगादीनां तु वोढारो युग्य प्रासङ्ग्य-शाकटाः ।

युगं प्रासङ्गं च वहति युग्यः, प्रासङ्ग्यः, "वहति रथयुगप्रासङ्गम्" ॥ ७ । १ । २ ॥ इति यः ॥ १ ॥ २ ॥ शकटं वहति शाकटः "शकटादण्" ॥ ७ । १ । ७ ॥ ३ ॥

स तु सर्वधुरीणः स्यात् सर्वां वहति यो धुरम् ॥ ३२७ ॥

सर्वां धुरं वहति सर्वधुरीणः "वामाद्यादेरीनः" ॥ ७ । १ । ४ ॥ १ ॥ ॥ ३२७ ॥

एकधुरीणैकधुरावुभावेकधुरावहे ।

एका एकस्य वा धूरेकधुरा तां वहति एकधुरीणः एकधुरः "अश्चैकादेः" ॥ ७ । १ । ५ ॥ इतीनोऽकारश्च प्रत्ययौ ॥ १ ॥ २ ॥

धुरीण-धुर्य-धौरेय धौरेयक धुरंधरा ॥ ३२८ ॥

धूर्वहे

धुरं वहति धुरीणः 'परमतमनुमतं स्वमतं भवति' इति मतान्तरेण ईनः ॥१॥ "धुरो येयण्" ॥ ७ । १ । ३ ॥ इति ये धुर्यः ॥ २ ॥ एयणि धौरेयः ॥ ३ ॥ मतान्तरेण एयकणि धौरेयकः ॥ ४ ॥ धुरं धारयति धुरंधरः "धारेर्धर्च" ॥ ५ । १ । ११३ ॥ इति खे साधु ॥ ५ ॥३२८॥ धुरं वहति धूर्वहः, लिहादित्वादच्, तत्र ॥ ६ ॥

अथ गलिर्दुष्टवृषः शक्तोऽप्यधूर्वहः ।

गलति भक्षयत्येव गलिः "पदिपठि–" ॥ ( उणा–६०७)॥ इति इः ॥१॥

स्थौरी पृष्ठ्यः पृष्ठवाह्यः

स्थूराणां पश्चाज्जङ्घाभागानामिव स्थौरं बलं तदस्यास्ति स्थौरी । 'स्थूरी' इत्यन्ये ॥ १ ॥ पृष्ठे साधु पृष्ठ्यः ॥ २ ॥ पृष्ठेन वाह्यते पृष्ठवाह्यः ॥ ३ ॥

द्विदन् षोडन् द्वि-षड्रदौ ॥ ३२९ ॥

द्वौ दन्तावस्य द्विदन् "वयसि दन्तस्य दतृः" ॥ ७ । ३ । १५१ ॥ १ ॥ षट् दन्ता अस्य षोडन् "एकादशषोडश–" ॥ ३ । २ । ९१ ॥ इति साधुः ॥ २ ॥ ३२९ ॥

ककुद् स्कन्धः

सा गौ शबलादिभिर्वर्णैरनेकभेदा भवति, यथा शबला, धवलेत्यादि ॥ १ ॥

पष्ठौही गर्भिणी

प्रष्ठं वहति पष्ठौही, गौरादित्वात् ङी ॥ १ ॥ गर्भोऽस्त्यस्या गर्भिणी । 'पष्ठौही बालगर्भिणी' इत्यमरः ॥ २ ॥

वन्ध्या वशा

बध्नाति प्रसूतिं वन्ध्या "स्थाछामा" ॥ (उणा-३५७) ॥ इति य ॥ १ ॥ वष्टि कम्यते परं वशा ॥ २ ॥

वेहद् वृषोपगा ॥ ३३२ ॥

विहन्ति गच्छति वृषं वेहत् "संश्चद्वेहत्" ॥ (उणा-८८२) ॥ इति कति निपात्यते ॥१॥ वृषमुपगच्छति वृषोपगा । विहन्ति गर्भमिति वेहद् गर्भोपघातिनी' इत्यमरः ॥ २ ॥ ३३२ ॥

अवतोका स्रवद्गर्भा

अवसृतं तोकमपत्यमस्या अवतोका, अपप्रसववती । 'स्रवत्स्या स्रवद्गर्भा' इति माला ॥ १ ॥

वृषाक्रान्ता तु सन्धिनी ।

वृषेण आक्रम्यते वृषाक्रान्ता, सन्धान सन्धा गर्भग्रहणमस्त्यस्याः सन्धिनी, शिखादित्वादिन् । 'अदुग्धा दोहकाले तु सन्धिनी' इति कात्य । 'सन्धिन्यक्रान्तदुग्धा गौर्वृषाक्रान्ता च सन्धिनी' इति तु शाश्वतः ॥ १ ॥

प्रौढवत्सा बष्कयिणी

प्रौढो वत्सोऽस्या प्रौढवत्सा चिरप्रसूतेत्यर्थः, बष्कतेऽतिक्रामति बष्कयः चिरकालः "गयहृदया" ॥ (उणा-३७०) ॥ इति निपात्यते, सोऽस्त्यस्या बष्कयिणी ॥ १ ॥

धेनुस्तु नवसूतिका ॥ ३३३ ॥

धयन्त्येनां धेनुः "धे' श्चित्" ॥ (उणा-७८७) ॥ इति नुः ॥ १ ॥ नवा प्रत्यग्रा सूतिरस्या नवसूतिका ॥ ३३३ ॥

परेष्टुर्बहुसूतिः स्यात्

परमिच्छति परेष्टुः पृषोदरादित्वात् । बह्वी सूतिरस्या बहुसूतिः ॥ १ ॥

गृष्टिः सकृत्प्रसूतिका ।

गिरति गृष्टिः "ग्रो गृष् च" ॥ (उणा-६४९) ॥ इति तिः ॥ १ ॥

प्रसने कालयोपसर्या

प्रजने गर्भग्रहणे प्राप्त कालोऽस्याः प्रजनस्या ॥ १ ॥ उपसिमते इर्षोपसर्या "वर्योपसर्या " ॥ ५ । १ । १३ ॥ इति च साधु ॥ २ ॥

सुखदोह्या तु सुव्रता ॥ २२४ ॥

सुखेन दुह्यते सुखदोह्या शोभनं व्रतमस्याः सुव्रता सुशीलेत्यर्थः ॥ १ ॥ २२४ ॥

दुःखदोह्या तु करटा

करोति खेदं करटा "शिट्यादि" ॥ (उणा–१४२) ॥ दुष्टा: दुःशीलेत्यर्थः ॥१॥

बहुदुग्धा तु बञ्जुला ।

बहु प्रचुरं दुग्धमस्याः बहुदुग्धा, वञ्चति बञ्जुला "कुमुल्तुमुल–" ॥ (उणा–४८७) ॥ इति निपात्यते ॥ १ ॥

द्रोणदुग्धा द्रोणदुघा

द्रोणपरिमितं दुग्धमस्याः द्रोणदुग्धा ॥ १ ॥ द्रोणं दुग्ध द्रोणदुघा "दुहेर्दुघः" ॥ ५ । २ । १४५ ॥ इति साधुः ॥ २ ॥

पीनोध्नी पीवरस्तनी ॥ २२५ ॥

पीनमूधोऽस्याः पीनोध्नी "ऊधसोऽनङ्" ॥ ७ । ३ । १६९ ॥ इति नृधन्नन्तः "ऋन्नेभ्यो ङी" ॥ २ । ४ । ७ ॥ इति ङी ॥ १ ॥ पीवराः स्तना अस्याः पीवरस्तनी "असहनञ्विद्यमान" ॥ २ । ४ । ३८ ॥ इति ङी ॥ २ ॥ २२५ ॥

पीतदुग्धा तु धेनुष्या संस्थिता दुग्धबन्धके ।

पीतं दुग्धमस्याः पीतदुग्धा ॥ १ ॥ धेनुरेव धेनुष्या "इत्वराय" ॥ ७ । १ । ११ ॥ इति धे निपात्यते आधमर्णेनोत्तमर्णस्य बन्धे स्थापिता ॥ २ ॥

नैचिकी तूत्तमा गोषु

नीचैश्चरति नैचिकी "चरति" ॥ ६ । ४ । ११ ॥ इतीकण् "प्रायोऽव्ययस्य" ॥ ७ । ४ । ६५ ॥ इत्यन्त्यस्वरादिलोप ॥ १ ॥

पलिक्नी बालगर्भिणी ॥ २२६ ॥

पलति गर्भं गच्छति पलिता सैव पलिक्नी "क्तः पलितासितात्" ॥ २ । ४ । ३७ ॥ इति ङ्यां साधु. 'मलिनी बालगर्भिणी' इति माला ॥ १ ॥ २२६ ॥

समासमीना तु सा या प्रतिवर्षं विजायते ।

समां समां विजायते समांसमीना 'समांसमीनाद्यश्वीन' ॥ ७ । १ । १०५ ॥ इति ईने निपात्यते ॥ १ ॥

स्याच्चण्डी तु सुकरा

न चण्डतेऽचण्डी अक्रोपनिर्संर्गे", गौणादित्वात् ङी, सुखेन क्रियते वशे सुकरा ॥१॥

वत्सकामा तु वत्सला ॥ ३३७ ॥

वत्स स्नेहात् कामयते वत्सकामा ॥ १ ॥ वत्सं लाति वत्सला, वत्सोऽस्त्यस्या वा सिध्मादित्वाल्लः ॥ २ ॥ ३३७ ॥

चतुस्त्रिहायणी द्वयेकाद् हायन्येकादिवर्षिका ।

चतुःशब्दात् त्रिशब्दाच्च हायणी चत्वारश्चैव हायनाः वयं प्रमाणमस्याश्चतुर्हायणी चतुर्वर्षा, त्रिहायणी त्रिवर्षा गौः "सख्यादेहायनाद्वयसि" ॥ २ । ४ । ९ ॥ इति ङी "चतुस्त्रेर्हायनस्य वयसि" ॥ २ । ३ । ७४ ॥ इति णत्वम् ॥ १ ॥ द्विशब्दादेकशब्दाच्च हायनी द्विहायनी द्विवर्षा ॥१॥ एकहायनी एकवर्षा गौः ॥१॥ एकादीनि वर्षाण्यस्या एकादिवर्षिका । अत्रैकवर्षादयश्चतुर्हायण्यादीनां प्रातिलोम्येन यथासंख्यं पर्याया उच्यन्ते ॥ १ ॥

आपीनमूध

आप्यायते स्म आपीन पुंक्लीबलिङ्गः "सूयत्याद्यो-" ॥ ४ । २ । ७० ॥ इति क्तस्य नत्वं "आङोऽन्धूधसो" ॥ ४ । १ । ९२ ॥ इति प्यादेशः ॥१॥ उन्दते गवा, वहति क्षीरमिति वा ऊध क्लीबलिङ्गः "उन्देरूच्चोधौ च" ॥ (उणा–९५४) ॥ ऊधस् ॥ २ ॥

गोविद् तु गोमय भूमिलेपनम् ॥ ३३८ ॥

गवां विट् विष्ठा गोविद् ॥ १ ॥ गोः पुरीषं गोमयं पुंक्लीबलिङ्गः "गोः पुरीषे" ॥ ६ । २ । ५० ॥ इति मयट् ॥२॥ भूमिर्लिप्यतेऽनेन भूमिलेपनम् । पवित्रमपि ॥३॥

शुष्के तु तत्र गोग्रन्थि करीष-छगणे अपि ।

तत्र गोमये शुष्के उद्घाने गोः पुरीषस्य ग्रन्थिर्गोग्रन्थिः ॥ १ ॥ कीर्यतेऽसौ करीषं पुंक्लीबलिङ्गः 'कृतृभ्याम्-" ॥ (उणा–५५३) ॥ इतीषः ॥ २ ॥ छाद्यते वह्निरनेन छगणं "छिदेः" ॥ (उणा–१९०) ॥ इत्यणे निपात्यते ॥ ३ ॥

गवां सर्वं गव्य

सर्व क्षीरादि गोरिदं गवि भवमित्यादिष्वर्थेषु वा गव्यम् ॥ १ ॥

व्रजे गोकुल गोधनं धनम् ॥ ३३९ ॥

व्रजन्त्यस्मिन् व्रजो गोसम्बन्धी समूहः पुंक्लीबलिङ्गोऽयं "गोचरसञ्चर" ॥ ५ । ३ । १३१ ॥ इति घे साधुः तत्र ॥ १ ॥ गवां कुलं गोकुलम् ॥ २ ॥ गाव एव धनमत्र गोधनम् ॥ ३ ॥ धनति धनम् ॥ ४ ॥ ३३९ ॥

हिमस्त्रि मप पुंस्त्रीलिङ्ग. "भूकृतृभी" ॥ (उणा-५४०) ॥ इति प, मिषति स्पर्धते वा ॥२॥ ऊर्णाऽस्त्यस्य ऊर्णायुः "ऊर्णाहंशुभमो युस्" ॥ ७।२।१७ ॥ १ ॥ हूयते हुड "कुगुहु" ॥ (उणा १७०) ॥ इति कित् ड, ह्लोडति गच्छतीति वा ॥४॥ इयर्त्युरण "विक्रण" (उणा १९०) ॥ इत्यणे निपात्यत, 'उरण' कण्ड्वादौ' उरण्यति देवता प्रीणाति वा उर्वे रणोऽस्येति वा, उ स्वरप्रतिरूपकमव्ययम् ॥५॥ इयर्त्युरभ्र "सुरक्षुर-" ॥ (उणा ३९६) ॥ इति रे निपात्यते, उर्वे रमते, उरु भ्रमतीति वा, पृषोदरादित्वात् ॥६॥ मेहति मेण्ढ., पृषोदरादित्वात् ॥७॥ वर्षति वृष्णि "ऋद्‌वृसु-" ॥ (उणा ६३५) ॥ इति कित् णिः ॥ ८ ॥ इज्यते देवता अनेन एडक "कीचक-" ॥ (उणा ३३) ॥ इत्यके निपात्यते ॥ ९ ॥ रोमाणि सन्त्यस्य रोमश, कामादित्वात् श ॥१०॥ हुडति हुडु "पृकाहृषि" ॥ (उणा-५२९) ॥ इति किदु ॥११॥१४२॥ सफकति सफक्त, ज्वालादित्वात् ण ॥१२॥ श्रृङ्गमस्त्यस्य श्रृङ्गिण "फलबर्हात्-" ॥ ७ । २ । १३ ॥ इतीन- ॥१३॥ मिलेः सौत्रात् लिहायाँ उलयोरैक्यात् मेढ ॥१४॥ ।

मेषी तु कुररी रुजा ।

जालकिन्यविला वेणी

मिषति मषी ॥१॥ कुरति शब्दायते कुररी "मृयुम्वि" ॥ (उणा ३९९) ॥ इति किदर ॥२॥ रुजति रुजा ॥३॥ जालकं रोमगुच्छोऽस्त्यस्या जालकिनी ॥४॥ न विकति मिनत्यविका अवीन् कातीति वा ॥५॥ वेणते वेणी ॥६॥

अथैडिकः शिशुवाहक ॥ १४३ ॥

पृष्ठश्रृङ्गो वनाजः स्यात्

इज्यते कौतुकार्थिडिक "लिङ्कुतक" ॥ (उणा-२६) ॥ इति के निपात्यत ॥ १ ॥ शिशुं वहति शिशुवाहक ॥२॥१४३॥ पृष्ठे श्रृङ्गमस्य पृष्ठश्रृङ्ग ॥ ३ ॥ वनस्याजो वनाज ॥ ४ ॥

अविदुग्धे त्ववे परम् ।

सोढं दूस मरीस च

अविशब्दात् परं सोढादय अवेर्दुग्धमविसोढम् ॥१॥ अविदूसम् ॥२॥ अविमरीसम् "अवेर्दुग्धे सोढदूसमरीसम्" ॥६।२।६४॥ इति साधव ॥३॥

कुर्कुरो भषक्श्वालिधि ॥ १४४ ॥

अलिमुग् भषण सारमेय कौलेयक शुनः ।

शुनि श्वानो गृहमृगः कुक्कुरो रात्रिजागरः ॥ २४५ ॥
रसनालिड् रतपरा कौल-श्वापि-त्रणा ऽन्दुका ।
शालावृको मृगदंशः श्वा

कोकतऽस्यात्विक्मायते कुक्कुर ' मद्गुर-" ॥ ( उणा ४२६ ) ॥ इस्कुरे निपात्यते, कुक्कुति कुरति शब्दायते वा ॥१॥ वक्रो वासविरस्य वक्रमालंचि ॥ २ ॥ ॥२४५॥ अस्थीनि भुङ्क्ते अस्थिभुक् ॥३॥ भषति कुत्सितं भाऽस्यते भषण । भष कोऽपि च॥४॥ सरमाया अपत्यं सारमेय ॥५॥ कुले गृहं भव कौलेयक कुक्षि " ॥६।३।१२॥ इत्येयकम् ॥६॥ शुनति गच्छति शुन ॥७॥ "श्वन्नुक्षन्" ॥ ( उणा १०९ ) ॥ इति किदिमत्ययेन शुनि ॥ ८ ॥ शोभन आनः प्राणोऽस्य श्वानस्ताक्ष्ण्यादिः ॥९॥ गृहस्य मृगो गृहमृगः ॥१०॥ किरत्यस्थि कुक्कुर "मद्गुर " ( उणा ४२६ ) ॥ इस्कुर निपात्यते ॥ ११ ॥ रात्रौ जागर्ति रात्रिजागर ॥१२॥ ॥२४५॥ रसनया लेढि रसनालिट् ॥१३॥ रतशब्दात् परा कीलकस्य—रतेन कील्यते बध्यते रतकील , रते कीलनमस्येति वा ॥१४॥ रते शते रतशायी ॥१५॥ रतेन मग्नमस्य रतमग्नः ॥१६॥ रतमेवान्धुको मन्मममस्य रतान्धुक ॥१७॥ शालायां गृहे वृक शालावृक ॥ १८ ॥ मृगान् दशति मृगदंश ॥१९॥ श्वयति श्वा "श्वन्नुक्षन् " ॥ (उणा-१०२) ॥ इस्पनि निपात्यते ॥ २० ॥

शेषश्चात्र—

शुनी क्रोधी रसापायी शिवारि सूचको वक ।
वनंतपः स्वगाविट् इलशो मकरश्च स ॥ १ ॥
दीर्घनाद पुरोगामी स्यादिन्द्रमहकामुक ।
मण्डलः कपिलो ग्रामसृगश्चग्रमहोऽपि च ॥ २ ॥

अलर्कस्तु स रोगितः ॥ २४६ ॥

अल्यते वार्यते दशनमयादलर्क उम्मत्त श्वा ' निष्कतुरुष्क "॥ (उणा २६) ॥ इति के निपात्यते, संजातगरादिप्रचारतात् मत्कमादिरोम सञातोऽस्य रोगित ॥ १ ॥ २४६ ॥

विश्वकद्रुस्तु कुशलो मृगव्ये

विश्वे द्रव कुत्सितं द्रवति विश्वकद्रु "हरिमित " ॥ ( उणा ७४५ ) ॥ इति विद्रु निगत श्वकदमम्यक्षक ॥ १ ॥

सरमा शुनी ।

सरति सरमा "सृप्रथि" ॥ (उणा १४७) ॥ हलम् ॥ १ ॥ देवशुनी, विशेषवृत्तिरप्यसौ सामान्येऽप्यभिधानात् ॥ २ ॥

विड्वरः शूकरे ग्राम्ये

विषं गूथं चरत्यति विड्वरः ग्राम्यशूकरः ॥

महिषी यमवाहनः ॥ १४७ ॥

रजस्वलो वाहरिपुर्लुलायः सैरिभो महः ।

धीरस्कन्धः कृष्णशृङ्गो जरन्तो दंशभीरुकः ॥ १४८ ॥

रक्ताक्षः कासरो हृसकालीतनय-लालिकौ ।

महति महिषः "महाविन्ध्यां डित्" ॥ (उणा–५४७) ॥ इतीषः, मह्यां शेते वा, पृषोदरादित्वात् ॥१॥ यमेन वाह्यते यमवाहनः । यमरथोऽपि ॥ २ ॥ १४७ ॥ रजोऽस्त्यस्य रजस्वलः ॥ ३ ॥ वाहानामश्वानां रिपुर्वाहरिपुः ॥ ४ ॥ 'लुलि सौत्रः' लोलति पङ्के लुलायः "कुलिलुलि–" ॥ (उणा–३७२) ॥ इति कायः ॥५॥ सीयते बध्यते सैरिभः "सिटिकिम्बाभिमाः सेरडिही च" ॥ (उणा–३३२) ॥ इति वा सीरिभिर्दन्तैर्भाति, सीरिभः कुटुम्बी तस्यायमिति वा ॥ ६ ॥ महति महः ॥ ७ ॥ धीरः स्थिरः स्कन्धोऽस्य धीरस्कन्धः ॥ ८ ॥ कृष्णं शृङ्गमस्य कृष्णशृङ्गः ॥ ९ ॥ जीर्यति जरन्तः "जृविशिभ्यामन्तः" ॥ (उणा–२२९) ॥ १० ॥ दंशेभ्यो भीरुको दंशभीरुकः ॥ ११ ॥ १४८ ॥ रक्ते अक्षिणी अस्य रक्ताक्षः ॥ १२ ॥ 'कासृङ् शब्दकुत्सायाम्' कासते कासरः "ऋच्छिचटि" ॥ (उणा–३९७) ॥ इत्यरः कर्मार्तः ऋ जलमासरति वा, ईषत् सरति महाकायत्वादिति वा ॥१३॥ हृसकाल्याः तनयो हृसकालीतनयः ॥१४॥ लालं मुखमस्य लालिकः, वीह्यादित्वादिकः ॥१५॥

शेषश्चात्र—

महिषे कलुषः पिङ्गः कटाहो गद्गदस्वरः ।

हेरम्बः स्कन्धशृङ्गश्च ॥ १५ ॥

अरण्यजेऽस्मिन् गवलः

अस्मिन् महिषेऽरण्यसम्भवे गवतं शब्दायते गवलः "मृदिकन्दि" ॥ (उणा–४६५) ॥ इत्यलः ॥ १ ॥

सिंहः कण्ठीरवो हरिः ॥ १४९ ॥

हर्यक्षः केसरीभारिः पञ्चास्यो नखरायुधः ।

महानादः पञ्चशिखः पारीन्द्रः पत्यरी मृगात् ॥ १५० ॥

श्वेतपिङ्गोऽपि

हिनस्ति सिंहः " हिंसे सिम् च " ॥ (उणा-५८८) ॥ इति हः, आदि वा, पृषोदरादित्वात् ॥ १ ॥ कण्ठे रवो ध्वनिरस्य कण्ठीरवः, पृषोदरादित्वादलुम् ॥२॥ हरति प्राणान् हरिः ॥ ३ ॥ १४९ ॥ पिङ्गले अक्षिणी अस्य हर्यक्षः ॥ ४ ॥ केसराः स्कन्धसटाः सन्त्यस्य केसरी ॥ ५ ॥ इभानामरिरिभारि ॥ ६ ॥ पञ्च आस्यानि मुखानि, मुखेन पादैश्च योद्धृत्वादस्य पञ्चाऽऽस्य , पञ्चयति पञ्चं विस्तारितं वा स्यमस्येति वा ॥ ७ ॥ नखरा आयुधमस्य नखरायुधः ॥ ८ ॥ महान् नादोऽस्य महानादः ॥ ९ ॥ पञ्च शिखा अस्य पञ्चशिखः, पञ्चाभिः स्यति वा ॥ १० ॥ पारिषु हस्तिबन्धः पारीन्द्रः पृषोदरादित्वात् । पारीन्द्रोऽपि ॥ ११ ॥ मृगशब्दात् पर पतिरिव, मृगाणां द्वीप्यादिश्वापदजन्तूनां पतिरिव मृगपतिः ॥१२॥ मृगारिः ॥१३॥ ॥ १५० ॥ श्वेतश्चासौ पिङ्गश्च श्वेतपिङ्गः ॥ १४ ॥

शेषश्चात्र—

सिंहे तु स्यात् पञ्चकपः ।
शैलाटो नगराजश्च गजञ्जान्तो गणेश्वरः ॥ १ ॥
अद्रिद्विपो रक्तजिह्वो व्यादीर्णास्य सुगन्धिकः ।

अथ व्याघ्रो द्वीपी शार्दूल-चित्रको ।

चित्रकायः पुण्डरीकः

व्याजिघ्रति व्याघ्रः ॥ १ ॥ द्वीपमस्त्यस्य तन्निवासित्वाद् द्वीपी ॥ २ ॥ शृणाति शार्दूलः "दुकूल-" ॥ ( उणा-४९१ ) ॥ इत्यूले निपात्यते ॥ ३ ॥ चित्रकश्चित्रवर्णः स्यात् ॥४॥ चित्रः कायोऽस्य चित्रकायः ॥५॥ पुणति शोभते पुण्डरीकः "ऋजीक" ॥ ( उणा-५० ) ॥ इतीके निपात्यते ॥ ६ ॥

तरक्षुस्तु मृगादनः ॥ १५१ ॥

तरति तरक्षुः "तृपलिमसेरक्षुः" ॥ ( उणा —८२७ ) ॥ १ ॥ मृगानत्ति मृगादनः ॥ २ ॥ १५१ ॥

शरभः कुञ्जराराति रुत्पादकोऽष्टपादपि ।

शृणाति हस्तिनं शरभः 'कृशॄ' ॥ ( उणा—३२८ ) ॥ इत्यभः ॥ १ ॥ कुञ्जराणामराति कुञ्जराराति ॥ २ ॥ ऊर्ध्वा पादा अस्य उत्पादकः ॥ ३ ॥ अष्टौ पादा अस्य अष्टपाद् 'सुसङ्ख्यात्" ॥ ७ । ३ । १५० ॥ इति पादभावः । अष्टपदोऽपि ॥ ४ ॥

गवय स्याद् वनगवो गोसदृक्षोऽश्ववारणः ॥ १२५२ ॥

गवते गवयः "कुगुवलि-" ॥ ( उणा—३६५ ) ॥ इत्यय ॥१॥ वनस्य गौर्वनगवः ॥२॥ गोः सदृशो गोसदृक्षः ॥३॥ अश्वान् वारयत्यश्ववारणः ॥४॥ १२५२ ॥

खड्गी वाध्रीणसः खड्गो गण्डकः

खड्गं शृङ्गमस्त्यस्य खड्गी ॥ १ ॥ वाध्रीव नासिकाऽस्य वाध्रीणसः "अस्थूलाच्च नसः" ॥ ७।३।१६१ ॥ इति नसादेशः ॥ २ ॥ खडति भिनत्ति खड्गः "गम्यमि-" ॥ ( उणा-९२ ) इति गः ॥३॥ गण्डति संहन्यते गण्डकः ॥४॥

अथ किर किरिः ।

भूदार सूकरः कोलो वराह क्रोड पोत्रिणौ ॥ १२५३ ॥

घोणी घृष्टिः स्तब्धरोमा दंष्ट्री किट्या-ऽऽस्यलाङ्गलौ ।

आखनिकः शिरोमर्मा स्थूलनासो बहुप्रज ॥ १२५४ ॥

किरति क्ष्मां किरः "नाम्युपान्त्य-" ॥ ५।१।५४ ॥ इति कः ॥ १ ॥ "नाम्युपान्त्य-" ॥ ( उणा—६०९ ) ॥ इत्यादिना उणादिके किप्रत्यये किरिः ॥ २ ॥ भुवं दारयति भूदारः ॥ ३ ॥ सूयते प्रेर्यते सूकरः "सुप्रुपिभ्यां कित्" ॥ ( उणा–४३६ ) ॥ इति करः ॥ ४ ॥ कोलति संस्त्यायति पीनत्वात् कोलः ॥ ५ ॥ वृणोति वराहः "वृकटि-" ॥ ( उणा—५९१ ) इत्याहः, वरमाहन्तीति वा, वर आहारोऽस्येति पृषोदरादित्वात् ॥ ६ ॥ क्रियति क्रोडः "विहड-" ॥ ( उणा—१७२ ) ॥ इत्यडे निपात्यते, क्रुडे घौमस्य वाऽन्त्यम् ॥ ७ ॥ पोत्रं मुखाग्रमस्त्यस्य पोत्री ॥ ८ ॥ ॥ १२५३ ॥ घोणोऽस्त्यस्य घोणी, शिखादित्वादिन् ॥ ९ ॥ घृष्यात् घृष्टिः "तिक्कृतौ नाम्नि" ॥५।१।७१॥ इति तिक् ॥ १० ॥ स्तब्धं रोमाऽस्त्यस्य स्तब्धरोमा ॥ ११ ॥ दंष्ट्राऽस्त्यस्य दंष्ट्री ॥ १२ ॥ केटति किटिः "नाम्युपान्त्य-" ॥ ( उणा–६०९ ) ॥ इति किटिः ॥ १३ ॥ आस्यं दारकत्वात्लाङ्गलमिवाऽस्य आस्यलाङ्गलः ॥ १४ ॥ आखनति आखनिकः "आखः पणिपनि—" ॥ ( उणा—३९ ) ॥ इति बहुवचनादिकः, आखनं खातविशेषः सोऽस्यास्तीति वा ॥ १५ ॥ शिरसि मर्माऽस्य शिरोमर्मा ॥ १६ ॥ स्थूला नासाऽस्य स्थूलनासः ॥ १७ ॥ बह्व्यः प्रजा अस्य बहुप्रजः ॥ १८ ॥ १२५४ ॥

शेषश्चात्र—

सूकरे कुमुखः क्रमेलपी च शलिकप्रियः ।
तलक्षणो वक्रदंष्ट्रः पङ्कक्रीडनकोऽपि च ॥

माल्लूके मालुक-र्क्षा-ऽच्छमल्ल-मल्लूक-मल्लुका ।

मल्लते हिनस्ति मल्लूक. मल्लूक " कणिमल्लोर्दीर्घश्च वा " ॥ (उणा—६० ) इति ऊके साधू ॥१॥२॥ माल्यते माल्लूक " मृमन्याभि—" ॥ (उणा—५८)॥ इत्यूक ॥ ३ ॥ ऋच्छति ऋक्ष " ऋञ्जरिपि—" ॥ ( उणा—५६७ ) ॥ इति कित् स , ऋक्ष्णोतीति वा ॥ ४ ॥ अच्छोऽव्याभिमुख्यार्थेऽव्ययम् ' आभिमुख्येन मल्लते अच्छमल्लः ॥ ५ ॥ मल्लते मल्लुकः "भिवमि—" ॥ (उणा—५१) ॥ इत्युकः॥६॥

सृगालो जम्बुक फेरु फेरण्ड फेरव शिवा ॥ ३५५ ॥
घोरवासी भूरिमायो गोमायुर्मृगधूर्तक ।
हूरवो मरुज क्रोष्टा

सरति भयेन सृगाल 'सर्तेर्गोऽन्तश्च ' ॥ (उणा-४७८) ॥ इत्याल असृगाली यतेऽत्र, असृग् गिलतीति वा, पृषोदरादित्वात् । तालव्यादिरपि ॥१॥ जमति जम्बुक " कम्बुक—" ॥ (उणा—५७) ॥ इत्युके निपात्यते ॥ २ ॥ 'फे' इति रौति फेरु, पृषोदरादित्वात् ॥ ३ ॥ 'फे' इति रणति फेरण्ड " पिचण्ड-" ॥ (उणा-१७६) ॥ इत्यण्डे निपात्यते ॥ ४ ॥ फे' इति रवोऽस्य फेरव ॥५॥ शेते दिवा शिवा 'सकृन्नावेत्नी' इति नैरुक्ता । शृगालेऽप्ययं स्त्रीलिङ्ग , यद् वामन-'शिव भीरुः शिवा क्रोष्टा भवेदामलकी शिवा' ॥ ६ ॥ ३५५ ॥ घोर वास्यते घोरवासी ॥ ७ ॥ भूरिः प्रचुरा मायाऽस्य भूरिमाय ॥ ८ ॥ गो मिनोति गोमायु " मिवहि-" ॥ (उणा-७२६ ) ॥ इति णिदु ॥ ९ ॥ मृगान् धूर्वति मृगधूर्त " धीरी- " ॥ ( उणा-२०१ ) ॥ इति किद् त मृगेषु धूर्त इति वा ॥ १० ॥ हू इति रवोऽस्य हूरव ॥ ११ ॥ बिभर्ति मरुज " उठ्याथय ' ॥ ( उणा-१३४ ) ॥ इति निपात्यते ॥ १२ ॥ क्रोशति क्रोष्टा ' क्रुशिकमि-" ॥ ( उणा-७०२ ) ॥ इति तुन् " क्रुशस्तुनस्तृच् पुंसि " ॥ १ । ४ । ९१ ॥ इति तृजादेशः ॥ १३ ॥

शिवाभेदेऽल्पके किखिः ॥ ३५६ ॥

अल्पायां शिवायां कौति किखि स्त्रीलिङ्ग " कोर्किखि " ॥ (उणा-६२६) ॥ १ ॥ ३५६ ॥

पूषी गुण्ठिव-लोपाकौ

पूषति शिवाभेदे पूषाति गुण्ठिव " प्रह्वाह्ला-" ॥ ( उणा-५१४ ) ॥ इति वे निपात्यते ॥ १ ॥ लुम्पति लोपाक " मवाक-" ॥ ( उणा-३७ ) ॥ इति निपातनात्साकः ॥ २ ॥

कोकस्त्वीहामृगो वृकः ।
अरण्यश्वा

कोकतेऽऽदिकमादत्ते कोकः ॥ १ ॥ ईहया मृग्यते ईहामृगः, ईहा मृगस्येवास्य वा ॥२॥ 'वृकि वृकि आदाने' वर्कतेऽजादिकमादत्ते वृकः, वृणोतीति वा "चिचि-पुषि-" ॥ ( उणा–२१ ) ॥ इति कित् कः ॥ ३ ॥ अरण्यस्य श्वा अरण्यश्वा ॥४॥

मर्कटस्तु कपिः कीशः प्लवङ्गमः ॥ २९७ ॥
प्लवङ्गः प्लवगः शाखामृगो हरिर्वलीमुखः ।
वनौका वानरः

'मर्किः सौत्रः' मर्कति मर्कटः "दिव्यवि-" ॥ ( उणा–१४२ ) ॥ इत्यटः ॥ १ ॥ कम्पते चलति कपिः " कम्पिकुण्डि-" ॥ ( उणा–६१४ ) ॥ इति इर्न-लोपश्च ॥ २ ॥ विकेरत जानाति कीशः " तिमिषा-" ॥ ( उणा–५१७ ) ॥ इति ईशे निपात्यते, कीति शब्दमीष्टे वा ॥ ३ ॥ प्लवेन गच्छति प्लवङ्गमः, प्लवङ्गः, प्लवगः " नाम्नो गमः खड्डौ च-" ॥ ५ । १ । १३१ ॥ इति साधवः ॥ ४ ॥ ५ ॥ ६ ॥ प्लवङ्गोऽपि ॥ २९७ ॥ शाखासञ्चारी मृगः शाखामृगः ॥ ७ ॥ हरति हरिः ॥ ८ ॥ वल्यस्त्वक्संकोचा मुखेऽस्य वलीमुखः ॥ ९ ॥ वने ओकोऽस्य वनौकाः ॥ १० ॥ वनति वनं वानरः " कठर-" ॥ ( उणा–४०३ ) ॥ इत्यरे निपात्यते, वने रमते वानरस्तस्यायमिति वा, पक्षे नरो वा ॥ ११ ॥

अथासौ गोलाङ्गूलोऽसितानन ॥ २९८ ॥

असौ वानरः कृष्णमुखः, गोरिव लम्बं लाङ्गूलमस्य गोलाङ्गूलः, गां लाति लाङ्गूलेन वा ॥ १ ॥ २९८ ॥

मृगः कुरङ्गः सारङ्गो वातायुर्हरिणावपि ।

मृग्यते व्याधैर्मृगः ॥ १ ॥ कुरति मार्यमाणः कुरङ्गः "पिशिकिलि-" ॥ ( उणा–१०१ ) ॥ इति किदङ्गः, कौ रङ्गतीति वा ॥ २ ॥ सरति सारङ्गः "सृवृ-भ्यो णित्" ॥ ( उणा–९९ ) ॥ इत्यङ्गः, सारं गच्छतीति वा ॥ ३ ॥ वातमेति वातायुः "कृवापाजि" ॥ (उणा–१) ॥ इत्युण् । 'वातं शुष्कमयते वातायुः इत्यन्ये ॥ ४ ॥ ह्रियते गीतेन हरिणः "द्रुहवृहि" ॥ ( उणा–१९४ ) ॥ इतीणः ॥ ५ ॥

शेषश्चात्र—

मृगे स्यादजिनयोनिः स्यात् ॥

मृगभेदा रुरु-न्यङ्कु-रङ्कु-गोकर्ण-शम्बराः ॥ २९९ ॥

चमूरु चीन-चमरा समूरै-ण-र्श्य-रौहिषा ।

कदली कन्दली कृष्णशार' पृषत-रोहितौ ॥ १९० ॥

मृगाणां भेदा विशेषा, रौति रुरु' महान् कृष्णसार' "रुपूभ्यां क्रित्' ॥ (उणा ८०७) ॥ इति रु ॥ १ ॥ न्यङ्कति न्यङ्कु' त्रिकेण विपुलोपल' सम्बराकृति "मेरके" ॥ (उणा-७२४) ॥ इत्यु, न्यङ्क्वादित्वात् कत्वम् ॥ २ ॥ रमते रङ्कु' "वेलीछमि" ॥ (उणा-७४९) ॥ इति कु ॥ ३ ॥ नारिव कर्णोऽस्य गोकर्ण ॥ ४ ॥ शं शृणोति शम्बरः अस्यो हरिणः ॥ ५ ॥ १५९ ॥ चमति चमूरु' महाग्रीवो चचलकेसराकापि 'चमेरुरः' ॥ (उणा ८१९) ॥ ६ ॥ चीयते चीन चित्रकोषः ॥ ७ ॥ चमति चमरो पाविशेष "कलिचटि" ॥ (उणा-१९७) ॥ इत्यरः ॥८॥ समूवत समूर' "खुरक्षुर" ॥ (उणा-३९६) ॥ इति निपातनात ॥ ९ ॥ एवेण' "इण्शीङ्" ॥ (उणा-१८२) ॥ इति ण' ॥ १० ॥ ऋश्य गतो स्तुतो वा' स्वरादित्वात्सम्यान्तत्व, ऋष्यते ऋष्यः हरिण प्रायो मुखुन्यह "ऋषिश्रानि" ॥ (उणा-३६१) ॥ इति किद् य ॥ ११ ॥ रोहति रोहिषः, रोहति श्वेतरात्रीमुखः "रुहेर्वृ-द्धिश्च" ॥ (उणा-५४८) ॥ इतीष' ॥ १२ ॥ कदते कदली "मृदिकन्दि" ॥ (उणा-४६५) ॥ इत्यल', स्त्रियामयम्, यदाह—

"कदली तु स्त्रिये रोमे मृदुमक्षेण कर्बुरे ।
नीलाग्रै रोमभिर्युक्ता सा विशत्यङ्गुलायता ॥ १ ॥"

॥ १३ ॥ कन्दान् लाति कन्दली श्यामवर्णा हस्त्रामाभा महोदरी, स्त्रियामेवायम् । अगरस्त्वेतौ मत्वर्थीयेनन्वाचाह ॥ १४ ॥ कृष्णेन वर्णेन शार शबल कृष्णशार' ॥ १५ ॥ पृषता बिन्दव' सन्त्यस्य पृषतः बिन्दुमान् ॥ १६ ॥ रोहितो रोहित-वर्णे ॥ १७ ॥ १९० ॥

दक्षिणेर्मा तु स मृगो यो व्याधैर्दक्षिणे क्षत' ।

दक्षिणमङ्गमीर्मे व्रणमस्य दक्षिणेर्मा व्याधैर्दक्षिणभागे कृतव्रणः "दक्षिणेर्मा लुब्धयोगे" ॥ ७।१।१४२ ॥ इत्यन् समासान्त ॥ १ ॥

वातप्रमीर्वातमृग

वातं प्रमिमीते वाताभिमुखधावनात् वातप्रमी 'वातात् प्रम' क्विः' ॥ (उणा-७१३) ॥ इति ई ॥ १ ॥ वाताभिमुखो मृगो वातमृगः ॥ २ ॥

शशस्तु मृदुलोमक ॥ १९१ ॥
शूलिको लोमकर्ण

कोकस्त्वीहामृगो वृकः ।
अरण्यश्वा

कोकतेऽऽदानार्थस्य कोकः ॥ १ ॥ ईहया मृग्यते ईहामृगः, ईहा मृगस्येवास्य वा ॥२॥ 'वृकि वृकि आदाने' वर्कतेऽऽदानार्थस्य वृकः, वृणोतीति वा "सिधि पुषि–" ॥ ( उणा–२१ ) ॥ इति कित् कः ॥ ३ ॥ अरण्यस्य श्वा अरण्यश्वा ॥४॥

मर्कटस्तु कपिः कीशः प्लवङ्गमः ॥ १५७ ॥
प्लवङ्गः प्लवगः शाखामृगो हरिर्वलीमुखः ।
वनौका वानरः

'मर्कि सौत्र' मर्कति मर्कटः " शिक्यादि–" ॥ ( उणा–१४२ ) ॥ इत्यटः ॥ १ ॥ कम्पते चलति कपिः " अम्भिकुण्ठि–" ॥ ( उणा–६१४ ) ॥ इति इर्लोपश्च ॥ २ ॥ चिकेति जानाति कीशः " तिमिश–" ॥ ( उणा–५२७ ) ॥ इति इशे निपात्यते, कीति शब्दमीष्टे वा ॥ ३ ॥ प्लवेन गच्छति प्लवङ्गमः, प्लवङ्गः, प्लवगः " नाम्नो गमः खड्डौ च–" ॥ ५ । १ । १३१ ॥ इति साधवः ॥ ४ ॥ ५ ॥ ६ ॥ प्रवङ्गोऽपि ॥ १५७ ॥ शाखासञ्चारी मृगः शाखामृगः ॥ ७ ॥ हरति हरिः ॥ ८ ॥ वल्यस्त्वक्संकोचा मुखेऽस्य वलीमुखः ॥ ९ ॥ वने ओकोऽस्य वनौकाः ॥ १० ॥ वमति वनं वानरः " जठर–" ॥ ( उणा–४०३ ) ॥ इत्यरे निपात्यते, वने रमते वानरस्तत्स्यापमिति वा, पक्षे नरो वा ॥ ११ ॥

अथासौ गोलाङ्गूलोऽसिताननः ॥ १५८ ॥

असौ वानरः कृष्णमुखः, गोरिव अन्यं लाङ्गूलमस्य गोलाङ्गूलः, गां लाति लाङ्गूलं वा ॥ १ ॥ १५८ ॥

मृगः कुरङ्गः सारङ्गो वातायुर्हरिणावपि ।

मृग्यते व्याधैर्मृगः ॥ १ ॥ कुरति मार्यमाणः कुरङ्गः "विडिबिलि–" ॥ ( उणा–१०१ ) ॥ इति किदङ्गः, कौ रङ्गतीति वा ॥ २ ॥ सरति सारङ्गः "सृवृ-ञ्यो णित्" ॥ ( उणा–९९ ) ॥ इत्यङ्गः, सारं गच्छतीति वा ॥ ३ ॥ वातमेति वातायुः "कृवापाजि" ॥ (उणा–१) ॥ इत्युण् । 'वात सुखसेवनयोः' वातयति वातायुः इत्यन्ये ॥ ४ ॥ ह्रियते गीतेन हरिणः "द्रुहृवृ" ॥ ( उणा–१९४ ) ॥ इतीणः ॥ ५ ॥

शेषश्चात्र–

मृगे त्वजिनयोनिः स्यात् ॥

मृगभेदा रुरु-न्यङ्कु-रङ्कु-गोकर्ण-शम्बराः ॥ १५९ ॥

चमूरु चीन-चमरा समूरै-ण-र्य-रौहिषा ।

कदली कन्दली कृष्णसार पृषत-रोहितौ ॥ २१० ॥

मृगाणां भेदा विशेषा, रौति रुरुः महान् कृष्णसार "रुपूभ्यां क्रिः" ॥ (उणा-८०७) ॥ इति रु ॥ १ ॥ न्यञ्चति न्यङ्कुः त्रिकेण विपुलोन्नतः शम्बराकृति "मेरव" ॥ (उणा-७२४) ॥ इत्यु, न्यङ्क्वादित्वात् कत्वम् ॥ २ ॥ रमते रङ्कुः "वैधीधमि" ॥ (उणा-७४९) ॥ इति कु ॥ ३ ॥ नारिव कर्णोऽस्य गोकर्णः ॥ ४ ॥ छं वृणोति धावतः अत्यो हरिण ॥ ५ ॥ २०९ ॥ चमति चमूरु महाग्रीवो धवलकेसरवालधिः "चमरुः" ॥ (उणा ८१९) ॥ ६ ॥ चीयते चीनः चित्रकोशः ॥ ७ ॥ चमति चमरो मृगविशेष "कृच्छिचटि" ॥ (उणा-३९७) ॥ इत्यरः ॥८॥ समूयते समूरः "मदुरसुर" ॥ (उणा-३९६) ॥ इति निपात्यते ॥ ९ ॥ एत्येणः "इणुर्विद" ॥ (उणा-१८२) ॥ इति णः ॥ १० ॥ ऋष गतौ स्तुतौ वा स्वरादित्वात्सम्प्रसारणम्, ऋष्यते ऋष्यः हरिण प्रायो वृद्धश्च "ऋषिपानि" ॥ (उणा-३६१) ॥ इति क्यप् ॥ ११ ॥ रोहति रोहिषः, रोहति श्वेतराजीयुक्तः "रुहेर्वृद्धिश्च" ॥ (उणा-५४८) ॥ इतीषः ॥ १२ ॥ कदते कदली "मृदिकन्दि" ॥ (उणा-४६५) ॥ इत्यलः, स्त्रियामयम्, यथाह—

"कदली तु स्त्रियां वेधे कुसुमस्तोम कर्बुरे ।
नीलाग्रे रोमभिर्युक्ता सा विंशत्यङ्गुलायता ॥ १ ॥"

॥ १३ ॥ कन्दान् आति कन्दली श्यामवर्णा हस्तायामा महोदरी त्रिशिरोऽयम् । अगरस्येतो मत्स्यविनन्दाशाह ॥ १४ ॥ कृष्णेन वर्णेन सार शबलः कृष्णसार ॥ १५ ॥ पृषता बिन्दवः सन्त्यस्य पृषतः बिन्दुमान् ॥ १६ ॥ रोहितो लोहितवर्णः ॥ १७ ॥ २१० ॥

दक्षिणेर्मा तु स मृगो यो व्याधैर्दक्षिणे क्षतः ।

दक्षिणमङ्गमीर्मं व्रणमस्य दक्षिणेर्मा व्याधैर्दक्षिणभागे क्षतव्रणः "दक्षिणेर्मा व्याधयोगे" ॥ ७।१।१४३ ॥ इत्यन् समासान्त ॥ १ ॥

वातप्रमीर्वातमृगः

वातं प्रमिमीते वाताभिमुखधावनात् वातप्रमी "वाताद् प्रम क्वि" ॥ (उणा-७११) ॥ इति ईः ॥ १ ॥ वाताभिमुखो मृगो वातमृगः ॥ २ ॥

शशस्तु मृदुलोमक ॥ २११ ॥
शूलिको लोमकर्ण

शशति प्लवते शशः ॥ १ ॥ मृदूनि लोमान्यस्य मृदुलोमकः ॥ २ ॥ ३६१ ॥ शूलमस्त्यस्य शूलिकः ॥ ३ ॥ लोमाकीर्णौ कर्णावस्य लोमकर्णः ॥ ४ ॥

अथ शल्ये शलल-शल्यकौ ।

श्वाविध

शल्यति चलति शल्यः "स्याछामा" ॥ ( उणा-३५७ ) ॥ इति यः ॥१॥ "मृदिकन्दि" ॥ ( उणा ४६५ ) ॥ इत्यले शललः ॥ २ ॥ शल्यानि किरति शल्यकः पुंक्लीबलिङ्गः "क्वचित्" ॥ ५।१।१७१ ॥ इति डः ॥ ३ ॥ श्वानं विध्यति श्वावित् "घमुपसर्गस्य—" ॥ ३।२।८६ ॥ इति दीर्घः ॥४॥

तच्छलाकायां शललं शलमित्यपि ॥ ३६२ ॥

तस्य श्वाविधो रोमशलाकायां शलति शललं त्रिलिङ्गः ॥ १ ॥ अपि शलम् ॥ २ ॥ ३६२ ॥

गोधा निहाका

गुध्यति गोधा ॥१॥ नितरां जहाति निहाका "भीण्शलि—" ॥ ( उणा-२१ ) इति कः । एतौ पुंस्यपि स्त्रीलिङ्गौ ॥ २ ॥

गौधेर-गौधारौ दुष्टतत्सुते ।

गोधाया दुष्टमपत्यं गौधेरः, गौधारः "गोधाया दुष्टे णारश्च" ॥ ६।१।८१ ॥ इति एरण् णारश्च प्रत्ययौ ॥१॥२॥

गौधेयोऽन्यत्र

दुष्टादन्यत्र शुभ्रादित्वादेयणेव ॥ १ ॥

मुसली गोधिका-गोलिके गृहात् ॥ ३६३ ॥

माणिक्या भित्तिका पल्ली कुड्यमत्स्यो गृहोलिका ।

मुस्यति भित्तिर्मुसली ॥१॥ गृहशब्दात् परे गोधिका गोलिका च गृह गुध्यति गृहगोधिका, गृहस्य गोधेव वा ॥२॥ गृह गुलति गृहगोलिका ॥३॥३६३॥ माणिक्य-मस्त्यस्या माणिक्या, शिरोमणियुतत्वात् ॥ ४ ॥ भित्तौ कायति शब्दायते भित्तिका ॥५॥ पलति गच्छति पल्ली ॥ ६ ॥ कुड्ये मत्स्य इव कुड्यमत्स्यः ॥ ७ ॥ गृह्णाति क्षुद्रजन्तून् गृहोली "भ्रह्यावृभ्यः कित्" ॥ ( उणा-४९४ ) ॥ स्वार्थे के गृहोलिका ॥ ८ ॥

स्यादञ्जनाधिका हालिन्यञ्जनिका हलाहलः ॥ ३६४ ॥

अञ्जनेनाऽधिका अञ्जनाधिका ॥ १ ॥ हलस्यावर्त्तं हालिनी ॥ २ ॥ अञ्जयत्यञ्जनी कऽञ्जनिका ॥ ३ ॥ हलति च हलति च हलाहलः ॥ ४ ॥ ॥ ३६४ ॥

स्थूलाऽञ्जनाधिकायां तु ब्राह्मणी रक्तपुच्छिका ।

स्थूला या अञ्जनाऽधिका तस्यां बृंहति ब्राह्मणी ॥ १ ॥ रक्तं पुच्छमस्या रक्तपुच्छिका ॥ २ ॥

कृकलासस्तु सरटः प्रतिसूर्यः शयानकः ॥ १२९५ ॥

कृकं शिरोग्रीवं लासयति कृकलासः ॥ १ ॥ सरति सरटः "शिकटि–" ॥ (उणा–१४२) ॥ इत्यटः ॥ २ ॥ सूर्यस्य प्रतीपः प्रतिसूर्यः ॥ ३ ॥ शेते आदित्याभिमुखं शयानकः "शीभीराजेरानकः" ॥ (उणा–७१) ॥ प्रतिसूर्यं शेते प्रतिसूर्यशयानक इत्येकनाम' इत्यन्ये ॥ ४ ॥ १२९५ ॥

मूषिको मूषको वज्रदशनः खनकोन्दुरौ ।

उन्दुरुश्चाप्याखुश्च सूच्यास्यो वृषलोचनः ॥ १२९६ ॥

मुष्णाति पदं मूषिकः पुंस्त्रीलिङ्गः "मुषेर्दीर्घश्च" ॥ (उणा–४३) ॥ इतीकः ॥ १ ॥ मूषति मूषकः ॥ २ ॥ वज्रवद् दशना अस्य वज्रदशनः ॥ ३ ॥ खनति खनकः "नृत्खनरञ्जः–" ॥ ५।१।६५ ॥ इत्यकट् ॥ ४ ॥ उनत्ति उन्दुरः "वाश्यसि–" ॥ (उणा–४२१) ॥ इत्युरः ॥ ५ ॥ "खिगुरेरु–" ॥ (उणा–८११) ॥ इति निपातनादुन्दुरुः । उन्दरोऽपि ॥ ६ ॥ वर्षति वृषः ॥ ७ ॥ आखनत्याखुः पुंस्त्रीलिङ्गः "पराद्भ्यां मृङ्खनिभ्याम्–" ॥ (उणा–७४२) इति डित् ॥ ८ ॥ सूच्याकारमास्यमस्य सूच्यास्यः ॥ ९ ॥ वृषस्येव लोचने अस्य वृषलोचनः, त्रय ॥ १ ॥ १२९६ ॥

छुछुन्दरी गन्धमूष्यां

छुछु इति शब्देन उपलक्षिता उन्दरी छुछुन्दरी, पृषोदरादित्वात् ॥ १ ॥ गन्धप्रधाना मूषी गन्धमूषी तत्र ॥ २ ॥

गिरिका बालमूषिका ।

गिरति गिरिका "कुशिक–" ॥ (उणा–४५) ॥ इतीके साधुः ॥ १ ॥ 'घटासुर्बालमूषिका' इति दुर्गः ॥ २ ॥

विडाल ओतुर्मार्जारो हीकश्च वृषदंशकः ॥ १२९७ ॥

विडूयते आक्रुश्यते विडालः "कुशिपीडि–" ॥ (उणा–४७६) ॥ इति किदालः, बिलं दारयति वा, बिडमालालामाप्नोतीति वा पृषोदरादित्वात्, विडान्यललति पर्याप्नोतीति वा, बिलं लालयते वा, विड् आलमस्य, आद्विकलादिति वा ॥ १ ॥ अथ

शशति प्लवते शशः ॥ १ ॥ मृदूनि लोमान्यस्य मृदुलोमकः ॥ २ ॥ ३६१ ॥ शूलमस्त्यस्य शूलिकः ॥ ३ ॥ लोमाकीर्णौ कर्णावस्य लोमकर्णः ॥ ४ ॥

अथ शल्ये शललः-शल्यकौ ।

श्वावित्

शलति चलति शल्यः "स्याशामा" ॥ (उणा–३५७) ॥ इति यः ॥१॥ "मृदिकन्दि" ॥ (उणा ४६५) ॥ इत्यले शललः ॥ २ ॥ शल्यानि किरति शल्यकः पुल्लीबलिङ्गः "कसित्" ॥ ५।१।१७१ ॥ इति डः ॥ ३ ॥ श्वानं विध्यति श्वावित् 'घञुपसर्गस्य—" ॥ ३।२।८६ ॥ इति दीर्घः ॥४॥

तच्छलाकायां शललं शलमित्यपि ॥ ३६२ ॥

तस्य श्वाविधो रोमशलाकायां शलति शललं क्लिबलिङ्गः ॥ १ ॥ शलि शलम् ॥ २ ॥ ३६२ ॥

गोधा निहाका

गुध्यति गोधा ॥१॥ नितरां जहाति निहाका "भीण्शलि—" ॥ (उणा–२१) इति कः । एतौ पुम्यभेऽपि स्त्रीलिङ्गौ ॥ २ ॥

गौधेर-गौधारौ दुष्टतत्सुते ।

गोधाया दुष्टमपत्यं गौधेरः, गौधारः "गोधाया दुष्टे णारश्च" ॥ ६।१।८१ ॥ इति एरण् णारश्च प्रत्ययौ ॥१॥२॥

गौधेयोऽन्यत्र

दुष्टादन्यत्र शुभ्रादित्वादेयणेव ॥ १ ॥

मुसली गोधिका-गोलिके गृहात् ॥ ३६३ ॥

माणिक्या भित्तिका पल्ली कुड्यमत्स्यो गृहोलिका ।

मुस्यति भित्तिर्मुसली ॥१॥ गृहशब्दात् परे गोधिका गोलिका च गृहं गुध्यति गृहगोधिका, गृहस्य गोधेव वा ॥२॥ गृहे गुडति गृहगोलिका ॥३॥ ३६३ ॥ माणिक्यमस्त्यस्या माणिक्या, शिरोमणियुक्तत्वात् ॥ ४ ॥ भित्तौ कायति शब्दायते भित्तिका ॥५॥ पलति गच्छति पल्ली ॥ ६ ॥ कुड्ये मत्स्य इव कुड्यमत्स्यः ॥ ७ ॥ गृह्णाति क्षुद्रजन्तून् गृहोली "ग्रहादिभ्यः कित्" ॥ (उणा–४६४) ॥ इत्योलः के गृहोलिका ॥ ८ ॥

स्यादञ्जनाधिका हालिन्यञ्जनिका हलाहलः ॥ ३६४ ॥

अञ्जनमाधिका अञ्जनाधिका ॥ १ ॥ हलमस्त्यस्य हालिनी ॥ २ ॥ अञ्जयत्यञ्जनी कञ्जनिका ॥ ३ ॥ हलति न हसति च हलाहलः ॥ ४ ॥ ॥ ३६४ ॥

स्थूलाऽञ्जनाधिकायां तु ब्राह्मणी रक्तपुच्छिका ।

स्थूला या अञ्जनाऽधिका तस्यां गृहगोधिकायां ब्राह्मणी ॥ १ ॥ रक्तं पुच्छमस्या रक्तपुच्छिका ॥ २ ॥

कृकलासस्तु सरटः प्रतिसूर्यः शयानकः ॥ २६५ ॥

कृकं शिरोग्रीवं लासयति कृकलासः ॥ १ ॥ सरति सरटः "शिम्बपि–" ॥ ( उणा–१४२ ) ॥ इत्यटः ॥ २ ॥ सूर्यस्य प्रतीपः प्रतिसूर्यः ॥ ३ ॥ शेते आदित्याभिमुखं शयानकः "शीभीराजेरानक" ॥ ( उणा–७१) ॥ 'प्रतिसूर्ये सरटे प्रतिसूर्यशयानक इत्येकनाम' इत्यन्ये ॥ ४ ॥ २६५ ॥

मूषिको मूषको वज्रदशनः खनकोन्दुरौ ।

उन्दुरुश्चैव आखुश्च सूच्यास्यो वृषलोचने ॥ २६६ ॥

मुष्णाति धनं मूषिकः पुंस्त्रीलिङ्गः "मुषेर्दीर्घश्च" ॥ ( उणा–४१ ) ॥ इतीकः ॥ १ ॥ मूषति मूषकः ॥ २ ॥ वज्रवद् दशना अस्य वज्रदशनः ॥ ३ ॥ खनति खनकः "शृवृखनरञ्जः–' ॥ ५ । १ । ६५ ॥ इत्याकन् ॥ ४ ॥ उनत्ति उन्दुरः "मद्गुरादयश्च–" ॥ ( उणा–४२३ ) ॥ इत्युरः ॥ ५ ॥ "खर्जिपिञ्जादिभ्य–" ॥ ( उणा–८११ ) ॥ इति निपातनादुन्दुरुः । उन्दरोऽपि ॥ ६ ॥ वर्षति वृषः ॥ ७ ॥ आखनत्याखुः पुंस्त्रीलिङ्गः "पराङ्म्यां खनतिम्यामुः–' ॥ (उणा–७४२) इति डुः ॥ ८ ॥ सूच्याकारमास्यमस्य सूच्यास्यः ॥ ९ ॥ वृषस्येव लोचने अस्य वृषलोचनः, तत्र ॥ १० ॥ २६६ ॥

छुच्छुन्दरी गन्धमूष्यां

छुछु इति शब्देन उपलक्षिता उन्दरी छुछुन्दरी, पृषोदरादित्वात् ॥ १ ॥ गन्धप्रधाना मूषी गन्धमूषी तत्र ॥ २ ॥

गिरिका बालमूषिका ।

गिरति गिरिका "कृषिक–' ॥ ( उणा–४५ ) ॥ इतीकन् प्रत्ययः ॥ १ ॥ 'अल्पास्तुर्बालमूषिका' इति दुर्गः ॥ २ ॥

बिडाल ओतुर्मार्जारो वृषदंशक आखुभुक् ॥ २६७ ॥

बिड्यते आक्रुश्यते बिडालः "कुसिपोलि–" ॥ ( उणा–४१६ ) ॥ इति बिडालः बिडं दारयति वा, बिडमालमलं भावयतीति वा पृषोदरादित्वात्, बिलान्यलति पर्याप्नोतीति वा बिडम् लास्यते वा बिडं आलमस्य, अङ्गुलित्वादित्व वा ॥ १ ॥ अत

स्वाद्यन्य ओतुः “ कृसिकमि–” ( उणा–७७२ ) ॥ इति तुन्, “ मध्यवि–” ॥४।१।१०९॥ इत्यूटादेशे गुणः ॥ २ ॥ आखुभ्यो गृहं मार्ष्टि मार्जारः “मग्यद्रि–”॥ ( उणा–४०५ ) ॥ इत्यारः ॥ ३ ॥ जिहेतीव आत्मयशश्चक्षेषेण हीकु “ हिय चित्” ॥ (उणा–७५०) ॥ इति कु, ‘हीकुवनमार्जार ’ इत्यन्ये ॥४॥ वृषानाखून् दशति वृषदंशकः ॥ ५ ॥ २६७॥

जाहको गात्रसकोची मण्डली

जहाति सर्पादिभयं जाहकः “कीचक–” ( उणा– ३३ ) इत्यके निपात्यते ॥ १ ॥ गात्रं सकोचयति गात्रसंकोची ॥ २ ॥ मण्डलाकृतिरस्त्यस्य मण्डली ॥३॥

नकुलः पुन ।
पिङ्गलः सर्पहा बभ्रुः

नास्य कुलमस्ति नकुलः, नखादित्वात्, नलमस्मादहिरिति वा “ कुमुल– ”॥ ( उणा–४८७ ) ॥ इत्युले निपात्यते ॥ १ ॥ पिङ्गलो वर्णेन ॥ २ ॥ सर्पान् हन्ति सर्पहा ॥ ३ ॥ बिभर्ति बभ्रु “ हनिया–” ॥ ( उणा– ७३३ ) ॥ इति किदु द्वित्वं च ॥ ४ ॥

सर्पोऽहि पवनाशन ॥ २६८ ॥
भोगी भुजङ्ग–भुजगावुरगो द्विजिह्व–
व्यालौ भुजङ्गम–सरीसृप–दीर्घजिह्वाः ।
काकोदरो विषधरः फणभृत् पृदाकु–
र्दिकर्ण–कुण्डलि–बिलेशय–दन्दशूका, ॥ २६९ ॥
दर्वीकर कञ्चुकि–चक्रि–गूढ–
पात्–पन्नगा जिह्मग–लेलिहानौ ।
कुम्भीनसा–ऽऽशीविष–दीर्घपृष्ठा

सर्पति सर्पः, सरतीति वा “ भापायणि–” ( उणा–२९६ ) ॥ इति पः ॥ १ ॥ अहते अहि पुम्लिङ्ग “ अग्निकुण्ठि–” ॥ ( उणा–६१४ ) ॥ इति इनलोपश्च ॥ २ ॥ पवनमश्नाति पवनाशन ॥ ३ ॥ २६८ ॥ भोग सर्पदेहः फण, कुटिला गतिर्वा, अर्थोऽस्त्यस्य भोगी ॥ ४ ॥ भुजेन कौटिल्येन, भुज इव वा गच्छति भुजङ्गः भुजग, भुजङ्गमः “नाम्नो गमः खड्डौ च–” ॥५।१।१३१॥ इति खड्च ॥५॥६१७॥ उरसा गच्छत्युरग, पृषोदरादित्वात् सलोपः ॥८॥ द्वे जिह्वे अस्य द्विजिह्व ॥९॥ विविधमासमन्तोऽस्माद् व्याल, इन्नुमुखमोऽस्मात्तीति वा ॥१०॥

सर्पति सरीसृपः “ सञ्जकृतितलुकाकोलीसरीसृपादयः ” ॥ ( उणा-१८ ) ॥ इति साधुः, सरीसृप्यत इति वा ॥ ११ ॥ दीर्घा जिह्वाऽस्य दीर्घजिह्वः ॥ १२ ॥ काकस्येवोदरमस्य काकोदरः, काकोलं विषमुदरेऽस्येति वा ॥ १३ ॥ विषं धरति विषधरः ॥ १४ ॥ फणं बिभर्ति फणभृत् ॥ १५ ॥ म्रियते म्यागच्छति पृदाकुः “ सृपृम्यां पाकुः ” ॥ ( उणा-७५६ ) ॥ १६ ॥ चक्षुषैव कर्णावस्य चक्षुःकर्णः । अत एव गोकर्णः ॥ १७ ॥ कुण्डलाकारताऽस्त्यस्य कुण्डली ॥ १८ ॥ बिले शेते बिलेशयः “ शयवासिवासे-” ॥ ३ । २ । २५ ॥ इति सप्तम्या अलुप् ॥ १९ ॥ पवित्रं दन्तीत्येवंशीलो दन्दशूकः, दंशेर्यङन्तात् “यजिजपिदंशि-” ॥ ५ । २ । ४७ ॥ इत्यूकः ॥ २० ॥ ३६९ ॥ दर्वी फण एव करो हस्तोऽस्य महाराष्ट्रो दर्वीकरः ॥ २१ ॥ कञ्चुकोऽस्त्यस्य कञ्चुकी ॥ २२ ॥ चक्रं मण्डलमस्त्यस्य चक्री ॥ २३ ॥ गूढः पादा अस्य गूढपात्, पादसमानार्थैः पादकल्पोऽस्ति ॥ २४ ॥ पद्भ्यां न गच्छति पन्नगः, नखादित्वात्, पन्नं गच्छतीति वा ॥ २५ ॥ जिह्मं वक्रं गच्छति जिह्मगः ॥ २६ ॥ भूप केशीत्येवंशीलो भेकिहमः, विशेर्यङ्लुबन्तात् “ यङ्यपिचीति ” ॥ ५ । २ । २४ ॥ इति आनः ॥ २७ ॥ कुम्भीव नासिकाऽस्य कुम्भीनसः “अस्थूकाय-” ॥ ७ । ३ । १६१ ॥ इति नसादेशः ॥ २८ ॥ आशीस्तालुगता दंष्ट्रा तस्यां विषमस्य आशीविषः, पृषोदरादित्वात् श्लोपः, आमयस्य विषमस्तीति वा ॥२९॥ दीर्घं पृष्ठमस्य दीर्घपृष्ठः ॥ ३० ॥

स्याद् राजसर्पस्तु भुजङ्गभोजी ॥ १३७० ॥

सर्पाणां राजा राजसर्पः ॥ १ ॥ भुजङ्गान् भुङ्क्ते भुजङ्गभोजी ॥ २ ॥ १३७० ॥

शेषश्चात्र—

अथो भुजगभोजिनि ।

अहीरणी द्विमुखश्च ॥

चक्रमण्डल्यजगरः पारीन्द्रो वाहसः शयुः ।

चक्राकारं मण्डलमस्त्यस्य चक्रमण्डली ॥ १ ॥ अजति क्षिपत्यजगरः “अठरः” ( उणा-४०३ ) ॥ इत्यरे निपात्यते, अजं गिरतीति वा, अजो निस्त्रो गरोऽस्येति वा ॥ २ ॥ पारिषु इन्द्रः पारीन्द्रः ॥ ३ ॥ वहति वाहसः “ वहियुभ्यां वा ” ॥ ( उणा-५७१ ) ॥ इति णिदसः, वाहं गतिं स्यतीति वा ॥ ४ ॥ शेतेऽवश्यं शयुः, “भृमृतृ- ॥ ( उणा-७१६ ) ॥ इत्युः ॥ ५ ॥

अलगर्दो जलव्यालः

न खगमर्दयति निर्विषत्वादखगर्दः । 'अलीव गर्दत्यलीगर्दः' इत्यन्ये ॥ १ ॥ जलस्य व्यालो जलव्यालः ॥ २ ॥

समौ राजिल-दुन्दुभौ ॥ १७१ ॥

राजीर्देहे लाति राजिलः ॥ १ ॥ दाम्यति दुन्दुभः " दमो दुण्ड् च " ॥ ( उणा–३३५ ) ॥ इत्युभ । 'दुन्दु भाषते दुन्दुभः' इत्येके ॥ २ ॥ १७१ ॥

भवेत् तिलित्सो गोनासो गोनसो घोणसोऽपि च ।

तिलति स्निह्यति तिलित्सः "फनस " ॥ ( उणा–५७३ ) ॥ इति निपात्यते, तिलत्त्सरतीति वा, पृषोदरादित्वात् ॥ १ ॥ गोरिव नासोऽस्य गोनासः, गोरिव नासिकाऽस्य गोनसः, "अस्थूलाच्च नसः " ॥ ७।३।१६१ ॥ इति नसादेशः ॥ २॥ ३ ॥ पृषोदरादित्वाद् घत्वे घोणसः, घोणतेऽनेन द्विष्टो वा "फनसतामरस " ॥ ( उणा–५७३ ) ॥ इति साधुः ॥ ४ ॥

कुक्कुटाहि कुक्कुटाभो वर्णेन च रवेण च ॥ १७२ ॥

कुक्कुटावयवयोगात् कुक्कुटः, अह्यवयवयोगादहिः, कुक्कुटश्चासावहिश्च कुक्कुटाहि ॥ १ ॥ १७२ ॥

नागाः पुनः काद्रवेयाः

न न गच्छन्ति नागाः ॥१॥ कद्र्वा अपत्यानि काद्रवेयाः, शुभ्रादित्वादेयण् । सर्पेभ्योऽन्ये देवयोनयोऽमी ॥ २ ॥

तेषां भोगावती पुरी ।

तेषां नागानां पुरी, भोगाः सन्त्यस्यां भोगावती "अनजिरादि–" ॥३।२।७८॥ इति मतौ दीर्घत्वम् ॥ १ ॥

शेषो नागाधिपोऽनन्तो द्विसहस्राक्ष आलुकः ॥ १७३ ॥

शिष्यति अस्मिन् धात्रीति शेषः " श्लिष वो च " ॥ ( उणा–५४३ ) ॥ इति घः, शिष्यत इति वा । 'शेतेऽस्मिन् हरिः' इत्यन्ये ॥ १॥ नागानामधिपो नागाधिपः ॥ २ ॥ नास्त्यन्तोऽस्य अनन्तः ॥ ३ ॥ द्वे सहस्रे अक्ष्णामस्य द्विसहस्राक्षः ॥ ४ ॥ अलति पातालमालुकः " कञ्चुक–" ॥ ( उणा–५७ ) ॥ इत्युके निपात्यते । एक कुण्डलोऽपि ॥ ५ ॥ १७३ ॥

तद्वर्णविशेषमाह—

स च श्यामोऽथवा शुक्लः सितपङ्कजलाञ्छनः ।

स शेषनागः ॥ १ ॥

वासुकिस्तु सर्पराजः श्वेतो नीलसरोजवान् ॥ ३७४ ॥

वसुकस्यापत्यं वासुकिः, सर्पाणां राजा सर्पराजः, श्वेतवर्णो नीलोत्पललाञ्छन-वान् ॥ १ ॥ ३७४ ॥

तक्षकस्तु लोहिताङ्गः स्वस्तिकाङ्कितमस्तकः ।

तक्ष्णोति रिपून् तक्षकः ॥ १ ॥

महापद्मस्त्वतिशुक्लो दशबिन्दुकमस्तकः ॥ ३७५ ॥

महान्ति पद्मान्यस्य महापद्मः ॥ १ ॥ ३७५ ॥

शङ्खस्तु पीतो बिभ्राणो रेखामिन्दुसितां गले ।

शाम्यति शङ्खः ॥ १ ॥

कुलिकोऽर्धचन्द्रमौलिर्ज्वालाधूमसमप्रभः ॥ ३७६ ॥

प्रशस्तं कुलमस्यास्ति कुलिकः ॥ १ ॥ ३७६ ॥

अथ कम्बला-ऽश्वतर-धृतराष्ट्र-बलाहकाः ।

काम्यते कम्बलः ॥ १ ॥ अश्ववत् तरति अश्वतरः ॥ २ ॥ धृतं राष्ट्रमनेन धृतराष्ट्रः ॥ ३ ॥ बलते बलाहकः ॥ ४ ॥ एतेनामानश्चत्वारो नागाः ॥

इत्यादयोऽपरे नागास्तत्तत्कुलसमुद्भवाः ॥ ३७७ ॥

आदिशब्दात् महानीलादयः यथाह—

"महानीलः कुरङ्गश्च पुष्पदन्तश्च दुर्मुखः ।
कपिलो वामनः शङ्कुरोमा च करवीरकः ॥ १ ॥
एलापत्रः शुक्तिकर्ण-हस्तिभद्रौ धनञ्जयः ।
दधिमुखः श्यामनाभोत्पलको दधिपूरणः ॥ २ ॥
हारिद्रको वर्धिकर्णो मणिः शृङ्गारपिण्डकः ।
कालियः शङ्खचूडश्च चित्रकः शङ्खपालकः ॥ ३ ॥
इत्यादयोऽपरे नागास्तत्तत्कुलप्रसूतयः ॥' इति ॥ १ ॥ ३७७ ॥

निर्मुक्तो मुक्तनिर्मोकः

निर्मुच्यते स्म निर्मुक्तः ॥१॥ मुक्तो निर्मोकोऽनेन मुक्तनिर्मोकः ॥२॥

उपसंहारमाह—

सविषा निर्विषाश्च ते ।

ते सर्पाः सविषा नागादयः निर्विषा अजगरादयः ॥ १ ॥

नागाः स्युर्दृग्विषा

दृशि विषमेषां दृग्विषाः ॥ १ ॥

प्रसङ्गादन्येषामपि सविषत्वं ज्ञापयन्नाह—

छमविषास्तु वृश्चिकादय ॥ ३७८ ॥

व्याघ्रादयो लोमविषा नखविषा नरादय ।

लालाविषास्तु लूताद्या कालान्तरविषा पुन ॥ ३७९ ॥

मूषिकाद्या

स्पष्टम् ॥ ३७८ ॥ ३७९ ॥

दूषीविष त्ववीर्यमौषधादिभि ।

दूष्यत दूषी, दूषीलक्षण विष दूषीविषम्, औषधमन्त्रप्रयोगैर्निर्वीर्यीकृतम् ॥१॥

कृत्रिम तु विष चार गरश्चोपविष च तत् ॥ ३८० ॥

कृत्रिममौषधादियोगजनितं विष चार्यते चारम् ॥ १ ॥ गिरति जीवं गरः ॥ २ ॥ उपगतं विषेण उपविषम् ॥ ३ ॥ ३८० ॥

भोगोऽहिकाय

भुजति कुटिलीभवत्यनेनास्मिन् वा भोग ॥ १ ॥

दंष्ट्राशी

अहेर्दंष्ट्रा, आश्यते हिंस्यतेऽनया आशी, यदाह–"आशीस्तालुगता दंष्ट्रा यया विद्धो न जीवति"। "कृत्संपदादि–" ॥ ५ । ३ । ११४ ॥ इति क्विप् "ङौ" ॥ ४ । ४ । ११९ ॥ इतीआदेश । 'ईकारान्तोऽयम्' इत्यन्ये ॥ १ ॥

दर्वी भोग' फटः स्फट ।

फण

दृणात्यनया दर्विः "कृगृशृभ्यो वि" ॥ ( उणा–७०४ ) ॥ ङ्यां दर्वी ॥१॥ भुजति भुङ्क्ते वाऽनेन भोगः ॥ २ ॥ स्फायते फट "घटाघाटा–" ( उणा–१४१ ) ॥ इति ते निपात्यते ॥ ३ ॥ स्फटति विशीर्यतेऽनेन स्फटः, स्यादित्वात् कः ॥ ४ ॥ फणति विस्तार गच्छति फण ॥ ५ ॥ फटादयस्त्रय पुंस्त्रीलिङ्गाः । फण नपुंसकं समरस्थान्त्राः ॥

अहिकोशे तु निर्ल्वयनी-निर्मोक-कञ्चुका ॥ ३८१ ॥

अहे कोश इव अहिकोशोऽहित्वक् तत्र ॥ १ ॥ नितरां लूयते निर्ल्वयनी "विदन–" ॥ ( उणा–२७५ ) ॥ इत्यन निपात्यते । 'नितरां लीयत निर्ल्यनी' इत्यन्य ॥ २ ॥ निर्मुच्यते निर्मोक ॥ ३ ॥ कञ्चुक इव कञ्चुक, पुंक्लीबलिङ्ग कञ्च्यते बध्यतेऽनेन वा ॥ ४ ॥ ३८१ ॥

॥ उक्ताः स्थलचरा पञ्चेन्द्रियाः ॥

खचरानाह—

विहगो विहङ्गम-खगौ पतगो विहङ्ग-
शकुनि शकुन्ति-शकुनौ वि-वय-शकुन्ताः ।
नभसङ्गमो विकिर-पत्ररथौ विहायो
द्विज-पक्षि-विष्किर-पतत्रि-पतत्-पतङ्गाः ॥ १८२ ॥
पित्सन् नीड-ऽण्डजोऽगौकाः

विहायसा गच्छति विहगः, विहङ्गमः, विहङ्गः, "गमो गमः खड्डौ च विहायसस्तु विहः" ॥ ५ । १ । १३१ ॥ इति साधवः ॥ १ ॥ २ ॥ ३ ॥ खे गच्छति खगः ॥ ४ ॥ पतत्समेन पतः पक्षः स्वार्दित्वात् कः, पतैर्गच्छति पतगः ॥ ५ ॥ शक्नोति शकुनिः "शकेरुनिः" ॥ (उणा–६८४) ॥ ६ ॥ "शकेरुन्तिः" ॥ (उणा–६६६) इति शकुन्तिः ॥ ७ ॥ "यम्यजि–" ॥ (उणा–२८८) ॥ इत्युने शकुनः ॥ ८ ॥ वेति गच्छति विः "वीपीभ्यां डित्" ॥ (उणा–६१६) ॥ इति डिः ॥ ९ ॥ वयते वयः "असू" ॥ (उणा–९५०) ॥ इत्यसु ॥ १० ॥ शक्नोति शकुन्तः "शकेरुन्तः" ॥ (उणा–२२१) ॥ ११ ॥ नभःपर्यायोऽकारान्तो नभसशब्दः, नभसं गच्छति नभसङ्गमः ॥ १२ ॥ विकिरति भक्ष्यं विकिरः "नाम्युपान्त्य–" ॥ ५ । १ । ५४ ॥ इति कः ॥ १३ ॥ पत्राणि पक्षा रथोऽस्य पत्ररथः ॥ १४ ॥ विजिहीते विहायः "विहायस्सुमनस्–" ॥ (उणा–९७६) ॥ इत्यसि निपात्यते ॥ १५ ॥ द्वाभ्यां मातृगर्भाण्डाभ्यां जातो द्विजः ॥ १६ ॥ पक्षा सन्त्यस्य पक्षी ॥ १७ ॥ विकिरति विष्किरः "वौ विष्किरो वा" ॥ ४ । ४ । ९६ ॥ इति स्सडागमः ॥ १८ ॥ पतति पतत्री "पतेरत्रिन्" ॥ (उणा–९३०) ॥ पतत्राणि सन्त्यस्य वा पतति पतत्रिरित्यकारान्तो वा "पतेरत्रि" ॥ (उणा–६९७) ॥ इत्यत्रिः ॥ १९ ॥ पतति पतन् ॥ २० ॥ "पतितमि–" ॥ (उणा–९८) ॥ इत्यङ्गे पतङ्गः, पतैर्गच्छतीति वा ॥ २१ ॥ १८२ ॥ पतितुमिच्छति पित्सन् "रभलभशकपत–" ॥ ४ । १ । २१ ॥ इति सनि इस्य द्वित्वाभावश्च ॥ २२ ॥ नीडाद् गृहाज्जातो नीडजः ॥ २३ ॥ अण्डजः ॥ २४ ॥ अगो वृक्ष ओकोऽस्या अगौकाः ॥ २५ ॥

शेषश्चात्र—

भवेत् पक्षिणि चञ्चुमान् ॥
कण्ठाग्निः कीकसमुखो लोमकी रसनारदः ।

सारिः-नाडीचरणौ ॥

चञ्चुश्चञ्चू सृपाटिका ॥

त्रोटिश्च

चञ्चत्यनया चञ्चुः "सृमृगृ-" ॥ (उणा-७१६) ॥ इत्यु ॥ १ ॥ "कृषि-चमि-" ॥ (उणा-८२९) ॥ इति बहुवचनादूप्रत्यये चञ्चूः ॥ २ ॥ सृपति चलति सृपाटी "सृसपे किद्" ॥ (उणा-१४६) ॥ के सृपाटिका ॥ ३ ॥ त्रोटयति त्रोटिः ॥ ४ ॥ एते स्त्रीलिङ्गाः ॥

पत्रं पतत्रं पिच्छं वाजस्तनूरुहम् ॥ १८३ ॥

पक्षो गरुच्छदश्चापि

पतन्त्यनेन पत्रं "नीदाम्व्-" ॥ ५ । २ । ८८ ॥ इति त्रट् ॥ १ ॥ "कृग्-नशि-" ॥ (उणा-४५६) ॥ इत्यत्रे पतत्रम्, पतन्तं त्रायते वा ॥ २ ॥ पीयते पिच्छं "पीपूले ह्रस्वश्च" ॥ (उणा-१२५) ॥ इति छक् । पिच्छमपि ॥ ३ ॥ वजन्त्यनेन वाजः ॥ ४ ॥ तन्वां रोहति तनूरुहं पुंक्लीबलिङ्गः ॥ ५ ॥ १८३ ॥ पच्यते कालेन पक्षः "मावावदि-" ॥ (उणा ५६४) ॥ इति सः ॥ ६ ॥ गिरति खं गरुत् "ग्रो मादिर्वा" ॥ (उणा-८९०) इत्युत् ॥ ७ ॥ छाद्यतेऽनेन छदः ॥ ८ ॥ पुंक्लीबलिङ्गावेतौ ॥

पक्षमूलं तु पक्षतिः ।

पक्षस्य मूलं पक्षतिः स्त्रीलिङ्गः "पक्षात् तिः" ॥ ७ । १ । ८९ ॥ १ ॥

प्रडीनो-ड्डीन-सण्डीन-डयनानि नभोगतौ ॥ १८४ ॥

प्रडयनं प्रडीनं "क्लीबे क्तः" ॥ ५ । ३ । १२३ ॥ "सूयत्याद्य-" ॥ ४ । २ । ७० ॥ इति क्तस्य नत्वम् ॥ १ ॥ एवमुड्डीनम् ॥ २ ॥ सण्डीयते सण्डीनम् ॥ ३ ॥ डीयते डयनम् ॥ ४ ॥ नभसि गमनं नभोगतिस्तस्याम् ॥ ५ ॥ १८४ ॥

पेशीकोशोऽण्डे

पेशीनां मांसखण्डानां कोशः ॥ १ ॥ अमति भिःसरत्यस्मादण्डं पुंक्लीबलिङ्गः "पञ्चमाद्-" ॥ (उणा-१६८) ॥ इति डः तत्र । तिस्रः सञ्ज्ञा इति गौडः ॥ २ ॥

कुलायो नीडे

कोलन्त्यत्र कुलायः "कुलिकुलि-" ॥ (उणा-३७१) ॥ इति कायः, कुल-मेति वा ॥ १ ॥ नीयते नीडः, त्रिलिङ्गः "क्रुडुनी-" ॥ (उणा-१७०) ॥ इति किद् डस्तत्र ॥ २ ॥

केकी तु सर्पभुक् ।
मयूर-बर्हिणौ नीलकण्ठो मेघसुहृच्छिखी ॥ २८५ ॥
शुक्लापाङ्गः

केकाऽस्त्यस्य केकी, शिखादित्वादिन् ॥ १ ॥ सर्पान् भुङ्क्ते सर्पभुक् ॥ २ ॥ मीनात्यहीन् मयूरः 'मीमसि–'' ॥ ( उणा–४२७ ) ॥ इत्यूर , मह्यां रौतीति वा, पृषोदरादित्वात् ॥ ३ ॥ बर्हाणि सन्त्यस्य बर्हिणः '' फलबर्हात्–'' ॥७ । २ । १३॥ इतीन , बर्हतीति वा ''द्रुहबर्हि–'' ॥ ( उणा–१९४ ) ॥ इतीण । शिखादित्वादिनि बर्हीति वा ॥४॥ नील कण्ठोऽस्य नीलकण्ठः ॥५॥ मेघस्य सुहृत्, मेघ सुहृदस्येति वा मेघसुहृत् ॥ ६ ॥ शिखाऽस्त्यस्य शिखी, यौगिकत्वात् शिखावल ॥ ७ ॥ २८५ ॥ शुक्लावपाङ्गावस्य शुक्लापाङ्ग ॥ ८ ॥

शेषश्चात्र–

मयूरे चित्रपिङ्गल ॥
भुजङ्गभुक् स्थिरमद शिखण्डिकशिखा गरमत ।
मार्जारकण्ठो मरको मेघनादानुलासक ॥
मयूको बहुलग्रीवः वनवासश्च चन्द्रकी ॥

अस्य वाक् केका

अस्य मयूरस्य वाणी कायस्थनया केका ' सिकतुरुच्क– ॥ ( उणा–२६ ) इति के निपात्यते, के मूर्ध्नि कायतीति वा ॥ १ ॥

पिच्छं बर्हं शिखण्डक ।
प्रचलाकः कलापश्च

अस्य मयूरस्य पिच्छम् ॥१॥ बर्हति मुखेनोर्ध्वीभवति बर्हम्, पुंक्लीबलिङ्ग ॥२॥ शिखाभिर्वर्धते शिखण्ड '' शकित् '' ॥ ५ । १ । १०१ ॥ इति के पृषोदरादित्वात् साधु ॥ ३ ॥ प्रचलति प्रचलाक ' सभाक–'' ॥ ( उणा–३७ ) ॥ इति निपात्यमाक , प्रचलमकमनेन वा ॥ ४ ॥ कल्पते कलाप , कलां पातीति वा ॥ ५ ॥

मेचकश्चन्द्रक समौ ॥ २८६ ॥

मेचको मिश्रवर्णत्वात्, यत् व्यासः– बर्हिकण्ठसमं वर्णं मेचकं ब्रुवते बुधा इति ॥ १ ॥ चन्द्रप्रतिकृतिश्चन्द्रक ॥ २ ॥ २८६ ॥

घनप्रिय परभृतस्ताम्राक्ष कोकिल पिकः ।
कलकण्ठ काकपुष्ट

धनं प्रियमस्य घनप्रियः ॥ १ ॥ परेण अन्येन भ्रियते पुष्यते परभृतः, काकैः पुष्टत्वात्। अन्यभृत-परपुष्टावपि ॥ २ ॥ ताम्रे अक्षिणी अस्य ताम्राक्षः ॥३॥ कोकते चित्तं गृह्णाति कोकिलः "कल्यनि" ॥ (उणा–४८१) ॥ इतीलः, स्त्रियामजादित्वादापि कोकिला ॥ ४ ॥ पिबति चूतरसं पिकः "पापुलि-" ॥ (उणा–४१) ॥ इति किदिकः, अपिकायति वा, पृषोदरादित्वात् ॥ ५ ॥ कलः कण्ठोऽस्य कलकण्ठः ॥ ६ ॥ काकेन पुष्यते काकपुष्टः ॥ ७ ॥

शेषश्चात्र–

कोकिले तु मदोल्लापी काकजातो रतोद्वहः ।
मधुघोषो मधुकण्ठः सुधाकण्ठः कुहूमुखः ॥
घोषयित्नुः पोषयित्नुः कामतालः कुनालिकः ॥

काकोऽरिष्टः सकृत्प्रजः ॥ १८७ ॥
आत्मघोषश्चिरजीवी घूकारिः करटो द्विकः ।
एकदृग् बलिभुग् ध्वाङ्क्षो मौकुलिर्वायसोऽन्यभृत् ॥१८८॥

कायति काकः "भीण्शलि-" ॥ (उणा–२१) ॥ इति कः, कामस्य कायति वा, कक्यते लौल्यादिति वा, ईषत् कायति वा ॥ १ ॥ नास्ति रिष्टं मरणमस्य, अमृतभुक्त्वादरिष्टः ॥ २ ॥ सकृदेकवारं प्रजायते सकृत्प्रजाः, सकृत् प्रजाऽपत्यमस्य वा ॥ ३ ॥ १८७ ॥ आत्मनः स्वनाम्नो घोषोऽस्य आत्मघोषः, काकेति भाषणात् ॥ ४ ॥ चिरं जीवति चिरजीवी ॥ ५ ॥ घूकाणामरिः घूकारिः ॥ ६ ॥ करोति शब्दं करटः "दिव्यवि-" ॥ (उणा–१४२) इत्यटः, 'क' इति रटतीति वा ॥ ७ ॥ द्वौ ककारौ नाम्न्यस्य द्विकः ॥८॥ एका दृक्, एकदृगस्य रामेण काणीकृतत्वात् ॥९॥ बलिं भुङ्क्ते बलिभुक्, वैश्वदेवभागार्हत्वात्। बलिपुष्टोऽपि ॥१०॥ ध्वाङ्क्षति काङ्क्षति ध्वाङ्क्षः ॥ ११ ॥ माति मौकुलिः "माबाशिम्यामोकुलिमकौ" ॥ (उणा–७०३) ॥ इत्योकुलिः ॥ १२ ॥ वयते वायसः "वयिभ्यां णित्" ॥ (उणा–५७०) ॥ इत्यसः, वया एव वा, प्रज्ञादित्वादण् ॥ १३ ॥ अन्यान् पिकान् बिभर्ति पुष्णात्यन्यभृत् ॥ १४ ॥ १८८ ॥

वृद्ध-द्रोण-दग्ध-कृष्ण-पर्वतेभ्यस्त्वसौ परः ।
वनाश्रयश्च काकोलः

वृद्धादिभ्यः परोऽसौ काकः वृद्धकाकः ॥ १ ॥ 'द्रुणस् हिंसायाम्' द्रोणकाकः । द्रोणाऽपि ॥ २ ॥ दग्धकाकः ॥ ३ ॥ कृष्णकाकः ॥ ४ ॥ पर्वतकाकः ॥ ५ ॥ वनमाश्रयाऽस्य वनाश्रयः ॥ ६ ॥ ईषत् कोलति काकोलः ॥ ७ ॥

मद्गुस्तु जलवायसः ॥ १८९ ॥

मज्जति जले मद्गुः "मस्जेर्गुः" ॥ ( उणा–७१६ ) ॥ इत्यु, न्यङ्क्वादित्वाद् गत्वम् ॥ १ ॥ जलचारी वायसो जलवायसः ॥ २ ॥ १८९ ॥

घूके निशाटः काकारिः कौशिकोलूक-पेचकाः ।

दिवान्धः

घवते शब्दायते घूकः "घुघुहि-" ॥ ( उणा–२४ ) ॥ इति को दीर्घत्वं च, घूशब्दं करोतीति वा, तत्र ॥ १ ॥ निशायामटतीति निशाटः ॥ २ ॥ काकानामरिः काकारिः ॥ ३ ॥ कोशः प्रयोजनमस्य कौशिकः, विलेशयत्वात्, कुशिकस्यापत्यमिति वा कौ शेते इति वा पृषोदरादित्वात् ॥ ४ ॥ वलत्युलूकः "वल्मूक" ॥ ( उणा–६१ ) ॥ इत्यूके निपात्यते ऊर्ध्वं लोकयते ऊर्ध्वौ कर्णावस्येति वा पृषोदरादित्वात् ॥५॥ पचति पेचकः "कीचक-" ॥ ( उणा–३३ ) ॥ इत्यके निपात्यते ॥ ६ ॥ दिवा दिवसेऽन्धो दिवान्धः ॥ ७ ॥

अथ निशावेदी कुक्कुटश्चरणायुधः ॥ १९० ॥

कृकवाकुस्ताम्रचूडो विवृताक्षः शिखण्डिकः ।

निशां वेदयति ज्ञापयति निशावेदी ॥ १ ॥ कोकते एरणाति कुत्रचन्द्रम् कुक्कुटः पुल्लीवलिङ्गः "मर्कुटकुक्कुट" ॥ ( उणा–१५५ ) ॥ इत्युटे निपात्यते, कुगिरस्तु कारणेन कुटतीति वा ॥ २ ॥ चरणावेव आयुधमस्य चरणायुधः ॥ ३ ॥ १९० ॥ कृकेण शिरोग्रीवेण, कृकमव्यक्तं वा वक्ति कृकवाकुः "कृकस्पूराङ्गुच क् च" ॥ ( उणा–७२८ ) ॥ इति णित् ॥ ४ ॥ ताम्रा चूडाऽस्य ताम्रचूडः ॥ ५ ॥ विवृते अक्षिणी अस्य विवृताक्षः ॥ ६ ॥ शिखण्डोऽस्त्यस्य शिखण्डिकः ॥ ७ ॥

शेषश्चात्र—

कुक्कुटे तु धर्मिनादधर्मयूको महायुधः ।
मयूरचटकः शौण्डो रणेच्छुश्च कलाधिकः ॥
आरणी शिखिरो बोधिर्नन्दीकः पुष्टिवर्धनः ।
चित्रवाजो महायोगी स्वस्तिको मणिकण्ठकः ॥
उषाकीलो विशाकश्च ग्राम्यस्तु ग्रामकुक्कुटः ॥

हंसाश्चक्राङ्ग-वक्राङ्ग मानसौकः सितच्छदाः ॥ १९१ ॥

हन्ति गच्छन्ति हंसाः "मावावदि–" ॥ ( उणा–५६४ ) ॥ इति सः ॥ १ ॥ चक्राकारमङ्गमेषां चक्राङ्गाः ॥ २ ॥ वक्रमङ्गमेषां वक्राङ्गाः ॥ ३ ॥ मानसाख्ये देवसरसि ओक एषां मानसौकसः ॥४॥ सितच्छदा एषां सितच्छदाः ॥५॥१९१॥

शेषश्चात्र—

हंसेषु तु मराला स्युः ॥

राजहंसास्त्वमी चञ्चुचरणैरतिलोहितैः ।

हंसानां राजानो राजहंसाः, अमी इति हंसा', चञ्चुसहितैश्चरणैरिति लक्षणे तृतीया ॥ १ ॥

मल्लिकाक्षास्तु मलिनैः

चञ्चुचरणैरित्यधिकारः मल्लिकाकारे अक्षिणी एषां मल्लिकाक्षा , शुक्लापाङ्गत्वात् ॥१॥

धार्तराष्ट्राः सितेतरैः ॥ १९२ ॥

कृष्णैश्चञ्चुचरणैः , धृतराष्ट्रआख्ये भवा धार्तराष्ट्रा , राजहंसेभ्यो न्यूनत्वात् , धृतराष्ट्रा एव वा, प्रज्ञादित्वादण् ॥ १ ॥ १९२ ॥

कादम्बास्तु कलहंसाः पक्षैः स्युरतिधूसरैः ।

कदि वैक्लव्ये सौत्र , कदन्ते प्रावृषि विक्लवन्ते कादम्बा' " कदम्बिद्वा " ॥ ( उणा-३२२ ) ॥ इत्यम्बः, कदम्बस्येमे शयचारित्वादिति वा ॥ १ ॥ कलध्वनयो हंसा कलहंसा ॥ २ ॥

वारला वरला हंसी वारटा वरटा च सा ॥ १९३ ॥

म्रियते वारला " मुरल-" ॥ ( उणा-४७४ ) ॥ इत्यले निपात्यते, वा पानीयमस्ति वा ॥ १ ॥ वरं लाति वरला ॥ २ ॥ हंसी हंसकान्ता ॥ ३ ॥ वारि सलिले अटति वारटा ॥ ४ ॥ म्रियते वरटा " दिन्वदि-" ॥ ( उणा-१४२ ) ॥ इत्यट' ॥ ५ ॥ १९३ ॥

दार्वाघाट शतपत्रः

दारु आहन्ति दार्वाघाट "कर्मणोऽण्" ॥ ५ । १ । ७२ ॥ इत्यणि पृषोदरादित्वात् टत्वम् , दारु आघटते वा ॥१॥ शत बहूनि पत्राणि पक्षा अस्य शतपत्र ॥२॥

खञ्जरीटस्तु खञ्जन ।

खजति खञ्जरीट' ' खञ्जरीटः " ॥ ( उणा-१५२ ) ॥ १ ॥ " ध्वसि रसि-" ॥ ( उणा-२६९ ) ॥ इत्यने खञ्जनः ॥ २ ॥

सारसस्तु लक्ष्मणः स्यात् पुष्कराख्यः कुरङ्कुरः ॥ १९४ ॥

सरति सारस' ' सृयमिभ्यां णित् " ॥ ( उणा-५७० ) ॥ इत्यसः, सरसि भवो वा ॥ १ ॥ लक्ष्मीरस्त्यस्य लक्ष्मण' ॥ २ ॥ पुष्करस्य पद्मस्य आख्याऽस्य पुष्कराख्यः ॥ ३ ॥ कुरमिति शब्दं करोति कुरङ्कुर ॥ ४ ॥ १९४ ॥

शेषश्चात्र–

सारसे दीर्घजानुकः ॥
गोनर्दो मैथुनी कामी श्येनाख्यो रक्तमस्तकः ॥

सारसी लक्ष्मणा

लक्ष्मीरस्त्यस्या लक्ष्मणा 'लक्ष्मणी' इत्यन्ये ॥ १ ॥

अथ कुरर् क्रौञ्चे

कुरति कुरर् ॥१॥ कुञ्चेन क्रौञ्च , प्रज्ञादित्वादण् तत्र ॥२॥ स्त्रियां त्वबादित्वा-त्तापि कुञ्चा ॥

चाषे किकीदिविः ।

चष्यते भक्ष्यते श्येनेन चाषस्तत्र ॥ १ ॥ किकीति कुर्वन् दीव्यति किकीदिविः "छविदिदिवि" ॥ (उणा–७०६) ॥ इति वो निपात्यते । 'द्वे नाम्नी' इत्यन्ये। किकि-दीविरपि ॥ २ ॥

चातकः स्तोककश्चाप्पीहः सारङ्गो नभोऽम्बुपः ॥ ११९ ॥

चतते याचते मेघाम्भश्चातकः ॥१॥ स्तोकं कायति कास्यते याचते वा स्तोक-कः, स्तोकं कमस्येति वा ॥ २ ॥ नभोऽम्बुपानात् वा पानमीहते चप्पीहः , पृषोद-रादित्वात् ॥ ३ ॥ सरति सारङ्गः, सह आरङ्गति वा, पृषदादित्वात् ॥४॥ नभसोऽम्बु पिबति नभोऽम्बुपः ॥ ५ ॥ ११९ ॥

चक्रवाको रथाङ्गाह्वः कोको द्वन्द्वचरोऽपि च ।

'चक' इति वाक् आस्यास्य चक्रवाकः ॥१॥ रथाङ्गं चक्रं तस्य आह्वा नामाऽस्य रथाङ्गाह्वः, तेन रथाङ्गाख्य इत्यादि ॥ २ ॥ कौति शब्दायति कोकः " भीण्शलि " ( उणा–२१ ) ॥ इति कः ॥ ३ ॥ द्वन्द्वेन मिथुनेन चरति द्वन्द्वचरः ॥ ४ ॥

टिट्टिभस्तु कटुक्वाण उत्पादशयनश्च सः ॥ १२० ॥

'टिकि गतौ' टिकते टिट्टिभः "पिटिकिभ्याम्–" ॥ ( उणा–३३२ ) ॥ इति इभः , टिकः टिट्टिरेषाम्, 'टिट्टि इति भाषते वा ' क्वचित् " ॥ ५ । १ । १७१ ॥ इति डः । 'टीटिभ' इत्येके ॥ १ ॥ कटुः क्वाणोऽस्य कटुक्वाणः ॥ २ ॥ उत्पाद शेते उत्पादशयनः ॥ ३ ॥ १२० ॥

चटको गृहबलिभुक् कलविङ्कः कुलिङ्गकः ।

चटति भिनत्ति आहारं चटकः " दृकृनृ–" ॥ ( उणा–२७ ) ॥ इत्यकः ॥१॥ गृहबलिं भुङ्क्ते गृहबलिभुक् ॥ २ ॥ कलमव्यक्तं शब्दायते कलविङ्कः 'कलेरविङ्क' ॥

( उणा–६५ ) ॥ ३ ॥ कोलति कुलिङ्गकः " कुलिचिरिभ्यामिङ्गक् " ॥ ( उणा–६४ ) ॥ ४ ॥ कुलिङ्गोऽपि ॥

योषित् तु तस्य चटका

अजादित्वादापि क्षिपकादित्वादित्वाभाव ॥ १ ॥

स्त्र्यपत्ये चटका तयो ॥ १९७ ॥

तयोर्द्वयो स्त्रीलक्षणे अपत्ये वाच्ये चटकस्य चटकाया वाऽपत्यं चटका " चटकाण्णैर स्त्रियां तु लुप् " ॥ ६ । १ । ७९ ॥ इति साधु ॥ १ ॥ १९७ ॥

पुमपत्ये चाटकैर

तयोरिति सबध्यते, चटकस्य चटकाया वा पुंलक्षणेऽपत्येऽभिधेये चाटकैरः " चटकाण्णैर –" ॥ ६ । १ । ७९ ॥ इति णैर ॥ १ ॥

दात्यूहे कालकण्टक ।

जलरङ्कुर्जलरञ्ज

ददात्यानन्दं दात्यूहः " दात्यूह " ॥ ( उणा–५९४ ) ॥ इति त्यूहस्तत्र । दात्योहोऽपि ॥ १ ॥ कालाः कण्टका रोमोद्भेदा अस्य कालकण्टक 'काल' कण्ठोऽस्येति कालकण्ठक' इत्यके ॥ २ ॥ जले रमते जलरङ्कुः "केशीशमि–" ॥ ( उणा–७४९ ) ॥ इति कुः ॥ ३ ॥ जलेन रज्यति जलरञ्जः ॥ ४ ॥

बके कह्वो बकोटवत् ॥ १९८ ॥

वकतीति बकः, पचादित्वात् कल्वं तत्र ॥ १ ॥ के जले केन वा ह्वयते कह्वः ॥ २ ॥ बकि बकोटः " कपोटबकोट–" ॥ ( उणा–१६१ ) ॥ इत्योटे निपात्यते ॥ ३ ॥ १९८ ॥

बलाहकः स्याद् बलाका

बलति बलाहकः, " बलिविलि–" ॥ ( उणा–८१ ) ॥ इत्याहक ॥ १ ॥ " शलिबलि–" ॥ ( उणा–१४ ) ॥ इत्याके बलाकः, पुंस्ययम्, यद्वाचस्पति – 'बलाकस्तु बलाहक । 'पुंस्यजेऽपि स्त्रीलिङ्ग एवायम्' इति लिङ्गानुशासनकृतः ॥२॥

बलाका विसकण्ठिका ।

बलमकति बलाका ॥ १ ॥ विसमिव कण्ठोऽस्या विसकण्ठिका । 'विसकण्ठिका' इत्यन्ये । बकेरुकाऽपि ॥ २ ॥

भृङ्ग कलिङ्गो धूम्याटः

भृङ्ग इव सार् , कृष्णत्वात् , बिभर्तीति वा ॥ १ ॥ कलते शब्दायते कलिङ्गः

“स्फुलिकलि-” ॥ (उणा-१०२) ॥ इतीकक्, के मूर्ध्नि किलं चूडाऽस्येति वा, काले गच्छति प्राप्नोति वा ॥ २ ॥ धूम्यायामिव अटति धूम्याटः, कृष्णत्वात् ॥ ३ ॥

कङ्कस्तु कमनच्छदः ॥ ३९९ ॥
लोहपृष्ठो दीर्घपादः कर्कटः स्कन्धमल्लकः ।

कङ्कते गच्छति कङ्कः ॥ १ ॥ कमनः कान्तश्छदोऽस्य कमनच्छदः ॥ २ ॥ ॥ ३९९ ॥ लोहवर्णं पृष्ठमस्य लोहपृष्ठः ॥ ३ ॥ दीर्घौ पादावस्य दीर्घपादः ॥ ४ ॥ 'कर्किः सौत्रः' कर्कति कर्कटः “दिवमनि-” ॥ (उणा-१४२) ॥ इत्यटः ॥ ५ ॥ स्कन्धेन मल्लः समर्थः स्कन्धमल्लकः ॥ ६ ॥

चिल्लः शकुनिरातापी

चिल्लति खेलेन शिथिलीभवति चिल्लः ॥ १ ॥ शक्नोति शकुनिः ॥ २ ॥ आतपमातापी ॥ ३ ॥

श्येनः पत्री शशादनः ॥ ४०० ॥

श्यायते श्येनः “श्याकठि-” (उणा-२४२) ॥ इतीनः ॥ १ ॥ पत्री सामान्योऽपि विशेषे वर्तते, यत् शाश्वतः —‘श्येनाख्यो विहगः पत्री पत्रिणौ शरपक्षिणौ’ इति ॥ २ ॥ शशानत्ति शशादनः ॥ ३ ॥ ४०० ॥

दाक्षाय्यो दूरदृग् गृध्रः

दक्ष्यते दाक्षाय्यः “मुदग्निग्रहि-” ॥ (उणा-३०१) ॥ इत्याय्यः, दक्षाय्य एव दाक्षाय्यः, प्रज्ञादित्वादण् ॥ १ ॥ दूरात् पश्यति दूरदृक् ॥ २ ॥ गृध्यति मांसं गृध्रः “ऋज्यजि-” ॥ (उणा-३८८) ॥ इति किद् रः ॥ ३ ॥

शेषश्चात्र—

गृध्रे तु पुरुषव्याघ्रः कामायुः कूणितेक्षणः ।
सुदर्शनः शकुन्याश्वौ ॥

अथोत्क्रोशो मत्स्यनाशनः
कुररः

उच्चैः क्रोशत्युत्क्रोशः ॥ १ ॥ मत्स्यान् नाशयति मत्स्यनाशनः ॥ २ ॥ कुरति कुररः “मद्गुन्दि-” ॥ (उणा-३९९) ॥ इति किदरः, ‘कुर’ इति शब्दं राति वा ॥ ३ ॥

कीरस्तु शुको रक्ततुण्डः फलादनः ॥ ४०१ ॥

कायति कीरः “कशिकाधि-” ॥ (उणा-४१९) ॥ इति किदीरः कीति शब्दमीरयति वा ॥ १ ॥ शवति शुकः “लिविपुषि-” ॥ (उणा-२२) ॥ इति

कित् क' 'शुक गतौ' शोकति गच्छतीति वा ॥ २ ॥ रक्तं तुण्डं यस्य रक्ततुण्डः ॥ ३ ॥ फलान्यत्ति फलादनः । मेधाव्यपि ॥ ४ ॥ ४०१ ॥

शेषश्चात्र—

शुके तु प्रियदर्शनः ।
श्रीमान् मेधातिथिर्धीरामी ॥

शारिका तु पीतपादा गौराटी गोकिराटिका ।

शृणाति फलं शारिका ॥ १ ॥ पीतौ पादावस्याः पीतपादा ॥ २ ॥ गां रटति गौराटी ॥ ३ ॥ गां किरति गोकिराटी " किरो लश्च वा " ॥ ( उणा–१४७ ) ॥ ह्रस्वात् ॥ ४ ॥

स्याच्चर्मचटकायां तु जतुकाऽजिनपत्रिका ॥ ४०२ ॥

चर्ममयी चटका चर्मचटका निर्लोमत्वात् तत्र ॥ १ ॥ जतुरिव कृष्णपिङ्गत्वात् जतुका ॥ २ ॥ अजिनं पत्राणि पक्षा अस्या अजिनपत्रिका ॥ ३ ॥ ४०२ ॥

वल्गुलिका मुखविष्ठा परोष्णी तैलपायिका ।

वल्गु लाति वल्गुला, के वल्गुलिका ॥ १ ॥ मुखेन विष्ठा अस्या मुखविष्ठा ॥२॥ परं प्रकृष्टमुष्णमस्याः परोष्णी, शीतासहत्वात्, परं विरुद्धमुष्णं तेजोऽस्या इति वा, तेजसा घकारात् ॥३॥ तैलं पिबतीव तैलपायिका, निस्समासविकासात् । निशाटन्यपि ॥ ४ ॥

कर्करेटुः करेटुः स्यात् करटुः कर्कराटुकः ॥ ४०३ ॥

'कर्क' इति रेटते कर्करेटुः ॥१॥ 'क' इति रेटते रटति च करेटुः करटुः ॥२॥ ॥३॥ कर्कति कर्कराटुः, "केवयुभुरण्यु–" ॥ (उणा–७४६) ॥ इति उप्रत्यय निपात्यते ॥ ४ ॥ ४०३ ॥

आटिराति शरारि स्यात्

आतस्यति, बाहुलकात् णिरिः ॥ १ ॥ अतस्यति "पादाच्चात्यजिभ्याम्" ॥ ( उणा–६२० ) ॥ इति णिदिः ॥ २ ॥ शृणन्त्येनां शरारि "बहुलम्" ॥५।१।२॥ दस्यारि ॥ ३ ॥ एते स्त्रीलिङ्गाः ॥

क्रकण क्रकरौ समौ ।

करोति शब्दं क्रकण " भिक्षण–" ॥ ( उणा–१९० ) ॥ इत्यणे निपात्यते 'क' इति क्वणति वा क्रकं नयति वा ॥ १ ॥ करोति शब्दं क्रकरः गौरादिरिति 'अदर' ॥ (उणा–४०३) ॥ इत्यरे निपात्यते, 'क्र' इति करोति भाष्यते वा ॥२॥
भागे शाकुन्त

भासते भासस्तत्र ॥ १ ॥ शकुन्त सामान्योऽपि विशेषे वर्तते ॥ २ ॥

कोयष्टी शिखरी अलकुक्कुम ॥ ४०४ ॥

कायते शब्दायते कोयष्टि " कोर्मेयादिः " ॥ ( उणा-६४८ ) ॥ इति ति-स्तत्र । 'कोको यजते' इत्यन्ये ॥ १ ॥ शिखर चूडाऽस्यास्ति शिखरी ॥२॥ जलचारी कुक्कुमो जलकुक्कुम ॥ ३ ॥ ४०४ ॥

पारापत कलरव कपोतो रक्तलोचन ।

पारमापतति पारापत , पृषोदरादित्वात् यस्य पारावतोऽपि ॥१॥ कलो मधुरो रवो ध्वनिरस्य कलरव ॥ २ ॥ ' कपृ वर्णे ' कम्पते कपोत " कपोत" प च " ॥ ( उणा- १७ ) ॥ इति साधु ॥ ३ ॥ रक्ते लोचने अस्य रक्तलोचन ॥ ४ ॥

ज्योत्स्नाप्रिये चलचञ्चु-चकोर-विषसूचकाः ॥ ४०५ ॥

ज्योत्स्ना प्रियाऽस्य ज्योत्स्नाप्रियस्तत्र ॥ १ ॥ चला चञ्चुरस्य चलचञ्चुः ॥ २ ॥ चकते ज्योत्स्नया तृप्यति चकोर " कठिचकि-" ॥ ( उणा-४२२ ) ॥ इत्योर ॥ ३ ॥ विष सूचयति विषसूचक, यदाह—" चकोरस्य विरज्येते नयने विषदर्शनात् " इति ॥ ४ ॥ ४०५ ॥

जीवञ्जीवस्तु गुन्द्रालो विषदर्शनमृत्युकः ।

जीवेन सहचरेण जीवति जीवञ्जीव, पृषोदरादित्वात् ख ॥१॥ गुन्द्रामलति गुन्द्रालः ॥ २ ॥ विषदर्शनेन मृत्युरस्य विषदर्शनमृत्युक ॥ ३ ॥

व्याघ्राटस्तु भरद्वाजः

व्याघ्रमप्यटति व्याघ्राट ॥ १ ॥ भरन्तो वाजा पक्षा अस्य भरद्वाज ॥ २ ॥

प्लवस्तु गात्रसम्प्लवः ॥ ४०६ ॥

प्लवते प्लव ॥ १ ॥ गात्रेण सम्प्लवते गात्रसम्प्लव ॥ २ ॥ ४०६ ॥

तित्तिरिस्तु खरकोणः

तरत्यम्भसि तित्तिरि " तृभृम्भरि-" ॥ ( उणा-६११ ) ॥ इति इत्वादेशश्च ॥ १ ॥ खरं कुणति शब्दायते खरकोण ॥ २ ॥

हारीतस्तु मृदङ्कुरः ।

हरति जीवान् हारीत " हृग हनप् " ॥ ( उणा-२१२ ) ॥ हारिण वर्णमितो वा ॥ १ ॥ मृदमङ्कुरयति मृदङ्कुर ॥ २ ॥

कारण्डवस्तु मल्ल

करोति शब्दं कारण्डव " केरव ॥ ( उणा- १ ) ॥ इत्यवे निपात्यत,

करण्डे भव कारण्ड पक्षरयर्ध याति वा ॥ १ ॥ मर्द लाति मद्गल ॥ २ ॥

सुगृहश्चञ्चुसूचिकः ॥ ४०७ ॥

शोभन गृहमस्य सुगृह ॥१॥ चञ्चुरेव सूचिरस्य नीडवाने चञ्चुसूचिक ॥२॥

कुम्भकारकुक्कुटस्तु कुक्कुम कुहकस्वन' ।

कुम्भेति शब्दं करोति कुम्भकार, स कुक्कुट इव कुम्भकारकुक्कुट ॥ १ ॥ कोकते कुक्कुम "कुके कोऽन्तश्च" ॥ (उणा–३३४) ॥ इत्युम, कुकुशब्देन भातीति वा ॥ २ ॥ 'कुहक' इति स्वनोऽस्य कुहकस्वन' ॥ ३ ॥

पक्षिणा येन गृह्यन्ते पक्षिणोऽन्ये स दीपक ॥ ४०८ ॥

दीप्यते कापाईत्वक इमेन सिचानकादि ॥ १ ॥ ४०८ ॥

छेका गृह्याश्च ते गेहासक्ता ये मृगपक्षिणः ।

छ्यन्ति आत्मनो भयमिति छेका "मिच्छतुरुक–" ॥ (उणा–२६) ॥ इति के निपात्यते ॥१॥ गृह्यन्ते गृह्या' "पदास्वैरि–" ॥५।१।४४॥ इति क्यप् ॥ २ ॥

॥ जलचरा खचरा पञ्चेन्द्रियाः ॥

जलचरानाह—

मत्स्यो मीन पृथुरोमा झषो वैसारिणोऽण्डज' ॥ ४०९ ॥
सकृत्प्रजो स्थिरजिह्व आत्माशी स्वकुलक्षय' ।
विसार शकुली शल्की शबरोऽनिमिषस्तिमि' ॥ ४१० ॥

माद्यति जलेन मत्स्यः "मदे स्य" " ॥ (उणा–३८३) ॥ मत्स्योऽपि ॥ १ ॥ मीनाति मत्स्यान् मीन "मीणूर्यौवी–" ॥ (उणा–२६१) ॥ इति किद् नः ॥२॥ पृथु रोम रोमपक्षोऽस्य ॥ ३ ॥ झषति हिनस्ति झषः ॥ ४ ॥ विसरति विसारि, ग्रहादित्वात् णिन्, विसारैव वैसारिण' "विसारिणो मत्स्ये" ॥ ७ । ३ । ५९ ॥ इति स्वार्थेऽण् ॥ ५ ॥ अण्डात् जातोऽण्डजः ॥ ६ ॥ ४०९ ॥ संघेन चरति छच चारी ॥ ७ ॥ स्थिरा जिह्वाऽस्य स्थिरजिह्वः, कण्ठकजिह्वत्वात् ॥ ८ ॥ आत्मैव आत्मा मत्स्यजातिस्तामश्नाति आत्माशी ॥ ९ ॥ स्वकुलस्य क्षयोऽस्मात् स्वकुलक्षय ॥ १० ॥ विसरति विसार सर्तेः स्थिरव्याधिबलमत्स्ये" ॥ ५ । ३ । १७ ॥ इति घञ् ॥ ११ ॥ शकलानि शल्कानि च पुनऽस्य शकली, शल्की ॥१२॥ १३ ॥ शं शृणाति शबर ॥ १४ ॥ न मिमिषति शोभने अनिमिष' ॥१५॥ ताम्यति स्पर्शे तिमि कमितमिस्तम्भे –" ॥ (उणा–६१३) ॥ इति इरितं च, तिम्यतीति वा 'माम्युपाग्स " ॥ (उणा–६०९) ॥ इति किदि' ॥ १६ ॥ ४१० ॥

मत्स्यराजस्तु रोहित ॥ ४१२ ॥

मत्स्यानां राजा मत्स्यराजः ॥ १ ॥ रोहति रोहित", रक्तत्वाद्वा ॥ २ ॥४१२॥

मद्गुरस्तु राजशृङ्ग

मज्जति मद्गुर "मद्गुर" ॥ (उणा–४२६ ) ॥ इत्युरे निपात्यते, मद्गून् राति वा ॥ १ ॥ शृङ्गेण राजते राजशृङ्ग ॥ २ ॥

शृङ्गी तु मद्गुरप्रिया ।

स्त्रीत्वेऽत शृङ्गी ॥ १ ॥

क्षुद्राण्डमत्स्यजात तु पोताधान जलाणुकम् ॥ ४१३ ॥

क्षुद्राणि अण्डानि येषां मत्स्याः क्षुद्राण्डमत्स्यास्तेषां जातं सङ्घातः क्षुद्राण्ड मत्स्यजातम् । क्षुद्राण्डा मत्स्यसंघात ' इत्यन्ये । पोता आधीयन्तेऽत्र पोताधानम् ॥१॥ जलेऽणति जलाणुकं 'कण्यणे " ॥ (उणा–५६ ) ॥ इति णिदुक ॥ २ ॥४१३॥

महामत्स्यास्तु चीरिल्लि तिमिङ्गिलगिलादय ।

महान्तश्च ते मत्स्याश्च महामत्स्याः ॥ १ ॥ चिरं लीयते चीरिल्लि, पृषोदरादि त्वात् ॥ २ ॥ तिमिं गिलति "भगिलाद् गिलगिलगिल्या " ॥३।१।११५॥ इते मोऽन्ते तिमिङ्गिलस्त गिलति तिमिङ्गिलगिल., आदिशब्दात् मन्थावर्तादय ॥३॥

अथ यादांसि नक्राद्या हिंसका जलजन्तवः ॥ ४१४ ॥

यान्ति यादांसि ' यैजिभ्यां यादेयौ च' ॥ (उणा–९६८) ॥ इत्यस् नक्राद्या वक्ष्यमाणा हिंस्रा जलचरा ॥ १ ॥ ४१४ ॥

नक्रः कुम्भीर आलास्य कुम्भी महामुखोऽपि च ।

तालुजिह्व शङ्कुमुखो गोमुखो जलसूकरः ॥ ४१५ ॥

न क्रामति नक्रः "नम क्रमिगमि " ॥ ( उणा–४ ) ॥ इति डिद , नखादि-त्वादेकस्य नमो लोपोऽपरस्याप्यभाव" ॥ १ ॥ कुम्भाति कुम्भीर "जम्बीर " ॥ ( उणा–४२१ ) ॥ इतीरे निपात्यते, कुम्भिन ईरयति वा ॥ २ ॥ आलमनर्थहेतु रास्यमस्य आलास्य ॥ ३ ॥ कुम्भाकारताऽस्यास्य कुम्भी ॥ ४ ॥ महद् मुखमस्य महामुख ॥ ५ ॥ तालुनि जिह्वाऽस्य तालुजिह्वा ॥ ६ ॥ शङ्कुरिव मुखमस्य शङ्कुमुख । शङ्कुमुखाऽपि ॥ ७ ॥ गोरिव मुखमस्य गोमुखः ॥ ८ ॥ जलचारी सूकरो जलसूकर ॥ ९ ॥ ४१५ ॥

शिशुमारस्त्वम्बुकूर्म उष्णवीर्यो महावसः ।

शिशून् मारयति शिशुमार जलकपि ॥ १ ॥ अम्बुन' कूर्मोऽम्बुकूर्म ॥ २ ॥

उपमार्थेमस्य उपमनीय ॥ ३ ॥ महती ममाऽस्य महावस' ॥ ४ ॥

उद्रस्तु जलमार्जार पानीयनकुलो वसी ॥ ४१६ ॥

उनत्ति उद्रः "स्फायितञ्चि" ॥ (उणा-१८८) ॥ इति किदू र' ॥१॥ जलस्य मार्जारो जलमार्जार ॥ २ ॥ पानीयस्य नकुल पानीयनकुलः ॥ ३ ॥ वशाऽस्यास्य वशी ॥ ४ ॥ ४१६ ॥

ग्राहे तन्तुस्तन्तुनागोऽवहारो नाग-तन्तुणौ ।

गृह्णाति ग्राह तत्र ॥ १ ॥ तनोति देह तन्तुः ॥ २ ॥ तन्तुरूपो नाग' सपस्तन्तुनागः ॥ ३ ॥ अवहरत्यवहार "अवहृत्यासस्ता" ॥ ५ । १ । ६२ ॥ इति ण ॥ ४ ॥ नागो जलसर्प ॥ ५ ॥ तन्तुवत् तुणति कुटलीभवति तन्तुण, पृषादरादित्वात् ॥ ६ ॥ चरणपाशोऽपि ॥

उपसहारमाह—

अन्येऽपि यादोभेदाः स्युर्बहवो मकरादयः ॥ ४१७ ॥

मङ्कत मकर "जठर-" ॥ (उणा-४०३) ॥ इत्यरे निपात्यत मा कृर्यात् किमिदिति प्रसन्नत्वमादिति वा ॥ १ ॥ आदिग्रहणात् शङ्कुकुम्भिप्रभृतय ॥४१७॥

कुलीर' कर्कटः पिङ्गचक्षुः पार्श्वोदरप्रियः ।

द्विधागति षोडशाङ्घ्रिः कुरचिल्लो बहिश्चर ॥ ४१८ ॥

कोलति कुलीर' पुङ्कलीभवति "घसिवसि-" ॥ (उणा-४१९) ॥ इति किदीर कुल्लिनमीरयति वा जनकमक्षत्वात्, यत कौटिल्य –'कर्कटधर्माणो हि राजपुत्रा जनकभक्ष्या ' इति ॥ १ ॥ 'कर्कि' धात्र ' कर्कति कर्कट " दिव्यवि-" (उणा-१४३) ॥ इत्यट ॥ २ ॥ पिङ्ग चक्षुषी अस्य पिङ्गचक्षु' ॥ ३ ॥ पार्श्वोदर प्रियमस्य पार्श्वोदरप्रिय ॥ ४ ॥ द्विधाऽस्य पश्चात्व गतिरस्य द्विधागति ॥ ५ ॥ षोडश अंह्रयोऽस्य षोडशांह्रि ॥ ६ ॥ कुरन् चिल्लति कुरचिल्ल' ॥ ७ ॥ जलाद् बहिश्चरति तरीतुमनभिज्ञत्वात् बहिश्चर' ॥ ८ ॥ ४१८ ॥

कच्छप कमठ कूर्मः क्रोडपादश्चतुर्गतिः ।

पञ्चाङ्गगुप्त-दौलेयौ जीवथः

कच्छोऽनूपप्राय कूर्मपादो वा, कच्छं पाति कच्छप, कच्छेन पिबतीति वा कच्छ कुत्सित धयतीति वा ॥ १ ॥ काम्यते यज्ञार्थ कमठः "मजुषु-" ॥ (उणा-१६७) ॥ इत्यठ के मठति निवसतीति वा ॥ २ ॥ किरति कुरति वा कूर्म' "रुक्मग्रीष्म-" ॥ (उणा-३४६) ॥ इति मे निपात्यते ॥ ३ ॥ क्रोडे पादा अस्य क्रोडपाद' ॥ ४ ॥ चतुर्धा अग्रत पश्चात् पार्श्वतोऽस्य गतिरस्य चतुर्गतिः ॥ ५ ॥

मत्स्यराजस्तु रोहितः ॥ ४१२ ॥

मत्स्यानां राजा मत्स्यराजः ॥ १ ॥ रोहति रोहितः, रक्तत्वाद्वा ॥ २ ॥४१२॥

मद्गुरस्तु राजशृङ्गः

मज्जति मद्गुरः "मद्गुर" ॥ ( उणा-४२६ ) ॥ इत्युरे निपात्यते, मद्गून् राति वा ॥ १ ॥ शृङ्गेण राजते राजशृङ्गः ॥ २ ॥

शृङ्गी तु मद्गुरप्रिया ।

शीर्यते शृङ्गी ॥ १ ॥

क्षुद्राण्डमत्स्यजातं तु पोताधानं जलाणुकम् ॥ ४१३ ॥

क्षुद्राश्च अण्डानि सुताश्च मत्स्याः क्षुद्राण्डमत्स्यास्तेषां जातं सङ्घातः क्षुद्राण्डमत्स्यजातम् । 'क्षुद्राण्डा मत्स्यसंघातः' इत्यन्ये । पोता आधीयन्तेऽत्र पोताधानम् ॥१॥ जलेऽणति जलाणुकं "कण्यणे-" ॥ ( उणा-५६ ) ॥ इति णिदुकः ॥ २ ॥४१३॥

महामत्स्यास्तु चीरिल्लि तिमिङ्गिलगिलादयः ।

महान्तश्च ते मत्स्याश्च महामत्स्याः ॥ १ ॥ चिरं लीयते चीरिल्लि, पृषोदरादित्वात् ॥ २ ॥ तिमिं गिलति "अगिलाद् गिलगिलगिलया" ॥३।२।११५॥ इति मोऽन्ते तिमिङ्गिलस्त गिलति तिमिङ्गिलगिलः, आदिशब्दाद् नन्द्यावर्तादयः ॥३॥

अथ यादांसि नक्राद्या हिंसका जलजन्तवः ॥ ४१४ ॥

यान्ति यादांसि 'वेन्विभ्यां यादेवौ च" ॥ (उणा-९९८) ॥ इत्यस् नक्राद्या वक्ष्यमाणा हिंस्रा जलचराः ॥ १ ॥ ४१४ ॥

नक्रः कुम्भीर आलास्यः कुम्भी महामुखोऽपि च ।

तालुजिह्वः शङ्कुमुखो गोमुखो जलसूकरः ॥ ४१५ ॥

न क्रामति नक्रः "नम्र क्रमिगमि" ॥ ( उणा-४ ) ॥ इति डिद्, नखादित्वादेकस्य नञो लोपोऽपरस्यादभावः ॥ १ ॥ कुम्भनाति कुम्भीरः "जम्बीर" ॥ ( उणा-४१२ ) ॥ इतीरे निपात्यते, कुम्भिनमीरयति वा ॥ २ ॥ आलमनर्थहेतुरास्यमस्य आलास्यः ॥ ३ ॥ कुम्भाकारत्वादस्त्यस्य कुम्भी ॥ ४ ॥ महद् मुखमस्य महामुखः ॥ ५ ॥ तालुनि जिह्वाऽस्य तालुजिह्वः ॥ ६ ॥ शङ्कुरिवेव मुखमस्य शङ्कुमुखः । शङ्कुमुखोऽपि ॥ ७ ॥ गोरिव मुखमस्य गोमुखः ॥ ८ ॥ जलचारी सूकरो जलसूकरः ॥ ९ ॥ ४१५ ॥

शिशुमारस्त्वम्बुकूर्म उष्णवीर्यो महावसः ।

शिशून् मारयति शिशुमारः जलकपिः ॥ १ ॥ अम्बुनः कूर्मोऽम्बुकूर्मः ॥ २ ॥

उच्चग्रीवमस्य उच्चग्रीव ॥ ३ ॥ महती वसाऽस्य महावस ॥ ४ ॥

उद्रस्तु जलमार्जार पानीयनकुलो वसी ॥ ४१६ ॥

उनत्ति उद्रः "स्फायि-" ॥ (उणा-३८८) ॥ इति किद् र ॥१॥ जलस्य मार्जारो जलमार्जार ॥ २ ॥ पानीयस्य नकुल पानीयनकुल ॥ ३ ॥ वसाऽस्त्यस्य वसी ॥ ४ ॥ ४१६ ॥

ग्राहे तन्तुस्तन्तुनागोऽवहारो नाग-तन्तुणौ ।

गृह्णाति ग्राह तत्र ॥ १ ॥ तनोति देह तन्तुः ॥ २ ॥ तन्तुरूपो नागः सर्पस्तन्तुनाग ॥ ३ ॥ अवहरत्यवहार "अवहृसासक्षा" ॥५।१।६१॥ इति ण ॥ ४ ॥ नागो जलसर्प ॥ ५ ॥ तन्तुवत् तुणति कुटिलीभवति तन्तुण, पृषोदरादित्वात् ॥ ६ ॥ वरुणपाशोऽपि ॥

उपसंहारमाह—

अन्येऽपि यादोभेदाः स्युर्बहवो मकरादयः ॥ ४१७ ॥

माद्यति मकर "मठर-" ॥ (उणा-४०३) ॥ इत्यरे निपात्यते, मा कुर्याद् क्रियामिति मत्स्यमत्स्यादिति वा ॥ १ ॥ आदिग्रहणात् षट्कुम्भीनक्रप्रभृतय ॥४१७॥

कुलीर कर्कट पिङ्गचक्षुः पार्श्वोदरप्रियः ।

द्विधागति षोडशाङ्घ्रिः क्रुरचिह्नो बहिश्चर ॥ ४१८ ॥

कोलति कुलीर पुंस्त्रीलिङ्ग "पथिमथि-" ॥ (उणा-४१९) ॥ इति किदीर कुक्षिमीरयति वा जनकमक्षणत्वात्, यत् कौटिल्य—'कर्कटकसधर्माणो हि राजपुत्रा जनकभक्षा' इति ॥ १ ॥ 'कर्कि' सात्र ' कर्कति कर्कट "दिम्भि-" (उणा-१४७) ॥ इत्यट ॥ २ ॥ पिङ्गे चक्षुषी अस्य पिङ्गचक्षु ॥ ३ ॥ पार्श्वोदरं प्रियमस्य पार्श्वोदरप्रिय ॥ ४ ॥ द्विधाऽग्रतः पश्चाच्च गतिरस्य द्विधागति ॥ ५ ॥ षोडश अङ्घ्रयोऽस्य षोडशाङ्घ्रि ॥ ६ ॥ क्रुरन् चिह्नाति क्रुरचिह्न ॥ ७ ॥ जलाद् बहिश्चरति चरितुमनभिज्ञत्वात् बहिश्चर ॥ ८ ॥ ४१८ ॥

कच्छपः कमठः कूर्मः क्रोडपादश्चतुर्गतिः ।

पञ्चाङ्गगुप्त-दौलेयौ जीवथ

कच्छोऽनूपप्राय कूर्मपादो वा, कच्छं पाति कच्छप कच्छेन पिबतीति वा कम् कुत्सितं पिबतीति वा ॥ १ ॥ काम्यते वसार्थं कमठः "मृकणि-" ॥ (उणा-१६७) ॥ इत्यठ के मठति निवसतीति वा ॥ २ ॥ किरति कुरति वा कूर्म "रुक्ममीष्म-" ॥ (उणा-३४६) ॥ इति मे निपात्यते ॥ ३ ॥ क्रोडे पादा अस्य क्रोडपाद ॥ ४ ॥ चतुर्षो भ्रमत पश्चात् पार्श्वयोश्च गतिरस्य चतुर्गतिः ॥ ५ ॥

पश्चाद्गेन गुप्त पश्चाद्गुप्तः ॥ ६ ॥ धुल्या अपत्यं दौलेय ॥ ७ ॥ जीवति जीवप "मृधीशपि–" ॥ (उणा–२३०) ॥ इत्यप । उद्दारो देस्याम्, संस्कृतेऽपि ॥८॥

कच्छपी दुली ॥ ४१९ ॥

'दुलण् उत्क्षेपे' दोलति जल दुलः "नाम्युपान्त्य–" ॥ (उणा–६०९) ॥ इति कित्, ङ्यां दुली ॥ १ ॥ ४१९ ॥

मण्डूके हरि शालूर-प्लव भेक प्लवङ्गमाः ।

वर्षाभू प्लवगः शालुरालिह्व-व्यङ्ग-दर्दुराः ॥ ४२० ॥

मण्डयति मण्डूकः "मूमन्यञ्जि–" ॥ (उणा–५८) ॥ इत्यूकस्तत्र ॥ १ ॥ ह्रियते सर्पेण हरि ॥२॥ शलति शालूर "मदिकर्षि–" (उणा–४१८) ॥ इति णिदूर ॥ ३ ॥ प्लवते प्लवः ॥ ४ ॥ बिभेति भेकः "भीणशलि–"॥ (उणा–२१) ॥ इति कः ॥५॥ प्लवेन गच्छति प्लवङ्गमः, प्लवगः ॥ ६ ॥ ७ ॥ वर्षासु भवति वर्षाभू पुंलिङ्ग ॥ ८ ॥ शलति शालुः "कृतृशृ–" ॥ (उणा–७२७) ॥ [illegible] णिदुलस्य च रत्व ॥ ९ ॥ नास्ति जिह्वाऽस्य अजिह्वः, ईंवदर्थेऽत्र नञ् ॥ १० ॥ विविधमङ्गमस्य व्यङ्गः ॥ ११ ॥ दीर्यते दर्दुरः "मद्गुर–" ॥ (उणा–४२६) ॥ इत्युरे निपात्यते, दर्दुरमस्य रातीति वा ॥ १२ ॥ ४२० ॥

स्थले नरादयो ये तु ते जले जलपूर्वकाः ।

पूर्वोक्तो नर-करि-तुरगादय स्थलचरा जीवास्ते चेत्तो जलशब्दपूर्वा जलचरा अपि स्युः, यथा जलनर, जलहस्ती, जलतुरगः इत्यादि ॥ १ ॥

अथ सर्वजीवानामुत्पत्तिविषयविभागमाह—

अण्डजाः पक्षिसर्पाद्याः

आदिग्रहणात् गोधा-कृकलासादयः ॥ १ ॥

पोतजाः कुञ्जराद्यः ॥ ४२१ ॥

पोतो जरायुरहितो गर्भ, पोतरूपा जायन्ते पोतजा ॥ १ ॥ आदिग्रहणात् श्वाविद् शशारिकादय ॥ ४२१ ॥

रसजा मद्यकीटाद्या

रसाज्जायन्ते रसजाः, आदिशब्दाद् घृतकीटाद्या ॥ १ ॥

नृगवाद्या जरायुजाः ।

जरायुर्गर्भशय्या तस्माज्जाता जरायुजाः, आदिग्रहणात् महिष-सूकराद्य ॥१॥

यूकाद्याः स्वेदजा

स्वेदाद् घर्माज्जायन्ते स्वेदजाः, आदिग्रहणान्मत्कुण-मशकादयः ॥ १ ॥

**मत्स्यादयः समूर्छनोद्भवाः ॥ ४२२ ॥**

आदिग्रहणात् सर्पादयः ॥ १ ॥ ४२२ ॥

**खञ्जनास्तूद्भिदः**

बहुवचनादन्येऽपि शलभादयः ॥ १ ॥

**अथौपपादुका देव-नारकाः ।**

उपपद्यन्ते स्वयमित्येवंशीला उपपादुकाः ॥ १ ॥

उपसंहारमाह—

**त्रसयोनय इत्यष्टौ**

त्रसानां जीवानां योनयः उत्पत्तिस्थानानीति ॥ १ ॥

**उद्भिदुद्भिज्जमुद्भिदम् ॥ ४२३ ॥**

उद्भिनत्ति भुवमुद्भिद् ॥ १ ॥ उद्भवनमुद्भित् ततो जायते उद्भिज्जम् ॥ २ ॥ उद्भिनत्ति उद्भिदम् ॥ ३ ॥ ४२३ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां स्वोपज्ञाभिधानचिन्तामणिनाममालाटीकायां तिर्यक्काण्डश्चतुर्थः ॥ ४ ॥



॥ अर्हम् ॥

## अथ नारककाण्डः ।

अथ पञ्चमं नारककाण्डमारभ्यते—

**स्युर्नारकास्तु परेत-प्रेत-याम्या ऽतिवाहिकाः ।**

नरके भवा नारकाः, यौगिकत्वात् नारकिक-नैरयिक-नारकीयादयः ॥ १ ॥ कर्मणां पराधीनतया इताः परेताः ॥ २ ॥ प्रकर्षेण इताः प्रेताः ॥ ३ ॥ यमस्येमे याम्याः ॥ ४ ॥ अतिवाहयन्ते अतिवाहिकाः 'कुलिकवाहिक-' ॥ (उणा-४५) ॥ इति साधु ॥ ५ ॥

**आजूर्विष्टिः**

आजवति आजूः "विभुरस्" ॥ ५ । २ । ८३ ॥ इति क्विपि निपात्यते ॥ १ ॥ वेवेष्टि विष्टिः नरके इत्यत्र लोपः "वसुपि" ॥ (उणा ६५१) ॥ इति क्तिः । स्त्रीलिङ्गावेतौ ॥ २ ॥

यातना कारणा तीव्रवेदना ॥ १ ॥

यात्यत यातना ॥१॥ 'कृ गृ हिंसायाम्' इति इन्त्यर्थात चुरादे स्वार्थे णिजन्त कारण कारणा। ॥ २ ॥ तीव्रा च सा वेदना तीव्रवेदना ॥ ३१ ॥

नरकस्तु नारक स्यान्निरयो दुर्गतिश्च स ।

नृणाति शिक्षयति पापिनो नरक "दृकॄनु–" ॥ (उणा–)॥ इत्यक , नरा काय न्त्यस्मिन् वा, नरान् कन्ताति कृणोति वेति वा ॥ १ ॥ नरकस्य बाहुल्यकाद् दीर्घत्वे नारका, नारं कायत्यत्र वा ॥ २ ॥ निष्कान्तोऽयादनुकूलदेवान्निरय ॥ ३ निन्दिता गतिर्दुर्गति पुंस्त्रीलिङ्ग ॥ ४ ॥

घनोदधि घनवात-तनुवात नम स्थिताः ॥ २ ॥

रत्न शर्करा वालुका पङ्क धूम तम प्रभा ।

महातम प्रभा चेत्यधोऽधो नरकभूमय ॥ ३ ॥

क्रमात् पृथुतरा सप्त

घनो निबिडो न तु द्रव उदधिर्घनोदधि ॥ १ ॥ घनश्चासौ वातश्च घनवातो निबिडवात ॥ २ ॥ तनुश्चासौ वातश्च तनुवात ॥ ३ ॥ नम आकाश , तेषु प्रत्येक स्थिता प्रतिष्ठिता ॥ ४ ॥ २ ॥ रत्नादिभ्य परा प्रभा रत्नप्रभा ॥ १ ॥ शर्करा-प्रभा ॥ २ ॥ वालुकाप्रभा ॥ ३ ॥ पङ्कप्रभा ॥ ४ ॥ धूमप्रभा ॥ ५ ॥ तमःप्रभा चेति षट् ॥ ६ ॥ सप्तमी महातम प्रभा चेति, रत्नादिभि प्रभान्तैरन्वर्था ॥७॥ क्रमेण पृथुतराऽधोऽधो नरकभूमयो भवन्तीति ॥ ३ ॥

शेषश्चात्र—

अथ रत्नप्रभा धर्मा वंशा तु शर्कराप्रभा ।
स्याद्वालुकाप्रभा शैला अंजना पङ्कप्रभाऽञ्जना ॥ १ ॥
धूमप्रभा पुना रिष्टा माघव्या तु तम प्रभा ।
महातम प्रभा माघवीत्य नरकभूमयः ॥ २ ॥

अथ त्रिंशत् पञ्चविंशतिः ।

पञ्चदश दश त्रीणि लक्षाण्यून च पञ्चमि ॥ ४ ॥

लक्ष पञ्च च नरकावासा सीमन्तकादयः ।

एतासु स्यु क्रमेण

एतासु रत्नप्रभायासु सप्तसु नरकभूमिषु सीमन्तको रत्नप्रभायामेवमिथमप्रतरम

प्रमायां त्रिंशल्लक्षाणि, शेषासु क्रमेण पञ्चविंशतिः, पञ्चदश, दश, त्रीणि च लक्षाणि पञ्चोनं चैकलक्षमित्यासु षष्ठ्यां ॥ ४ ॥ सप्तम्यां तु पञ्चैव नरकावासा भवन्तीति । आदिग्रहणात् रौद्र-हाहारव घातनाद्या गृह्यन्ते ॥

अथ पातालं वडवामुखम् ॥ ५ ॥
बलिवेश्माधोभुवनं नागलोको रसातलम् ।

पतन्त्यस्मिन् पातालं "पतिकृष्ठ्यो णित्" ॥ (उणा-४७९) ॥ इत्यालः, पातमलतीति वा ॥ १ ॥ वडवामुखमिव मुखमस्य वडवामुखम् ॥ २ ॥ ५ ॥ बलेर्वैरोचनासुरस्य वेश्म बलिवेश्म ॥ ३ ॥ अधस्ताद् द्यावापृथिव्योर्भुवनमधोभुवनम् ॥ ४ ॥ नागानां लोको भुवनं नागलोकः ॥ ५ ॥ रसाया अतलमधो रसातलम्, रसा भूस्तलं पृष्ठमस्य वा ॥६॥ एकदेशेन तलं रसा चापि ॥

रन्ध्रं बिलं निर्व्यथनं कुहरं सुषिरं शुषिः ॥ ६ ॥
छिद्रं रोपं विवरं च निम्नं रोकं वपान्तरम् ।

रध्यति रन्ध्रं "स्फायितञ्चि-" ॥ (उणा-३८६) ॥ इति रे निपात्यते ॥ १ ॥ बिलति भिनत्ति बिलम् ॥ २ ॥ निर्व्यथ्यन्तेऽनेन निर्व्यथनम् ॥ ३ ॥ कुहयते कुहरम् "मृदुकन्दि-" ॥ (उणा-३९९) इति किदरः, कुत्सितं हरतीति वा, कुं हरति, शून्यत्वादिति वा ॥४॥ सुष्यत्यस्मिन् सुषिरं "सुषीषि-" ॥ (उणा-४१६) ॥ इति किदरः सुषिरस्यास्तीति वा, अभ्रादित्वाद् रः, सुषिर्वर्णमात्रेऽपि प्रयुक्तः ॥ ५ ॥ शुष्यत्यस्यां शुषिः "नाम्युपान्त्य-" ॥ (उणा-६०९) इति किदिः स्त्रीलिङ्गोऽयम्, वैजयन्ती तु-'श्वभ्रं नपुंसकं शुषिर्वा' इति पुंस्याह । 'शुष्क स्यात् शुषिं दन्तादि' इत्येके ॥ ६ ॥ छिद्यते छिद्रं "ऋज्यजि-" ॥ (उणा-३८८) ॥ इति किद् रः ॥ ७ ॥ रुप्यति विमोहयति रोपम् ॥ ८ ॥ विव्रियते विवरम् ॥ ९ ॥ निमिमीतेऽत्र निम्नं "घुयुनिभ्यो मः किच्च" ॥ (उणा-२६६) ॥ इति मः ॥ १० ॥ रोकते प्रकाशतेऽनेन रोकम् ॥ ११ ॥ उप्यतेऽस्यां वपा भिदादित्वात् साधु ॥ १२ ॥ वपानिम्नमन्तरम् ॥ १३ ॥

गर्त-श्वभ्रावटागाधदरास्तु विवरे भुवः ॥ ७ ॥

गिरति गर्तः पुंक्लीबलिङ्गः "हस्यमि-" ॥ (उणा-२००) ॥ इति तः ॥ १ ॥ श्वसिति श्वभ्रं "स्फायितञ्चि-" ॥ (उणा-३८६) ॥ इति रे निपात्यते, श्वभिभ्रान्तमिति वा ॥ २ ॥ अवत्यस्मादवटः "किट्यादि-" ॥ (उणा-१४२) ॥ इत्यटः, न गाढ

स्तीति वा अवाक् अटन्ति अस्मिन् बाहुलकात् "पुंनाम्नि" ॥ ५ । ३ । १३० ॥ इति घः पृषोदरादित्वात् साधुः ॥ ३ ॥ न गाधाऽगाधः ॥ ४ ॥ दीर्यते दरः भ्रियते ॥ ५ ॥ ० ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां स्वोपज्ञाभिधानचिन्तामणिनाममालाटीकायां नारककाण्डः पञ्चमः ॥ ५ ॥

---

॥ अर्हम् ॥

## अथ षष्ठः काण्डः ।

उक्ता देवाधिदेवादयो मुक्ताः, संसारिणश्चतुर्गतयो देवा मर्त्यास्तिर्यञ्चो नारकाश्च क्रमादसाधारणाश्चाभिहिताः पञ्चभिः काण्डैः । इदानीं तत्साधारणनामाभिधायि षष्ठं सामान्यकाण्डमारभ्यते—

स्याल्लोको विष्टपं विश्वं भुवनं जगती जगत् ।

लोक्यतेऽवलोक्यतेऽनन्तज्ञानिभिः भावाभावानस्मिन्निति लोकः ॥ १ ॥ विशन्त्यस्मिन् जीवाजीवा विष्टपं पुंक्लीबलिङ्गः "विष्टपोलप" ॥ ( उणा–३०७ ) ॥ इत्यप निपात्यते ॥ २ ॥ "निघृषी" ॥ ( उणा–१११ ) ॥ इति किद्वे विश्वम् ॥ ३ ॥ भवन्त्यस्मिन् सर्वे भुवनं पुंक्लीबलिङ्गः "सूभूभ्यः-" ॥ ( उणा–२७४ ) ॥ इति किदनः ॥४॥ गच्छन्त्यस्यां जगती "गमेर्डिद् द्वे च" ॥ ( उणा–८८५ ) ॥ इति अतुः "अधात्वृदितः" ॥ २।४।२ ॥ इति ङी ॥५॥ गच्छतीत्येवंशीलं जगत् क्लीबलिङ्गः "दिद्युद्द" ॥ ५।२।८३ ॥ इति क्विपि निपात्यते ॥ ६ ॥

जीवाजीवाधारक्षेत्रं लोकोऽलोकस्ततोऽन्यथा ॥ १ ॥

जीवाः प्राणवन्त एकेन्द्रियादयः तेभ्योऽन्येऽजीवा धर्मास्तिकायादयः तेषामाधारभूतं क्षेत्रं लोक इत्यनुवादः ॥१॥ तस्मादन्योऽलोक आकाशमात्रम् ॥१॥१॥

क्षेत्रज्ञ आत्मा पुरुषश्चेतनः

क्षेत्रं देहमात्रं जानाति वर्तयते शरीरप्रमाणत्वात् क्षेत्रज्ञः ॥१॥ अतति सततमात्मा पुंलिङ्गः "सात्मन्नात्मन्-" ॥ (उणा–९१६) ॥ इति मनि निपात्यते ॥२॥ पुरि शरीरे शेते पुरुषः, पृषोदरादित्वात् ॥ ३ ॥ चेतयते चेतनः ॥४॥ जीवोऽपि ॥

स पुनर्भवी ।

जीवः स्यादसुमान् सत्त्वं देहभृत्-जन्यु-जन्तवः ॥ २ ॥

स भावना मनोऽस्त्यस्य भवी संसारी ॥ १ ॥ जीवति प्राणान् धारयति जीवः

॥ २ ॥ असव प्राणा सन्त्यस्य असुमान् । प्राणीत्यपि ॥ ३ ॥ सीदति सत्त्वं पुंक्ली बलिङ्ग ॥ ४ ॥ देहं बिभर्ति देहभृत्, यौगिकत्वाद् देहवान्, शरीरीत्यादय ॥५॥ जायते जन्तु "यजिजुषि-" ॥ (उणा-८०१) ॥ इति तु ॥६॥ "कृषिकमि" ॥ (उणा-७७३) ॥ इति तुनि जन्तु पुंक्लीबलिङ्ग ॥७॥ देपाः पुंसि ॥ ९ ॥

उत्पत्तिर्जन्म-जनुषी जनन जनिरुद्भवः ।

उत्पदनमुत्पत्ति ॥ १ ॥ जननं जन्म "मन्" ॥ (उणा-९११) ॥ इति मन् । अकारान्तोऽपि ॥ २ ॥ "दर्शि " ॥ (उणा-९९७) ॥ इसुसि जनुः क्लीबलिङ्गावेतौ ॥३॥ जन्यते जननम् ॥४॥ "पदिपठि" ॥ (उणा-६०७) ॥ इति इत्यसमे जनिः स्त्रीलिङ्गः ॥ ५ ॥ उद्भवनमुद्भव ॥ ६ ॥

जीवेऽसुजीवितप्राणा

जीवत्यनेन जीव त्रिलिङ्ग तत्र ॥ १ ॥ अस्यन्तेऽपव पुंसि बहुवचनान्त "असन्" ॥ (उणा-७१६) ॥ इत्युः ॥२॥ जीव्यतेऽनेनेति जीवितम्, जीवातुरपि ॥ ३ ॥ प्राणित्यनेन प्राणाः पुंसि बहुवचनान्त ॥ ४ ॥

जीवातुर्जीवनौषधम् ॥ १ ॥

जीवत्यनेन जीवातु पुंक्लीबलिङ्ग "जीवेरातु" ॥ (उणा-७८२) ॥ १ ॥ जीवनाय औषध जीवनौषधम् ॥ २ ॥ ३ ॥

श्वासस्तु श्वसितम्

श्वसन श्वास ॥१॥ "क्लीबे" ॥५।३।१२३॥ इति भावे क्ते श्वसितम् ॥ २ ॥

सोऽन्तर्मुख उच्छ्वास आहर ।

आनः

॥ श्वासोऽन्तर्मुखो मध्यवर्ति उच्छ्वसित्यनेन उच्छ्वास ॥ १ ॥ आहरत्यनेन आहर ॥ २ ॥ अनित्यनेन आनः ॥ ३ ॥

बहिर्मुखस्तु स्यात्रि श्वासः पान एसनः ॥ २ ॥

स श्वासो बहिर्मुखो बहिर्वर्ति नि श्वसित्यनेन नि श्वास ॥ १ ॥ पीयतेऽनेन पान ॥ २ ॥ एसेतनः "वीपति" ॥ (उणा-९९२) ॥ इति बहुवचनात् तन ॥ ३ ॥ ४ ॥

आयुर्जीवितकालः

एत्यायुः क्लीबलिङ्ग "इणो णित्" ॥ (उणा-९९८) ॥ इत्युस् "कृवापाजि" ॥ (उणा-१) ॥ इत्युणि आयुरकारान्तो वा पुंलिङ्गः ॥ १ ॥ जीवितस्य कालो जीवितकालः ॥ २ ॥

अन्तःकरणं मानसं मनः ।

हृच्चेतो हृदयं चित्तं स्वान्तं गूढपथोच्चले ॥ ६ ॥

अन्तर्गतं करणं करणानामन्तर्गतं वा अन्तःकरणम्, "आत्मा मनश्च बुद्धिरेवान्तःकरणमुच्यते" इति कामन्दकिः; मनोबुद्धिरहंकार इत्यन्तःकरणं त्रिधेत्यन्ये ॥१॥ मन एव मानसं प्रज्ञादित्वादण् ॥२॥ मन्यते आत्माऽनेनास्मात् मनः, यदयोषाम् सर्के–"सर्वार्थग्रहणं मनः" इति "असू" ॥ ( उणा–९५२ ) ॥ इत्यस् ॥ ३ ॥ ह्रियते विषयैरिति "पदृस्वम्" ॥ ( उणा– ) ॥ इति डुक् ॥ ४ ॥ चेतयते चेतः "असू" ॥ ( उणा–९५२ ) ॥ इत्यसु ॥ ५ ॥ ह्रियते हृदयं "गयहृदय" ॥ ( उणा–३७० ) ॥ इत्यये निपात्यते ॥ ६ ॥ चेतयति चित्तं "ज्ञानेच्छार्थार्थ" ॥ ५ । २ । ९२ ॥ इति क्तः ॥ ७ ॥ स्वनति स्वान्तं "क्षुब्धविरिब्ध–" ॥ ४ । ४ । ७० ॥ इति क्ते साधुः विषयध्वनाकुलं मनः स्वान्तमित्यन्ये ॥ ८ ॥ गूढः पन्था अस्य गूढपथम् ॥ ९ ॥ उच्चलत्युच्चलम्, अनिन्द्रियमपि ॥ १० ॥ ५ ॥

मानसः कर्म सङ्कल्पः स्यात्

संकल्पनं सङ्कल्पः मनसो व्यापारः, विकल्पोऽपि ॥ १ ॥

अथो शर्म निर्वृतिः ।

सातं सौख्यं सुखम्

शृणाति दुःखं शर्म क्लीबलिङ्गं "मन्" ॥ ( उणा–९११ ) ॥ इति मन्, शर्मापि ॥ १ ॥ निर्वरणं निर्वृतिः ॥ २ ॥ सन्यते सातं "आः खनिसनिजनः" ॥ ४ । २ । ६० ॥ इत्यात्वम् ॥३॥ सुखमेव सौख्यं भेषजादित्वात् ष्यण्, सुखस्य भावो वा ॥ ४ ॥ सुखयति सुखम्, सुष्ठु खनतीति वा "क्वचित्" ॥ ५ । १ । १७१ ॥ इति डः, शोभनानि खान्यत्रेति वा । शं कोपं चाऽन्त्येषु वक्ष्येते ॥ ५ ॥

दुःखं त्वसुखं वेदना व्यथा ॥ ६ ॥

पीडा बाधाऽऽर्त्तिराभीलं कृच्छ्रं कष्टं प्रसूतिजम् ।

आमनस्यं प्रगाढं च

दुःखयति दुःखं दुःखनतीति वा दुष्टानि खान्यत्रेति वा ॥ १ ॥ न सुखमसुखम् ॥ २ ॥ वेदनं वेदना ॥ ३ ॥ व्यथनं व्यथा पिरादङ् ॥ ४ ॥ ६ ॥ पीडनं पीडा "मापिभूपि–" ॥ ५ । ३ । १०९ ॥ इति बहुवचनादङ् ॥५॥ बाधनं बाधा "फेटः" ॥ ५ । ३ । १०६ ॥ इत्य यमि बाधोऽपि ॥ ६ ॥ अर्दनमार्त्तिः ॥ ७ ॥ आ समन्तात् भियं लातामीलम् ॥ ८ ॥ कृन्तति कृच्छ्रं "कृते कृच्छ्रौ च" ॥ ( उणा–

१९५ ) ॥ इति दः ॥ ९ ॥ कपिष्यति कर्म "स्पोऽनिट्" ॥ ५ । १ । २ ॥ इति भविष्यति च 'कप कृच्छ्रगहने' ॥ ४ । ४ । ६७ ॥ इतीङ्भाव ॥ १० ॥ प्रसूते जातं प्रसूतिजम्, उपचारात् सामान्येऽपि ॥ ११ ॥ अमनसो भाव आमनस्यं वैमनस्यमित्यर्थः ॥ १२ ॥ प्रगाढमारब्धं प्रगाढम् ॥ १३ ॥

स्यादाधिर्मानसी व्यथा ॥ ७ ॥

मनस पीडा आधीयते चिन्ता अनेन आधिः पुंलिङ्गः ॥ १ ॥ ७ ॥

सपत्राकृतिनिष्पत्राकृती त्वत्यन्तपीडने ।

पत्रं शर सह पत्रमनेन सपत्र कायनिक्षिप्तशरः, निर्गतं पत्रमस्मान्निष्पत्रः शरीरान्तर्निष्क्रान्तशरो मृगादि सपत्रस्य निष्पत्रस्य च करणं सपत्राकृतिः, निष्पत्राकृति एतावुपचारादत्यन्तपीडनामात्रे वर्तेते "सपत्रनिष्पत्रादतिव्यथने" ॥ ५ । ४ । ६१ ॥ इति डाच् ॥ १ ॥ २ ॥

क्षुज्जाठराग्निजा पीडा

क्षुध्यत्यनया क्षुत् ॥ १ ॥

व्यापादो द्रोहचिन्तनम् ॥ ८ ॥

विरुद्धमापादनं व्यापादः ॥ १ ॥ ८ ॥

उपज्ञा ज्ञानमाद्यं स्यात्

उपज्ञायते उपज्ञा इदं प्रथमतया ज्ञानं यथा चन्द्रस्योपज्ञा चन्द्रोपज्ञमसंज्ञकं व्याकरणम् ॥ १ ॥

चर्चा सङ्ख्या विचारणा ।

चर्चनं चर्चा "गोपिभृषि" ॥ ५ । ३ । १०९ ॥ इत्यङ् चर्चोऽपि ॥ १ ॥ सङ्ख्यानं सङ्ख्या "उपसर्गादातः" ॥ ५ । ३ । ११० ॥ इत्यङ् ॥ २ ॥ विचारणं विचारणा "णिवेत्त्यास" ॥ ५ । ३ । १११ ॥ इत्यनः ॥ ३ ॥

वासना भावना संस्कारोऽनुभूतार्थाविस्मृतिः ॥ ९ ॥

वास्यतेऽनया वासना ॥ १ ॥ भाव्यतेऽनया भावना ॥ २ ॥ संस्क्रियतेऽनेन संस्कारः, अनुभूतार्थस्य वस्तुनोऽविस्मरणम् आदिग्रहणाद् दृष्टश्रुतादेः ॥ ३ ॥ ९ ॥

निर्णयो निश्चयोऽन्तः

निर्णयनं निर्णयः ॥ १ ॥ निश्चयनं निश्चयः ॥ २ ॥ अन्तति संदेहाभावमन्तः ॥ ३ ॥

सम्प्रधारणा समर्थनम् ।

सम्प्रधार्यते अर्थः स्वरूपमापाद्यतेऽनया सम्प्रधारणा गुणागुणपरीक्षा ॥ १ ॥ समर्थ्यते समर्थनम् ॥ २ ॥

अविद्याऽहंमत्यज्ञाने

विरुद्धवेदनमविद्या अधर्मानर्थवद् विपर्ययेऽत्र नञ्, यदाह–अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥१॥ अहमित्यस्य मननमहंमति, अनात्मन्यात्माभिमानात् अह विभक्त्यन्तप्रतिरूपकमव्ययम् ॥२॥ विरुद्धज्ञानमज्ञानम् ॥

भ्रान्तिर्मिथ्यामतिर्भ्रमः ॥ १० ॥

भ्रमण भ्रान्तिः अतस्मिंस्तदिति ज्ञानम् ॥१॥ मिथ्या मननं मिथ्यामतिः ॥२॥ भ्रमणं भ्रमः ॥ ३ ॥ १० ॥

संदेहद्वापराऽऽरेका विचिकित्सा च संशयः ।

संदेहनं संदेहः उभयकोटिपरामर्शि ज्ञानम् ॥१॥ द्वौ पक्षौ परावत्र द्वापरं पुंक्लीबलिङ्गः पृषोदरादित्वाद्दात्वम् ॥ २ ॥ आरेचनमारेका ॥ ३ ॥ विचिकित्सनं विचिकित्सा "कित संशयप्रतीकारे" ॥ ३।४।६ ॥ इति कितः स्वार्थे सन् ॥ ४ ॥ संशयनं संशयः समन्ततः शेते आत्माऽस्मिन्निति वा ॥ ५ ॥

परभागो गुणोत्कर्षः

परस्य भजनं परभागः ॥ १ ॥ गुणानामुत्कर्षो गुणोत्कर्षः ॥ २ ॥

दोषे त्वादीनवाऽऽस्रवौ ॥ ११ ॥

दुष्यत्यनेन दोषस्तत्र ॥ १ ॥ आ समन्तात् दीयन्ते क्षीयन्ते गुणा अस्मिन्नादीनवः "कैरव" ॥ (उणा–५१९) ॥ इत्यत्रे निपात्यते ॥ २ ॥ आस्रवन्ति गुणा अस्मिन्नास्रवः, आदीनवास्रवौ क्लेशे इत्यमरः ॥ ३ ॥ ११ ॥

स्वाद् रूपं लक्षणं भावश्चात्मा प्रकृतिरीतयः ।
सहजो रूपतत्त्वं च धर्मः सर्गो निसर्गवत् ॥ १२ ॥
शीलं सतत्त्वं संसिद्धिः

स्वशब्दात् परे रूपलक्षणभावाः स्वस्य रूपं लक्षणं भावश्च स्वरूपम् ॥ १ ॥ स्वलक्षणम् ॥ २ ॥ स्वभावः ॥३॥ अतत्यनेन आत्मा ॥ ४ ॥ प्रक्रियतेऽनया प्रकृतिः ॥ ५ ॥ रीयते यात्यनया रीतिः ॥ ६ ॥ सह जातः सहजः ॥ ७ ॥ रूपस्य वस्तुमात्रस्य भावो रूपतत्त्वम् ॥ ८ ॥ धरति स्थैरिर्यं धर्मः पुंक्लीबलिङ्गः "भर्तारि" ॥ (उणा–३३८) ॥ इति मः ॥ ९ ॥ सृज्यतेऽनेन सर्गः ॥ १० ॥ एवं निसर्गः ॥ ११ ॥ १२ ॥ शील्यते धार्यते शीलं पुंक्लीबलिङ्गः ॥ १२ ॥ सह तद्भावेन वर्तते सतत्त्वम् ॥ १३ ॥ संसिद्धस्य भावः संसिद्धिः ॥१४॥

अवस्था तु दशा स्थितिः ।

अवस्थानमवस्था ॥ १ ॥ दस्यतेऽनया यथा स्थादित्वात् क ॥२॥ तिष्ठत्यनया स्थिति ॥ ३ ॥

स्नेह प्रीतिः प्रेमहार्दे

स्नेहन स्नेह पुंक्लीबलिङ्ग ॥ १ ॥ प्रीयते प्रीतिः ॥ २ ॥ प्रियस्य भाव कर्म वा प्रेम पुंक्लीबलिङ्गः पृथ्वादित्वादिमनि "प्रियस्थिर–" ॥ ७।४।३८ ॥ इति प्रादेश, प्रीयतेऽनेनेति वा "मन्" ॥ ( उणा–५११ ) ॥ इति मन् ॥ ३ ॥ हृदयस्य भावो हार्दम् ॥ ४ ॥

दाक्षिण्य स्वनुकूलता ॥ १२ ॥

विप्रतिसारोऽनुशयः पश्चात्तापोऽनुतापश्च ।

वैपरीत्येन प्रतिसरणे विप्रतिसारः एकदेशस्य विकृतत्वाद् विप्रतीसारोऽपि ॥ १ ॥ अनुशयनमनुशय ॥ २ ॥ पश्चात् तपन पश्चात्ताप ॥ ३ ॥ अनुपश्चात् तपनमनुताप ॥ ४ ॥

अवधानसमाधानमभिधानानि तु समाधौ स्युः ॥ १३ ॥

अवधीयतेऽवधानम् ॥ १ ॥ एवमपरे अपि ॥ २ ॥ ३ ॥ समाधानं समाधि तत्र ॥ ४ ॥ १४ ॥

धर्मः पुण्यं वृषः श्रेयःसुकृते

धरतीति धर्म "अर्तीरि–" ॥ ( उणा–३३८ ) ॥ इति मः, यदवोचाम – "दुर्गतिप्रपतत्प्राणिधारणाद्धर्म उच्यते" ॥१॥ पुनाति पुण्य "पृवीभ्यनि" ॥ (उणा –३११) ॥ इति किद् यः, पूयतेऽनेन वा "शिक्यास्याढ्य" ॥ (उणा–३६४) ॥ इति ये निपात्यते ॥२॥ वर्षति कामान् वृष ॥ ३ ॥ अतिशयेन प्रशस्यं श्रेय ॥४॥ सुष्ठु क्रियते सुकृतं तत्र ॥ ५ ॥

नियतौ विधिः ।

दैवं भाग्य भागधेयं दिष्टं च

नियम्यतेऽनया नियतिस्तस्याम् ॥ १ ॥ विधीयतेऽनेन विधि ॥ २ ॥ देवस्य आत्मन इदं पूर्वकर्म दैव पुंक्लीबलिङ्ग ॥ ३ ॥ भज्यते भाग्यम्, भज्यते भागः स एवेति वा भव्यादित्वात् स्वार्थे यः ॥४॥ भाग एव भागधेयं "नामरूपभागाद्धेय " ॥ ७।२।१५८ ॥ ५ ॥ दिश्यते स्म दिष्टम् ॥६॥

अयस्तु सच्छुभम् ॥ १५ ॥

सद् दैवं शुभम् एनस्य "अय्" ॥ ५।३।१४९ ॥ १ ॥ १५ ॥

अविद्याऽहंमत्यज्ञाने

*विरुद्धवेदनमविद्या अधर्मानर्थवद् विपर्ययेऽत्र नञ्, यदाह—अनित्याशुचिदु*
खानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥१॥ अहमित्यस्य मननमहंमति, अनात्म-
न्यात्माभिमानात् अहं विभक्त्यन्तप्रतिरूपकमव्ययम् ॥२॥ विरुद्धज्ञानमज्ञानम् ॥

भ्रान्तिर्मिथ्यामतिर्भ्रमः ॥ १० ॥

भ्रमणं भ्रान्तिः अतस्मिंस्तदिति ज्ञानम् ॥१॥ मिथ्या मननं मिथ्यामतिः ॥२॥
भ्रमणं भ्रमः ॥ ३ ॥ १० ॥

संदेहद्वापराऽऽरेका विचिकित्सा च संशयः ।

संदेहनं संदेहः उभयकोटिपरामर्शि ज्ञानम् ॥१॥ द्वौ पक्षौ परावत्र द्वापरं पुंक्ली-
बलिङ्गः पृषोदरादित्वात्सात्वम् ॥ २ ॥ आरेचनमारेका ॥ ३ ॥ विचिकित्सनं विचि-
कित्सा "कित संशयप्रतीकारे" ॥ ३।४।६ ॥ इति कितः स्वार्थे सन् ॥ ४ ॥
संशयनं संशयः समन्तत शेते आत्माऽस्मिन्निति वा ॥ ५ ॥

परभागो गुणोत्कर्षः

परस्य भजनं परभागः ॥ १ ॥ गुणानामुत्कर्षो गुणोत्कर्षः ॥ २ ॥

दोषे त्वादीनवास्रवौ ॥ ११ ॥

दुष्यत्यनेन दोषस्तत्र ॥ १ ॥ आ समन्तात् दीयन्ते क्षीयन्ते गुणा अस्मिन्ना-
दीनवः "कैरव" ॥ (उणा-५१९) ॥ इत्यवे निपात्यते ॥ २ ॥ आस्रवन्ति गुणा
अस्मिन्नास्रवः, आदीनवास्रवौ क्लेशे इत्यमरः ॥ ३ ॥ ११ ॥

स्वाद् रूपं लक्षणं भावश्चात्मप्रकृतिरीतयः ।
सहजो रूपतत्त्वं च धर्मः सर्गो निसर्गवत् ॥ १२ ॥
शीलं सतत्त्वं संसिद्धिः

स्वशब्दात् परे रूपलक्षणभावाः स्वस्य रूपं लक्षणं भावश्च स्वरूपम् ॥ १ ॥
स्वलक्षणम् ॥ २ ॥ स्वभावः ॥३॥ अतत्यनेन आत्मा ॥ ४ ॥ प्रक्रियतेऽनया प्रकृतिः
॥ ५ ॥ रीयते गम्यतेऽनया रीतिः ॥ ६ ॥ सह जातः सहजः ॥ ७ ॥ रूपस्य वस्तु-
नस्तत्त्वं भावो रूपतत्त्वम् ॥ ८ ॥ धरति स्वैरितां धर्मः पुंक्लीबलिङ्गः "अर्त्तीरि" ॥
(उणा-३३८) ॥ इति मः ॥ ९ ॥ सृज्यतेऽनेन सर्गः ॥ १० ॥ एवं निसर्गः
॥ ११ ॥ १२ ॥ शील्यते धार्यते शीलं पुंक्लीबलिङ्गः ॥ १२ ॥ सह तद्भावेन वर्तते
सतत्त्वम् ॥ १३ ॥ संसिद्ध्यत्यनया संसिद्धिः ॥१४॥

अवस्था तु दशा स्थितिः ।

अवस्थानमवस्था ॥ १ ॥ दश्यतेऽनया दशा स्यादित्वात् कः ॥२॥ तिष्ठत्यनया स्थिति ॥ ३ ॥

स्नेह प्रीतिः प्रेमहार्दे

स्नेहन स्नेहः पुल्लीबलिङ्गः ॥ १ ॥ प्रीयते प्रीतिः ॥ २ ॥ प्रियस्य भावः कर्म वा प्रेम पुल्लीबलिङ्गः पृथ्वादित्वादिमनि "प्रियस्थिर-" ॥ ७। ४।२८ ॥ इति प्रादेश, प्रीयतेऽनेनेति वा "मन्" ॥ ( उणा-९११ ) ॥ इति मन् ॥ ३ ॥ हृदयस्य भावो हार्दम् ॥ ४ ॥

दाक्षिण्य स्त्वनुकूलता ॥ १३ ॥

विप्रतिसारोऽनुशयः पश्चात्तापोऽनुतापश्च ।

वैपरीत्येन प्रतिसरणं विप्रतिसारः एकदेशस्य विकृतत्वात् विप्रतीसारोऽपि ॥ १ ॥ अनुशयनमनुशय ॥ २ ॥ पश्चात् तपनं पश्चात्ताप ॥ ३ ॥ अनुपश्चात् तपनमनुताप ॥ ४ ॥

अवधानसमाधानप्रणिधानानि तु समाधौ स्युः ॥ १४ ॥

अवधीयतेऽवधानम् ॥ १ ॥ एवमपरे अपि ॥ २ ॥ ३ ॥ समाधानं समाधिः तत्र ॥ ४ ॥ १४ ॥

धर्मः पुण्यं वृषः श्रेयःसुकृते

धरतीति धर्मः "अर्तीरि-" ॥ ( उणा-३३८ ) ॥ इति मः, यदवोचाम – "दुर्गतिप्रपतत्प्राणिधारणाद्धर्म उच्यते" ॥१॥ पुनाति पुण्यं "पूञिजनि-" ॥ (उणा –३९१) ॥ इति किद् य , पूयतेऽनेन वा "विक्यास्त्वाप्या" ॥ (उणा–३६४) ॥ इति ये निपात्यते ॥२॥ वर्षति कामान् वृषः ॥ ३ ॥ अतिशयेन प्रशस्यं श्रेय ॥४॥ सुष्ठु क्रियते सुकृतं तत्र ॥ ५ ॥

नियतो विधिः ।

दैवं भाग्यं भागधेय दिष्ट च

नियम्यतेऽनया नियतिस्तस्याम् ॥ १ ॥ विधीयतेऽनेन विधिः ॥ २ ॥ देवस्य आत्मन इदं पूर्वकर्म दैवं पुंक्लीबलिङ्गः ॥ ३ ॥ भज्यते भाग्यम्, भज्यते भागः स एवेति वा भेषजादित्वात् स्वार्थे य ॥४॥ भाग एव भागधेयं "नामरूपभागाद्धेय" ॥ ७।२।१५८ ॥ ५ ॥ दिश्यते स्म दिष्टम् ॥६॥

अयस्तु तच्छुभम् ॥ १५ ॥

तद् दैव शुभम् एत्यय "अच्" ॥ ५।१।४९ ॥ १ ॥ १५ ॥

अलक्ष्मीर्निर्ऋतिः कालकर्णिका स्यात्

न लक्ष्मीरलक्ष्मी ॥ १ ॥ निष्क्रान्ता ऋतेः सन्मार्गान्निर्ऋतिः ॥ २ ॥ कालस्य यमस्य कर्णिका कर्णाभरणमिव कालकर्णिका ॥ ३ ॥

अथाऽशुभम् ।

दुष्कृतं दुरितं पापमेनः पाप्मा च पातकम् ॥ ६ ॥

किल्बिषं कलुषं किण्वं कल्मषं वृजिनं तमः ।

अंहः कल्कमघं पङ्कं

न शुभमशुभम् ॥ १ ॥ दुष्टं कृतं दुष्कृतम् ॥ २ ॥ दुरेति स्म दुरितम् ॥ ३ ॥ पान्त्यस्मात् पापं "भापाचणि" ॥ (उणा–२९६) ॥ इति पः ॥ ४ ॥ एत्येनः क्लीबलिङ्गः "अस्तणिभ्यां" ॥ (उणा–९७९) ॥ इति नस् ॥ ५ ॥ पातयति दुर्गतौ पाप्मा "सात्मन्नात्मन्" ॥ (उणा–९१६) ॥ इति मनि निपात्यते पुल्लिङ्गोऽयम् ॥ ६ ॥ पतके पातकं पुंक्लीबलिङ्गः ॥७॥१६॥ कल्यते किल्बिषं "कलेः किल्बिषः" ॥ (उणा–५५१) ॥ इतीषः ॥ ८ ॥ "कलुषादिः" ॥ (उणा–५५७) ॥ इत्युषे कलुषं कं सुखं लोपयतीति वा ॥ ९ ॥ 'किणि सौत्रः' किण्यते किण्वं "निघृषि" ॥ (उणा–५११) ॥ इति किद्वः ॥ १० ॥ कल्यते कल्मषं "कलेर्मषः" ॥ (उणा–५६२) ॥ ११ ॥ वृज्यते वृजिनं "वृजिवृहि" ॥ (उणा–२८१) ॥ इति किदिनः ॥ १२ ॥ ताम्यत्यनेन तमः ॥ १३ ॥ अमत्यहः क्लीबलिङ्गो "अमेर्हो चान्तो" ॥ (उणा–९६२) ॥ इत्यस् अहते वा "अस्" ॥ (उणा–९५२) ॥ इत्यस् ॥ १४ ॥ कल्यते कल्कं पुंक्लीबलिङ्गः "भीण्शलि-" ॥ (उणा–२१) ॥ इति कः ॥ १५ ॥ अमत्यघं "मघाघन्या-" ॥ (उणा–११०) ॥ इति घे निपात्यते, न जहाति वा, अघयतीति वा ॥ १६ ॥ पच्यते पङ्कं पुंक्लीबलिङ्गः ॥ १७ ॥

उपाधिर्धर्मचिन्तनम् ॥ १७ ॥

उपाधीयते उपाधिः पुंल्लिङ्गः ॥ १ ॥ धर्मस्य चिन्ता धर्मचिन्तनम् ॥ २ ॥ १७ ॥

त्रिवर्गो धर्मकामार्थाः

त्रिसङ्ख्यो वर्गः त्रिवर्गः ॥ १ ॥

चतुर्वर्गः समोक्षकाः ।

धर्मकामार्थाः इत्येव चतुःसङ्ख्यो वर्गश्चतुर्वर्गः ॥ १ ॥

बलतुर्याश्चतुर्भद्रम्

बलं तुर्यं येषां ते बलतुर्या धर्मकामार्थाः ॥१॥ चतुर्णां भद्राणां समाहारश्चतुर्भद्रं पात्रादित्वात् स्त्रीत्वाभावः ॥ २ ॥

प्रमादोऽनवधानता ॥ १८ ॥

प्रमदनं प्रमादः ॥ १ ॥ अनवधानस्य भावोऽनवधानताऽनवहितत्वं कार्येष्व तात्पर्यम् ॥ २ ॥ १८ ॥

छन्दोऽभिप्राय आकूतं मतभावाशया अपि ।

छन्दयत्याह्लादयति छन्दः "असुन्" ॥ ५ । १ । ४९ ॥ इसन्त् पृषोदरादित्वात् छत्वे ॥ १ ॥ आभिमुख्येन प्रयत्नाप्तेन अभिप्रायः ॥ २ ॥ आकूयते आकूतम् ॥ ३ ॥ मन्यते मतम् ॥ ४ ॥ भवत्यस्मिन् भावः पुंक्लीबलिङ्गः ॥ ५ ॥ आशेरतेऽस्मिन्नाशयः ॥ ६ ॥

हृषीकमक्षं करणं स्रोतः खं विषयीन्द्रियम् ॥ १९ ॥

हृष्यन्त्यनेन हृषीकं "ऋचिमृद्" ॥ ( उणा-५५४ ) ॥ इति क्लीबः ॥ १ ॥ अश्नोति व्याप्नोत्यक्षम् ॥ २ ॥ क्रियतेऽनेन करणम् ॥ ३ ॥ स्रवत्यस्मान्मलः स्रोतः क्लीबलिङ्गः ॥ ४ ॥ अश्नुते व्याप्नोति खं "अशेर्डित्" ( उणा-८७ ) ॥ इति खः "डित्यन्त्यस्वरादेः" ॥ २ । १ । ११४ ॥, इत्यन्त्यस्वरादिलोपः ॥ ५ ॥ विषयः स्पर्शादिरस्त्यस्य विषयि ॥ ६ ॥ इन्द्रस्यात्मनो लिङ्गमिन्द्रियं स्पर्शनादि अनेन हि आत्माऽनुमीयते, इन्द्रेण दृष्टं वा आत्मा हि स्पर्शनादीनि दृष्ट्वा स्वविषयेषु नियुङ्क्ते आत्मत्वेन हि शुभकर्मणा तथाविधविषयोपभोगाय स्पर्शनादीनि भवन्ति इन्द्रेण जुष्टं वा तद्द्वारेणाऽस्य विज्ञानोत्पादात्, इन्द्रेण दत्तं वा विषयग्रहणाय विषयेभ्यः समर्पणात् इन्द्रस्यावरणक्षयोपशमसाधनमिति वा "इन्द्रियम्" ॥ ७ । १ । १७४ ॥ इति इयप्रत्ययान्तं निपात्यते ॥ ७ ॥ १९ ॥

बुद्धीन्द्रियं स्पर्शनादि

बुद्धेर्हेतुरिन्द्रियं बुद्धीन्द्रियं स्पृश्यतेऽनेन स्पर्शनम् आदिग्रहणात् रसनघ्राणचक्षुःश्रोत्राणीन्द्रियाणि गृह्यन्ते यदवाचाम प्रमाणमीमांसायाम्- 'स्पर्शरसगन्धरूपशब्दग्रहणलक्षणानि स्पर्शनरसनघ्राणचक्षुःश्रोत्राणीन्द्रियाणि द्रव्यभावभेदानि" इति ॥ १ ॥

पाण्यादि तु क्रियेन्द्रियम् ।

*क्रियाव्यापार आदानादिः यदाह 'उत्सर्गानन्दनादानगत्यालापास्तु तत्क्रियाः"*
इति क्रियाहेतुरिन्द्रियं क्रियेन्द्रियम् आदिग्रहणात् वाक्पादपायूपस्था गृह्यन्ते ॥ १ ॥

स्पर्शादयस्त्विन्द्रियार्था विषया गोचरा अपि ॥ २० ॥

स्पर्शनं स्पर्शः, आदिग्रहणात् रसगन्धरूपशब्दा गृह्यन्ते इन्द्रियैरर्थ्यन्ते इन्द्रियार्थाः ॥ १ ॥ विषिण्वन्ति विषयाः "सयसितस्य" ॥ २ । ३ । ४७ ॥ इति षत्वम् ॥ २ ॥ गावः इन्द्रियाणि चरन्त्येषु गोचराः 'गोचरसंचर" ॥ ५ । ३ । १३१ ॥ इति घः ॥ ३ ॥ २० ॥

शीते तुषार शिशिर सुशीम शीतलो जड ।
हिम

श्येतेऽनेन शीत "शीरीभू" ॥ (उणा–२०१) ॥ इति किद् तः तम्, श्यायते स्मेति वा "श्य शीञ्श्वमूर्त्ति" ॥ ४।१।९७ ॥ इति शीरादेश ॥ १ ॥ तुष्यत्यनेन तुषार "तुषिकुठिभ्यां किद्" ॥ (उणा–४०८) ॥ इत्यार ॥ २ ॥ शशत्यनेन शिशिर "शवशेरिचास" ॥ (उणा–४१२) ॥ इतीर ॥ ३ ॥ सुष्ठु श्यायते सुशीम, सुषीमोऽपि ॥ ४ ॥ शेतेऽनेन शीतल "शीङस्तलक्" ॥ (उणा–५०१) ॥ इति तलक्, शीत शीतस्पर्शमस्त्यस्य वा सिध्मादित्वाल्, शीतं ला तीति वा ॥ ५ ॥ जलति जड ॥ ६ ॥ हिनोति हिम "क्षुहिम्भ्यां वा" ॥ (उणा–३४१) ॥ इति किद् म ॥ ७ ॥

अथोष्णे तिग्मस्तीव्रस्तीक्ष्णश्चण्ड खर पटु ॥ २१ ॥

उष्णात्युष्ण "पृषोष्णा–" ॥ (उणा–१८३) ॥ इति किद् णक्तम् ॥ १ ॥ तेजयति तिग्मः "तिजियुजेर्ग् च" ॥ (उणा–३४५) ॥ इति किद् म ॥ २ ॥ तीवति तीव्र "ऋत्र क्षुर" ॥ (उणा–३९६) ॥ इति रे निपात्यते ॥ ३ ॥ तेजयति तीक्ष्णः "श्लक्ष्णतूण" ॥ (उणा–१८९) ॥ इति णे निपात्यते ॥ ४ ॥ चण्डते चण्डः चणत्यनेनेति वा "पञ्चमाण्–" ॥ (उणा–१६८) ॥ इति ड ॥ ५ ॥ खनति खरः, खं रातीति वा ॥ ६ ॥ पटति उष्णतां पटु ॥ ७ ॥ २१ ॥

कोष्ण कवोष्ण कदुष्णो मन्दोष्णश्चेषदुष्णवत् ।

ईषदुष्णः कोष्ण ॥ १ ॥ कवोष्णः "काकवौ वोष्णे" ॥ ३।२।१३७ ॥ इति साधु ॥ २ ॥ "को कद्" ॥ ३।२।१३० ॥ इति कदादेशे कदुष्ण ॥३॥ मन्दमुष्णो मन्दोष्णः ॥ ४ ॥ अल्पमुष्ण ईषदुष्ण ॥ ५ ॥

निष्ठुर कक्खट क्रूर परुष कर्कश खर ॥ २२ ॥
दृढ कठोर कठिनो जरठ

नियते तिष्ठति निष्ठुर "ऋतुर" ॥ (उणा–४२६) ॥ इत्युरे निपात्यते ॥१॥ 'कक्ख हसने' कक्खयते कक्खट "विष्यमि–" ॥ (उणा–१४१) ॥ इत्यट खाहट इत्यन्ये ॥ २ ॥ क्रन्दति क्रूर "क्रते कृकृष्ठो च" ॥ (उणा–३९५) ॥ इति र ॥ ३ ॥ पृणाति परुष "पृनहि" ॥ (उणा–५५७) ॥ इत्युष, अपरुष्मर्तीति वा ॥४॥ कर्कोऽग्निरूपगानमस्त्यस्य कर्कश लोमादित्वात् श ॥ ५ ॥ खनति खरः ॥ ६ ॥ २२ ॥ दृहति दृहति वा दृढ "धर्षिस्थूले दृढ" ॥ ४।४।६९ ॥ इति क्ते साधु ॥ ७ ॥ कठति कठोर "कठिचकि–" ॥ (उणा–४२३) ॥ इत्योरे ॥८॥

"स्थाकठि" ॥ (उणा-१८२) ॥ इतीने कठिनं ॥९॥ जीर्यति जरठः "मृगृभ्यः" ॥ (उणा-१६७) ॥ इत्यठः, जरठोऽपि ॥ १० ॥

कोमलं पुनः ।

मृदुलं मृदुसोमालं सुकुमारमकर्कशम् ॥ २३ ॥

कौति कोमलं "मुरल" ॥ (उणा-४७४) ॥ इत्यले निपात्यते ॥ १ ॥ मृदुरस्त्यस्य मृदुलं सिध्मादित्वाल्लः ॥ २ ॥ म्रियते मृदुः "पृथ्रथ्रदि" ॥ (उणा-७२९) ॥ इति किदुः ॥ ३ ॥ सोमं सोमत्वमाभाति सोमालं ॥ ४ ॥ सुष्ठु कुमार इव मृदुत्वात् सुकुमारः ॥ ५ ॥ न कर्कशोऽकर्कशं ॥ ६ ॥ २३ ॥

मधुरस्तु रसज्येष्ठो गुल्यः स्वादुर्मधूलकः ।

मधु माधुर्यमस्त्यस्य मधुरः मध्वादित्वाद् रः, माद्यत्यनेनेति वा "मद्गुर-" ॥ (उणा-४२६) ॥ इत्युरे निपात्यते ॥ १ ॥ रसेषु ज्येष्ठो रसज्येष्ठः ॥ २ ॥ गुडे साधुर्गुल्यः ॥ ३ ॥ स्वद्यते स्वादु "कृवापाजि-" ॥ (उणा-१) ॥ इत्युण् ॥ ४ ॥ माद्यत्यनेन मधूलः "दुकूल-" ॥ (उणा-४९१) ॥ इत्यूले निपात्यते ॥ ५ ॥

अम्लस्तु पाचनो दन्तशठो

अमत्यम्लः "द्यामाधमा" ॥ (उणा-४६२) ॥ इति लः अम्लोऽपि ॥ १ ॥ पाचयति पाचनः ॥ २ ॥ दन्तेषु शठो दन्तशठः ॥ ३ ॥

अथ लवणः सरः ॥ २४ ॥

सर्वरसः

लवते लवणः "विदण-" ॥ (उणा-१९०) ॥ इत्यणे निपात्यते, लुनात्यास्यमिति वा नन्द्यादित्वाद् नो णत्वं च ॥ १ ॥ सरत्यनेन सरः "पुंनाम्नि घः" ॥ ५।३।१३० ॥ २ ॥ २४ ॥ सर्वे रसा अत्र सर्वरसः ॥ ३ ॥

अथ कटुः स्यादोषणो मुखशोधनः ।

कटत्यावृणोति कटुः "भृमृ" ॥ (उणा-७१६) ॥ इत्युः ॥ १ ॥ ओषत्योषणः ॥ २ ॥ मुखं शोधयति मुखशोधनः ॥ ३ ॥

वक्त्रभेदी तु तिक्तः

वक्त्रं भिनत्ति वक्त्रभेदी ॥ १ ॥ तेजयति तकति तेजयतीति वा तिक्तः "पुतपित्त" ॥ (उणा-२०४) ॥ इति ते निपात्यते ॥ २ ॥

अथ कषायस्तुवरो रसाः ॥ २५ ॥

कषति कण्ठमास्यं कषायः "कृशकुटि-" ॥ (उणा-३७१) ॥ इति आयः

॥ १ ॥ तपीति तुवर "जठर" ॥ (उणा–४०३) ॥ इत्यरे निपात्यते पुक्लीबलिङ्गौ ॥ २ ॥ रस्यन्ते इति रसा ॥ १ ॥ इत्युपसहार ॥ २५ ॥

गन्धो जनमनोहारी सुरभिर्घ्राणतर्पण ।
समाकर्षी निर्हारी च

गन्धयते गन्धो घ्राणग्राह्योऽर्थ स ॥ १ ॥ जनमनोहारी ॥ २ ॥ सुष्ठु रमते सुरभि ॥ ३ ॥ घ्राणं तर्पयति प्रीणाति घ्राणतर्पण ॥ ४ ॥ समाकर्षति चित्तं समाकर्षी ॥ ५ ॥ निर्हरत्यवश्य निर्हारी अत्र योगं प्रति प्रसिद्धत्वादनुवादेनान्यस्य विधि एवमन्यत्राऽपि ॥ ६ ॥

स आमोदो विदूरगः ॥ २६ ॥

स सुरभिर्गन्धो विदूरगोऽतिदूरव्यापी ॥ १ ॥ आसमन्तात् मोदतेऽनेन आमोद ॥ २ ॥ २६ ॥

विमर्द्दोत्थः परिमलः ।

रतविकसद्देहाङ्गरागपरिमर्द्दनोत्पन्नो हृद्यो गन्ध परिमलते परिमलः ॥ १ ॥,

अथामोदी मुखवासन ।
इष्टगन्ध सुगन्धिश्च

आमोदोऽस्त्यस्य आमोदी ॥ १ ॥ मुखं वासयत्यनुलिम्पति मुखवासनः ॥२॥ इष्टो गन्धोऽस्य इष्टगन्ध ॥ ३ ॥ शोभनो गन्धोऽस्य सुगन्धिः, द्वौ द्वौ भिन्नार्थाविमन्वे ॥ ४ ॥

दुर्गन्धः पूतिगन्धिक ॥ २७ ॥

दुष्टो गन्धोऽस्य दुर्गन्ध ॥ १ ॥ पूतर्विलः पूतेरिव वा गन्धोऽस्य पूतिगन्धिः "सुपूत्युत्सुरभेर्गन्धादिद्गुणे" ॥ ७ । ३ । १४४ ॥ इतीत् ॥ २ ॥ २७ ॥

आमगन्धि तु विस्र स्यात्

आमोऽपक्वो मत्सः तस्येव गन्धोऽस्य आमगन्धि "वोपमानात्" ॥ ७ । ३ । १४७ ॥ इतीत् ॥ १ ॥ विस्यते विस्र "ऋज्यजि-" ॥ (उणा–३८८) ॥ इति किद् र ॥ २ ॥

वर्णाः श्वेतादिका अमी ।
श्वेत श्येत सितः शुक्लो हरिणो विशदः शुचिः ॥ २८ ॥
अवदातगौरशुभ्रवलक्षधवलार्ज्जुनाः ।
पाण्डुरः पाण्डर पाण्डु

श्वेतते श्वेत ॥ १ ॥ श्यायते श्येतः "हृस्याऽरुहि" ॥ (उणा-२१०) ॥ इतीतः ॥ २ ॥ सिनोति मन सित ॥ ३ ॥ 'शुक गतौ' शोकति मनोऽत्र शुक्रः "शुक्योमृत्य- क्षित्" ॥ (उणा-४६३) ॥ इति क्र ॥ ४ ॥ हरत चेता हरिण "दुहाहि" ॥ (उणा-१९४) ॥ इतीण ॥ ५ ॥ विशति मनो विशद "कुमुद" ॥ (उणा-२४४) ॥ इति निपात्यते विशीयते वा ॥ ६ ॥ शोचति निर्मलीभवति शुचि ॥ ७ ॥ १८ ॥ अवदायते शोध्यतेऽवदात ॥ ८ ॥ 'गुरैचि उद्यमे' गुरुते मनोऽत्र गोर गोर एव गौरः प्रज्ञादित्वादण्, गूयते वा 'सुरक्षर" ॥ (उणा-३९६) ॥ इति रे निपात्यते ॥ ९ ॥ शोभते शुभ्रः "ऋज्यजि-" ॥ (उणा-३८८) ॥ इति किद् रः ॥ १० ॥ वक्षते बलक्ष अवलक्ष्यते वा पृषोदरादित्वात् ॥ ११ ॥ धुनात्यशोभामिति धवलः सृदिकन्दि-" ॥ (उणा-४६५) ॥ इत्यल ॥ १२ ॥ अर्ज्यतेऽर्जुन ॥ १३ ॥ पाण्डु पाण्डुत्वमस्यास्त पाण्डुरः मध्वादित्वात् र ॥ १४ ॥ पच्यते याति मनोऽस्मिन् पाण्डर "जठर" ॥ (उणा-४०३) ॥ इत्यरे निपात्यते ॥ १५ ॥ पन्यते स्तूयते पाण्डुः 'पनेर्दीर्घश्च' ॥ (उणा-७६६) ॥ इति डुः ॥ १६ ॥

ईषत्पाण्डुस्तु धूसर ॥ १९ ॥

ईषदल्पच पाण्डु धुनाति चेतो धूसरः "हृसृतमि" ॥ (उणा-४४०) ॥ इति किद् सर ॥ १ ॥ १९ ॥

कपोतस्तु कपोताभ

कपोतस्यायं कपोतः ॥ १ ॥ कपोतस्येव आभाऽस्य कपोताभ ॥ २ ॥

पीतस्तु सितरञ्जनः ।

हारिद्रः पीतलो गौरः

पीयते वर्णान् पीत ॥ १ ॥ सितं रञ्जयति सितरञ्जन ॥ २ ॥ हरिद्राया अयं हारिद्र ॥ ३ ॥ पीत पीतत्वं लाति पीतल ॥ ४ ॥ गूयते गौर ॥ ५ ॥

पीतनीलः पुनर्हरित् ॥ २० ॥

पालाशो हरितस्तालकाभ-

पीतश्चासौ नीलश्च पीतनील-॥१॥ हरति चित्तं हरित् हृसरुहि" ॥ (उणा-८८७) ॥ हरित् ॥ २ ॥ २० ॥ पलाशस्य पत्रस्यायं पालाश- ॥ ३ ॥ हरते हरितः 'हृस्याऽरुहि' ॥ (उणा-२१०) ॥ इतीत ॥ ४ ॥ तालकं हरितालकं तस्येवाऽऽभाऽस्य तालकाभ ॥ ५ ॥

॥ १ ॥ तपीति सुवर "अठर" ॥ (उणा–४०३) ॥ इत्यरे निपात्यते पुल्लीबलिङ्गो ॥ २ ॥ रस्यन्ते इति रसा ॥ १ ॥ इत्युपस्कार ॥ २५ ॥

गन्धो जनमनोहारी सुरभिर्घ्राणतर्पण ।

समाकर्षी निर्हारी च

गन्धयते गन्धो घ्राणग्राह्योऽर्थ स ॥ १ ॥ जनमनोहारी ॥ २ ॥ सुष्ठु रमते सुरभि ॥ ३ ॥ घ्राणं तर्पयति प्रीणाति घ्राणतर्पणः ॥ ४ ॥ समाकर्षति चित्तं समाकर्षी ॥ ५ ॥ निहरत्यवश्यं निर्हारी अत्र योगं प्रति प्रसिद्धत्तदनुसारेणान्यस्य विधि एवमन्यत्राऽपि ॥ ६ ॥

स आमोदो विदूरग ॥ २६ ॥

स सुरभिर्गन्धो विदूरगोऽतिदूरव्यापी ॥ १ ॥ आसमन्तात् मोदतेऽनेन आमोद ॥ २ ॥ २६ ॥

विमर्द्दोत्थः परिमळः ।

रतविकसद्देहाङ्गरागपरिमलनोत्पन्नो द्व्यो गन्ध परिमलते परिमल ॥ १ ॥

अथामोदी मुखवासन ।

इष्टगन्ध सुगन्धिश्च

आमोदोऽस्त्यस्य आमोदी ॥ १ ॥ मुख वासयसत्युल्लिङ्गति मुखवासनः ॥२॥ इष्टो गन्धोऽस्य इष्टगन्ध ॥ ३ ॥ शोभनो गन्धोऽस्य सुगन्धि, द्वौ द्वौ भिन्नार्थाभिसम्बे ॥ ४ ॥

दुर्गन्धः पूतिगन्धिक ॥ २७ ॥

दुष्टो गन्धोऽस्य दुर्गन्ध ॥ १ ॥ पूतर्विसः पूतेरिव वा गन्धोऽस्य पूतिगन्धिः "सुपूत्युत्सुरभेर्गन्धादिद्गुणे" ॥ ७ । ३ । १४४ ॥ इतीत् ॥ २ ॥ २७ ॥

आमगन्धि तु विस्त स्यात्

आमोऽपक्वो मलः तस्येव गन्धोऽस्य आमगन्धि "वोपमानात्" ॥ ७ । ३ । १४७ ॥ इतीत् ॥ १ ॥ विस्यते विस्तं "ऋज्यजि-" ॥ (उणा–३८८) ॥ इति कित् र ॥ २ ॥

वर्णा श्वेतादिका अमी ।

श्वेत श्येत सितः शुक्लो हरिणो विशद शुचिः ॥ २८ ॥

अवदातगौरशुभ्रवलक्षधवलार्जुनाः ।

पाण्डुरः पाण्डर पाण्डु

श्वेतते श्वेत' ॥ १ ॥ श्यायते श्येतः "हस्याकहि" ॥ ( उणा–२१० ) ॥ इतीतः ॥ २ ॥ सिनोति मन' सित ॥ ३ ॥ 'शुक गतौ' शोकति मनोऽत्र शुक्लः "शुकर्वायूम्य- किद्' ॥ ( उणा–४६३ ) ॥ इति ल ॥ ४ ॥ हरत श्वेता हरिण "द्रुहरि" ॥ ( उणा–१९४ ) ॥ इतीन ॥ ५ ॥ विशति ममो विशद "कुमुद" ॥ ( उणा–२४४ ) ॥ इति निपात्यते विशीयते वा ॥ ६ ॥ शोचति निर्मलीभवति शुचि ॥ ७ ॥ २८ ॥ अवदायते शोभ्यतेऽवदात' ॥ ८ ॥ 'गुरैपि उद्यमे' गुरते मनोऽत्र गोर गोर एव गौर' प्रज्ञादित्वादण् गूयते वा ' खरखुर " ॥ ( उणा–३९६ ) ॥ इति रे निपात्यते ॥ ९ ॥ शोभते शुभ्रः "ऋज्यजि-' ॥ ( उणा–३८८ ) ॥ इति किद् र ॥ १० ॥ वलते वलक्ष अवलक्ष्यते वा पृषोदरादित्वात् ॥ ११ ॥ धुनोत्यसौमामिति धवलः 'मृदिकन्दि-" ॥ ( उणा–४६५ ) ॥ इत्यल ॥ १२ ॥ अर्ज्यतेऽर्जुनः ॥ १३ ॥ पाण्डु' पाण्डुत्वमस्त्यस्य पाण्डुरः मध्वादित्वात् र ॥ १४ ॥ पण्ड्यते याति मनोऽस्मिन् पाण्डर ' कठर " ॥ ( उणा–४०१ ) ॥ इत्यरे निपात्यते ॥ १५ ॥ पन्यते स्तूयते पाण्डुः ' पनेर्दीर्घश्च' ॥ ( उणा–१६६ ) ॥ इति डुः ॥ १६ ॥

ईषत्पाण्डुस्तु धूसर' ॥ १९ ॥

ईषदल्पतः पाण्डुः धुनाति श्वेतो धूसरः "कृधूतनि " ॥ ( उणा–४४० ) ॥ इति- किद् सर- ॥ १ ॥ १९ ॥

कापोतस्तु कपोताभ

कपोतस्यायं कापोतः ॥ १ ॥ कपोतस्येव आभाऽस्य कपोताभ ॥ २ ॥

पीतस्तु सितरञ्जनः ।

हारिद्रः पीतलो गौर

पीयते वर्णान् पीत ॥ १ ॥ सित रञ्जयति सितरञ्जन ॥ २ ॥ हरिद्राया अयं हारिद्र ॥ ३ ॥ पीतं पीतत्वं लाति पीतल ॥ ४ ॥ गूयते गौर' ॥ ५ ॥

पीतनीलः पुनर्हरित् ॥ २० ॥

पालाशो हरितस्तालकाभ

पीतश्चासौ नीलश्च पीतनील- ॥१॥ हरति चित्तं हरित् "हृसृरुहि" ॥ ( उणा–८८७ ) ॥ इतीत् ॥ २ ॥ ३० ॥ पलाशस्य पत्रस्येव पालाश- ॥ ३ ॥ हरति हरितः 'हस्याकहि ' ॥ ( उणा–२१० ) ॥ इतीत ॥ ४ ॥ तालकं हरितालकं तस्येवाऽऽभाऽस्य तालकाभ' ॥ ५ ॥

रक्तस्तु रोहितः ।

माञ्जिष्ठो लोहित शोणः

रज्यति रक्तः ॥ १ ॥ रोहति रोहित "रुपयाकटि-" ॥ ( उणा–२१० ) ॥ इति तः ॥ २ ॥ मञ्जिष्ठाया अयं माञ्जिष्ठ ॥ ३ ॥ रोहितस्यैव रूपे लोहित ॥ ४ ॥ शोणति शोण ॥ ५ ॥

श्वेतरक्तस्तु पाटलः ॥ ३१ ॥

श्वेतश्चासौ रक्तश्च श्वेतरक्तः ॥ १ ॥ पाटयति पाटलः "मृदिकन्दि-" ॥ ( उणा–४६५ ) ॥ इत्यल ॥ २ ॥ ३१ ॥

अरुणो बालसन्ध्याभः

इयर्ति अरुण "ऋकृवृ-" ॥ ( उणा–१९६ ) ॥ इत्युण ॥ १ ॥ बालसन्ध्या वा इवाभा अस्य बालसन्ध्याभः ॥ २ ॥

पीतरक्तस्तु पिञ्जरः ।

कपिलः पिङ्गलः श्याव पिशङ्ग कपिशो हरिः ॥ ३२ ॥

बभ्रु कद्रुः कडारश्च पिङ्गे

पीतश्चासौ रक्तश्च पीतरक्तः ॥ १ ॥ पिञ्जयति पिञ्जर "कृपिद्यमटि" ॥ ( उणा–३९७ ) ॥ इत्यरः ॥ २ ॥ 'कपृ वर्णे' कपते कपिलः "स्थण्डिल-" ॥ (उणा–४८४) ॥ इतीले निपात्यते, वा कपिवर्णं आप्नोति ॥३॥ पिङ्ग पिङ्गत्वमस्यास्य पिङ्गल सिध्मादित्वात् ॥ ४ ॥ श्यायते श्यावः "कटिकटि-" ॥ ( उणा–५०५ ) ॥ इति व ॥ ५ ॥ पिंशति पिशङ्गः "पिशिमिशि-" ॥ ( उणा–१०१ ) ॥ इति किदङ्गः ॥ ६ ॥ कपिमर्कटवर्णोऽस्त्यस्य कपिशः श्लोमादित्वात् शः ॥ ७ ॥ हरति हरिः ॥ ८ ॥ ॥ ३२ ॥ बिभर्ति बभ्रु ॥ ९ ॥ कद्रु कुत्सितं द्रवति कद्रू "हरिपीति–" ॥ ( उणा–७४५ ) ॥ इति किद्रुः ॥ १० ॥ कडति कडारः "अस्याति–" ( उणा–४०५ ) ॥ इत्यार ॥ ११ ॥ पिङ्गति वर्णान् पिङ्ग "स्फुलिकलि–" ॥ ( उणा–१०२ ) ॥ इतीङ्गक् तत्र ॥ १२ ॥

कृष्णस्तु मेचकः ।

स्याद् रामः श्यामलः श्याम कालोनीलोऽसित शितिः ॥३३॥

कर्षति वर्णान् कृष्ण "घृवीह्वा–" ॥ ( उणा–१८३ ) ॥ इति कित् न ॥ १ ॥ मचते मिश्रीभवति मेचक पुङ्गीबलिङ्गः "कीचक–" ॥ ( उणा–३३ ) ॥ इत्यके निपात्यते, 'मचकः शितिकण्ठाभ ' इति दुर्ग ॥ २ ॥ रमते मनोऽत्र रामः

आराम "रोदाप्सर्गात्" ॥ ५ । ३ । २२ ॥ इति घञ् ॥ २० ॥ "आह्वे स्त्रो–"॥ ॥५।३।४९॥ इति घाऽलि आरव ॥२१॥ क्वणते क्वणनम् ॥२२॥ निक्वणन निक्वणः "नेर्नद् गदपठस्वनक्वण" ॥ ५। ३। २६ ॥ इति घाऽल् ॥ २३ ॥ क्वणनं क्वाण ॥ २४ ॥ घमि निक्वाण ॥ २५ ॥ "मवा क्वण–" ॥ ५ । ३ । ४८ ॥ इत्यलि क्वणः ॥ २६ ॥ रणनं रण "युवर्ण–" ॥ ५ । ३ । २८ ॥ इत्यल् ॥२७॥ ।३६॥

षड्ज-ऋषभ-गान्धारा मध्यम पञ्चमस्तथा ।
धैवतो निषधः सप्त तन्त्रीकण्ठोद्भवाः स्वराः ॥ ३७ ॥

षड्भ्यो जायते षड्ज , यद्भरतः–
"कण्ठादुत्तिष्ठते व्यक्तं षड्ज षड्भ्यस्तु जायते ।
कण्ठोरस्तालुनासाभ्यो जिह्वाया दशनादपि" ॥ १ ॥
ऋषभो गोरुतवत्त्वादिवात्, यदाह भरत
"वायुः समुत्थितो नाभे कण्ठशीर्षसमाहत ।
नर्दवृषभवद् यस्मात् तेनैष ऋषभ स्मृतः" ॥ २ ॥
गां वाचं धारयति गान्धार गन्धवहमियर्ति वा । यदाह—
वायु समुत्थितो नाभेः कण्ठशीर्षसमाहतः ।
नानागन्धवह पुण्ये गान्धारस्तेन हेतुना ॥ ३ ॥
मध्ये भवो मध्यम यदाह-
"तद्वदेवोत्थितो वायुरुर कण्ठसमाहत ।
नाभिप्राप्तो महानादो मध्यमस्तेन हेतुना" ॥ ४ ॥
पञ्चमस्थानभवत्वात् पञ्चम यदाह–
"वायु समुत्थितो नाभेरुरोहृत्कण्ठमूर्धसु ।
विचरन् पञ्चमस्थानप्राप्तया पञ्चम उच्यते" ॥ ५ ॥
धिया बतो धीवतस्तस्याऽयं धैवत,
दधाति सीधते स्वरानिति वा , यदाह—
"अभिसंधीयते यस्मात् स्वरास्तेनैष धैवतः" ।

"वुतपित्त–" ॥ ( उणा–२०४ ) ॥ इति ते निपात्यते ॥६॥ निषीदन्ति स्वरा अत्र निषधः निषादोऽप्य यदाह–"निषीदन्ति स्वरा अस्मिन् निषादस्तेन हेतुना" ।

द्विधा हि वीणा–शारीरी दारुजातेति, तत्र दारुमय्यां तन्त्रीत शारीर्यां कण्ठादुद्भवन्ति तन्त्रीकण्ठोद्भवा । वंशमुरजादयस्तु स्वरानुकारमात्रकारित्वात् स्वरहेतुत्वेन नेहोक्ता ॥ ७ ॥

ते मन्द्रमध्यताराः स्युरुरःकण्ठशिरोभवाः ।

ते ऋषभादयः स्वराः प्रत्येकमुरःप्रभृतिस्थानभेदेन मन्द्रतां मध्यतां तारतां च अवलम्बन्ते, यद् दत्तिलः—

"नृणामुरसि मन्द्रस्तु द्वाविंशतिविधो ध्वनिः ।
स एव कण्ठे मध्यः स्यात् तारः शिरसि गीयते" ॥ १ ॥

रुदितं क्रन्दितं क्रुष्टम्

रोदनं रुदितं ॥ १ ॥ क्रन्दनं क्रन्दितं ॥ २ ॥ क्रोशनं क्रुष्टम् ॥ ३ ॥

तदपुष्टं तु गह्वरम् ॥ ३८ ॥

तत् रुदितमपुष्टं गद्गदस्वरत्वादव्यक्ताक्षरं गाहते हृदयाभ्यन्तरं गह्वरः "गहर" ॥ ( उणा ४०३ ) ॥ इत्यरे निपात्यते ॥ १ ॥ ३८ ॥

शब्दो गुणानुरागोत्थः प्रणादः सीत्कृतं नृणाम् ।

प्रणदनं प्रणादः ॥ १ ॥ सीत्करणं सीत्कृतम् ॥ १ ॥

पर्दनं गुदजे शब्दे

पर्दते पर्दनं ॥ १ ॥

कर्दनं कुक्षिसंभवे ॥ ३९ ॥

कर्दते कर्दनं ॥ १ ॥

क्ष्वेडा तु सिंहनादः

'क्ष्विदा अव्यक्तेशब्दे' क्ष्वेडनं क्ष्वेडा भिदादित्वात् षाङ् ॥ १ ॥ सिंहस्येव नदनं भटानां सिंहनादः ॥ २ ॥

अथ क्रन्दनं सुभटध्वनिः ।

'क्रदु आह्वाने' क्रन्दतेऽनेन क्रन्दनं प्रतिभटाह्वानध्वनिः ॥ १ ॥

कोलाहलः कलकलः

कोलमव्याहृत्य आहलति व्याप्नोति कोलाहलः पृषोदरादित्वात् ॥ १ ॥ कल्यते कलकलः "अनुपास्यकृञ्भ्यामकान्तों" ॥ ( उणा १४ ) ॥ इति अप्रत्ययो द्वित्वं च कलो व्यक्तो वा आभीक्ष्ण्ये द्वित्वम् ॥ २ ॥

तुमुलो व्याकुलो रवः ॥ ४० ॥

ताम्यन्त्यनेन तुमुलः " कुमुलतुमुल" ॥ ( उणा ४८७ ) ॥ इत्युले निपात्यते ॥ १ ॥ ४ ॥

मर्मरो वस्त्रपत्रादेः

'मृम् हिंसायाम्' मृणाति मर्मरः "अदष्टिद" ॥ (उणा १) ॥ इत्यप्रत्यये स्वस्पर्धित्व च ॥ १ ॥

भूषणानां तु शिञ्जितम् ।

भूषणानां वलयादीनां रव शिञ्जनं शिञ्जितं ॥ १ ॥

हेषा ह्रेषा तुरगाणाम्

रव इति सर्वत्र सम्बध्यते हयणं हेषा ॥१॥ ह्रेषणं ह्रेषा "क्टेद" ॥५।३।१०६॥ इत्य ॥ २ ॥

गर्जन गजबृंहिते ॥ ४१ ॥

गर्जन गर्ज, गर्जोऽपि ॥ १ ॥ 'बृहङ् शब्दे' बृंहणं बृंहितम् ॥ २ ॥ ४१ ॥,

विस्फारो धनुषाम्

विस्फुरण विस्फारः "स्फुरस्फुलोर्घञि" ॥ ४।२।४ ॥ इत्यात्वम् ॥ १ ॥

हंभारम्भे गो

अहमित्यंभते शब्दायते हंभा, हंभेत्यनुकरण वा ॥ १ ॥ 'रम्भु शब्दे' रम्भणं रंभा ॥ २ ॥

जलदस्य तु ।

स्तनितं गर्जितं गर्जिः स्वनित रसितादि च ॥ ४२ ॥

स्तन्यते स्तनितं ॥ १ ॥ गर्जन गर्जितं ॥ २ ॥ "मदिपठि" ॥ (उणा–६०७) ॥ इति इ प्रत्यये गर्जिः पुंल्लिङ्गः ॥ ३ ॥ स्वननं स्वनितं ॥ ४ ॥ रसन रसितम्, आदिशब्दात् ध्वनितादय ॥ ५ ॥ ४२ ॥

कूजित स्याद् विहङ्गानाम्

कूजन कूजितम् ॥ १ ॥

तिरश्चां रुतवाशिते ।

तिरश्चां मृगपक्षिणां ध्वनिः रवणं रुतम् ॥ १ ॥ 'वाशिच शब्दे' वाशनं वाशितम् ॥ २ ॥

वृकस्य रेषण रेषा

'रेषृङ् अव्यक्ते शब्दे' रेष्यते रेषणम् ॥ १ ॥ "क्टेद –" ॥ ५ । ३ । १०६ ॥ इत्यप्रत्यये रेषा ॥ २ ॥

काकुर्ध्वनिविकारः स्यात्

कायत्यर्थान्तरं काकुः पुंस्त्रीलिङ्गः, "कैवाशमि-" ॥ ( उणा-७४९ ) ॥ इति कुः, ककते प्रकृतार्थातिरिक्तं वाञ्छतीति वा इदयस्थवस्तुप्रतीतेरीपद्भूमिर्वा, काकुर्जिह्वा तद्व्यापारसपायत्वाद्वा ॥१॥ ध्वनेर्विकाराऽन्यथापत्तिर्ध्वनिविकारः ॥ २ ॥

प्रतिश्रुत् तु प्रतिध्वनिः ॥ ४६ ॥

प्रतिरूपं श्रूयते प्रतिश्रुत् 'क्रुत्सम्पदादि' ॥ ५ । ३ । ११४ ॥ इति क्विप् ॥ १ ॥ प्रतिरूपो ध्वनिः प्रतिध्वनिः प्रतिशब्दः ॥ २ ॥ ४६ ॥

सङ्घाते प्रकरौघवारनिकरव्यूहाः समूहश्चयः
सन्दोहः समुदायराशिविसरव्राताः कलापो व्रजः ।
कूटं मण्डलचक्रवालपटलस्तोमा गणः पेटकं
वृन्दं चक्रकदम्बके समुदयः पुञ्जोत्करौ संहतिः ॥ ४७ ॥
समवायो निकुरम्बं जालं निवहसञ्चयौ ।
जातं

संहन्यते सङ्घातस्तत्र ॥ १ ॥ प्रकीर्यते प्रकरः ॥ २ ॥ उच्यते ओघः, न्यङ्क्वादित्वाद् घनि साधुः ॥ ३ ॥ व्रियते वारः पुंक्लीबलिङ्गः, बाहुलकात् घञ् ॥ ४ ॥ निकीर्यते निकरः, आकारोऽपि ॥५॥ व्यूह्यते व्यूहः ॥ ६ ॥ समुह्यते चौक्यते समूहः ॥ ७ ॥ चीयते चयः ॥ ८ ॥ संदुह्यते पूर्यते संदोहः ॥ ९ ॥ 'अयि गतौ' इत्यस्य समुदयनं समुदायः, घञ् ॥ १० ॥ अश्नुते राशिः पुंलिङ्गः "अशो रश्चादिः" ॥ ( उणा ६२२ ) ॥ इति णिदिः ॥ ११ ॥ विसियते विसरः, बाहुलकादल् ॥ १२ ॥ व्रियते व्रातः "कृद्रुकल्यक्लि-" ॥ ( उणा–२०९ ) ॥ इत्यातक् ॥ १३ ॥ कल्यते कलापः "कलेराप" ॥ ( उणा ३०८ ) ॥ १४ ॥ व्रजन्त्यस्मिन् व्रजः "गोचरसंचर" ॥ ५ । ३ । १३१ ॥ इति साधुः ॥ १५ ॥ कूट्यते कूटं पुंक्लीबलिङ्गो ॥ १६ ॥ मण्ड्यते मण्डलं त्रिलिङ्गः 'वृषिकमि-' ॥ ( उणा-४६५ ) ॥ इत्यलः ॥ १७ ॥ चक्र्यते चक्रवालः 'चरत्वालः' ॥ ( उणा ४८० ) ॥ इत्याले निपात्यते चक्राकारेण चलनमस्य वा ॥ १८ ॥ पटति पटलं क्लीबपुंलिङ्गः, 'मृदिकन्दि' ॥ ( उणा-४६५ ) ॥ इत्यलप्रत्ययः ॥ १९ ॥ 'स्तोमृ श्लाघायाम्' स्तोम्यते स्तोमः ॥ २० ॥ गण्यते गणः ॥ २१ ॥ पेटति पेटं शिखादित्वात्, तत स्वार्थे के पेटकं त्रिलिङ्गः ॥ २२ ॥ व्रियते वृन्दं 'वृतृवदिहनिकमिकषिभ्यो नाम्तश्च' ॥ ( उणा-२४० ) ॥ इति दः ॥ २३ ॥ क्रियते चक्रं पुंक्लीबलिङ्गः "कृगो द्वे च" ॥ ( उणा-७ ) ॥ इति साधुः ॥ २४ ॥ 'कदि' सौत्रः, कद्यते कदम्बं "कदेर्णिद्वा" ॥ ( उणा–

१२१ ) ॥ इत्यम्बः के कदम्बकम्, कुत्सितमम्बष्ठ वा ॥ २५ ॥ समुदयनं समुदयः, इणोऽच् ॥ २६ ॥ पूयते पुञ्जः "पुञ्जः पुनः च" ॥ ( उणा १२८ ) ॥ इति जः ॥ २७ ॥ उत्कीर्यते उत्करः ॥ २८ ॥ संहननं संहतिः ॥ २९ ॥ ४७ ॥ समवेयते समवायः ॥ ३० ॥ निकुरति निकुरम्बम् "कुरुम्बादि" ॥ ( उणा–३२६ ) ॥ इति निकुरम्बः ॥ ३१ ॥ जलति जालं स्त्रीक्लीबयोर्जालम्, ज्वलादित्वाद् णः ॥ ३२ ॥ निवहः इति निवहः ॥ ३३ ॥ समीयते चयः ॥ ३४ ॥ जायते स्म जातम् ॥ ३५ ॥

## तिरश्चां तद् यूथं

तद् वृन्दं तिरश्चां पशूनाम्, यूथम्स्यात्र यूथं पुंक्लीबलिङ्गं "पययूथ-" ॥ ( उणा–२३१ ) ॥ इति थे निपात्यते, यथा–मृगयूथं ॥ १ ॥

## सङ्घसार्थौ तु देहिनाम् ॥ ४८ ॥

देहिनां प्राणिनां वृन्दम् सहन्यते सङ्घः "निघोद्घसङ्घ-" ॥ ५। ३। ३६ ॥ इत्यादि साधुः, यथा–श्रमणादिधर्मिणः सङ्घः, मेघसङ्घाद्युपचाराद् ॥ १ ॥ सरतिः सार्थः वणिग्वृन्दम्, "सर्तेर्णित्" ॥ ( उणा–२१० ) ॥ इति थः, यथा–पान्थसार्थः ॥ २ ॥ ४८ ॥

## कुलं तेषां सजातीनां

तेषां देहिनां सजातीयानां वृन्दम् कोलति कुलम्, यथा–विप्रकुलम्, नृपकुलम् ॥ १ ॥

## निकायस्तु सधर्मिणाम् ।

समानधर्मिणां वृन्दं निचीयते निकायः "सङ्घेऽनूर्ध्वे" ॥ ५। ३। ८० ॥ इति घञ् कत्वं च, यथा–वैयाकरणनिकायः, चत्वारो देवनिकाया इति ॥ १ ॥

## वर्गस्तु सदृशां

सदृशानां सजातीयानां प्राणिनामप्राणिनां वृन्दं वृज्यते विजातीयेभ्यो वर्गः, यथा–ब्राह्मणवर्गः अरिषड्वर्गः त्रिवर्ग इति ॥ १ ॥

## स्कन्धो नरकुञ्जरवाजिनाम् ॥ ४९ ॥

स्कन्धते स्कन्धः ॥ १ ॥ ४९ ॥

## ग्रामो विषयशब्दास्त्रभूतेन्द्रियगुणाद् व्रजे ।

विषयादेः परो ग्रामशब्दः सामर्थ्याद् विषयादेरेव व्रजे वर्तते ग्रसते ग्रामः "ग्रसिस्तम्भ्यां मा विद्धौ च" ॥ (उणा–२३९) ॥ इति मः साधुः, यथा–विषयग्रामः, शब्दग्रामः, अस्त्रग्रामः भूतग्रामः, इन्द्रियग्रामः, गुणग्राम इति ॥ १ ॥

## समजस्तु पशूनां स्यात्

संवीयते समजः "समुदोऽजः पशौ" ॥ ५ । ३ । ३० ॥ इत्यल् ॥ १ ॥

समाजस्त्वन्यदेहिनाम् ॥ ५० ॥

सम्यते समाजः पशुभ्योऽन्येषां वृन्दम्, अत्र घञेव, यथा श्रोत्रियसमाजः ॥१॥

शुकादीनां गणे शौकमायूरतैत्तिरादयः ।

शुकानाम्, मयूराणाम्, तित्तिराणां समूहः शौकम् ॥ १ ॥ मायूरम् ॥ २ ॥ तैत्तिरम् "षष्ठ्याः समूहे" ॥ ६ । २ । ९ ॥ इत्यण् ॥३॥ आदिग्रहणात् कापोतादयः ।

भिक्षादेर्भैक्षसाहस्रगार्भिणयौवतादयः ॥ ५१ ॥

भिक्षाणाम्, सहस्राणाम्, गर्भिणीनाम्, युवतीनां च समूहो भैक्षमित्यादयः ॥१॥५१॥

गोत्रार्थप्रत्ययान्तानां स्युरौपगवकादयः ।

गोत्रमपत्यं तस्मिन्नर्थे विहिता येऽणादयः प्रत्ययास्तदन्तानामित्यर्थः, उपगोरपत्यानि औपगवास्तेषां समूहः औपगवकः "गोत्रोक्ष" ॥६।२।१२॥ इत्यकञ्, ॥१॥ आदिशब्दात् गार्गकादयः ॥

उक्षादेरौक्षकं मानुष्यकं वार्द्धकमौष्ट्रकम् ॥ ५२ ॥

स्यात् राजपुत्रकं राजन्यकं राजकमाजकम् ।

वात्सकौरभ्रके

उक्ष्णां समूहः औक्षकम्, एवमन्येऽपि "गोत्रोक्षवत्सोष्ट्रवृद्धाजोरभ्रमनुष्यराजराजन्यराजपुत्रादकञ्" ॥ ६ । २ । १२ ॥ १ ॥ ५२ ॥

कावचिकं कवचिनामपि ॥ ५३ ॥

कवचिनां समूहः कावचिकम् "कवचिहस्त्यचित्ताच्चेकण्" ॥६।२।१४॥ १ ॥५३॥

हास्तिकं तु हस्तिनां स्यात्

हस्तिनाम्, लिङ्गविशिष्टस्यापि ग्रहणात् हस्तिनीनां वा समूहो हास्तिकम् ॥ १ ॥

आपूपिकाद्यचेतसाम् ।

अपूपानां समूह आपूपिकम्, अचित्तत्वादिकण् ॥ १ ॥

आदिग्रहणात् शाष्कुलिक-पार्वतिकादयः ॥

धेनूनां धैनुकं धेन्वन्तानां गौधेनुकादयः ॥५४॥

धेनूनां समूहः धैनुकम् "धेनोरनञः" ॥ ६ । २ । १५ ॥ इतीकण्, गोधेनूनां समूहो गौधेनुकम् ॥ १ ॥ ५४ ॥

कैदारकं कैदारिकं कैदार्यमपि तद्गणे ।

केदाराणां समूहः कैदारकम्, कैदार्यम् "केदाराण्ण्यश्च" ॥ ६ । २ । १३ ॥

इत्यकम् ष्यञ् प्रत्यय ॥ १ ॥ २ ॥ अचित्तत्वादिकणि कैदारिकम् ॥ ३ ॥

ब्राह्मणादेर्ब्राह्मण्यं माणव्यं वाडव्यमित्यपि ॥ ११ ॥

ब्राह्मणानाम्, माणवानाम्, वाडवानां समूहः ब्राह्मण्यम्, माणव्यम्, वाडव्यम् "ब्राह्मणमाणववाडवाद्यत्" ॥ ६ । २ । १६ ॥ १ । २ । ३ ॥ ५५ ॥

गणिकानां तु गाणिक्यम्

गणिकानां समूहो गाणिक्यम् "गणिकाया यञ्" ॥ ६ । २ १७ ॥ १ ॥

केशानां कैश्यकैशिके ।

केशानां समूहः कैश्यम्, कैशिकम् "केशाद्वा" ॥६।२।१८॥१॥ पक्षेऽचित्तत्वादिकण् ॥ २ ॥

अश्वानामाश्वमश्वीयं

अश्वानां समूहः आश्वम्, अश्वीयम् "वाऽश्वादीयः" ॥ ६ । २ । १९ ॥१॥२॥

पर्शूनां पार्श्वमपि

पर्शूनां समूहः पार्श्वम् "पर्श्वा ड्वण्" ॥६ । २ । २०॥ यौकमात्सूत्रादयः शब्दाः 'आ त्वात् त्वादिः समूहजः' इति लिङ्गशेषे ॥ १ ॥

अथ ॥ १६ ॥

वातूलवात्ये वातानां

वातानां समूहो वातूलः पुंलिङ्गः "गोरथवातात् त्रलकट्यूलम्" ॥६।२।२४॥ इत्यूलः ॥ १ ॥ "पाशादेश्च ल्यः" ॥ ६ । २ । २५ ॥ इति ल्ये वात्या ॥ २ ॥

गव्यागोत्रे पुनर्गवाम् ।

गवां समूहः गव्या "पाशादेश्च ल्यः" ॥ ६ । २ । २५ ॥ इति ल्यः ॥१॥ 'गोरथ' ॥६।२।२४॥ इति त्रलि गोत्रा ॥ २ ॥

पाश्यातृण्यादि पाशादेः

पाशानाम् तृणानां च समूहः पाश्या, तृण्या पाशादिश्त्यासून्त्यः ॥ १।२ ॥ आदिशब्दात् धूम्या धूम्यादय ॥

खलादेः खलिनीनिभाः ॥ १७ ॥

खलानां समूहः खलिनी "खलादिभ्यो लिन्" ॥ ६ । २ । २७ ॥ १ ॥ निभग्रहणात् कुटुम्बिनीत्यादयः ॥ ५७ ॥

जनता बन्धुता ग्रामता गजता सहायता ।

जनादीनां

जनानां समूहो जनता एवमन्येऽपि "ग्रामजनबन्धुगजसहायात् तल्" ॥ ६। २। २८ ॥ १ ॥

रथानां तु स्याद् रथ्या रथकड्यया ॥ ९८ ॥

रथानां समूहो रथ्या "पाशादेश्च–" ॥ ६ । २ । २५ ॥ इति ल्य' ॥ १ ॥ "गोरथ–" ॥ ६ । २ । २४ ॥ इति कट्यलि रथकड्या, मात्रादय 'लिम्बिम्यनि त्यमिल्युक्ता' इति साधुत्व धप्रत्ययान्तत्वात् स्त्रियां वर्तन्ते ॥ २ ॥ ५८ ॥

राजिर्लेखा ततिर्वीथीमालाल्यावलिपङ्क्तय ।
धोरणी श्रेणी

राजते राजिः स्त्रीलिङ्ग "पदिपठि–" ॥ (उणा६०७) ॥ इति इ ॥ १ ॥ लिख्यतेऽनया लेखा, भिदादित्वात् साधु ॥ २ ॥ तन्यते ततिः ॥ ३ ॥ वीयते वीथिः "वीछञ्ज्यसि–" ॥ (उणा–६६९) ॥ इति थिक्, ड्यां वीथी ॥ ४ ॥ मीयते माला "मामाइथा–" ॥ (उणा–४६२) ॥ इति ल, मल्यते वा ॥५॥ अल स्यालिः "कृगृकुटि–" ॥ (उणा–६१९) ॥ इति णिदिः ॥ ६ ॥ आवलति आवलिः "पदिपठि–" ॥ (उणा–६०७) ॥ इति इ, स्त्रीलिङ्ग ॥ ७ ॥ पञ्च्यते पङ्क्तिः ॥ ८ ॥ धोरन्त्यस्यां धोरणी ॥ ९ ॥ श्रीयते श्रेणिः पुंस्त्रीलिङ्ग,, ड्यां श्रेणी ॥ १० ॥

उभौ तु द्वौ

उभतः पूरयतो द्वित्वमुभौ ॥ १ ॥

युगलं द्वितयं द्वयम् ॥ ९९ ॥
युगं द्वैतं यमं द्वन्द्वं युग्मं यमलयामले ।

युज्यते युगलम् "मुरल–" ॥ (उणा–४७४) ॥ इत्यले निपात्यते, धर्म्मवृत्तौ युगं लातीति वा ॥ १ ॥ द्वाववयवावस्य द्वितयम् 'अवयवात्तयट्' ॥७।१।१५१॥ ॥ २ ॥ "द्वित्रिभ्यामय्–" ॥ ७ । १ । १५२ ॥ इत्ययटि द्वयम्, एते त्रय क्लीबलिङ्गा ॥ ३ ॥ ९९ ॥ युज्यतेऽनेन युगं घञादित्वात् न्यङ्क्वादित्वाद् गत्वम् ॥४॥ द्वयोर्भावो द्विता द्वितैव द्वैतं प्रज्ञादित्वादण् ॥ ५ ॥ यच्छति यमम् ॥ ६ ॥ द्वन्द्वम् "प्रह्वाह्वा–" ॥ (उणा–५१४) ॥ इति वे निपात्यते ॥ ७ ॥ युज्यते युग्मम् "सिभियुधेर्ग् च" ॥ (उणा–३४५) ॥ इति किद् मः ॥ ८ ॥ यच्छति यमलम् 'मृदिकन्दि–" ॥ (उणा–४६५) ॥ इत्यल, यमं लाति वा ॥ ९ ॥ यमलमेव यामलम् प्रज्ञादित्वादण्, अकृटमपि ॥ १० ॥

पशुभ्यो गोयुगं युग्मे परम्

पशुनामभ्यः परं युग्मे द्वित्वे वाच्ये गोयुगं प्रयुज्यते, यथा–गवोरश्वयोश्च द्वित्वं

गोयुगम्, अश्वगोयुगम्, "द्वित्वे गोयुग" ॥७।१।१३४॥ इति गोयुगप्रत्ययः ॥१॥२॥

पद्क्ते तु षड्गवम् ॥ ६० ॥

पशुनामभ्यः परं षट्त्वे वाच्ये षड्गवमिति प्रयुज्यते यथा हस्तिनामषण्णां च षट्त्वं हस्तिषड्गवम्, अश्वषड्गवं "षट्त्वे षड्गव" ॥ ७ । १ । १३५ ॥ इति षड्गवप्रत्ययः ॥ १ ॥ ॥ ॥ ६० ॥

परःशताद्यास्ते येषां परा सङ्ख्या शतादिकात् ।

येषां सङ्ख्येयानां शतात् परा शतात्पूर्वं सङ्ख्या ते शतात् परे परःशताः क्रमेण "परः शतादि" ॥ ३ । १ । ७५ ॥ इति पञ्चमीतत्पुरुषे साधु ॥ १ ॥ आदिग्रहणात् परःसहस्राः परोलक्षा इत्यादयः ॥

प्राज्य प्रभूत प्रचुरं बहुल बहु पुष्कलम् ॥ ६१ ॥

भूयिष्ठ पुरुहं भूयो भूयिष्ठं पुरु स्फिरम् ।

प्राज्यते, प्रकर्षेण आयते वा प्राज्यम् "शिक्यास्याढ्य-" ॥ (उणा-३६४) ॥ इति ये निपात्यते ॥ १ ॥ प्रभवति प्रभूतम् "वीरी-" (उणा-२०१) ॥ इति कित् त ॥ २ ॥ प्रचीयते प्रचोयते वा प्रचुरम् "खुरक्षुर-" ॥ (उणा-३९६) ॥ इति रे निपात्यते ॥ ३ ॥ बंहते बहुलम् "स्थाबंहि-" ॥ (उणा-४८६) ॥ इत्युलो नलुक् च, बहु लातीति वा बहुलम् ॥ ४ ॥ बंहति बहु "भिबहि-" ॥ (उणा-७२६) ॥ इति उः ॥ ५ ॥ पुष्यति पुष्कलम् "बलिपुषे कलक्" ॥ (उणा-४९६) ॥ ६ ॥ ६१ ॥ अतिशयेन बहु भूयिष्ठम् "बहोर्णीष्ठे भूय्" ॥ ७ । ४ । ४० ॥ इतीष्ठे भूयादेशः ॥७॥ पुर्णाति हूयते पुरुहम् "क्वचित्" ॥ ५ । १ । १७१ ॥ इति डे पृषोदरादित्वात् साधु, पुरुभिर्जिहीते वा ॥ ८ ॥ अतिशयेन बहु भूयः "भूर्लुक् चेवर्णस्य" ॥ ७ । ४ । ४१ ॥ इतीयसि साधुः ॥ ९ ॥ भवति सर्वमत्र भूरि "भूसूकुशि-" ॥ (उणा-६९३) ॥ इति किरिः ॥१०॥ ॥ बहुमर्दभ्रम् ॥ ११ ॥ पृणोति पुरु "पृकाहृषि-" ॥ (उणा-७२९) ॥ इति किदुः ॥ १२ ॥ स्फायते स्फिरम् "स्थविर-" ॥ (उणा-४१७) ॥ इतीरे निपात्यते ॥ १३ ॥

स्तोक क्षुल्लं तुच्छमल्प दभ्राणुतलिनानि च ॥ ६२ ॥

तनु क्षुद्रं कृश

स्तूयते स्तोकम् "भीणशलि-" ॥ (उणा-२१) ॥ इति कः ॥ १ ॥ क्षुद्यते क्षुल्लम् "भिल्लाच्छभल्ल-" ॥ (उणा-४६४) ॥ इति ल निपात्यते क्षुधं लातीति वा ॥ २ ॥ तुदति तुच्छम् "तुदिमदि-" ॥ (उणा-१२४) ॥ छक् ॥ ३ ॥ अल्यते अल्पम् "मापाचषि-" ॥ (उणा-२९६) ॥ इति पः ॥ ४ ॥ दभ्यते दभ्रम् "

प्रमसि–'' ॥ ( उणा–३८८ ) इति किद् रः ॥ ५ ॥ अणत्यणु '' मृमृतृ–'' ॥ ( उणा ७१६ ) ॥ इत्यु ॥ ६ ॥ सिच्यते सलिलम् '' विपिनाजिना–'' ॥ (उणा– २८४ ) ॥ इति साधु ॥ ७ ॥ ॥ ६२ ॥ तन्यते तनु ॥ ८ ॥ क्षुद्यते क्षुद्रम् '' ऋज्यमि '' ॥ ( उणा–३८८ ) ॥ इति किद् र ॥ ९ ॥ करोति कृशम् 'कृशृ–''॥ ( उणा–५०८ ) ॥ इति किद् श, कृशमति वा ॥ १० ॥

सूक्ष्म पुन श्लक्ष्ण च पेलवम् ।

सूच्यते सूक्ष्मम् '' रुक्मग्रीष्म–'' ॥ ( उणा–३४६ ) ॥ इति साधु ॥ १ ॥ श्लिष्यत श्लक्ष्णम् '' भ्रूणतृष्णगुण –'' ॥ ( उणा-१८६ ) ॥ इति साधु ॥ २ ॥ पेलति पेलवम् '' पाकिवटि–'' ॥ ( उणा ५१५ ) ॥ इत्यव ॥ ३ ॥

त्रुटौ मात्रालवो लेश कण

त्रुटयति त्रुटि 'नाम्युपान्त्य '' ॥ ( उणा–६०९ ) ॥ इति किदि स्त्रीलिङ्गोऽयं तत्र ॥ १ ॥ मीयतेऽल्पतया मात्रा ' हुयामा '' ॥ ( उणा–४५१ ) ॥ इति त्रः ॥ २ ॥ लूयते लव ॥ ३ ॥ लिश्यते लेश ॥ ४ ॥ कणति निमीलयति कणः पुंल्लिङ्ग ॥ ५ ॥

ह्रस्व पुनर्लघु ॥ ६३ ॥

ह्रसति ह्रस्वम् ' लटिखटि '' ॥ ( उणा–५०५ ) ॥ इति वः ॥ १ ॥ लङ्घ्यते लघु रङ्घिलङ्घि '' ॥ ( उणा–७४० ) ॥ इत्युर्नलुक् च ॥ २ ॥ ६३ ॥

अत्यल्पेऽल्पिष्ठमल्पीयः कनीयोऽणीय इत्यपि ।

अतिशयेनाल्पमल्पिष्ठम्, अल्पियः ''गुणाङ्गाद् ' इतीष्ठ ईयसुश्च ॥ १ ॥ २ ॥ ''अल्पयूनो कन् वा'' ॥ ७ ॥ ४ ॥ ३३ ॥ इति कनादेशे कनीय,, कनिष्ठमपि ॥३॥ अत्यणु अणीय ॥ ४ ॥

दीर्घायते समे

दृणाति ह्रस्वभाव दीर्घम् ''मघाघञ्चा '' ॥ (उणा–११०) ॥ इति घे निपात्यते ॥ १ ॥ आयच्छति स्म आयतम् ॥ २ ॥

वुङ्गमुच्चमुन्नतमुदुरम् ॥ ६४ ॥

प्रांशूच्छ्रितमुन्नम च

ताम्यत्यनेन तुङ्गम् ''कमितमि ' ॥ ( उणा–१०७ ) ॥ इति किदुङ्गः ॥ १ ॥ उच्चरत्युच्चम् न्युद्भ्यामञ्च '' ॥ (उणा–१००३) ॥ इति कमलमे साधुः, उच्चैर्मत्वे वा मत्वर्थीयत्' ॥ ५ । १ । १७१ ॥ इति अ ॥ २ ॥ उन्नमति स्म उन्नतम् ॥ ३ ॥ उद्गता धूरस्य उद्धुरम् ॥ ४ ॥ ६४ ॥ प्राश्नुते प्रांशु 'मद्योरामोन्तश्च ' ॥ (उणा–

७१९) ॥ इत्युः ॥५॥ ऊर्ध्वं भयते स्म उच्छ्रितम् ॥६॥ उच्चैरममस्य उदग्रम् ॥७॥

न्यग् नीचं ह्रस्वमन्थरे ।

खर्वं कुब्जं वामनं च

निपतमभवति न्यक् ॥ १ ॥ निम्नमयति नीचम्, नीचैरस्त्यस्य वा अर्शआदित्वात् मप्रत्यये "प्रायोऽव्ययस्य' ॥ ७।४।६५ ॥ इत्यन्त्यस्वरादिलोप ॥ २ ॥ ह्रसति ह्रस्वम् ॥३॥ मध्नाति मन्थरम् "ऋच्छिचटि–" ॥ (उणा–३९७) ॥ इत्यरः ॥ ४ ॥ खर्वति खर्वम् ॥ ५ ॥ कूयते कुब्जम् "कुवः कुब्जकुब्जौ च" ॥ (उणा–१२९) ॥ इति साधु ॥ ६ ॥ वाम ह्रस्वत्वमस्त्यस्य वामनम् अर्शआदित्वात् ॥ ७ ॥

विशालं तु विशङ्कटम् ॥ ६९ ॥

पृथूरु पृथुलं व्यूढं विकटं विपुलं बृहत् ।

स्फारं वरिष्ठं विस्तीर्णं ततं बहु महद् गुरु ॥ ६६ ॥

विस्तृतं विशालम्, विशङ्कटम् "वेर्विस्तृते शालशङ्कटौ" ॥ ७।१।१२२॥ इति साधू ॥ १ ॥ २ ॥ ६५ ॥ प्रथते पृथु "रमिप्रथिम्यामृच रस" ॥ (उणा–७३०) ॥ इत्युः ॥ ३ ॥ इयर्ति उरु "महत्युरुच" ॥ (उणा–७३७) ॥ इति उः ॥ ४ ॥ पृथुलं लाति पृथुलम् ॥ ५ ॥ विवहति स्म व्यूढम् ॥६॥ विस्तृतं विकटम् "कटः" ॥ ७।१।१२४ ॥ इति कटः ॥ ७ ॥ विपोलति विपुलम् ॥ ८ ॥ बर्हति बृहत् ' दृहि बृहि ' ॥ (उणा–८८८) ॥ इति कतुः ॥ ९ ॥ स्फायते स्फारं भीवृधि ' ॥ (उणा–३८७) ॥ इति रः ॥ १० ॥ अतिशयेन उरु वरिष्ठं 'प्रियस्थिर" ॥ ७।४।३८ ॥ इतीष्ठे वरादेशः ॥ ११ ॥ विस्तृणाति स्म विस्तीर्णम् ॥ १२ ॥ तन्यते ततम् ॥ १३ ॥ बहति बहु ॥ १४ ॥ महते महत् "द्रुहिबृहि ' ॥ (उणा–८८४) ॥ इति कतुः ॥ १५ ॥ गिरति गुरु ॥ १६ ॥ ६६ ॥

दैर्घ्यमायाम आनाहः

दीर्घस्य भावो दैर्घ्यम् ॥१॥ आयतिरायामः ॥२॥ आनह्यतेऽनेन आनाहः ॥३॥

आरोहस्तु समुच्छ्रयः ।

उत्सेध उदयोच्छ्रायौ

आरोहणमारोहः ॥ १ ॥ समुच्छ्रयणं समुच्छ्रयः "उदः श्रेः" ॥ ५।३।५३॥ इति विकल्पनात् ॥ २ ॥ पक्षे घञि उच्छ्रायः ॥ ३ ॥ उत्सेधनमुत्सेधः पृषोदरादित्वात् ॥ ४ ॥ उद्गमनमुदयः ॥ ५ ॥

परिणाहो विशालता ॥ ६७ ॥

परिणह्यतेऽनेन परिणाहः ॥ १ ॥ विशालस्य भावो विशालता ॥ २ ॥ ६७ ॥

प्रपञ्चाभोगविस्तारव्यासाः ।

प्रपञ्चनं प्रपञ्चः ॥ १ ॥ आभुज्यतेऽनेन आभोगः ॥ २ ॥ विस्तरणं विस्तारः ॥ ३ ॥ व्यस्यते व्यासः ॥ ४ ॥

शब्दे स विस्तरः ।

स प्रपञ्चः शब्दविषये विस्तीर्यते विस्तरः, अत्र 'वेरशब्दे प्रथने' ॥ ५ । ३ । ६९ ॥ इत्यत्र शब्दवर्जनाद् घञ् न भवति विग्रहेऽपि ॥ १ ॥

समासस्तु समाहारः संक्षेपः सङ्ग्रहोऽपि च ॥ ६८ ॥

समसनं समासः ॥ १ ॥ समाहरणं समाहारः ॥ २ ॥ संक्षेपणं संक्षेपः ॥ ३ ॥ संग्रहणं सङ्ग्रहः ॥ ४ ॥ ॥ ६८ ॥

सर्वं समस्तमन्यूनं समग्रं सकलं समम् ।

विश्वाशेषाखण्डकृत्स्नन्यक्षाणि निखिलाखिले ॥ ६९ ॥

सरति सर्वम् "कटिकुटि–" ॥ (उणा–५०५) ॥ इति वः, सर्वतीति वा ॥१॥ समस्यते एकीक्रियते समस्तम् ॥ २ ॥ नास्ति न्यूनमस्य अन्यूनम् अनूनमपि ॥३॥ संगतमस्य समग्रम् सम ग्रसते वा ॥ ४ ॥ सह कलाभिर्भागैर्वर्तते सकलम् ॥ ५ ॥ समति समम्, अयं सर्वं विश्वशब्दवत् सर्वादि, यथा–"सूर्यं समेषां सम" ॥ ६ ॥ विशति विश्वम् "निघृषि–" ॥ ( उणा–५११ ) ॥ इति क्वः ॥ ७ ॥ न विद्यते शेषोऽस्य अशेषम् निःशेषमपि ॥ ८ ॥ न खण्डमखण्डम् ॥ ९ ॥ 'कृतैप् छेदने' ? कृत्यते छिद्यतेऽनेन कृत्स्नम् " कृत्यशीभ्यां स्नक् " ॥ ( उणा–२९४ ) ॥ १० ॥ न्यश्नोति व्याप्नोति न्यक्षं निष्क्रान्तमक्षादिति वा ॥११॥ निवृत्तं खिलात् शून्याद् निखिलम् ॥ १२ ॥ नास्ति खिलमस्य अखिलम् ॥ १३ ॥ ॥ ६९ ॥

खण्डेऽर्धशकले भित्तं नेमशल्कदलानि च ।

खण्ड्यते खण्डः पुंक्लीबलिङ्गः, तत्र खण्डलमपि ॥१॥ ऋध्नोति अर्धं आविष्टलिङ्गः पुंस्ययम् यथा ग्रामार्धः अर्धः पटी, अर्धो नगरम्, वाच्यलिङ्ग इत्येके, यट्टीका– "खण्डमात्रवृत्तितायां त्रलिङ्गयलिङ्ग" इति, समप्रविभागे त्वर्धं नपुंसकम् ॥२॥ शक्यते भेत्तुं शकलं पुंक्लीबलिङ्गः "मृदिकन्दि" ॥ ( उणा–४६५ ) इत्यलः ॥ ३ ॥ भिद्यते स्म भित्तम् "भित्तं शकलम्" ॥ ४ । २ । –१ ॥ इति साधुः ॥ ४ ॥ मीयते नेमः "अर्त्तिरि–" ॥ ( उणा ३३८ ) ॥ इति मः ॥ ५ ॥ शल्यते भेत्तुं शल्कम् "भीण्शलि–" ॥ ( उणा–२१ ) ॥ इति कः ॥ ६ ॥ दलति विदीर्यते दलम् ॥ ७ ॥

अंशो भोगश्च वण्टः स्यात्

अश्यते अश्र, अमतीति वा 'पादावमि-" ॥ ( उणा-५२७ ) ॥ इति साः ॥ १ ॥ मज्यते माग ॥ २ ॥ बध्यते विभज्यत वण्ट ॥ ३ ॥

पादस्तु स तुरीयकः ॥ ७० ॥

स रूपकादेर्भागस्तुरीयश्चतुर्थ, पचने पाद ॥ १ ॥ ७० ॥

मलिन कच्चर म्लान कश्मल च मलीमसम् ।

मलोऽस्त्यस्य मलिनम्, मलमार्दं मलमुषितम् "मलादीमसन्" ॥७।२।१४॥ इति साधु ॥ १ ॥ २ ॥ कुत्सितं चरति कच्चरम् ॥ ३ ॥ म्लायति स्म म्लानम् "स्प धनाम्लक्षातोऽस्याप्य" ॥४।२।७१॥ इति कस्य नत्वम् ॥४॥ कशति कश्मलम् "इषिकुटि" ॥ ( उणा-५०२ ) ॥ इति मलक्, कल्मषमपि ॥ ५ ॥

पवित्र पावन पूत पुण्य मेध्यम्

पूयतेऽनेन पवित्रं पुर्भुवाकित्रः शब्दाकित्र इत्यस्य ॥ १ ॥ पावयति पावनम् ॥ २ ॥ पूयते पूतम् ॥ ३ ॥ पुनाति पुण्यम् सिक्यादयो " ॥ (उणा-१९८) ॥ इति ये निपात्यते ॥४॥ मेधनीयं मेध्यम्, मेधायां साधु वा, मेधे भवमिति वा ॥५॥

अथोज्ज्वलम् ॥ ७१ ॥

विमल विशद वीध्रमवदातमनाविलम् ।

विशुद्ध शुचि

उज्ज्वलत्युज्ज्वलम् ॥ १ ॥ ७१ ॥ विगता मलोऽस्य विमलम् ॥ २ ॥ विशीर्यते विशदम् ॥३॥ विशेषेण इन्धे वीध्रम् "ऋज्यादि " ॥ (उणा-३८८) ॥ इति किद्रः ॥ ४ ॥ अवदायतेऽवदातम् ॥ ५ ॥ न आविलमनाविलम् ॥ ६ ॥ विशुध्यति स्म विशुद्धम् ॥ ७ ॥ शोचति निर्मलीभवति शुचि शुचिर्नैर्मल्यार्थेऽत्र ॥ ८ ॥

चोक्षं तु निःशोध्यमनवस्करम् ॥ ७२ ॥

चुक्षते चोक्षम् "चाक्षाद्राक्षा ॥ (उणा-५९७) ॥ इति निपात्यते ॥१॥ निष्क्रान्तं शोध्यादिः शोध्यम् ॥२॥ अविद्यमानोऽवस्करो वर्चस्कोऽत्र अनवस्करम् ॥ ३ ॥ ७२॥

निर्णिक्तं शोधितं मृष्टं धौतं क्षालितमित्यपि ।

निर्णिज्यते स्म निर्णिक्तम् ॥ १ ॥ शोध्यते स्म शोधितम् ॥ २ ॥ मृज्यते मृष्टम् ३ ॥ धाव्यते धौतम् ॥ ४ ॥ क्षाल्यते क्षालितम्, अमरस्तु—

"निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम्' इत्येकार्थमाह ॥ ५ ॥

सम्मुखीनमभिमुखम्

संमुखं दृश्यतेऽस्मिन् सम्मुखीनमादर्शादि, अन्यत्र उपचारात् यथा संमुखीनो

ययो रन्ध्रप्रहारिणामिति "यथामुखसम्मुखादीनस्तद् दृश्यतेऽस्मिन्" ॥७।१।९२॥ इति साधुः ॥ १ ॥ अभिमुखस्य मुखेन अभिमुखम् ॥ २ ॥

पराचीनं पराङ्मुखम् ॥ ७३ ॥

पराञ्चति पराक्, पराक् एव पराचीनम् "अदिक् स्त्रियां वाञ्चः" ॥७।१।१०७॥ इति स्वार्थे ईनः ॥ १ ॥ पराङ्मुखमस्य पराङ्मुखम् ॥ २ ॥ ७३ ॥

मुख्यं प्रकृष्टं प्रमुखं प्रवर्हं
वर्य्यं वरेण्यं प्रवरं पुरोगम् ।
अनुत्तरं प्राग्रहरं प्रवेकम्
प्रधानमग्रेसरमुत्तमाग्रे ॥ ७४ ॥
ग्रामण्यग्रण्यग्रिमजात्या
ग्र्योनुत्तमान्यनवरार्घ्यवरे ।
प्रेष्ठपरार्द्धपराणि

मुखस्य तुल्यं मुख्यं प्रधानत्वात्, शाखादित्वाद् यः ॥१॥ प्रकृष्यते स्म प्रकृष्टम् ॥ २ ॥ प्रकृष्टं मुखमस्य प्रमुखम् ॥३॥ प्रकृष्टो बर्हः परिच्छदोऽस्य प्रबर्हम्, प्रबर्हते प्राधान्यं गच्छतीति वा, प्रबर्हस्युपरि गच्छतीति वा ॥ ४ ॥ वरणीयं वर्यम् "वर्योपसर्या" ॥५।१।३२॥ इति बाहुलकाद् य ॥५॥ व्रियते वरेण्यम् "वृञ एण्य" ॥ ( उणा–३८२ ) ॥ ६ ॥ प्रव्रियते प्रवरम् "युवर्ण" ॥ ५ । ३ । २८ ॥ इत्यल् ॥ ७ ॥ पुरो गच्छति पुरोगम् ॥ ८ ॥ नास्त्युत्तरमस्मादनुत्तरम् ॥९॥ प्रकृष्टमग्रं हरति प्राग्रहरम् ॥१०॥ प्रकृष्टो वेकः पृथक्त्वमस्य प्रवेकम् ॥११॥ प्रधत्ते प्रधानम्, रम्यादित्वादनट्, आविष्टलिङ्गः श्रेष्ठेऽप्ययम् ॥ १२ ॥ अग्रं सरत्यग्रेसरम् ॥ १३ ॥ अतिशयेन उद्गतमुत्तमम् "प्रकृष्टे तमप्" ॥७।३।५॥१४॥ अगत्यत्र अग्रम् "भीवृधि" ॥ ( उणा–३८७ ) ॥ इति रः, तत्र ॥ १५ ॥ ७४ ॥ ग्रामं नयत्यभीष्टे ग्रामणी ॥ १६ ॥ अग्रं नयत्यग्रणी ॥ १७ ॥ अग्रे भवमग्रिमम् "पश्चादाद्यन्ताग्रादिमः" ॥ ६ । ३ । ७५ ॥ १८ ॥ जातौ साधु जात्यम् ॥ १९ ॥ अग्रे साधु अग्र्यम् ॥ २० ॥ नास्त्युत्तमोऽस्मादनुत्तमम् ॥ २१ ॥ अनवरार्द्धे मुख्यभागे भवमनवरार्ध्यम् "परावराधमोत्तमादेर्यः" ॥ ६ । ३ । ७३ ॥ २२ ॥ व्रियते वरं पुंक्लीबलिङ्गः, अन्ये तु वाच्य-लिङ्गमेनमाहुः ॥ २३ ॥ प्रतिष्ठते प्रष्ठम् "प्रष्ठोऽग्रगे" ॥ २ । ३ । ३२ ॥ इति षत्वम् ॥ २४ ॥ परार्द्धे भवं परार्ध्यम् "परावरा" ॥ ६ । ३ । ७३ ॥ इति यः ॥ २५ ॥ पिपर्ति परम्, एते वाच्यलिङ्गाः ॥ २६ ॥

श्रेयसि तु श्रेष्ठसत्तमे पुष्कलमस्त् ॥ ७५ ॥

अतिशयेन प्रशस्यं श्रेयः तत्र ॥१॥ एवं श्रेष्ठम् ॥२॥ अतिशयेन सत् सत्तमम् 'प्रकृष्ट तमप्' ॥ ७ । ३ । ५ ॥ ३ ॥ पुष्यति पुष्कलम्, एते वाच्यलिङ्गाः ॥४॥७५॥

स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः ।

सिंहशार्दूलनागाद्यास्तल्लजश्च मतल्लिका ॥ ७६ ॥

मचर्चिका मकाण्डो द्वौ प्रशस्यार्थप्रकाशकाः ।

व्याघ्रादयः शब्दाः उत्तरपदे प्रयुज्यमाना प्रशंसां द्योतयन्ति, यथा पुरुषो व्याघ्र इव पुरुषव्याघ्र ॥१॥ एवं पुरुषपुङ्गव ॥२॥ पुरुषर्षभ ॥ ३ ॥ पुरुषकुञ्जर ॥ ४ ॥ पुरुषसिंह ॥५॥ पुरुषशार्दूल, एषु 'उपमेयं व्याघ्राद्यैः '' ॥३।१।१०२॥ इति समास ॥ ६ ॥ अश्वश्चासौ कुञ्जरश्च अश्वकुञ्जर ॥ ७ ॥ गौश्चासौ नागश्च गोनाग आदि-शब्दात् गोवृन्दारक एषु "वृन्दारकनागकुञ्जरैः" ॥ ३ । १ । १०८ ॥ इति समास ॥७॥ गौश्चासौ तल्लजश्च गोतल्लज ॥८॥ गोमतल्लिकेत्यादि ॥९॥ एषु "पोटायुवति" ॥ ३ । १ । १११ ॥ इति प्रशंसावचनात् समासः ॥ ७६ ॥

गुणोपसर्जनोपाप्राण्यप्रधाने

गुण्यते गुणः ॥ १ ॥ उपसृज्यते नियुज्यते उपसर्जनम्, अभिधेयलिङ्गो नपुंसक-, यथा–उपसर्जनं भार्या ॥ २ ॥ उपसङ्गमप्राप्तस्य अप्राग्रम् ॥ ३ ॥ न प्रधानमप्रधानं तत्र ॥ ४ ॥

अवमं पुनः ॥ ७७ ॥

निकृष्टमणक गर्ह्यमवद्य काण्डकुत्सिते ।

अपकृष्ट प्रतिकृष्ट याप्यं रेफोऽधमं ब्रुवम् ॥ ७८ ॥

खेटं पापमपशदं कुपूय चेलमर्वं च ।

अवेः अवमम् 'अमोऽन्तावोधस' ॥ ६ । ३ । ७४ ॥ इत्यम ॥ १ ॥७७॥ निकृष्यते निकृष्टम् ॥ २ ॥ अणति रटत्यनेन कुत्सितत्वमणकम् "कुत्सितात्सार्थे" ॥ ७ । ३ । ३३ ॥ इति कप् ॥३॥ गर्ह्यते गर्ह्यम् ॥ ४ ॥ नोद्यतेऽवद्यम् ''वद्योपसर्गा-द्य'' ॥ ५ । १ । ३२ ॥ इति साधु ॥ ५ ॥ कणति काण्डं पुंक्लीबलिङ्गः "कण्य-पि" ॥ (उणा–१६९) ॥ इति डित् डः ॥ ६ ॥ कुत्स्यते कुत्सितम् ॥ ७ ॥ अप-कृष्यतेऽपकृष्टम् ॥८॥ प्रतिकृष्यते प्रतिकृष्टम् ॥९॥ याप्यते निर्गुणत्वाद् याप्यम् यथा हिंसाद्युक्ते याप्यमपि ॥ १० ॥ रीयते रफः 'रीशीभ्याम्- ॥ ( उणा–२१४ ) ॥ इति फः, रीङ्भ्याम् " ॥ ॥ ( उणा–१८१ ) ॥ इति पत्ति रेफोऽपि ॥ ११ ॥

भयो भवमयनम् ॥ १२ ॥ भूते ध्रुवम् "ध्रुव" ॥ ६ । १ । ५१ ॥ इति साधु ॥ १३ ॥ ७८ ॥ खेदयति त्रसयति खेटम् ॥ १४ ॥ पायते पापम् ॥ १५ ॥ अपसीयते अपसदम् ॥ १६ ॥ कुत्सित पूयते कुपूयम् ॥ १७ ॥ चलति चलम् ॥ १८ ॥ इयत्यैर्व, एते रेफवर्भ पाप्यलिङ्गा ॥ १९ ॥

तदासेचनकं यस्य दर्शनाद् दृग् न तृप्यति ॥ ७९ ॥

आसिच्यते आप्यायते दृगनेन आसेचनकं यद्दर्शनाद् दृग् न तृप्यति ॥१॥७९॥

चारु हारि रुचिरं मनोहरं

वल्गु कान्तमभिराममबन्धुरे ।

वामरुच्यसुषमाणि शोभनं

मञ्जुमञ्जुलमनोरमाणि च ॥ ८० ॥

साधुरम्यमनोज्ञानि पेशलं हृद्यसुन्दरे ।

काम्यं कम्रं कमनीयं सौम्यं च मधुरं प्रियम् ॥ ८१ ॥

चरति मनोऽत्र चारु 'मिवहि-' ॥ (उणा–७२६) ॥ इति णिदु ॥ १ ॥ हरति मनो हारि ग्रहादित्वाण्णिन् ॥ २ ॥ रोचते रुचिरम् "इषीषि" ॥ (उणा–४१६) ॥ इति किदिर, रुचिं रातीति वा ॥३॥ मनोहरति मनोहरं ॥ ४ ॥ वल्गते वल्गु "फलिवलि-" ॥ (उणा–७५८) ॥ इति गुः ॥ ५ ॥ काम्यते कान्तम् "ज्ञानेच्छार्चार्थ" ॥ ५ । २ । ९२ ॥ इति क्तः ॥ ६ ॥ अभिरमते मनोऽत्र अभिरामम् ॥ ७ ॥ बध्नाति मनो बन्धुरम् 'मद्गुरादि' ॥ (उणा–४२३) ॥ इत्युरः ॥८॥ वाति मनोऽत्र वामम् 'अर्त्तीरि' ॥ (उणा–३३८) ॥ इति म ॥ ९ ॥ रोचते रुच्यं "रुच्याव्यथ्यवास्तव्यम्" ॥ ५ । १ । ६ ॥ इति साधु ॥ १० ॥ सुष्ठु समं सुषमम्, शोभना समाऽत्रेति वा लक्षणया चारु "निर्दुःसुवे समसूते" ॥ २ । ३ । ५६ ॥ इति षत्वम् ॥ ११ ॥ शोभते शोभनम् ॥१२॥ मन्यते मञ्जु 'मन्यतु' ॥ (उणा–७१६) ॥ इति बहुवचनादुः ॥ १३ ॥ मञ्जुरस्यास्ति मञ्जुलं मञ्जुः, धर्मेमात्रेऽत्र सिध्मादित्वात् ॥ १४ ॥ मनो रमयति मनोरमम् ॥ १५ ॥ ८० ॥ साध्नाति साधु "कृवापाजि-" ॥ (उणा–१) ॥ इत्युण् ॥ १६ ॥ रमयति मनो रम्यते वा रम्यम् 'शक्यगेयजन्यरम्य' ॥ ५ । १ । ७ ॥ इति साधु रमणीयमपि ॥ १७ ॥ जानातीति ज्ञ मनसा ज्ञः एव मनोज्ञं ॥ १८ ॥ पिनष्टि पेशलं 'मृदि-कन्दि' ॥ (उणा–४६५) ॥ इत्यल ॥ १९ ॥ हृदयस्य प्रियं हृद्य "हृदयप" ॥ ७ । १ । ११ ॥ इति यः, 'हृदयस्य हृल्लास-' ॥ ३ । २ । ९४ ॥ इति हृदादेश ॥ २० ॥ 'सुन्दः सोमः' सुन्दति सुन्दरं 'ऋच्छिचटि' ॥ (उणा–३९७) ॥ इत्यर–

सुष्ठु मन्दयतीति नैकला ॥२१॥ काम्यते काम्यम् ॥ २२ ॥ कम्यते कम्र 'स्म्य-जसहिंस" ॥ ५ । २ । ७९ ॥ इति धातुक्तात् कर्मण्यपि रः ॥ २३ ॥ अनीये कमनीयं ॥ २४ ॥ सोममेव सौम्य भेषजादित्वात् ष्यञ् ॥ २५ ॥ माधुर्यमनेन मधुरं "मद्गुर" ॥ ( उणा–४२६ ) ॥ इत्युरे निपात्यते ॥ २६ ॥ प्रीणाति प्रियम् 'मा ग्युपाभ्यप्रीकृ-" ॥५। १ । ५४॥ इति कः एते वाच्यलिङ्गाः ॥२७॥ कङ्गहो दस्म, संस्कृतऽपि यत् गौड –"मनोज्ञ मञ्जुलं मञ्जु कङ्गहं रमणीय च" इत्यादि ॥२८॥

व्युष्टि फलं

विशेषेण उष्यते काम्यते व्युष्टि व्युष्टनमिति वा ॥ १ ॥ फलति फलं प्रयोजनम् ॥ २ ॥

असार तु फल्गु

नास्ति सारोऽस्मिन्नसारम् ॥ १ ॥ फलति विशीर्यते फल्गु "फलिपाटि-" इति गुः ॥ ( उणा–७५८ ) ॥ २ ॥

शून्य तु रिक्तकम् ।

शुन्य तुच्छं वशिकं च

शुने हितं शून्यम्, शुन्यं च "शुना संप्रोक्तः" ॥ ७ । १ । ११ ॥ इति ये साधू ॥२॥२॥ रिच्यते रिक्तम् ॥३॥ तुद्यते तुच्छम् "तुदिमदि-" ॥ ( उणा–१२४ ) ॥ इति छक् ॥ ४ ॥ वष्टि स्वाच्छन्द्यमस्यास्य अनावृतत्वात् वशिकम् ॥ ५ ॥

निबिडं तु निरन्तरम् ॥ ८१ ॥

निबिरीसं घन सान्द्रं नीरन्ध्रं बहलं दृढम् ।

गाढमविरलं च

निबिडम्, निबिरीसम् "निबिडबिरीसो नीरन्ध्रे च" ॥७। १ । १२९ ॥ इति साधू ॥ १ ॥ २ ॥ निर्गतमन्तरम् व्यवधानमस्य निरन्तरम् ॥ ३ ॥ ८२ ॥ हन्यते घनम् "मूर्तिनिचिताभ्रे घनः" ॥ ५ । ३ । ३७ ॥ इत्यपि साधु ॥४॥ सीदन्त्यत्र सान्द्रम् "दस्सुर-" ॥ (उणा–३९६) ॥ इति रे निपात्यते ॥५॥ निर्गत रन्ध्रमत्र नीरन्ध्रम् ॥ ६ ॥ बहति दार्ढ्यं बहलं 'मृदिकन्दि' ॥ ( उणा–४६७ ) ॥ इत्यल ॥७॥ दृहति दृंहति वा दृढं 'बलिस्थूले दृढः' ॥ ४ । ४ । ६९ ॥ इति साधुः ॥ ८ ॥ गाहते गाढम् ॥ ९ ॥ न विरलमविरलम् ॥ १० ॥

अथ विरल तनु पेलवम् ॥ ८३ ॥

विरमति, विरामान्तरं वा विरलम् 'मुरल-' ॥ (उणा–४७४) ॥ इत्यले निपा-

सते ॥ १ ॥ तन्यते तनु ॥ २ ॥ पेलति पेलव "वहिपटि" ॥ ( उणा–५१५ ) ॥
इलव ॥ ३ ॥ ८३ ॥

नव नवीन सद्यस्क प्रत्यग्र नूत्ननूतने ।

नव्य चाभिनवे

नूयते नवम् ॥१॥ नवमेव नवीनम्, नूत्नम्, नूतनम्, नव्य "नवादीनतनत्नं च नू चाऽस्य" ॥ ७ । १ । १६० ॥ इति साधव ॥ ७ ॥ ३ ॥ ४ ॥ ५ ॥ सद्यो नवं सद्यस्कम्, पृषोदरादित्वात् साधु ॥ ६ ॥ प्रतिगतमग्रमनेन प्रत्यग्रम् ॥ ७ ॥ अभिनूयतेऽभिनव तत्र ॥ ८ ॥

जीर्णे पुरातनं चिरन्तनम् ॥ ८४ ॥

पुराण प्रतन प्रत्न जरत्

जीर्यति स्म जीर्णं तत्र ॥१॥ पुरा भव पुरातनम् "सायचिरंप्राह्णेप्रगेऽव्ययात्" ॥ ६ । ३ । ८८ ॥ इति तनट् ॥ २ ॥ सूत्रनिपातनाम्नोऽन्तश्च ॥ ३ ॥ ८४ ॥ पुरा भव पुराणम् "पुरो नः" ॥ ६ । ३ । ८६ ॥ इति न, पुरापि न नवमिति वा ॥ ४ ॥ प्रगत कालेन प्रतन प्रत्नम् "प्रात् पुराणेनश्च" ॥ ७ । २ । १६१ ॥ इति तनप्त्नप्रत्ययौ ॥ ५ ॥ ६ ॥ जीर्यति स्म जरत् "तृषोऽतृ" ॥ ५ । १ । १७३ ॥ ७ ॥

मूर्त्तं तु मूर्त्तिमत् ।

मूर्च्छति स्म मूर्तम् ॥ १ ॥ मूर्तिरस्य मूर्तिमत् ॥ २ ॥

उच्चावच नैकभेदम्

उदक् च अवाक् च, उचितं चाऽनुचितं च वा, उन्नतं चाऽवनतं च वा उच्चावचम्, मयूरव्यंसकादित्वात् साधु ॥ १ ॥ न एको नैक निरनुबन्धोऽत्र न "नाम नाम्नैकार्थ्ये" ॥ ३ । १ । १८ ॥ इति समासः, नैको भेदोऽस्य नैकभेदं नानाप्रकारमित्यर्थः ॥ २ ॥

अतिरिक्ताधिके समे ॥ ८५ ॥

अतिरिच्यते स्म अतिरिक्तम् ॥१॥ अध्यारूढमधिकम् "अधेरारूढे" ॥ ७ । १ । १८७ ॥ इति क, अधि कायतीति वा ॥ २ ॥ ८५ ॥

पार्श्व समीप सविध ससीमा-

भ्याश सवेशान्तिकसन्निकर्षाः ।

सदेशमभ्यग्रसनीडसन्नि-

धाना युपान्त निकटोपकण्ठे ॥ ८६ ॥

सन्निकृष्टसमर्यादाभ्यर्णान्यासन्नसंनिधी ।

स्पृश्यते पार्श्वम्, "स्पृशेः श्व पार् च" ॥ (उणा–५११) ॥ इति साधुः ॥१॥ सगता आपोऽत्रेत्युपचारात् समीपम्, "द्व्यन्तरनवर्णोपसर्गात्" ॥ १ । २ । १०९ ॥ इत्यप् ईप् ॥ २ ॥ समाना विधाऽस्य सविधम् ॥ ३ ॥ समाना सीमाऽस्य ससीमम् ॥४॥ अभ्यस्यते क्षिप्यते अभ्याशः तालव्यान्तः ॥५॥ समानो वेशोऽस्य सवेशः ॥६॥ अन्तोऽस्त्यस्य अन्तिकम् ॥ ७ ॥ सन्निकृष्यते सन्निकर्षः ॥ ८ ॥ समानो देशोऽस्य सदेशम् ॥ ९ ॥ अभिमुखमग्रमस्य अभ्यग्रम् ॥१०॥ समानं नीडमस्य सनीडम् ॥ ११ ॥ सन्निधीयतेऽत्र संनिधानम् ॥१२॥ समीपोऽन्तोऽस्य उपान्तम् ॥१३॥ नियमप्राप्ति निकट पुंक्लीबलिङ्ग, "सग्रामे संकीर्ण-" ॥ ७ । १ । १२५ ॥ इति कटः ॥ १४ ॥ समीपं कण्ठोऽस्य उपकण्ठम् ॥ १५ ॥ ८६ ॥ सन्निकृष्यते स्म सन्निकृष्टम् ॥ १६ ॥ समाना मर्यादाऽस्य समर्यादम्, सविध-ससीम-सनीड-सवेश-सदेश-समर्यादेषु लक्षणया सामीप्यम् ॥१७॥ अभ्यर्द्यते अभ्यर्णम्, "अविदूरेऽभेः" ॥४।४।६४॥ इतीट्प्रभाव ॥ १८ ॥ आसीदति स्म आसन्नम् ॥१९॥ सन्निधीयतेऽस्मिन् संनिधिः, पुंसि ॥ २० ॥

अव्यवहितेऽनन्तरं संसक्तमपटान्तरम् ॥ ८७ ॥

न व्यवधीयते स्म अव्यवहितं तत्र ॥ १ ॥ नास्त्यन्तरमत्र अनन्तरम् ॥ २ ॥ संसजति स्म संसक्तम् ॥ ३ ॥ नास्ति पटेन तिरस्करिण्या अन्तरं व्यवधानमत्र अपटान्तरम् ॥ ४ ॥ ८७ ॥

नेदिष्ठमन्तिकतमं

अतिशयेन अन्तिकं नेदिष्ठम्, "बाढान्तिकयोः साधनेदौ" ॥ ७ । ४ । ३७ । इति नेदादेशः, नेदीयोऽपि ॥ १ ॥ "प्रकृष्टे" ॥ ७ । ३ । ५ ॥ इति तमपि अन्तिकतमम् ॥ २ ॥

विप्रकृष्टपरे पुनः ।

दूरे

विप्रकृष्यते स्म विप्रकृष्टम् ॥ १ ॥ पिपर्ति परम् ॥ २ ॥ दुनोति दु खेन ईयते गम्यते वा दूरम् 'दुरत्युर' ॥ (उणा–३९६) ॥ इति रे निपात्यते, तत्र आरात् अव्ययेषु वक्ष्यते ॥ ३ ॥

अतिदूरं दविष्ठं दवीयः

अतिशयेन दूरं दविष्ठम्, दवीयः "गुणाङ्गाद्" ॥ ७ । ३ । ९ ॥ इतीष्ठ ईयसौ च "स्थूलदूर" ॥ ७ । ४ । ४२ ॥ इति रलोपः ॥ १ ॥ २ ॥ ३ ॥

स्यते ॥ १ ॥ तन्यते तनु ॥ २ ॥ पेलति पेलव "वलिपटि" ॥ (उणा–५१५) ॥ द्रस्व ॥ ३ ॥ ८३ ॥

नव नवीन सद्यस्क प्रत्यग्र नूतननूतने ।

नव्य चाभिनवे

नूयते नवम् ॥१॥ नवमेव नवीनम्, नूतनम्, नूतमम्, नव्य "नवादीनतनत्न न नू चाऽस्य" ॥ ७ । २ । १६० ॥ इति साधव ॥ ४ ॥ ३ ॥ ४ ॥ ५ ॥ सद्यो भवं सद्यस्कम्, पृषोदरादित्वात् साधु ॥ ६ ॥ प्रतिगतमग्रमनेन प्रत्यग्रम् ॥ ७ ॥ अभिनूयतेऽभिनव तत्र ॥ ८ ॥

जीर्णे पुरातन चिरन्तनम् ॥ ८४ ॥

पुराण प्रतन प्रत्न जरत्

जीर्यति स्म जीर्णं तत्र ॥१॥ पुरा भव पुरातनम् "सायचिरंप्राह्णेप्रगेऽव्ययात्" ॥ ६ । ३ । ८८ ॥ इति तनट् ॥ २ ॥ सूत्रनिपातनान्मोऽन्तश्च ॥ ३ ॥ ८४ ॥ पुरा भव पुराणम् "पुरो न" ॥ ६ । ३ । ८६ ॥ इति न, पुरापि न नवमिति वा ॥ ४ ॥ प्रगत कालेन प्रतन प्रत्नम् "प्रात् पुराणेनश्च" ॥ ७ । २ । १६१ ॥ इति तनत्न-प्रत्ययौ ॥ ५ ॥ ६ ॥ जीर्यति स्म जरत् "जृषोऽतृ" ॥ ५ । १ । १७३ ॥ ७ ॥

मूर्त्तं तु मूर्त्तिमत् ।

मूर्च्छति स्म मूर्त्तम् ॥ १ ॥ मूर्त्तिरस्य मूर्त्तिमत् ॥ २ ॥

उच्चावच नैकभेदम्

उदक् च अवाक् च, उचितं चाऽनुचितं च वा, उन्नतं चाऽवनतं च वा उच्चावचम्, मयूरव्यंसकादित्वात् साधु ॥ १ ॥ न एको नैक निरनुबन्धोऽत्र न "नाम नाम्नैकार्थ्ये" ॥ ३ । १ । १८ ॥ इति समासः, नैको भेदोऽस्य नैकभेदं नाना-प्रकारमित्यर्थ ॥ २ ॥

अतिरिक्ताधिके समे ॥ ८५ ॥

अतिरिच्यते स्म अतिरिक्तम् ॥ १॥ अध्यारूढमधिकम् "अधेरारूढे" ॥ ७ । १ । १८७ ॥ इति क, अधि कायतीति वा ॥ २ ॥ ८५ ॥

पार्श्वं समीप सविध ससीमा-

भ्याश सवेशान्तिकसन्निकर्षाः ।

सदेशमभ्यग्रसनीडसन्नि-

धाना युपान्त निकटोपकण्ठे ॥ ८६ ॥

सन्निकृष्टसमर्यादाभ्यर्णान्यासन्नसन्निधी ।

स्पृश्यते पार्श्वम्, "स्पृशे श्व पार् च" ॥ (उणा–५२३) ॥ इति साधु ॥१॥ सगता आपाऽत्रैस्तुपचारात् समीपम्, "द्व्यन्तरुपसर्गेभ्योऽप ईत्" ॥ ६ । ३ । ९७ ॥ इत्यप ईत् ॥ २ ॥ समाना विषाऽस्य सविधम् ॥ ३ ॥ समाना सीमाऽस्य ससीमम् ॥४॥ अभ्यस्यते न्यस्यते अस्मार्थे साकम्यान्त ॥५॥ समानो वर्णोऽस्य सवेश ॥६॥ अन्ताऽस्यास्य अन्तिकम् ॥ ७ ॥ सन्निकृष्यते सन्निकर्ष ॥ ८ ॥ समानो देशोऽस्य सदेशम् ॥ ९ ॥ अभिमुखमग्रमस्य अभ्यग्रम् ॥१०॥ समार्ग नाकमस्य समीकम् ॥ ११ ॥ सन्निधीयतेऽत्र सन्निधानम् ॥१२॥ समीपोऽन्ताऽस्य उपान्तम् ॥१३॥ निवसति निकट पुलिङ्गलिङ्ग, "सम्प्रोदश्च कटच्" ॥ ५ । २ । २९ ॥ इति कट ॥ १४ ॥ समीप कण्ठोऽस्य उपकण्ठम् ॥ १५ ॥ ८६ ॥ सन्निकृष्यते स्म सन्निकृष्टम् ॥ १६ ॥ समाना मर्यादाऽस्य समर्यादम् सावध-ससीम-सनीड-सवेश-सदेश समर्यादेषु लक्षणया सामीप्यम् ॥१७॥ अभ्यर्द्यते अभ्यर्णम्, 'अविदूरेऽभे'' ॥७।४।९४॥ इतीत्वाभावः ॥ १८ ॥ आसीदति स्म आसन्नम् ॥१९॥ सन्निधीयतेऽस्मिन् सन्निधि, पुंसि ॥ २० ॥

अव्यवहितेऽनन्तरं संसक्तमपटान्तरम् ॥ ८७ ॥

न व्यवधीयते स्म अव्यवहितं तत्र ॥ १ ॥ नास्त्यन्तरमत्र अनन्तरम् ॥ २ ॥ संसजति स्म संसक्तम् ॥ ३ ॥ नास्ति पटेन तिरस्करिण्या अन्तर व्यवधानमत्र अपटान्तरम् ॥ ४ ॥ ८७ ॥

नेदिष्ठमन्तिकतम

अतिशयेन अन्तिकं नेदिष्ठम्, "बाढान्तिकयोः साधनेदौ" ॥ ७ । ४ । ३७ । इति नेदादेश, नेदीयोऽपि ॥ १ ॥ "प्रकृष्टे" ॥ ७ । ३ । ५ ॥ इति तमपि अन्तिकतमम् ॥ २ ॥

विप्रकृष्टपरे पुन ।

दूरे

विप्रकृष्यते स्म विप्रकृष्टम् ॥ १ ॥ पिपर्ति परम् ॥ २ ॥ दुःखेति दुःखेन ईयते गम्यते वा दूरम्, "दुरसुर" ॥ (उणा–३९६) ॥ इति रे निपात्यते, तत्र आरात् व्ययेषु वक्ष्यते ॥ ३ ॥

अतिदूरं दविष्ठं दवीयः

अतिशयेन दूरं दविष्ठम्, दवीय "गुणाङ्गाद्" ॥ ७ । ३ । ९ ॥ इतीष्ठ ईयसौ च "स्थूलदूर" ॥ ७ । ४ । ४२ ॥ इति रलोपः ॥ १ ॥ २ ॥ ३ ॥

स्यते ॥ १ ॥ तन्यते तनु ॥ २ ॥ पेलति पेलव "वशिपदि" ॥ ( उणा–५१५ ) ॥ इस्वम् ॥ ३ ॥ ८३ ॥

नव नवीन सद्यस्कं प्रत्यग्र नूतनूतने ।
नव्य चाभिनवे

नूयते नवम् ॥१॥ नवमेव नवीनम्, नूत्नम्, नूतनम्, नव्य "नवादीनतनत्न च नू चास्य" ॥ ७ । २ । १६० ॥ इति साधव ॥ ४ ॥ ३ ॥ ४ ॥ ५ ॥ सद्यो भवं सद्यस्कम्, पृषोदरादित्वात् साधु ॥ ६ ॥ प्रतिगतमग्रमनेन प्रत्यग्रम् ॥ ७ ॥ अभिनूयतेऽभिनव तत्र ॥ ८ ॥

जीर्णे पुरातनं चिरन्तनम् ॥ ८४ ॥
पुराण प्रतन प्रत्न जरत्

जीर्यति स्म जीर्णं तत्र ॥१॥ पुरा भव पुरातनम् "सायचिरप्राह्णेप्रगेऽव्ययात्" ॥ ६ । ३ । ८८ ॥ इति तनट् ॥ २ ॥ सूत्रनिपातनान्मोऽन्तश्च ॥ ३ ॥ ८४ ॥ पुरा भव पुराणम् "पुरो न" ॥ ६ । ३ । ८६ ॥ इति न, पुरापि न नवमिति वा ॥ ४ ॥ प्रगत कालेन प्रतन प्रत्नम् "प्रात् पुराणेनश्च" ॥ ७ । २ । १६१ ॥ इति तनत्नप्रत्ययौ ॥ ५ ॥ ६ ॥ जीर्यति स्म जरत् "जृषोऽतृ" ॥ ५ । १ । १७३ ॥ ७ ॥

मूर्त्तं तु मूर्तिमत् ।

मूर्च्छति स्म मूर्त्तम् ॥ १ ॥ मूर्तिरस्य मूर्तिमत् ॥ २ ॥

उच्चावच नैकभेदम्

उदक् च अवाक् च, उचितं चाऽवचितं च वा, उन्नतं चाऽवनतं च वा उच्चावचम्, मयूरव्यंसकादित्वात् साधु ॥ १ ॥ न एको नैक निरनुबन्धोऽत्र न "नाम नाम्नैकार्थ्ये" ॥ ३ । १ । १८ ॥ इति समासः, नैको भेदोऽस्य नैकभेदं नानाप्रकारमित्यर्थः ॥ २ ॥

अतिरिक्ताधिके समे ॥ ८५ ॥

अतिरिच्यते स्म अतिरिक्तम् । १॥ अध्यारूढमधिकम् "अधेरारूढे" ॥ ७ । १ । १८७ ॥ इति क, अधि कायतीति वा ॥ २ ॥ ८५ ॥

पार्श्वं समीप सविध ससीमा-
भ्याश सवेशान्तिकसन्निकर्षाः ।
सदेशमभ्यग्रसनीडसन्नि-
धाना युपान्त निकटोपकण्ठे ॥ ८६ ॥

सन्निकृष्टसमर्यादाभ्यर्णान्याससन्नसन्निधी ।

स्पृश्यते पार्श्वम्, "स्पृशेः श्व पार् च" ॥ (उणा–५१३) ॥ इति साधु ॥१॥ संगता आपोऽत्रेत्यस्मिन्नर्थात् समीपम्, "द्व्यन्तरनवर्णोपसर्गाद्" ॥ ३ । २ । १०९ ॥ इत्यप ईप् ॥ २ ॥ समाना विधाऽस्य सविधम् ॥ ३ ॥ समाना सीमाऽस्य ससीमम् ॥४॥ अभ्यस्यते व्यस्यते अभ्याश तासन्यान्त ॥५॥ समानो वेशोऽस्य सवेशः ॥६॥ अन्तोऽस्यास्य अन्तिकम् ॥ ७ ॥ संनिकृष्यते संनिकर्षः ॥ ८ ॥ समानो देशोऽस्य सदेशम् ॥ ९ ॥ अभिमुखमग्रमस्य अभ्यग्रम् ॥१०॥ समान नाऽनमस्य सनीडम् ॥ ११ ॥ संनिधीयतेऽत्र संनिधानम् ॥१२॥ समीपोऽन्तोऽस्य उपान्तम् ॥१३॥ नियताति निकटं पृषोदरादित्वात्, "सम्प्रोन्नेः संकीर्णे" ॥ ७ । १ । १२५ ॥ इति कट ॥ १४ ॥ समीपं कण्ठोऽस्य उपकण्ठम् ॥ १५ ॥ ८६ ॥ संनिकृष्यते स्म संनिकृष्टम् ॥ १६ ॥ समाना मर्यादाऽस्य समर्यादम् सविध-ससीम-सनीड-सवेश-सदेश-समर्यादेषु लक्षणया सामीप्यम् ॥१७॥ अभ्यर्ध्यते अभ्यर्णम्, 'अविदूरेऽभेः' ॥४।४।६४॥ इतीडभावः ॥ १८ ॥ आसीदति स्म आसन्नम् ॥१९॥ संनिधीयतेऽस्मिन् संनिधिः, पुंसि ॥ २० ॥

अव्यवहितेऽनन्तर संसक्तमपटान्तरम् ॥ ८७ ॥

न व्यवधीयते स्म अव्यवहितं तत्र ॥ १ ॥ नास्त्यन्तरमत्र अनन्तरम् ॥ २ ॥ संसजति स्म संसक्तम् ॥ ३ ॥ नास्ति पटेन तिरस्करिण्या अन्तरं व्यवधानमत्र अपटान्तरम् ॥ ४ ॥ ८७ ॥

नेदिष्ठमन्तिकतम

अतिशयेन अन्तिकं नेदिष्ठम्, "बाढान्तिकयोः साधनेदौ" ॥ ७ । ४ । ३७ । इति नेदादेश, नेदीयोऽपि ॥ १ ॥ "प्रकृष्टे" ॥ ७ । ३ । ५ ॥ इति तमपि अन्तिकतमम् ॥ २ ॥

विप्रकृष्टपरे पुन ।

दूरे

विप्रकृष्यते स्म विप्रकृष्टम् ॥ १ ॥ पिपर्ति परम् ॥ २ ॥ दुनोति दुःखेन ईयते गम्यते वा दूरम् 'दुरसुर' ॥ (उणा–३९६) ॥ इति रे निपात्यते, तत्र आराद्-व्ययेषु वक्ष्यते ॥ ३ ॥

अतिदूर दविष्ठ दवीयः

अतिशयेन दूरं दविष्ठम्, दवीयः "गुणाङ्गाद्" ॥ ७ । ३ । ९ ॥ इतीष्ठेयसौ च "स्थूलदूर" ॥ ७ । ४ । ४२ ॥ इति रलोप ॥ १ ॥ २ ॥ ३ ॥

अथ सनातनम् ॥ ८८ ॥
शाश्वतानश्वरे नित्य ध्रुव

सना सर्वदा भवति सनातनम्, "सायंचिर" ॥६।३।८८॥ इति तनट्, सदातनमपि ॥ १ ॥ ८८ ॥ शश्वद् भव शाश्वतम्, "भर्तुसन्ध्यादेरण्" ॥ ६।३।८९ ॥ शाश्वतिकमपि ॥२॥ न नश्वरमनश्वरम् ॥३॥ नियत भवं नित्यम्, "नेर्ध्रुवे" ॥ ६।३।१७ ॥ इति त्यच् ॥ ४ ॥ ध्रुवति ध्रुवम्, कुट्यादित्वादाच गुणाभावः ॥ ५ ॥

स्थेयस्त्वतिस्थिरम् ।
स्थास्नु स्थेष्ठ

अतिशयेन स्थिर स्थेय , स्थेष्ठम् "प्रियस्थिर-" ॥ ७।४।३८ ॥ इति स्थादेश ॥ १ ॥ २ ॥ ३ ॥ तिष्ठतीत्येवं शील स्थास्नु "स्थाग्लाम्ला" ॥ ५।२।३१ ॥ इति स्नु ॥ ४ ॥

तत् कूटस्थ कालव्याप्येकरूपत ॥ ८९ ॥

तद् अतिस्थिरम्, कूटेन अचलत्वेन तिष्ठति कूटस्थमाकाशात्मादि निरवधिकाल व्याप्नोति स्थिरत्वात् कालव्यापि, एकरूपतो निर्विकारत्वेनेत्यर्थ ॥ १ ॥ ८९ ॥

स्थावरं तु जङ्गमान्यत्

तिष्ठतीत्येवं शील स्थावरं पृथिव्यादि, "स्थेशभास" ॥ ५।२।८१ ॥ इति वर , जङ्गमात् त्रस्यद्वीन्द्रियादेः अन्यत्‌ जङ्गमान्यत् ॥ १ ॥

जङ्गम तु त्रस चरम् ।
चराचर जगदिङ्ग चरिष्णु च

भृशं गच्छति जङ्गमं अकौटिल्येऽप्यभिधानाद् यङ् ॥ १ ॥ त्रस्यति चलत्वात् त्रसम् ॥ २ ॥ चरति चरम् ॥ ३ ॥ 'चराचरचलाचल-" ॥ ४।१।१३ ॥ इत्यचि द्वित्वे ऽऽत्वनिपातनाच्चराचरम् ॥४॥ गमनशील जगत् 'द्युद्रुत्जगत' ॥ ५।२।८३ ॥ इति क्विपि साधु ॥५॥ इङ्गति इङ्गम् ॥६॥ चरणशील चरिष्णु "भ्राज्यलं-" ॥ ५।२।२८ ॥ इतीष्णु ॥ ७ ॥

अथ चञ्चलम् ॥ ९० ॥
तरल कम्पन कम्प्र परिप्लवचलाचले ।
चटुल चपल लोल चल पारिप्लवास्थिरे ॥ ९१ ॥

चञ्चति चञ्चलम्, "मृदिकन्दि' ॥ (उणा-४६५) ॥ इत्यल , चञ्चस्यते वा

॥ १ ॥ ९० ॥ तरति चक्षुरत्र तरलम्, "वृषिकन्दि" ॥ ( उणा–४६५ ) ॥ इत्यल ॥ २ ॥ कम्पनशीलं कम्पनम्, 'इञ्चि" ॥ ५ । २ । ४४ ॥ इत्यन ॥ ३ ॥ "स्न्यजस" ॥ ५ । २ । ७९ ॥ इति रे कम्प्रम् ॥ ४ ॥ परिप्लवते परिप्लवम् ॥ ५ ॥ चलति चलाचलम्, "चराचरचलाचल" ॥ ४ । १ । १२ ॥ इति चलि द्वित्वमात्व च ॥ ६ ॥ चटति चटुलम्, "इषिद्रुति-" ॥ ( उणा–४८५ ) ॥ इत्युल ॥ ७ ॥ चपति चपलम्, "वृषिकन्दि" ॥ ( उणा–४६५ ) ॥ इत्यल ॥ ८ ॥ लालसस्थैर्ये लोलम्, "मद्यादस्य कित्" ॥ ( उणा–४९४ ) ॥ इत्योल, लोलति वा ॥ ९ ॥ चलति चलम् ॥ १० ॥ परिप्लवमेव पारिप्लवं प्रज्ञादित्वादण् ॥ ११ ॥ न स्थिरमस्थिर तत्र ॥ १२ ॥ ९१ ॥

ऋजावजिह्मप्रगुणौ

अर्ज्यते ऋजुः, "अर्जेऋज् च" ॥ ( उणा–७२१ ) ॥ इत्युः, तत्र ॥ १ ॥ न जिह्मोऽजिह्मः ॥ २ ॥ प्रकृष्टो गुणोऽस्य प्रगुण, प्र सादस्ये, प्रकृष्टो गुणेन सौम्यो, वा ॥ ३ ॥

अवाग्रेऽवनतानते ।

अवनतमग्रमस्य अवाग्रमधोमुखमित्यर्थ , तत्र ॥ १ ॥ अवनमति स्म अवनतम् ॥ २ ॥ आ नमति स्म आनतम् ॥ ३ ॥

कुञ्चितं नतमाविद्धं कुटिलं वक्रवेल्लिते ॥ ९१ ॥

वृजिनं भङ्गुरं भुग्नमरालं जिह्ममूर्मिमत् ।

कुञ्च्यते स्म कुञ्चितम् ॥ १ ॥ नमति स्म नतम् ॥ २ ॥ आविध्यते स्म आविद्धम् ॥ ३ ॥ कुटति कुटिलम् "कटूयनि" ॥ (उणा–४८१) ॥ इतीलच, कुट्यादित्वात् गुणाभाव ॥ ४ ॥ वक्रति वक्रम्, "स्फायितञ्चि" ॥ ( उणा–३८८ ) ॥ इति किद् रः ॥५॥ वल्लति स्म वेल्लितम् ॥ ६ ॥ ९२ ॥ वृज्यते वृजिनम् ॥ ७ ॥ भज्यते इत्येवंशीलं भङ्गुरम्, "भञ्जभासमिदो घुर" ॥ ५ । २ । ७४ ॥ ८ ॥ भुजति स्म भुग्नम् "भुग्नादि" ॥ ४ । २ । ७० ॥ इति क्तस्य नत्वम् ॥ ९ ॥ इयर्त्यरालम्, 'ऋकृमृ" ॥ ( उणा–४७५ ) ॥ इत्याल अरानालमति वा ॥ १० ॥ जहाति ऋजुतां जिह्मम्, "प्रसिहाग्भ्यो मश्चिह्मो च" ॥ (उणा–३३९) ॥ इति म ॥११॥ ऊर्मयो भङ्गा सन्त्यस्य ऊर्मिमत् ॥ १२ ॥

अनुगेऽनुपदान्वक्षान्वाचि

अनु गच्छत्यनुगं तत्र ॥ १ ॥ पदस्य क्रमस्य पश्चादनुपदम्, पश्चादर्थेऽव्ययी–भाव ॥ २ ॥ अक्षस्य रथस्य पश्चादन्वक्षम् ॥ ३ ॥ अन्वाचमन्वक् ॥ ४ ॥

एकाक्येक एककः ॥ ९३ ॥

एसेक ॥ १ ॥ एक एव एकाकी, एकक असहाय इत्यर्थः "एकादाकिन् चा सहाये" ॥ ७ । ३ । २७ ॥ इति साधु , अवगणोऽपि ॥ २ ॥ ३ ॥ ९३ ॥

एकात् तानायनसर्गाग्र्यैकाग्र च तद्गतम् ।

अनन्यवृत्त्येकायनगत च

एकशब्दात् परे तानादय , एकमविच्छिन्न तनन विस्तारोऽस्य एकतानम् ॥१॥ एकमयन गतिरस्य एकायनम् ॥ २ ॥ एक सर्गो निश्चयोऽस्य एकसर्गम् ॥३॥ एकमग्र पुरोगतमस्त्यस्य एकाग्रम् ॥ ४ ॥ एकाग्रमेवैकाग्र प्रज्ञादित्वादण् ॥ ५ ॥ तत्र गच्छति तद्गतम् ॥ ६ ॥ अनन्या एकरूपा वृत्तिर्व्यापारोऽस्य अनन्यवृत्ति ॥ ७ ॥ एकमयन गतमेकायनगतम् ॥ ८ ॥

अथाद्यमादिमम् ॥ ९४ ॥

पौरस्त्य प्रथम पूर्वमादिरग्रम्

आदौ भवमाद्यम्, आदिर्धर्ममात्रऽत्र, दिगादित्वाद् य ॥ १ ॥ आदौ जातमादिमम् "पश्चादाद्यन्ताग्रादिम" ॥ ६ । ३ । ७५ ॥ २ ॥ ९४ ॥ पुरो भवं पौरस्त्यम्, "दक्षिणापश्चात्पुरसस्त्यण्" ॥ ६ । ३ । १३ ॥ ३ ॥ प्रथते प्रथमम्, "सृपृप्रथि" ॥ ( उणा–३४७ ) ॥ इति म ॥ ४ ॥ पूर्वम् ॥ ५ ॥ आदीयते प्रथमतयेत्यादि पुल्लिङ्ग, धर्मिवृत्तिस्त्वऽपि अजहल्लिङ्ग यथा आदिरगकुलम्॥६॥अग्रमग्रम्,प्रागपि॥७॥

अथान्तिमम् ।

जघन्यमन्त्य चरममन्तः पाश्चात्यपश्चिमे ॥ ९५ ॥

अन्ते जातमन्तिमम् "पश्चादाद्यन्त" ॥ ६ । ३ । ७५ ॥ इतीम ॥१॥ जघनेऽधस्ताद् भव जघन्य दिगादित्वाद् य ॥ २ ॥ अन्ते भवमन्त्यम् ॥ ३ ॥ चरति चरमम्, "सृपृप्रथि" ॥ ( उणा–३४७ ) ॥ इति म ॥ ४ ॥ अमत्यस्त "दम्यमि" ॥ ( उणा–२०० ) ॥ इति त , धर्मिवृत्तित्वेऽप्ययमजहल्लिङ्ग, यथा 'कुलस्यान्त प्रभुस्त्रिय' ॥५॥ पश्चाद् भवं पाश्चात्यम् "दक्षिणापश्चात्–" ॥ ६ । ३ । १३ ॥ इति त्यण् ॥ ६ ॥ "पश्चादाद्यन्त–" ॥ ६ । ३ । ७५ ॥ इति इम पश्चिमम्, "प्रायोऽन्त्यस्य" ॥ ७ । ४ । ६५ ॥ इत्यन्त्यस्वरादिलोप ॥ ७ ॥ ९५ ॥

मध्यम माध्यम मध्यमीय माध्यंदिन च तत् ।

मध्ये जातं मध्यम "मध्यान्म" ॥ ६ । ३ । ७६ ॥ १ ॥ मध्ये भवं माध्यमम्, मध्यमीयम् माध्यंदिनम् 'मध्यादिनण्णेया मोऽन्तश्च" ॥ ६ । ३ । १२६ ॥ इति त्रयम , मध्यादाभिधान्य ॥ २ ॥ ३ ॥ ४ ॥

अभ्यन्तरमन्तराल विचाले

अभ्यामिकमन्तरमभ्यन्तरम् ॥ १ ॥ अन्तरमवकाशमालाति वा अन्तरालम् ॥२॥ "विङ्के विचालम्, "चालाल-" ॥ (उणा-४८०) ॥ इत्याले निपात्यते, विचलन्ति अत्रेति वा, तत्र ॥ ३ ॥

मध्यमन्तरे ॥ ९६ ॥

'मन च धन' मन्यते मध्यम् 'शिक्यास्याढ्य' ॥ (उणा-३६४) ॥ इति ये निपात्यते ॥ १ ॥ अभिसम्वरं पुंक्लीबाच्च अनिकाभ्यां तर " ॥ (उणा-४३७) ॥ तत्र ॥ २ ॥ ९६ ॥

तुल्य समान सदृक्ष सरूप सदृश सम ।
साधारणसधर्माणौ सवर्ण सन्निभ सदृक् ॥ ९७ ॥

तुल्या सम्मित तुल्य सद्गुणकारात्, इत्यपथ-" ॥ ७ । १ । ११ ॥ इति ये साधु ॥ १ ॥ समान तुल्यं मानमस्य समान ॥ २ ॥ समान इव दृश्यत सदृक्षः, सदृश, सदृक् "त्यदाद्यन्यसमानादुपमानाद् व्याप्ये दृशष्टक्सकौ च" ॥ ५ । १ । १५२ ॥ इति सक्, टक्, क्विप् च प्रत्यया, "दृग्दृशदृक्ष" ॥ ३ । २ । १५१ ॥ इति समानस्य सादेश ॥ ३ ॥ ४ ॥ ५ ॥ समानं रूपमस्य सरूप ॥ ६ ॥ समति सम ॥ ७ ॥ समानमाधारणमस्य साधारण ॥ ८ ॥ समानो धर्मोऽस्य सधर्मा 'द्विपदाद् धर्मादन्' ॥ ७ । ३ । १४१ ॥ इति समासान्त "समानस्य धर्मादिषु" ॥ ३ । २ । १४९ ॥ इति सादेश ॥ ९ ॥ समानो वर्णोऽस्य सवर्ण ॥ १० ॥ सन्निभाति सन्निभ ॥ ११ ॥ ९७ ॥

स्युरुत्तरपदे प्रख्य प्रकार प्रतिमो निभ ।
भूतरूपोपमा काश सनीप्रप्रतित पर ॥ ९८ ॥

*प्रख्याति प्रख्य, यथा-'चन्द्रप्रख्य मुखम्' इत्यादि ॥१॥ प्रकरणं प्रकार ॥२॥* प्रतिमीत प्रतिमः ॥ ३ ॥ निभात भाति निभ ॥ ४ ॥ भवति स्म भूत ॥ ५ ॥ रूपयाति रूपम् ॥ ६ ॥ उपमीयतऽनया उपमा ॥ ७ ॥ समाविश्य पर काश संकाशते संकाश, यथा-कणसकाशाःकशाः ॥८॥ *निश्चरां काशत नाकाश*, "घञ्यु पसर्गस्य" ॥ ३ । ३ । ८६ ॥ इति दीर्घः ॥ ९ ॥ एव प्रकाश ॥ १० ॥ प्रतिकाशः ॥ ११ ॥ क्रमेण प्रख्य इत्यादि तु न्यर्थ न भवति, समास एवोत्तरपदत्वस्य स्थे ॥ ९८ ॥

औपम्यमनुकारोऽनुहार साम्य तुलोपमा ।

कक्षोपमानम्

उपमैव औपम्यम्, भेषजादित्वात् ट्यण् ॥ १ ॥ अनुकरणमनुकारः ॥२॥ अनुहरणमनुहारः ॥ ३ ॥ समस्य भावः साम्यम् ॥ ४ ॥ तोलनं तुला भिदादित्वात् ॥ ५ ॥ उपमानमुपमा ॥ ६ ॥ कक्षणं कक्षा ॥ ७ ॥ उपमितिरुपमानम् ॥ ८ ॥

अर्चा तु प्रतिमा यातना निधिः ॥ ९९ ॥
छाया छन्दः कायो रूपं बिम्बं मानकृती अपि ।

अर्च्यते अर्चा ॥१॥ प्रतिशब्दात् परे मा-प्रमुखाः कृतिपर्यन्ता दश, प्रतिमीयतेऽनया प्रतिमा ॥ २ ॥ प्रतियात्यते उपस्क्रियते प्रतियातना ॥ ३ ॥ प्रतिनिधीयते प्रतिनिधिर्मुख्यसदृशोऽर्थः ॥ ४ ॥ ९९ ॥ प्रतिरूपा छाया प्रतिच्छाया ॥ ५ ॥ प्रतिछन्द्यते प्रतिछन्दः, प्रतिरूपं छन्द इति वा ॥ ६ ॥ प्रतिरूपः कायः प्रतिकायः ॥७॥ रूपेण सदृशं प्रतिरूपम्, प्रतिरूप्यते वा ॥८॥ प्रतिबिम्ब्यते प्रतिबिम्बम्, बिम्बेन सदृशं वा ॥ ९ ॥ प्रतिमीयतेऽनेन प्रतिमानम् ॥ १० ॥ प्रतिरूपा क्रियते प्रतिकृतिः ॥ ११ ॥

सूर्मी स्थूणाऽयःप्रतिमा

सरति सूर्मिः, "सर्तेरूर्मातः" ॥ ( उणा–६८९ ) ॥ इति मिः, ङ्यां सूर्मी शोभना ऊर्मिरस्या इति वा ॥ १ ॥ तिष्ठति स्थूणा "स्थासुवोस्च" ॥ ( उणा–१८५ ) ॥ इति णः ॥ २ ॥ अयोमयी प्रतिमाऽयःप्रतिमा ॥ ३ ॥

हिरण्मयी स्याद्धिरण्मयी ॥ १०० ॥

हरति मनो हरिणी 'द्रुहहि–'' ॥ (उणा–१९४) ॥ इणिः ॥१॥ हिरण्यस्य विकारो हिरण्मयी, '' दारवैस्वाकनैत्रेय–'' ॥ ७ । ४ । ३० ॥ इति मयटि यलोपः ॥ २ ॥ ॥ १०० ॥

प्रतिकूलं तु विलोममपसव्यमपष्ठुरम् ।
वामं प्रसव्यं प्रतीपं प्रतिलोममपष्ठु च ॥ १०१ ॥

प्रतीपं कूलात् प्रतिकूलम्, लक्षणया विरुद्धार्थम् ॥ १ ॥ लोमानि विपर्यस्यति " मिजू बहुल–'' ॥ ३ । ४ । ४२ ॥ इति णिचि लोमयतीति विलोमम् ॥ २ ॥ अपगतं सव्यादपसव्यं वाममित्यर्थे, सव्यशब्दो हि व्यान्तिकार्थाऽऽच्छब्दवत् वाम दक्षिणार्थः ॥ ३ ॥ अपाकृष्य तिष्ठति अपष्ठुरम् "मद्गुर–" ॥ ( उणा–४२६ ) ॥ इत्युरे निपात्यते, अपष्ठुलं राति वा ॥४॥ माति वामम् ॥५॥ प्रगतं सव्यात् प्रसव्यम् ॥ ६ ॥ प्रत्यागता आपोऽत्र प्रतीपम् "ऋक्पूः पथ्यपोऽत्" ॥ ७ । ३ । ७६ ॥

" धान्तरनघर्ष–" ॥ ३ । २ । १०९ ॥ इति अप ईपादेशः ॥ ७ ॥ प्रतीप क्षेमा-ऽत्र प्रतिक्षोमम्, "प्रत्यन्ववात् सामलोम्नः" ॥ ७ । ३ । ८१ ॥ इत्यत् समासान्त ॥ ८ ॥ अपाङ्गस्य तिष्ठतीत्यपष्ठु " दुःस्थापवामिभ्यः स्थः " ॥ ( उणा-७३२ ) ॥ इति किदुः, मीरुष्ठानादित्वात् षत्वम् ॥ ९ ॥ १०१ ॥

वाम शरीरेऽङ्ग सव्यम्

वम्यते वामम् ॥ १ ॥ सूयते सव्यम् ॥ २ ॥

अपसव्य तु दक्षिणम् ।

शरीरेऽङ्गमित्येव, अपक्रान्त सव्यादपसव्यम् ॥१॥ दक्षते दक्षिणम्, "द्रुदक्षि–" ( उणा-१९४ ) ॥ इतीम ॥ २ ॥

अबाधोच्छृङ्खलोद्दामान्ययन्त्रितमनर्गलम् ॥ १०२ ॥

निरङ्कुशे

नास्ति बाधाऽस्य अबाधम् ॥ १ ॥ उत्क्रान्तं शृङ्खलाया उच्छृङ्खलम् ॥ २ ॥ उत्क्रान्त दामाया उद्दामम्, अत्र दामाशब्द स्त्रियां कान्तः ॥३॥ न यन्त्रितमय न्त्रितम् ॥४॥ नास्त्यर्गलाऽस्य अनर्गलम्, निरर्गलमपि ॥ ५ ॥ ॥ १०२॥ निष्क्रान्त-मङ्कुशान्निरङ्कुशम्, तत्र ॥ ६ ॥

स्फुटे स्पष्ट प्रकाश प्रकटोल्बणे ।

व्यक्त

स्फुटति बहिः प्रकाशते स्फुटम्, तत्र ॥ १ ॥ स्पश्यते स्म स्पष्टम्, "णौ दान्त शान्तपूर्णदस्तस्पष्ट–" ॥ ४ । ४ । ७४ ॥ इति साधुः ॥ २ प्रकाशते प्रकाशम् ॥३॥ प्रकाश प्रकटं " स्वाङ्गतः–" ॥ ७ । १ । १२५ ॥ इति कटः ॥ ४ ॥ बलमुल्वम "चिक्कण–" ( उणा–१९० ) ॥ इत्यणे निपात्यते, उल्बणतीति वा पृषोदरादित्वात् ॥ ५ ॥ व्यज्यते व्यक्तम् ॥ ६ ॥

वर्तुल तु वृत्तं निस्तल परिमण्डलम् ॥ १०३ ॥

वर्तते भ्रमति वर्तुलम् " हृपिवृति–" ॥ ( उणा–४८५ ) ॥ इत्युलः ॥ १ ॥ वर्तते स्म वृत्तं पुल्लीवसिह , वाच्यलिङ्गोऽत्रमित्यन्ये ॥ २ ॥ निर्गत तल प्रतिष्ठाऽस्य निस्तलम्, भूमौ मास्ते, तत्र वा रजो न तिष्ठति ॥ ३ ॥ परितो मण्डलाकृति परिम ण्डलम् ॥ ४ ॥ ॥ १०३ ॥

बन्धुर तून्नतानत

बध्नाति गतिं बन्धुरम् ॥१॥ उन्नत च तदुपाधिवशादीषन्नत उन्नतानतम्, यथा–'कण्ठस्य तस्याः स्तनबन्धुरस्य' इति ॥ २ ॥

स्थपुट विषमोन्नतम् ।

तिष्ठति स्थपुटम्, " नकुट-" ॥ ( उणा-१५५ ) ॥ इत्युटे निपात्यते ॥ १ ॥ विषम च तदुन्नत च विषमोन्नतम् ॥ २ ॥

अन्यदन्यतरद् भिन्न त्वमेकमितरश्च तत् ॥ १०४ ॥

अनितिस्न्यत् " स्थाछामा- " ॥ ( उणा-३५७ ) ॥ इति य ॥ १ ॥ बहूनां मध्येऽन्यदन्यतरद् " बहूनां प्रश्न डतमश्च वा " ॥ ७ । ३ । ५४ ॥ इति डतर ॥ २ ॥ भिद्यते भिन्नम् ॥ ३ ॥ त्वक्षति त्वम्, "क्वचित्" ॥ ५ । १ । १७१ ॥ इति ड ॥४॥ एकमेकम्, यथा-इत्येके मन्यन्ते । यत् काव्य -'प्रधानान्यासहायेषु सङ्ख्यायां चैक इष्यते' ॥ ५ ॥ एतीतरत् " इणपूर्व्या किद् " ॥ ( उणा-४३८ ) ॥ इति तर ॥ ६ ॥ एते भिन्नार्थे सर्वनामानि ॥ १०४ ॥

करम्ब कबरो मिश्र सपृक्त खचित समा ।

क्रियते करम्ब , " कृकदि-" ॥ ( उणा-३२१ ) ॥ इत्यम्बः ॥ १ ॥ कूयते कबर "कृश्छिकषटि " ॥ ( उणा-३९७ ) ॥ इत्यर ॥ २ ॥ मिश्रयते मिश्र ॥ ३ ॥ सपृच्यत सपृक्त ॥ ४ ॥ खच्यते खचित ॥ ५ ॥

विविधस्तु बहुविधो नानारूप पृथग्विध ॥ १०५ ॥

विविधो विधः प्रकारोऽस्य विविध ॥ १ ॥ बहु, पृथग् विधोऽस्य बहुविधः, पृथग्विधः ॥ २ ॥ ३ ॥ नाना रूपमस्य नानारूप , बहुरूप-पृथग्रूप-नानाविधा अपि ॥ ४ ॥ १०५ ॥

त्वरित सत्वर तूर्ण शीघ्र क्षिप्र द्रुत लघु ।
चपलाविलम्बिते च

त्वरते स्म त्वरितम् ॥ १ ॥ सह त्वरया वर्तत सत्वरम् ॥ २ ॥ त्वरते तूर्ण "क्षुब्धस्व " ॥ ४ । ४ । ७५ ॥ इति विकल्पेट्त्वादिडभाव , " मव्यविश्रिवि " ॥ ४ । १ । १०९ ॥ इत्युपान्त्येन ऊट्, "रदादमूर्च्छ-" ॥ ४ । २ । ६९ ॥ इति क्तस्य नत्वम् ॥३॥ श्यायते शीघ्रम् "सुरक्षुर-" ॥ (उणा-३९६) ॥ इति रे निपात्यत ॥४॥ क्षिपति क्षिप्रम्, "ऋज्यजि " ॥ ( उणा-३८८ ) ॥ इति किद् र ॥ ५ ॥ द्रवति द्रुतम् ॥ ६ ॥ लङ्घते लघु ॥ ७ ॥ चपति चपलम् ॥ ८ ॥ न विलम्ब्यतमविलम्बितम् ॥ ९ ॥ अरमाशुमङ्क्षवोऽप्यत्रेषु वक्ष्यन्ते ॥

झम्पा सम्पातपाटवम् ॥ १०६ ॥

झमति झम्पा "पम्पाशिल्पा " ॥ ( उणा-३०० ) ॥ इति निपात्यते ऊति

शीठम 'शम्याः सम्पातपाठषम्' इति पुंस्यन्ये ॥ १ ॥ संपातने पाठव संपात पाठनम् ॥ २ ॥ १०६ ॥

अनारत त्वविरत संसक्त सततानिशे ।
नित्यानवरताजस्रासक्ताश्रान्तानि सन्ततम् ॥ १०७ ॥

आरत-विरता-अरतशब्दा विरामार्थौ, ततो नञ्समास —अनारतम् ॥१॥ अविरतम् ॥२॥ अनवरतम् ॥३॥ संसजति स्म संसक्तम् ॥४॥ सतन्यते सततम् "समो वा हितततयो" ॥ ६।३।११६ ॥ इति समाव ॥ ५ ॥ नास्ति निशाऽत्र अनिशम् सा हि विरतिस्थानम्, अनिशमित्यव्ययमपि ॥६॥ नियतं भवं नित्यम्, "त्यब्नेर्ध्रुवे" ॥६।२।१७॥ इति त्यप् ॥ ७ ॥ न जस्यतीत्येवं शीलमजस्रम् "स्म्यजस" ॥५।२।७९ ॥ इति र ॥ ८ ॥ न सजति स्म असक्तम् ॥ ९ ॥ न श्राम्यति स्म अश्रान्तम् ॥ १० ॥ सतन्यते सन्ततम् ॥ ११ ॥ १०७ ॥

साधारण तु सामान्य

समानमाधारणमस्य साधारणम् ॥ १ ॥ समानस्य भावः सामान्यम् ॥ २ ॥

दृढसन्धिस्तु संहतम् ।

दृढः सन्धिरस्य दृढसन्धि ॥ १ ॥ संहन्यते संहतम् ॥ २ ॥

कलिलं गहने

कल्यते क्षिप्यतेऽत्रान्यत् कलिलम्, "कल्यनि-" ॥ (उणा-४८१) ॥ इतीलः ॥ १ ॥ गाह्यते व्याप्तत्वाद् गहनम्, "विदन" ॥ (उणा-२७५) ॥ इसने निपात्यते, तत्र ॥ २ ॥

सङ्कीर्णे तु सङ्कुलमाकुलम् ॥ १०८ ॥
कीर्णमाकीर्णं च

संकीर्यते संकीर्णं तत्र ॥ १ ॥ सकोचति निरन्तरीभवति सङ्कुलम् ॥ २ ॥ आकोचत्याकुलम् ॥ ३ ॥ १०८ ॥ कीर्यते कीर्णम् ॥ ४ ॥ आकीर्यते आकीर्णम्, एते पूर्वान्यामेकार्थाः श्लेषे ॥ ५ ॥

पूर्णे त्वाचित छन्नपूरिते ।
भरित निचित व्याप्ते

पूर्यते स्म पूर्णं तत्र "णो वृन्तशान्त" ॥ ४।४।७४ ॥ इति साधु ॥ १ ॥ आचीयते स्म आचितम् ॥२॥ छाद्यते स्म छन्नम् "णो वाम्तशान्त" ॥ ४।४।७४ ॥

७५

इति इङभावे साधु , छादितमपि ॥३॥ पूर्यते स्म पूरितम् ॥४॥ भर सञ्जातोऽस्य भरितं तारकादित्वादित ॥५॥ निचीयते स्म निचितम् ॥६॥ व्याप्यते स्म व्याप्तम्॥७॥

प्रत्याख्याते निराकृतम् ॥ १०९ ॥
प्रत्यादिष्ट प्रतिक्षिप्तमपविद्ध निरस्तवत्

प्रत्याख्यायते स्म प्रत्याख्यातं प्रतिषिद्धं तत्र ॥ १ ॥ निराक्रियते स्म निराकृतम् ॥ २ ॥ १०९ ॥ प्रत्यादिश्यते स्म प्रत्यादिष्टम् ॥ ३ ॥ प्रतिक्षिप्यते स्म प्रतिक्षिप्तम् ॥ ४ ॥ अपविध्यते स्म अपविद्धम् ॥ ५ ॥ निरस्यते स्म निरस्तम् ॥ ६ ॥

परिक्षिप्ते वलयित निवृत परिवेष्टितम् ॥ ११० ॥
परिष्कृत परीत च

परिक्षिप्यते स्म परिक्षिप्त तत्र ॥ १ ॥ वलय संजातोऽस्य वलयितम् ॥ २ ॥ नितरां व्रियते निवृतम् ॥३॥ परिवेष्ट्यते स्म परिवेष्टितम् ॥४॥११०॥ परिक्रियते स्म परिष्कृतम्, "सपरे कृगः" ॥ ४ । ४ । ९१ ॥ इति स्सट् ॥५॥ पर्येति परीतम् ॥६॥

त्यक्त तूत्सृष्टमुज्झितम् ।
धूत हीन विधूत च

त्यज्यते स्म त्यक्तम् ॥ १ ॥ उत्सृज्यते स्म उत्सृष्टम् ॥ २ ॥ उज्झ्यते स्म उज्झितम् ॥३॥ धूयते स्म धूतम् ॥४॥ 'ओहांक् त्यागे' हीयते स्म हीनम्, "सूयत्यादि-" ॥ ४ । २ । ७० ॥ इति क्तस्य नत्वम्, "ईर्व्यञ्जनेऽयपि" ॥४ । ३ । ९७॥ इत्वीत्वम् ॥ ५ ॥ 'धू सौत्रः' विधूयते स्म विधूतम् ॥ ६ ॥

विन्न वित्त विचारिते ॥ १११ ॥

'विदिंप् विचारणे' विद्यते विन्नम्, वित्तं "ऋह्रीघ्रा" ॥ ४ । २ । ७६ ॥ इति क्तस्य वा नत्वम् ॥ १ ॥ २ ॥ विचार्यते स्म विचारितं तत्र ॥ ३ ॥ १११ ॥

अवकीर्णे त्ववध्वस्त

अवकीर्यते अवकीर्णम्, तत्र ॥ १ ॥ अवध्वस्यते अवध्वस्तम्, ॥ २ ॥

संवीते रुद्धमावृतम् ।
संवृत पिहितं छन्नं स्थगितं चापवारितम् ॥ ११२ ॥
अन्तर्हितं तिरोहितम्

'व्येंग् संवरणे' संवीयते संवीतम्, "यजादिवचे: किति" ॥ ४ । १ । ७९ ॥

इति भृत्, "दीर्घमवोऽन्त्यम्" ॥ ४ । १ । १०३ ॥ इति दीर्घः, छन्नं ॥ १ ॥ रुध्यते रुद्धम् ॥ २ ॥ आव्रियते आवृतम् ॥ ३ ॥ संव्रियते संवृतम् ॥ ४ ॥ अपिधीयते पिहितम्, "वाऽवाप्योः-" ॥ ३ । २ । १५६ ॥ इति व्यावेश ॥५॥ छाद्यते छन्नम्, छादितमपि ॥ ६ ॥ स्थग्यते स्थगितम् ॥ ७ ॥ अपवार्यते अपवारितम् ॥ ८ ॥ ११२ ॥ अन्तर्धीयते स्म अन्तर्हितम् ॥ ९ ॥ तिरोधीयते स्म तिरोहितम् ॥ १० ॥

अन्तर्द्धिस्त्वपवारणम् ।
छदनव्यवधान्तर्द्धापिधानस्थगनानि च ॥ ११३ ॥
व्यवधान तिरोधान

अन्तर्धानमन्तर्द्धिः पुंस्त्रि', 'अन्तर्द्धिः" ॥ ५ । ३ । ८९ ॥ इति कौ साधुः ॥ १ ॥ अपवार्यते अपवारणम् ॥ २ ॥ छाद्यते छदनम्, छदेरिसुरादीनां भावो निजन्त स्थाण्वियोऽभाव', छदिरदन्त इति केचित् ॥३॥ व्यवधानं व्यवधा, 'उपसर्गादातः" ॥ ५ । ३ । ११० ॥ इत्यङ् ॥ ४ ॥ अन्तर्धानमन्तर्द्धा "मृगयेच्छा-" ॥ ५ । ३ । १०१ ॥ इति साधु ॥ ५ ॥ पिधीयते पिधानम् ॥ ६ ॥ स्थग्यते स्थगनम् ॥ ७ ॥ ११३ ॥ व्यवधीयते व्यवधानम् ॥ ८ ॥ तिरोधीयते तिरोधानम् ॥ ९ ॥

दर्शित तु प्रकाशितम् ।
आविष्कृत प्रकटितं

दर्श्यते स्म दर्शितम् ॥ १ ॥ प्रकाश्यते स्म प्रकाशितम् ॥ २ ॥ आविष्क्रियते स्म आविष्कृतम्, "निर्दुर्बहिराविः-" ॥२ । ३ । ९॥ इति षत्वम्, प्रादुष्कृतमपि ॥३॥ प्रकट्यते स्म प्रकटितम् ॥ ४ ॥

उच्चण्ड त्ववलम्बितम् ॥ ११४ ॥

उच्चण्डतेऽवलम्बमानमुच्चण्डम् ॥१॥ अवलम्ब्यते स्म अवलम्बितम् ॥२॥११४॥

अनादृतमवज्ञात मानित गणितं मतम् ।

न आद्रियते स्म अनादृतम् ॥ १ ॥ अवपूर्वात् ज्ञातावबधनात्' -अवज्ञायते अवज्ञातम् ॥ २ ॥ अवमान्यते अवमानितम् ॥३॥ अवगण्यते अवगणितम् ॥ ४ ॥ अवमन्यते अवमतम् ॥ ५ ॥

रीढाऽवज्ञाऽवहेलान्यसूर्क्षणं चाप्यनादरे ॥ ११५ ॥

'रिहिः कत्थनादी धौत्र रेहणं रीढा भिदादित्वात् साधुः' ॥ १ ॥ अवज्ञा अवमता, अवमाननाऽवगणने अपि ॥ २ ॥ 'हडङ् अनादरे अवहेलनमवहेलं

त्रिशिख ॥३॥ न सूर्ध्यते असूर्क्षणम्, न सुष्ठु उक्षणमसूक्षणमित्यन्ये ॥४॥११५॥

उन्मूलितमावर्हितं स्यादुत्पाटितमुद्धृतम् ।

उन्मूल्यते स्म उन्मूलितम् ॥ १ ॥ आवर्ह्यते स्म आवर्हितम् ॥ २ ॥ उत्पा-ट्यते स्म उत्पाटितम् ॥ ३ ॥ उद्ध्रियते स्म उद्धृतम् ॥ ४ ॥

प्रेङ्खोलितं तरलितं लुलितं प्रेङ्खितं धुतम् ॥ ११६ ॥
चलितं कम्पितं धूतं वेल्लितान्दोलिते अपि ।

'प्रेङ्खोलिरन्दोलिश्च चुरादावपरपठितौ' प्रेङ्खोल्यते प्रेङ्खोलितम् ॥ १॥ तरलं क्रियते तरलितम् ॥२॥ 'लुलि लोडने' लुल्यते लुलितम् ॥३॥ प्रेङ्ख्यते प्रेङ्खितम्, ॥ ४ ॥ धु' स्वादिरपरपठित , धूयते धुतम् ॥ ५ ॥ ११६ ॥ चल्यते चलितम् ॥६॥ कम्प्यते कम्पितम् ॥ ७ ॥ धूयते धूतम् ॥ ८ ॥ वेल्ल्यते वेल्लितम् ॥९॥ अन्दोल्यते स्म अन्दोलितम् ॥ १० ॥

दोला प्रेङ्खोलनं प्रेङ्खा

दोलनं दोला "भीषिभूषि- " ॥ ५ । ३ । १०९ ॥ इत्यङ् ॥ १ ॥ प्रेङ्खोल्यते प्रेङ्खोलनम् ॥ २ ॥ प्रेङ्खणं प्रेङ्खा, अन्दोलनमपि ॥ ३ ॥

फाण्टं कृतमयत्नतः ॥ ११७ ॥

फणतीति "क्षुब्धविरिब्ध " ॥ ४ । ४ । ७० ॥ इति क्ते निपातनात् फाण्टम्, यदश्रपितम्, आपिष्टम्, उदकसम्पर्कमात्राद्भिन्नकरसमौषधं कषायादि अग्निना शृतं यदी-षदुष्णं तत् फाण्टमित्येके, यथा–'फाण्टाभिरभिराधामेव्' इति कदुष्णाभिरिनायासो लभ्यते, अनायासे पुरुषोऽन्यो वा फाण्टशब्देनाभिधीयते इत्यन्ये, यथा–'फाण्टाक्षि-प्तान्नपाणय' इति ॥ १ ॥ ११७ ॥

अथ सिप्तं न्यक्षितं स्यात्

अधः क्षिप्यते स्म अवक्षिप्तम् ॥ १ ॥ न्यक्ष्यते स्म न्यक्षितम् ॥ २ ॥

ऊर्ध्वक्षिप्तमुदक्षितम् ।

ऊर्ध्वं क्षिप्यते स्म ऊर्ध्वक्षिप्तम् ॥ १ ॥ उदक्ष्यते स्म उदक्षितम्, उदस्तमपि ॥ २ ॥

नुन्ननुत्तास्तनिष्ठ्यूतान्याविद्धं क्षिप्तमीरितम् ॥ ११८ ॥

नुद्यते स्म नुन्नम्, "ऋह्रीघ्रा " ॥४ । २ । ७६॥ इति क्तस्य नत्वम् ॥ १ ॥ पक्षे नुत्तम् ॥ २ ॥ अस्यते स्म अस्तम् ॥ ३ ॥ निष्ठीव्यते स्म निष्ठ्यूतम्, "अनुनासिके च च्छ्वः शूट्" ॥ ४ । १ । १०८ ॥ इत्यूठ् ॥ ४ ॥ आविध्यते स्म आविद्धम्

॥ ५ ॥ क्षिप्यते स्म क्षिप्तम् ॥ ६ ॥ 'ईरणु क्षेपे' इत्यस्य ईरितम्, चोदितमपि ॥ ७ ॥ ११८ ॥

समे दिग्धलिप्ते

*दिह्यते दिग्धम् ॥ १ ॥ लिप्यते लिप्तम् ॥ २ ॥*

रुग्णभुग्ने

समे इति सम्बध्यते, एवमुत्तरेष्वपि । रुजति स्म रुग्णम् ॥१॥ भुजति स्म भुग्नम्, "सूयस्यादि" ॥ ४ । २ । ७० ॥ इति तस्य नत्वम् ॥ २ ॥

रूषितगुण्ठिते ।

रूष्यते रूषितम् रूषिर्लौकिको व्याप्त्यर्थः, यथा–'भस्मभिरेणुरूषितः' ॥१॥ गुण्ठ्यते स्म गुण्ठितम् ॥ २ ॥

गूढगुप्ते च

गुह्यते स्म गूढम् ॥ १ ॥ गुप्यते स्म गुप्तम् ॥ २ ॥

मुषितमूषिते

'मुष स्तेये' मुष्यते स्म मुषितम् ॥१॥ 'मूष स्तेये' मूष्यते स्म मूषितम् ॥२॥

गुम्फिताहते ॥ ११९ ॥

गुम्फ्यते गुम्फितम् ॥ १ ॥ आहन्यते आहतम् ॥ २ ॥ ११९ ॥

स्यान्निशातं शितं शातं निशितं तेजितं क्ष्णुतम् ।

निशायते स्म निशातम्, निशितम्, "शाच्छोः" ॥४।४।१२॥ इति वा इत्वम् ॥ १ ॥ एवं शितम् ॥ २ ॥ शातम् ॥ ३ ॥ ४ ॥ तेज्यते स्म तेजितम् ॥ ५ ॥ क्ष्णूयते स्म क्ष्णुतम् ॥ ६ ॥

वृते तु वृत्तवावृतौ

*व्रियते वृतस्तत्र ॥ १ ॥ विवरणे वर्त्यते वृत्तः ॥ २ ॥ वावृत्यते वावृत्तः, 'वावृतु वरणे' दिवादावपरपठितः भट्टिः–"ततो वावृत्तमानसा" इति ॥ ३ ॥*

ह्रीतह्रीणौ तु लज्जिते ॥ १२० ॥

जिह्रेति स्म ह्रीतः, ह्रीणः "ह्रीघ्रा-" ॥ ४ । २ । ७६ ॥ इति तस्य वा नत्वम् ॥ १ ॥ २ ॥ लज्जा संजाताऽस्य लज्जितस्तत्र ॥ ३ ॥ १२० ॥

संगूढः स्यात् सङ्कलिते

संगुह्यते स्म संगूढः ॥ १ ॥ संकल्यते स्म संकलितस्तत्र ॥ २ ॥

सयोजित उपाहिते ।

सयोज्यते स्म संयोजितः ॥ १ ॥ उपाधीयते स्म उपाहितस्तत्र ॥ २ ॥

पक्वे परिणत

पच्यते स्म पक्वम्, "क्षेशुषिपचो मकवम्" ॥ ४ । २ । ७८ ॥ इति साधु, तत्र
. १ ॥ परिणमते स्म परिणतम् ॥ २ ॥

पाके क्षीराज्यहविषा श्रृतम् ॥ १२१ ॥

श्रायते स्म श्रृत क्षीरादिः " श्र श्रतं हवि क्षीरे " ॥ ४ । १ । १०० ॥ इति
साधु, श्राप्यते वा "श्रपे प्रयोक्तैक्ये" ॥ ४ । १ । १०१ ॥ इति साधुः ॥१॥१२१॥

निष्पक्व क्वथिते

निःशेषेण पक्व निष्पक्वम् ॥ १ ॥ क्वथ्यते स्म क्वथितम्, तत्र ॥ २ ॥

प्लुष्टप्रुष्टदग्धोषिताः समा ।

प्लुष्यते प्लुष्ट ॥१॥ प्रुष्यते प्रुष्ट ॥ २ ॥ दह्यते दग्ध ॥ ३ ॥ उष्यते उषित ,
उपेमेतान्तरेण भवेत् ॥ ४ ॥

तनूकृते त्वष्टतष्टौ

अतनुस्तनु क्रियते स्म तनूकृतस्तत्र ॥ १ ॥ त्वक्ष्यते स्म त्वष्टः ॥ २ ॥
तक्ष्यते स्म तष्ट ॥ ३ ॥

विद्धे छिद्रितवेधितौ ॥ १२२ ॥

'व्यधच् ताडने' विध्यते स्म विद्धस्तत्र "ज्याव्यध' क्ङिति" ॥ ४ । १ ।
८१ ॥ इति व्युद ॥१॥ छिद्र्यते स्म छिद्रित , छिद्रं संजातमस्य वा ॥ २ ॥ 'विधत्
विधाने' इत्यस्य ण्यन्तस्य क्ते वाधितः ॥ ३ ॥ १२२ ॥

सिद्धे निर्वृत्तनिष्पन्नौ

सिध्यति स्म सिद्धम्, तत्र ॥ १ ॥ निर्वर्तते स्म निवृत्तम् ॥ २ ॥ निष्पद्यते स्म
निष्पन्न ॥ ३ ॥

विलीने द्रुतविद्रुतौ ।

विलीयते स्म विलीनस्तत्र घृतक्षादिस्नात् कस्य नत्वम् ॥ १ ॥ द्रवति स्म
द्रुत ॥ २ ॥ एव विद्रुतः ॥ ३ ॥

उत मोते

'वेञ् तन्तुसन्ताने' ऊयते स्म उतम् "यजादित्वये किति" ॥ ४ । १ । ७९ ॥ इति स्पृत् ॥ १ ॥ प्रोयते स्म प्रोतम्, तत्र ॥ २ ॥

स्यूतमूतमुत च सन्तुसन्तते ॥ १२३ ॥

सीव्यते स्म स्यूतम्, "अनुनासिक च पूर्व ध्रुड्" ॥४।१।१०८॥ इत्यूत्वम् ॥१॥ 'ऊयेङ् तन्तुसन्तान' ऊयते स्म ऊतम्, "य्वो प्वय्व्यञ्जने-" ॥४।४।१२१॥ इति यस्लोप ॥२॥ वेंग् तन्तुसन्तान' इत्यस्य स्मृति उतम् ॥ ३ ॥ तन्तुभिः सन्तत विस्तृतम्, तत्र ॥ ४ ॥ १२३ ॥

पाटित दारित भिन्ने

पाट्यते स्म पाटितम् ॥ १ ॥ दार्यते स्म दारितम् ॥ २ ॥ भिद्यत स्म भिन्न तत्र ॥ ३ ॥

विदरः स्फुटन भिदा ।

विदरण विदर ॥ १ ॥ स्फुट्यत स्फुटनम्, कुटादित्वात् गुणाभाव ॥ २ ॥ भेदन भिदा "भिदादय" ॥ ५ । ३ । १०८ ॥ इत्यङ्, भिदापि ॥ ३ ॥

अङ्गीकृत प्रतिज्ञातमूरीकृतोररीकृते ॥ १२४ ॥

सश्रुतमभ्युपगतमुररीकृतमाश्रुतम् ।

संगीर्णं प्रतिश्रुतं च

अनङ्गमङ्ग क्रियते स्म अङ्गीकृतम् अङ्गीकृत स्वीकृते अपि ॥ १ ॥ प्रतिज्ञायते स्म प्रतिज्ञातम् ॥ २ ॥ ऊरीक्रियत स्म ऊरीकृतम् ॥ ३ ॥ एवं उररीकृतम् ॥ ४ । उररीकृतम् ऊर्यादीनां प्रयाणां "ऊर्यादयनुकरण" ॥ ३ । १ । २ ॥ इति गतिसंज्ञायां "गतिकन्यस्तत्पुरुषः" ॥ ३ । १ । ४२ ॥ इति समास ॥ ५ ॥ १२४ ॥ संश्रूयते स्म संश्रुतम् ॥ ६ ॥ अभ्युपगम्यते स्म अभ्युपगतम् ॥ ७ ॥ आश्रूयते स्म आश्रुतम् ॥८॥ संगीर्यते स्म संगीर्णम् ॥ ९ ॥ प्रतिश्रूयते स्म प्रतिश्रुतम् ॥ १० ॥

छिन्ने छत छित वितम् ॥ १२५ ॥

छेदित खण्डित वृक्ण कृत्त

छिद्यते स्म छिन्नं तत्र ॥ १ ॥ लूयत लूने ल्वादित्वात् तस्य नत्वम् ॥ २ ॥ छायते छितम्, 'छाशोर्वा" ॥४।४।१२॥ इति इत्वम्, छातमपि ॥ ३ ॥ 'दों छेदने' दीयते दितम्, "दोसोमास्थ" ॥ ४ । ४ । ११ ॥ इतीत्वम् ॥ ४ ॥ १२५ ॥ छदण द्वैधीकरण' छेद्यते छेदितम् ॥ ५ ॥ खण्ड्यते खण्डितम् ॥६॥ वृश्च्यत वृक्णम् ' सूप

स्यादि" ॥ ४।२।७० ॥ इति क्तस्य नत्वे "क्तादेशोऽपि" ॥ २।१।६१ ॥ इति नत्वस्यासिद्धत्वेन "संयोगस्यादौ-" ॥ २।१।८८ ॥ इति सलोपः ॥ ७ ॥ क्नूयते क्नूतम् ॥ ८ ॥

प्राप्ते तु भावितम् ।
लब्धमासादित भूतं

प्राप्यते स्म प्राप्तम् ॥१॥ भवते प्राप्त्यर्थात् "भूङ् प्राप्तौ णिङ्" ॥ ३।४।१९ ॥ इति स्वार्थे वा णिङि भावितम्, पक्षे भूयते प्राप्यते भूतम् ॥२॥३॥ लभ्यते स्म लब्धम् ॥ ४ ॥ 'आङ् षद्लृ गतौ' इत्यस्य आसादितम्, त्रिष्वपि ॥ ५ ॥

पतिते गलित च्युतम् ॥ १२६ ॥
स्रस्त भ्रष्ट स्कन्नपन्ने

पतति स्म पतितं तत्र ॥ १ ॥ गलति स्म गलितम् ॥२॥ च्यवते स्म च्युतम् ॥ ३ ॥ १२६ ॥ स्रंसते स्म स्रस्तम् ॥ ४ ॥ भ्रंशते स्म भ्रष्टम् ॥ ५ ॥ स्कन्दति स्म स्कन्नम् ॥ ६ ॥ पद्यते स्म पन्नम् ॥ ७ ॥

सशितं तु सुनिश्चितम् ।

संश्यति स्म संशितम् ॥१॥ सुष्ठु निश्चिनोति स्म सुनिश्चितम्, सुष्ठु निश्चितमस्य वा ॥ २ ॥

मृगित मार्गितान्विष्टान्वेषितानि गवेषिते ॥ १२७ ॥

'मृगणि अन्वेषणे' मृग्यते मृगितम् ॥१॥ 'मार्गण अन्वेषणे' मार्ग्यते मार्गितम् ॥२॥ 'इषत् इच्छायाम्' अन्विष्यते अन्विष्टम् ॥३॥ 'एषृङ् गतौ' अन्वेष्यते अन्वेषितम् ॥ ४ ॥ 'गवेषण मार्गणे' गवेष्यते गवेषितं तत्र ॥ ५ ॥ १२७ ॥

तिमिते स्तिमितक्लिन्नसार्द्रार्द्रोन्नाः समुत्तवत् ।

तिम्यति स्म तिमितस्तत्र ॥ १ ॥ स्तिम्यति स्म स्तिमितः ॥ २ ॥ क्लिद्यति स्म क्लिन्नः ॥३॥ सह आर्द्रेण गुणेन वर्तते सार्द्रः ॥४॥ अर्दति आर्द्रः "चिजि-" ॥ ( उणा–३९२ ) इति रः, वधिरवं च ॥ ५ ॥ उनत्ति स्म उन्नः "क्षैशुषि-" ॥ ४।२।७९ ॥ इति क्तस्य वा नत्वम् ॥ ६ ॥ पक्षे समुत्तः ॥ ७ ॥

प्रस्थापित प्रतिशिष्टे प्राहितप्रेषिते अपि ॥ १२८ ॥

प्रस्थाप्यते स्म प्रस्थापितम् ॥ १ ॥ प्रतिशिष्यते स्म प्रतिशिष्टम् ॥२॥ प्रहीयते स्म प्रहितम् ॥ ३ ॥ इषच् गतौ प्रेष्यते स्म प्रेषितम् ॥ ४ ॥ १२८ ॥

ख्याते प्रतीतप्रज्ञातवित्तप्रथितविश्रुताः ।

ख्यायते स्म ख्यातः, तत्र ॥ १ ॥ प्रतीयते प्रतीतः ॥ २ ॥ प्रज्ञायते प्रज्ञातः ॥ ३ ॥ 'विद्लृ लाभे' विद्यते उपलभ्यते वित्तः "वित्तं धनप्रतीतम्" ॥ ४ । २ । ५८ ॥ इति साधुः ॥ ४ ॥ प्रथ्यते प्रथितः ॥ ५ ॥ विश्रूयते विश्रुतः ॥ ६ ॥

तप्ते सन्तापितो धूनो धूपायितश्च धूपितः ॥ १२९ ॥

तप्यते स्म तप्तः, तत्र ॥ १ ॥ बहुलमेतन्निदर्शनम् इति चुरादित्वात् स्वार्थे णिचि सन्तापितः ॥ २ ॥ धूप्यते धूनः, "दुग्वोर्दीर्घश्च" ॥ ८ । २ । ७७ ॥ इति नस्य नत्वं दीर्घश्च ॥ ३ ॥ धूपे: "आयादय आर्धधातुके वा" ॥ ३ । १ । ३१ ॥ इति स्वार्थे आयप्रत्यये धूपायितः ॥ ४ ॥ पक्षे धूपितः ॥ ५ ॥ १२९ ॥

घने स्त्यानम्

स्त्यायते स्म घनम्, तत्र "प्रत्ययः मूर्तिमूर्छापर्यायौ मध्यात्पद्यौ" ॥ ४ । १ । ९ ॥ इति साधुः ॥ १ ॥ स्त्यायति स्म स्त्यानम्, "संयोगादेरातो धातोर्यण्वतः" ॥ ८ । २ । ४३ ॥ इति तस्य नत्वम् ॥ २ ॥

उपनतस्तूपसन्न उपस्थितः ।

उपनमति स्म उपनतः ॥ १ ॥ उपसीदति स्म उपसन्नः ॥ २ ॥ उपतिष्ठते स्म उपस्थितः ॥ ३ ॥

निर्वातस्तु गते वाते

निर्वाति स्म निर्वातो वातः ॥ १ ॥

निर्वाणः पावकादिषु ॥ १३० ॥

निर्वाति शाम्यति स्म निर्वाणोऽग्निः निष्ठातः इत्यर्थः "निर्वाणोऽवाते" ॥ ८ । २ । ५० ॥ इति साधुः, आदिशब्दान्निर्वाणो मुनिः, निर्वाणं मुक्तिः, निर्वृतिश्च । यथा–त्रिमार्गगामिभोगास्तु किमन्यैरपनार्यते ॥

निर्वाणमाप्यते येन वराटेणापि चक्षुषा ॥ १ ॥ १३० ॥

प्रवृद्धमेधितं प्रौढ

प्रवर्धते स्म प्रवृद्धम् ॥ १ ॥ एधते स्म एधितम् ॥ २ ॥ प्रवहति स्म प्रौढम्, "प्रादूहोढोढ्येषैष्येषु" ॥ ६ । १ । ८९ ॥ इत्यौत्वम् ॥ ३ ॥

विस्मृतान्तर्गते समे ।

विस्मर्यते स्म विस्मृतम्, प्रस्मृतमपि ॥१॥ अन्तर्गच्छति स्म अन्तर्गतम् ॥२॥

उद्वान्तमुद्गते

उद्भ्रमति स्म उद्भ्रान्तम् ॥ १ ॥ उद्गच्छति स्म उद्गतम्, तत्र ॥ २ ॥

गून हन्ने

'गुंत् पुरीषोत्सर्गे' गूयते स्म गूनम्, "सुगोरू च" ॥ ४ । २ । ७७ ॥ इति साधुः ॥ १ ॥ हद्यते स्म हन्नम्, तत्र ॥ २ ॥

मीढ तु मूत्रिते ॥ १२१ ॥

मिह्यते मीढम् ॥ १ ॥ मूत्र्यते मूत्रितम्, तत्र ॥ २ ॥ १२१ ॥

विदित बुधित बुद्ध ज्ञात सितगते अवात् ।

मनित प्रतिपन्न च

'विदक् ज्ञाने' इत्यस्य विद्यते विदितम् ॥ १ ॥ 'बुधृग् बोधने' इत्यस्य इटि बुधितम् ॥ २ ॥ 'बुधिंच् ज्ञाने' इत्यस्यानिटो बुद्धम् ॥ ३ ॥ ज्ञायते ज्ञातम् ॥ ४ ॥ अवोपसर्गात् परे सितगते अवसीयते अवसितम् "दोसोमास्थ" ॥ ४ । ४ । ११ ॥ इतीत्त्वम्, ॥ ५ ॥ अवगम्यते अवगतम् ॥ ६ ॥ 'मनूयी बोधने' इत्यस्येटि मनितम्, कृति इति नूतीनामेविद्करणेन इटानिषेधस्यानित्यत्वज्ञापनात् "वेटोऽपत" ॥ ४ । ४ । ६२॥ इति इट्निषेधोऽत्र न भवतीत्यमरटीका। 'मानण् पूजायाम्' इत्यस्य स्थाने 'मनण्' इति केचित् पठन्ति, तस्य वा ॥ ७ ॥ प्रतिपद्यते प्रतिपन्नम्, एषु ज्ञानार्थत्वात् वर्तमाने क्तः ॥ ८ ॥

स्यन्ने रीणं स्नुतं स्रुतम् ॥ १२२ ॥

स्यन्दते स्म स्यन्नं तत्र ॥ १ ॥ 'रीङ्च् स्रवणे' रीयते स्म रीणम्, ल्वाद्या-दित्वात् क्तस्य नत्वम् ॥२॥ स्नौति स्म स्नुतम् ॥३॥ स्रवति स्म स्रुतम् ॥ ४ ॥ १२२ ॥

गुप्तगोपायितत्रातावितत्राणानि रक्षिते ।

गुप्यते गुप्तम्, "अशवि ते वा" ॥ ३ । ४ । ४ ॥ इत्यायप्रत्यये गोपायितम् ॥१॥ ॥ २ ॥ त्रायते त्रातम्, त्राणम् "ह्रीघ्रा-" ॥ ४ । २ । ७६ ॥ इति क्तस्य वा नत्वम् ॥ ४ ॥ अव्यते अवितम् ॥५॥ रक्ष्यते रक्षितं, क्षीत्यादित्वात् वर्तमाने क्तत्वम् ॥६॥

कर्म क्रिया विधा

क्रियते कर्म पुंक्लीबलिङ्गः, भावे कर्मणि वा मन् ॥ १ ॥ "कृगः श च वा" ॥ ५ । ३ । १०० ॥ इति शप्रत्यये क्रिया ॥ २ ॥ विधीयते विधा "उपसर्गादातः" ॥ ५ । ३ । ११० ॥ इत्यङ् ॥ ३ ॥

हेतुशून्या त्वाऽऽस्या विलक्षणम् ॥ १२३ ॥

हेतुशून्यो निर्हेतुका आस्या स्थिति , विगतं लक्षणमालोचनमत्रेति विलक्षणम्, अप्रतिपत्तिरित्यर्थ ॥ १ ॥ १३३ ॥

कार्मणं मूलकर्म

सविद्यं कर्मैव कार्मणं वृद्धपरंपरोपदेशात् "कर्मणः सविद्ये" ॥ ७ । २ । १६७ ॥ इति स्वार्थिकोऽण् ॥ १ ॥ मूलैरौषधादिभिर्वशीकरणं मूलकर्म ॥ २ ॥

अथ संवननं वशक्रिया ।

समन्तात् वन्यते सेव्यते वाऽनेन संवननम् ॥ १ ॥ वशे करणं वशक्रिया वशीकरणमित्यर्थ ॥ २ ॥

प्रतिबन्धे प्रतिष्टम्भ

प्रतिबन्धनं प्रतिबन्धस्तत्र ॥ १ ॥ प्रतिष्टम्भनं प्रतिष्टम्भो रोधः "अवष्टावि स्तम्भनिरुद्धे स्तम्भः" ॥ २ । ३ । ४१ ॥ इति षत्वम् ॥ २ ॥

स्यादास्यास्यासना स्थितिः ॥ १३४ ॥

आसनमास्या "आस्वदिभ्यश्च क्यप्" ॥ ५ । ३ । ९७ ॥ १ ॥ आस्यासना स्या ॥ २ ॥ "भिदादि" ॥ ५ । ३ । १११ ॥ सना आसना ॥ ३ ॥ स्थानं स्थितिः ॥ ४ ॥ १३४ ॥

परस्परं स्यादन्योऽन्यमितरेतरमित्यपि ।

परस्परादयस्त्रयोऽपि स्वभावादेकत्वपुंस्त्वकत्वे कर्मव्यतिहारविषयाः "परस्परान्योन्येतरेतरस्यामस्यादेर्वाऽपुंसि" ॥ ३ । २ । १ ॥ इति सूत्रनिर्देशात् परान्येतराख्यानां सर्वनाम्नां द्विर्वचनादिनिपातनात् साधवः ॥ १ ॥ २ ॥ ३ ॥ क्रियाऽव्ययेषु वर्तते ॥

आवेशाटोपौ संरम्भे

आवेशनमावेश ॥ १ ॥ 'टुप सौत्र' आटोपनमाटोपः ॥ २ ॥ संरम्भणं संरम्भस्तत्र ॥ ३ ॥

निवेशो रचना स्थितौ ॥ १३५ ॥

निवेशनं निवेशः ॥१॥ रच्यते रचना ॥२॥ तिष्ठन्त्यस्यां स्थितिः, तत्र ॥३॥१३५॥

निर्बन्धोऽभिनिवेशः स्यात्

निबन्धनं निर्बन्धः ॥ १ ॥ अभिनिवेशनमभिनिवेशः ॥ २ ॥

प्रवेशोऽन्तर्विगाहनम् ।

प्रवेशने प्रवेश ॥ १ ॥ पदार्थानामन्तर्मध्यस्य विगाहनम् ॥ २ ॥

गतौ वीक्ष्या विहारेर्य्यापरिसर्पपरिक्रमाः ॥ १३६ ॥

गमनं गतिस्तत्र ॥ १ ॥ 'इख गतौ' वीक्ष्यनं वीक्ष्या ॥ २ ॥ विहरणं विहारः ॥ ३ ॥ 'ईरिक गतिकम्पनयो' ईरणमीर्या भिदादित्वात् ॥ ४ ॥ परिसर्पणं परिसर्पः ॥ ५ ॥ परिक्रमणं परिक्रमः ॥ ६ ॥ १३६ ॥

व्रज्याटाट्या पर्यटनं

व्रजनं व्रज्या "आस्यटि-" ॥ ५ । ३ । ९७ ॥ इति क्यप् ॥ १ ॥ कुत्सितमटनमट्याट्या "अट्यर्तिसूत्रिमूत्रि-" ॥ ३ । ४ । १० ॥ इति यङ्, ततो "याऽटाट्यात्" ॥ ५ । ३ । १०३ ॥ इति यः, अटाटाऽपि, "आस्यटि-" ॥ ५ । ३ । ९७ ॥ इति क्यपि अट्यापि । यन्मनु–'तीर्थभिक्षे स्यादट्या च भ्रमणो दशको गणः' ॥ २ ॥ पर्यट्यते पर्यटनम् ॥ ३ ॥

चर्या त्वीर्यापथस्थितिः ।

चरणं चर्या "समज-" ॥ ५ । ३ । ९९ ॥ इति क्यप् ॥ १ ॥ ईर्यापथः साध्वाचारः, यदाह- 'ईर्यापथो ध्यानमौनादिकम् भिक्षुव्रतम्' । तत्र स्थितिरीर्यापथस्थितिः 'चर्या त्वीर्या विदुर्बुधाः' इति तु मुनिः ॥ २ ॥

व्यत्यासस्तु विपर्यासो वैपरीत्यं विपर्ययः ॥ १३७ ॥

व्यत्यये

व्यतिक्रम्यासनं व्यत्यासः ॥ १ ॥ विपर्यसनं विपर्यासः ॥ २ ॥ विपरीतस्य भावो वैपरीत्यम् ॥ ३ ॥ विपर्ययणं विपर्ययः ॥ ४ ॥ १३७ ॥ व्यत्ययनं व्यत्ययस्तत्र ॥ ५ ॥

अथ स्फातिर्वृद्धौ

स्फायनं स्फातिः ॥ १ ॥ वर्द्धनं वृद्धिस्तत्र ॥ २ ॥

प्रीणनेऽवनतर्पणे ।

प्रीण्यते प्रीणनं तत्र ॥ १ ॥ अव प्रीताववम्, अव्यते अवनम् ॥ २ ॥ तर्प्यते तर्पणम् ॥ ३ ॥

परित्राणं तु पर्याप्तिर्हस्तधारणमित्यपि ॥

परित्रायते परित्राणम् ॥ १ ॥ पर्यापणं पर्याप्तिः ॥ २ ॥ प्रहर्तुमुद्यतस्य हस्तस्य धारणं रोधो हस्तधारणम्, रक्ष्यस्य पृष्ठे हस्तस्थापनं वा ॥ ३ ॥ १३८ ॥

प्रणतिः प्रणिपातोऽनुनये

प्रणमनं प्रणतिः ॥ १ ॥ प्रणिपतनं प्रणिपातः ॥ २ ॥ अनुनयनमनुनयः स्तवः ॥ ३ ॥

अथ शयने क्रमात् ।

विशाय उपशायश्च

क्रमात् पर्यायेण, शयनं विशयनं विशायः ॥ १ ॥ उपशयनमुपशायः "व्युपयोः शेतेः पर्याये" ॥ ५ । ३ । ७७ ॥ इति घञ् ॥ २ ॥

पर्यायोऽनुक्रमः क्रमः ॥ १३९ ॥

परिपाट्यानुपूर्व्यावृत्

परियपणं पर्यायः "परेः क्रमे" ॥ ५ । ३ । ७६ ॥ इति घञ् ॥ १ ॥ अनुक्रमणमनुक्रमः ॥ २ ॥ क्रमणं क्रमः ॥ ३ ॥ १३९ ॥ परिपाटनं परिपाटिः स्त्रीलिङ्गः, "स्वरम्यु(क)" ॥ (उणा-६०६) ॥ ङीपि परिपाटी ॥ ४ ॥ पूर्वानुक्रमेण अनुपूर्वं तद्भाव आनुपूर्वी स्त्रीलिङ्गः, क्लीबे आनुपूर्व्यम् ॥ ५ ॥ आवर्तनमावृत् आवृत्तिः सम्पदादित्वात् क्विप् ॥ ६ ॥

अतिपातस्त्वतिक्रमः ।

उपात्ययः पर्ययश्च

अतिक्रम्य पतनमतिपातः ॥ १ ॥ अतिक्रमणमतिक्रमः ॥ २ ॥ उपगमस्यात्ययोऽतिक्रममुपात्ययः ॥ ३ ॥ परित्यज्यायनं पर्ययः अत्र क्रमाभावात् "परेः क्रमे" ॥ ५ । ३ । ७६ ॥ इति घञ् नास्ति ॥ ४ ॥

समौ सम्बाधसङ्कटौ ॥ १४० ॥

संबाध्यतेऽनेन सम्बाधः ॥ १ ॥ संकीर्णं सङ्कटः "संप्रोदश्च कटच्" ॥ ५ । २ । २९ ॥ इति कटच् ॥ २ ॥ १४० ॥

कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सिते ।

काम्यते कामम् ॥ १ ॥ प्रकाम्यते प्रकामम् ॥ २ ॥ पर्याप्यते पर्याप्तम् ॥ ३ ॥ निकाम्यते निकामम् ॥ ४ ॥ एतेऽकारान्ता अव्ययाः, यत् शाश्वतः—

कामे निकामे कामार्था अव्ययास्तु मकारान्ताः ॥

अव्ययेषु—इष्यते इष्टम् ॥ ५ ॥ ईप्सितमनतिक्रम्य यथेप्सितम्, भावः क्रियाविशेषणान्येतानि ॥ ६ ॥

अत्यर्थे गाढमुद्गाढ बाढ तीव्र भृश दृढम् ॥ १४१ ॥
अतिमात्रातिमर्यादनितान्तोत्कर्षनिर्भराः ।
भरैकान्तातिवेलातिशया

अतिक्रान्तमर्थमत्यर्थम्, तत्र ॥१॥ गाह्यते स्म गाढम् ॥२॥ उद्गाह्यते स्म उद्गाढम् ॥३॥ बाह्यते स्म बाढम्, "क्षुब्धस्वान्त-" ॥ ४।४।७० ॥ इति साधु ॥४॥ तीव्यति तीव्रम् ॥ ५ ॥ बिभर्ति भृशम् "कृभृ-" ॥ ( उणा–५२८ ) ॥ इति कित् शः ॥ ६ ॥ दृंहति दृढम् ॥ ७ ॥ १४१ ॥ अतिक्रान्तं मात्रां मर्यादां च अतिमात्रम्, अतिमर्यादम् ॥ ८ ॥ ॥ ९ ॥ नितान्यति स्म नितान्तम् ॥ १० ॥ उत्कृष्यतेऽनेन उत्कर्षः ॥ ११ ॥ निःशेषेण भरोऽत्र निर्भरः ॥ १२ ॥ भृणातेरपि भरः ॥ १३ ॥ एकोऽन्तो निश्चयोऽत्र एकान्तम् ॥ १४ ॥ अतिक्रान्तं वेलामतिवेलम् ॥ १५ ॥ अतिशेते अयत्यनेन अतिशयः ॥ १६ ॥

जृम्भा तु जृम्भणम् ॥ १४२ ॥

जृम्भते जृम्भा त्रिलिङ्गः ॥ १ ॥ अनटि जृम्भणम् ॥ २ ॥ १४२ ॥

आलिङ्गन परिष्वङ्ग संश्लेष उपगूहनम् ।
अङ्कपाली परीरम्भ क्रोडीकृति

आलिङ्ग्यते आलिङ्गनम् ॥ १ ॥ परिष्वजनं परिष्वङ्गः ॥ २ ॥ संश्लेषणं संश्लेषः ॥ ३ ॥ उपगुह्यते उपगूहनम् ॥४॥ अङ्कः पाल्यतेऽङ्कपालिः, "स्वरेभ्य इः" ॥ (उणा–६०६) ॥ ङ्यामङ्कपाली, अङ्कं पालीरिति वा ॥ ५ ॥ परिरम्भणं परिरम्भः "घञ्युपसर्गस्य" ॥ ३।२।८६ ॥ इति दीर्घत्वे परीरम्भः ॥ ६ ॥ क्रोडीकरणं क्रोडीकृतिः ॥ ७ ॥

अथोत्सवे ॥ १४३ ॥
महः क्षणोद्धवोद्धर्षा

उत्सूते सुखमुत्सवः, तत्र ॥ १ ॥ १४३ ॥ महति महः ॥ २ ॥ क्षणुते दुःखं क्षणः ॥ ३ ॥ उद्धुनाति दुःखमुद्धवः ॥ ४ ॥ उर्ध्वं हर्षयति उद्धर्षः ॥ ५ ॥

मेलके सङ्गसङ्गमौ ।

'मिलत् श्लेषणे' मेलनं मेलः, के मेलकस्तत्र ॥ १ ॥ सजनं सङ्गः ॥ २ ॥ संगमनं संगमः पुंस्त्रीलिङ्गः ॥ ३ ॥

अनुग्रहोऽभ्युपपत्ति

अनुग्रहणमनुग्रहः ॥ १ ॥ अभ्युपपदनमभ्युपपत्ति

समौ निरोधनिग्रहौ ॥ १४४ ॥

निरोधनं निरोधः ॥ १ ॥ निग्रहणं निग्रहः ॥ २ ॥ १४४ ॥

विघ्नोऽन्तरायप्रत्यूहव्यवायाः

विहन्यतेऽनेन विघ्नः स्यादित्वात् कः, तत्र ॥ १ ॥ अन्तरा अयनं कामस्यान्तरा यानमन्तरायः ॥ २ ॥ प्रतीपमूहनं प्रत्यूहः ॥ ३ ॥ व्यवधाय अयनं व्यवायः ॥ ४ ॥

समये क्षणः ।

वेलावारावसरः प्रस्तावः प्रक्रमोऽन्तरम् ॥ १४५ ॥

समेति समयस्तत्र ॥ १ ॥ क्षणुते क्षणः ॥ २ ॥ वेलयति कालमुपदिशति वेला ॥ ३ ॥ व्रियते वारः पुंस्यपि स्त्रियां बाहुलकाद् घञ् ॥ ४ ॥ अवसरणमवसरः ॥५॥ प्रसङ्गेन स्तूयते प्रस्तावः "प्रात् स्तुद्रुस्रुवः" ॥ ५ । ३ । २७ ॥ इति घञ् ॥६॥ प्रक्रम्यते प्रक्रमः, "नोदात्तोपदेशस्य मान्तस्यानाचमेः" ॥ ७ । ३ । ३४ ॥ इति वृद्धेरभावः ॥ ७ ॥ अनितस्यन्तरम्, अन्तरातीति वा, अन्तरमस्यास्तीति वा ॥ ८ ॥ १४५ ॥

अभ्यादानमुपोद्घात आरम्भः प्रोपतः क्रमः ।

आभिमुख्येनादानमभ्यादानम् ॥ १ ॥ उपोद्धननमुपोद्घातः, उद्घातोऽपि ॥२॥ आरम्भणमारम्भः ॥ ३ ॥ प्रोपाभ्यां परः क्रमः प्रक्रमणं प्रक्रमः ॥ ४ ॥ उपक्रमणमुपक्रमः ॥ ५ ॥

प्रत्युत्क्रमः प्रयोगः स्यात्

प्रत्युत्क्रमणं प्रत्युत्क्रमः ॥ १ ॥ कर्मारम्भे प्रयुक्तिः प्रयोगः, प्रकृतमुद्दिश्य प्रत्युत्क्रमोऽपि ॥ २ ॥

आरोहणं स्यादभिक्रमः ॥ १४६ ॥

आरुह्यते आरोहणम् ॥ १ ॥ आभिमुख्ये क्रमणमभिक्रमः ॥ २ ॥ १४६ ॥

आक्रमेऽधिक्रमक्रान्ती

आक्रमणमाक्रमः तत्र ॥ १ ॥ अधिक्रमणमधिक्रमः ॥ २ ॥ क्रमणं क्रान्तिः ॥ ३ ॥

व्युत्क्रमस्तूत्क्रमोऽक्रमः ।

व्युत्क्रमणं व्युत्क्रमः ॥ १ ॥ उत्क्रमणमुत्क्रमः ॥ २ ॥ न क्रमोऽक्रमः ॥ ३ ॥

विप्रलम्भो विप्रयोगो वियोगो विरहः समाः ॥ १४७ ॥

विप्रलम्भनं विप्रलम्भः ॥ १ ॥ विप्रयोजनं विप्रयोगः ॥ २ ॥ वियोजनं वियोगः ॥ ३ ॥ 'रहणु त्यागे' इत्यस्माद् घः, विरहणं विरहः ॥ ४ ॥ १४७ ॥

भ्रेषो भ्रशो यथोचितात् ।

यथोचिताद् स्थाद् भ्रशोऽधःपात , भ्रेषणं भ्रेष ॥ १ ॥

अभावो नाशे

न भाव सत्ता अभाव ॥ १ ॥ नशन नाशस्तत्र ॥ २ ॥

सङ्क्रामसङ्क्रमौ दुर्गसञ्चरे ॥ १५३ ॥

संक्रामन्त्यनेन सङ्क्राम , घञि बाहुलकाद् वृद्धि ॥ १ ॥ "मोऽक्रमि" ॥ ४ । ३ । ५५ ॥ इति वृद्धिनिषेधे सङ्क्रम , पुंस्त्रीवलिङ्गावेतौ ॥२॥ दुर्गे सञ्चरतेऽनेन दुर्गसंचरस्तत्र "गोचरसंचर०"॥ ५ । ३ । १३१ ॥ इति साधु ॥ ३ ॥ १५३ ॥

नीवाकस्तु प्रयाम स्यात्

नियत वचनं नीवाकः मुक्तावृताऽन्नाविक्रयम्, क्रियादरो वा ॥ १ ॥ प्रयमन प्रयाम ॥ २ ॥

अवेक्षा प्रतिजागरः ।

अवेक्षणमवेक्षा अवधानमित्यर्थ ॥ १ ॥ प्रतिजागरण प्रतिजागरः ॥ २ ॥

समौ विस्रम्भविश्वासौ

विस्रम्भण विस्रम्भ ॥ १ ॥ विश्वसनं विश्वास ॥ २ ॥

परिणामस्तु विक्रिया ॥ १५४ ॥

परिणमन परिणाम ॥१॥ विक्रियते विक्रिया, विकार विकृती अपि ॥२॥१५४॥

चक्रावर्त्तो भ्रमो भ्रान्तिर्भ्रमिर्घूर्णिश्च घूर्णने ।

चक्रेण आवर्त्तन चक्रावर्त्त ॥ १ ॥ भ्रमणं भ्रम ॥ २ ॥ क्तौ भ्रान्ति ॥ ३ ॥ "तृभ्रमि" ॥ ( उणा–६११ ) ॥ इतीप्रत्यये भ्रमि ॥ ४ ॥ घरणम्, घूर्णन वा घूर्णि , त्रयोऽपि स्त्रीलिङ्गाः "तूर्णिघूर्णि" ॥ ( उणा–६३७ ) ॥ इति णौ निपात्यते ॥ ५ ॥ घूर्ण्यते घूर्णनम् तत्र ॥ ६ ॥

विप्रलम्भो विसंवदः

विप्रलम्भन विप्रलम्भ "उपसर्गात् खल्घञोश्च" ॥ ४ । ४ । १०७ ॥ इति घञि नोन्तः ॥ १ ॥ विसंवदन विसंवाद ॥ २ ॥

विलम्भस्त्वतिसर्जनम् ॥ १५५ ॥

विलम्भनं विलम्भः ॥ १ ॥ अतिसृज्यतेऽतिसर्जन समर्पणमित्यर्थ ॥२॥१५५॥

उपलम्भस्त्वनुभवः

उपलम्भनमुपलम्भः ॥ १ ॥ अनुभवनमनुभवः ॥ २ ॥

प्रतिलम्भस्तु लम्भनम् ।

प्रतिलम्भनं प्रतिलम्भः ॥ १ ॥ लम्भ्यते लम्भनम् ॥ २ ॥

नियोगे विधिसम्प्रैषौ

नियोजनं नियोगस्तत्र ॥ १ ॥ विधीयते विधिः पुंलिङ्ग ॥ २ ॥ सम्प्रेषणं संप्रैषः ॥ ३ ॥

विनियोगोऽर्पणं फले ॥ १५६ ॥

विनियोजनं विनियोगः, फलविषयमर्पणम् ॥ १ ॥ १५६ ॥

लवोऽभिलाषो लवनम्

लवनं लवः ॥ १ ॥ अभिलषणमभिलाषः, "निरभे पूञ्" ॥ ५ । ३ । २१ ॥ इति घञ् ॥ २ ॥ लूयते लवनम् ॥ ३ ॥

निष्पावः पवनं पवः ।

निष्पवनं निष्पावः "निरभेः पूल्वः" ॥ ५ । ३ । २१ ॥ इति घञ् ॥ १ ॥ पूयते पवनं धान्यादेर्निस्तुषीकरणम् ॥ २ ॥ अलि पवः ॥ ३ ॥

निष्ठेवष्ठीवनष्ठ्यूतष्ठेवनानि तु थूत्कृते ॥ १५७ ॥

निष्ठीवनं निष्ठेवः पुंलिङ्गः ॥ १ ॥ ष्ठीव्यते ष्ठीवनम्, "ष्ठिवुक्लमोऽटि वा" ॥ ४ । २ । ११२ ॥ इति दीर्घत्वम् ॥ २ ॥ भावे क्ते ष्ठ्यूतम्, ॥ ३ ॥ 'लघोरुपान्त्यस्य' ॥ ४ । ३ । ४ ॥ इति गुणे ष्ठेवनम् ॥ ४ ॥ थूत्करणं थूत्कृतम् क्त ॥ ५ ॥ १५७ ॥

निवृत्तिः स्यादुपरमो व्यरमोपारम्य परा रतिः ।

निवर्तनं निवृत्तिः ॥ १ ॥ उपरमणमुपरमः "यमोपरमौ" ॥ ४ । ३ । ५७ ॥ इति वृद्ध्यभावः ॥ २ ॥ व्यवोपारभ्य परा रतिः विरमणं विरतिः ॥ ३ ॥ एवमवरतिः ॥ ४ ॥ उपरतिः ॥ ५ ॥ आरतिः ॥ ६ ॥

विधूननं विधुवनं

धूगो ण्यन्तात् 'धूग्प्रीगो' ॥ ४ । २ । १८ ॥ इति अनटि विधूननम् ॥ १ ॥ 'धूत् विधूनने' विधूयते विधुवनम् कुटादित्वात् गुणाभावः ॥ २ ॥

रिङ्खणं स्खलनं समे ॥ १५८ ॥

रिखु गतौ' रिङ्ख्यते रिङ्खणम् ॥ १ ॥ स्खल्यते स्खलनम् ॥ २ ॥ १५८ ॥

रक्षणस्त्राणे

रक्षण रक्षः, "भीजिस्यपि" ॥ ५ । ३ । ८५ ॥ इति नः ॥ १ ॥ त्रायते त्रासम्, अनद् तत्र ॥ २ ॥

प्रहो ग्राहे

ग्रहणं ग्रहः, "युवर्ण" ॥ ५ । ३ । २८ ॥ इत्यल् ॥ १ ॥ बाहुलकाद् भावे ग्राहस्तत्र ॥ २ ॥

व्यधो वेधे

व्यधन व्यधः "व्यधजप" ॥ ५ । ३ । ४७ ॥ इत्यल् ॥ १ ॥ विधत् विधाने इत्यनेकार्थत्वात् व्यधने वर्त्तते, वधनं वेधस्तत्र ॥ २ ॥

क्षये क्षिया ।

क्षयणं क्षयस्तत्र ॥ १ ॥ 'क्षिंषुञ् हिंसायाम्' क्षयण क्षिया षित्वादङ् ॥ २ ॥

स्फरणं स्फुरणे

'स्फरत् स्फुरणे' स्फर्यते स्फरणम् ॥ १ ॥ स्फूर्ति स्फुरणं तत्र ॥ २ ॥

ज्यानिर्जीर्णौ

ज्यानं ज्यानि "ग्लाहाज्यः" ॥ ५ । ३ । ११८ ॥ इत्यनि ॥ १ ॥ जरणं जीर्णिस्तत्र "ऋल्वादेरेषां तो नोऽप्र" ॥ ४ । २ । ६८ ॥ इति नोत्वम् ॥ २ ॥

अथ वरो वृतौ ॥ १९९ ॥

वरण वर "युवर्ण" ॥ ५ । ३ । २८ ॥ इति भावेऽल्, व्रियतेऽसाविति कर्मणि वा । यत् कश्च –"तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः" ॥ १ ॥ वरणं वृतिस्तत्र ॥ २ ॥ १९९ ॥

समुच्चय समाहार

समुच्चयन समुच्चयः ॥ १ ॥ समाहरण समाहारः, अनेकस्य एकत्र अभ्याहारः ॥ २ ॥

अपहारापचयौ समौ ।

अपहरणमपहारः ॥ १ ॥ अपचयनमपचयः हानिरित्यर्थः, उपसर्गैर्भिन्नार्थभेदः ॥ २ ॥

प्रत्याहार उपादानं

प्रत्याहरणं प्रत्याहारः ॥ १ ॥ उपादीयते उपादानम् ॥ २ ॥

मुद्विशक्तिस्तु निष्क्रम ॥ १६० ॥

शुद्धिशक्तिरष्टधा, प्राशसामर्थ्ये निष्क्रमण निष्क्रमः ॥ १ ॥ १६० ॥

संग्रहमाह—

इत्याद्य क्रियाशब्दाः लक्ष्या धातुषु लक्षणम् ।

एवंप्रकाराः सिद्धक्रियाशब्दाः अन्येऽपि लक्षणीया , तेषां तु लक्षणं प्रकृति-प्रत्ययविभागप्रतिपत्तिर्धातुपारायणादिति ॥

अथाव्ययानि वक्ष्यन्ते—

अथेति साधारणशब्दानन्तरम् न व्ययन्ति-लिङ्गकारकनानात्वेऽपि न नाना-रूपतां प्रतिपद्यन्ते इति लिङ्गादित्यादपि अव्ययानि स्वरादीनि, यदुक्तम्—

"सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।

वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्" ॥ १ ॥

अत एव अलिङ्गानि लिङ्गादिविशेषाणां त्यागिनी नैतानि । यदवोचाम लिङ्गानुशासने—

"नभ्या ऊक्मा वतिर्नुम्पवस्तथा स्वराश्रिता ।

पद वाक्यमव्ययं वेशसंख्य च तद्युक्तम्" ॥ १ ॥

पुंलीबलिङ्गचायमव्ययशब्दः ॥

स्व स्वर्गे

सुष्ठु अयते स्व, "षोरर्तेर्लुङ् च" ॥ ( उणा-५४६ ) ॥ इस रु, स्वरतीति वा विच्, यथा—"स्वयेण वा स्वर्गलोकेष्वपि" ॥ १ ॥

भूः रसातले ॥ १६१ ॥

भवन्त्यत्र भूः, बाहुलकात् सुक् । यथा—'भूर्लोकः' ॥ १ ॥ १६१ ॥

भुवो विहायसा व्योम्नि

भवन्त्यस्मीति भुव , "भिषिराचि" ॥ ( उणा-९७१ ) ॥ इति क्विप् यथा—

"भूर्भुवःस्वस्त्रयीवीर स एव वषट्कारः" ॥ १ ॥

वीनां पक्षिणां हायं गतिम्, अनन्तत्वात् त्यजति विहायसा विच्, विहा पक्षिपक्षाना-पसति वा बाहुलकादासुनः, यथा—"विहायसा पश्य विहङ्गराजम्" ॥ २ ॥

द्यावाभूम्योस्तु रोदसी ।

रोदसी इति विभक्तन्तप्रतिरूपकमव्ययम् । यथा—

"रव भवणभैरवः स्थगितरोदसीकन्दर" ॥ १ ॥

उपरिष्टादुपर्यूर्ध्वे

ऊर्ध्वे देशे उपरिष्टात्, उपरि "ऊर्ध्वात् रिरिष्टातावुपस्यास" ॥ ५ । ३ । १११ ॥ इति साधु । यथा—गिरेरुपरिष्टात् गिरेरुपरि ॥ १ ॥ २ ॥

स्यादधस्तादधोऽप्यवाक् ॥ १६२ ॥

अधरे देशेऽधस्तात्, अध "पूर्वावराधरेभ्यो-" ॥ ७ । २ । ११५ ॥ इत्यस्तातसौ प्रत्ययौ अधादेशश्च । यथा-गिरेरधस्तात्, गिरेरधः ॥ १ ॥ २ ॥ १६२ ॥

वर्जने त्वन्तरेणर्ते हिरुग् नाना पृथग् विना ।

अन्तरेणेति तृतीयान्तप्रतिरूपकमव्ययम् यथा-"त्वामन्तरेण नहि सम्प्रति कश्चिदीश " ॥१॥ ऋते इति सप्तम्यन्तप्रतिरूपकम् । यथा-' ऋते कृशानोर्नहि मन्त्रपूतम् ' ॥२॥ हिनोति हिरुक् ' प्रागादय " ॥ (उणा-८७०) इति निपात्यते यथा-"हिरुक् कर्मणो मोक्षः " कर्मक्षये मोक्ष इत्यर्थः ॥ ३ ॥ न आनयति नाना " डित् " ॥ (उणा-६०५) ॥ इत्याप्रत्ययः" । यथा-"नाना नारी निष्फला लोकयात्रा" ॥ ४ ॥ प्रथते पृथक् "ऋचिप्रथि-" ॥ ( उणा-८७४ ) ॥ इति किस्यजि साधु । यथा-"त्वत्त पृथग् नास्ति बन्धु " ॥५॥ विनयति निषेधयति विना ' डित्' ॥ (उणा-६०५ ) ॥ इत्याप्रत्ययः यथा-"विना वार्तं विना वर्षम्" ॥ ६ ॥

साकं सत्रा समं सार्धममा सह ।

एते परस्पर तुल्यार्था , स्यति साः किप्, तौ कामयते साकं किप् ॥ १ ॥ सत त्रायते सत्रा किप्, यथा-"सत्रा कलत्रैर्गार्हस्थ्यम्" ॥ २ ॥ संगतमस्ति समं किप् ॥३॥ स्यति सास्तेन ऋध्यति सार्धम्, "सोरेतेरम्" ॥ ( उणा-९१४ ) ॥ इत्युपलक्षणत्वम् ॥ ४ ॥ न माअमा "डित्" ॥ ( उणा-६०५ ) ॥ इत्याप्रत्यय ॥ ५ ॥ सहते सह यथाऽस्मद्गुपज्ञे द्व्याश्रयमहाकाव्ये-

"पुलिनानि सह क्षौमैः सरांसि नभसा समम् ।
ज्योत्स्न्यऽमाऽऽज्ञाऽमिषम्मेषा साकं कैलासशासुसि ॥ १ ॥ ६ ॥

कृतं त्वलम् ॥ १६३ ॥

भवत्वस्तु च किं तुल्याः

कृतम्, भवतु, अस्तु च त्रयः स्याद्यन्तप्रतिरूपका अव्ययाः ॥ १ ॥ २ ॥ ३ ॥ अलनमलम्, बाहुलकादम् ॥ ४ ॥ कौति किम्, "कोर्किम्" ॥ ( उणा-९३९ ) ॥ यथा आगमे-

"गोत्रेण पुष्करावर्त ! किं त्वया गर्जितैः कृतम् ? ।
विद्युताऽलं भवत्वाद्रिर्हेसा ऋतुर्विक घमम् ' ॥ ५ ॥ १६३ ॥

प्रेत्यामुत्र भवान्तरे ।

प्रायेण प्रेत्य । यथा-"अन्यो धने प्रेत्य गतस्य भुङ्क्ते" ॥ १ ॥ अमुष्मिन्नमुत्र, यथा "अमुत्र भाविता यत् तु तच्चिन्तय शुभाशुभम्" ॥ २ ॥

तूष्णीं तूष्णीकां जोषं च मौने

[ 'तुष तुष्टौ' तुष्यति तूष्णीम्, "तुषेरीम् णोऽन्तश्च" ॥ ( उणा-६४० ) ॥ इति साधु, यथा-"मुनिस्तूष्णीमास्ते" ॥ १ ॥ कुत्सितमल्पमज्ञातं वा तूष्णी तूष्णीकाम्, "तूष्णीकाम् ॥ ५ । ३ । ७२ ॥ इति साधु, अयं कुत्सितादिविशिष्टे मौने वर्तते, यथा- मुनिः तूष्णीकामास्ते" ॥ २ ॥ जुष्यते जोषम्, बाहुलकात् । यथा- "जोषमास्ते" ॥ ३ ॥

दिष्ट्या तु सम्मदे ॥ १६४ ॥

दिशति दिष्ट्या "भुमिथिशिभ्यः" ॥ ( उणा-६०१ ) ॥ इति क्यप्प्रत्ययः । यथा-' दिष्ट्या पुत्रो जातः," सम्प्रमोदमपि ॥ १ ॥ १६४ ॥

परितः सर्वतो विष्वक् समन्ताच्च समन्ततः ।

"पर्यभिभ्यां च" ॥ ५ । ३ । ९ ॥ इति तसौ परितः । यथा-परितो ग्रामम् ॥ १ ॥ सर्वासु दिक्षु सर्वतः यथा-सर्वतो ग्रामम्, ॥२॥ विष्वगञ्चति विष्वक् यथा- "विष्वग् व्याप्य स्थितो महीम्" ॥ ३ ॥ समन्ततोऽस्यति समन्तात् क्विप् पञ्चम्यन्तप्रतिरूपको वा । यथा-"समन्तात् वाति मारुतः" ॥ ४ ॥ समन्ततस्तसन्तः । यथा- "येन चक्रे समन्ततः" ॥ ५ ॥

पुरः पुरस्तात् पुरतोऽग्रतः

पूर्वे देशे पुरः, पुरस्तात् "पूर्वाधरावराणाम्" ॥ ५ । ३ । ३९ ॥ इत्यसुपि-अस्ताति प्रत्ययौ पुरादेशश्च ॥ १ ॥ २ ॥ पुरः तसाति पुरतः ॥ ३ ॥ अग्रेऽग्रतः आद्यादित्वात् तस् । यथा-पुरः सर पुरस्तात् गच्छति, पुरतो गच्छति, अग्रतः सर ॥४॥

प्रायस्तु भूमनि ॥ १६५ ॥

प्रैति प्रायः "असुन्" ॥ ( उणा-६५२ ) ॥ इत्यसुन् । यथा- 'प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः' ॥ १ ॥ १६५ ॥

साम्प्रतमधुनेदानीं सम्प्रत्येतर्हि

साम्प्रतं विभक्त्यन्तप्रतिरूपकम् । यथा श्रीमार्तण्डमण्डलिकः साम्प्रतं वर्तते यथा ॥ १॥ अस्मिन् कालेऽधुना इदानीम्, एतर्हि "सदाधुनेदानींतदानीमेतर्हि" ॥ ५ । ३ । १५॥ इति साधवः यथा- अधुना तस्य निर्वाणाभिभवाम्बरस्य कथनम् ?" । 'इदानीं त्वं नाथ" "भवन्तमेतर्हि मनस्विगर्हिते" इति ॥ २ ॥ ३ ॥ ४ ॥ सम्प्रति सम्प्रति

"मयेर्लुक् च वा" ॥ ( उणा–६४७ ) ॥ इति ति, संभूतिरिदानीं इति वा "विश्वग्विरयादय" ॥ ३ । १ । २६ ॥ इति साधुः यथा–"संप्रत्यसाम्प्रतं वक्तुम्" ॥५॥

अथाञ्जसा ।

द्राक् स्रागर झटित्याशु मङ्क्ष्वह्नाय च सत्वरम् ॥ १६६ ॥

अञ्जसेति तृतीयान्तप्रतिरूपकमव्ययम् । यथा–"यन्नाऽञ्जसा जयति मन्मलोकम्" ॥१॥ द्रवति द्राक् "द्रागादयः" ॥ (उणा–८७०) ॥ इति निपात्यते यथा–"द्राग् विद्धं कातरे" ॥२॥ स्राक् "सरन्त्यभिसारिका." ॥ ३ ॥ इयर्यरं बाहुलकादम्, यथा–"अरं याति तुरङ्गम" ॥ ४ ॥ झटदित्यनुकरणादितो झटिति "इतावतो लुक्" ॥७।१।१४६ ॥ इति साधु । यथा–"आनीय झटिति घटयति विधिरभिमतमाभिमुखीभूत" ॥५॥ अश्नुते आशु "कृवापाजि" ॥ (उणा–१) ॥ इत्युण्, यथा–"आश्वपैहि मम सीधुभाजनात्, ॥६॥ मज्जति मङ्क्षु "मस्जीष्यशिभ्य क्सुक्" ॥ (उणा–८२६ ) ॥ यथा–"मङ्क्षुदपादि पुरतः पटलैररीणाम्" ॥ ७ ॥ अह्नायेति विभक्त्यन्तप्रतिरूपकमव्ययम् । यथा–"अह्नाय सा नियमजं क्लममुत्ससर्ज"॥८॥सत्वरम्॥९॥

सदा सनाऽनिशं शश्वत्

सर्वस्मिन् काले सदा "सदाऽधुनेदानीं" ॥ ७ । २ । ९६ ॥ इति साधुः। यथा–"सदा पुरोवातपवित्रितात्मरे" सर्वदाऽपि ॥ १ ॥ सनोति सना "समिक्षमि–" ॥ (उणा–६०४) इत्याप्रत्यय' यथा–सनातन, सनत्, सनाविस्यपि यथा–सनत्कुमारः सनात् कुमारः ॥ २ ॥ न निशाम्यति अनिशम्, "शमिजमि" ॥ (उणा–९३७) ॥ इति डिदम् । यथा–"ये नमन्त्यनिशं जिनम्" ॥ ३ ॥ शशति शश्वत् "शश्वद्" ॥ ( उणा–८८२ ) ॥ इति निपात्यते । यथा–"शश्वत् पठति छात्र" ॥ ४ ॥

भूयोऽभीक्ष्ण पुनःपुनः ।

असकृन्मुहु

भवति भूय "भिहायस्–" ॥ ( उणा–९७६ ) ॥ इत्यसि निपात्यते यथा–"भूयो नैवमिति स्वमस्तकलगिरा संसूच्य दुःखस्थितम्" ॥१॥ अभीक्ष्यते अभीक्ष्णम्, "भ्रूणतृण–" ॥ ( उणा–१८६ ) ॥ इति बाहुलकान्मान्तो निपात्यते यथा–"तक्ष्णोतीव तथाऽन्योऽभीक्ष्णं तीक्ष्णाक्षरक्षारैः" ॥ २ ॥ पुनाति पुन "पूसम्यमिभ्य –" ॥ (उणा–९४०) ॥ इत्यर् पुनरेवार्थ, आभीक्ष्ण्ये द्वित्वे पुनःपुन । यथा–"पुनःपुनरिदं स्वामेवमभ्यर्थय" ॥ ३ ॥ एको वारोऽस्य सकृत् "एकात् सकृच्चास्य" ॥७ । २ । ११॥ इति साधु, न सकृत् असकृत् । यथा– 'गन्तव्यमस्ति कियदि

सकृद् मुखाया" ॥४॥ मुखति मुख "मुदिमिष्यादे कित्' ॥ (उणा–१०००) ॥ मुषु । यथा–"याम्या मुहुर्वलितकन्धरमानन तव" ॥ ५ ॥

साय तु दिनान्ते

स्यति सायम्, 'स्यतेर्मित्" ॥ (उणा–५११) ॥ दन्तम् । यथा–"साय प्रातरमी ...म्ममीमिहोत्रमुपासते" सायतनी सन्ध्या ॥ १ ॥

दिवसे दिवा ॥ १६७ ॥

दीव्यन्त्यत्र दिवा " दिविपुरि– ॥ (उणा–५६९) ॥ इति किदाप्रत्यय । यथा–दिवाकर. ॥ १ ॥ १६७ ॥

सहसैकपदे सद्योऽकस्मात् सपदि तत्क्षणे ।

सह स्यति सहसा "कित्" ॥ (उणा–६०५) ॥ इत्याः, विभक्त्यन्तप्रतिरूपको ...। यथा 'सहसा विदधीत न क्रियाम्' ॥१॥ एकपदे विभक्त्यन्तप्रतिरूपकम्, यथा "ममैकपदे तथा वियोग" ॥ २ समानेऽहनि सद्य " सद्योऽपरद्यवि–' ॥ ७ । ३ । ९७ ॥ इति साधु । यथा–"सद्य पतति मांसेन" ॥ ३ ॥ अकस्मादिति विभक्त्यन्तप्रतिरूपकम् । यथा–अकस्मादागत ॥४॥ सपद्यते सपदि 'पादपठि–" ॥ (उणा–६०७) ॥ इति इ, संयादिप्रत्ययाप्रयत्र यो मलोप । यथा– सपदि प्रवह मुपेक्षितोऽसि" ॥ ५ ॥

चिराय चिररात्राय चिरस्य च चिराच्चिरम् ॥ १६८ ॥
चिरेण दीर्घकालार्थे

एते विभक्त्यन्तप्रतिरूपका । यथा– 'चिराय विमेनो भूत्वा ममआशा महा ...न" ॥ १ ॥ चिररात्राय पचते ॥ २ ॥ 'चिरस्य ममलक्ष्मासि' ॥३॥ चिराद् ...तोऽसि ॥ ४ ॥ चिरतममिव वृत्तं सखीषु तस्या स्वकिरा" ॥ ५ ॥ १६८ ॥ "प्रपेदिरे चिरेण मार्गे प्रथमोपविन्यव" ॥ ६ ॥

कदाचिज्जातु कर्हिचित् ।

अन्योऽन्य पर्याया एते । यथा–"न कदाचिदनीदृशं जगत्" ॥१॥ जायते जातु ...या– न जातु काम कामानामुपभोगेन शाम्यति" ॥२॥ कर्हिचिद् भवति ॥ ३ ॥

दोषा नक्तमुषा रात्रौ

दुष्यति दोषा 'समिधामि ' ॥ (उणा–६०४) ॥ इत्याप्रत्यय यथा दोषा–...म्महे" ॥१॥ नश्यति मास्वानत्र नक्तम्, ' नशिनृभ्यां नक्तनुगौ च ' ॥ (उणा–

गन्धमादन माल्यवन्तौ चोत्तराः कुरवः" ॥२॥ अन्तरे सत्तम्यन्तप्रतिरूपकम् । यथा—"आवयोरन्तरे जाता पर्वताः सरितो द्रुमाः" ॥ ३ ॥ अन्तो राति अन्तरा "क्वित्" ॥ (उणा ६०५) ॥ इत्याः । यथा—"अन्तरा निषधं नीलं च विदेहाः" ॥४॥१७४॥

प्रादुराविः प्रकाशे स्यात्

प्राति प्रादुः "इसर्ति" ॥ (उणा–९९७) ॥ इत्युस् । यथा—"प्रादुरासीद्वसुंधरा" ॥ १ ॥ अवस्यत्याविः "अवतेर्णित्" ॥ (उणा–९९५) ॥ इतीस् । यथा—"तयामाविरभूद् मया परिम्लानमुखश्रियाम्" ॥ २ ॥

अभावे त्व न नो नहि ।

अवति अः "क्वित्" ॥ ५ । १ । १७१ ॥ इति डः, यथा—"अविप्र इव भाषसे" विप्रवत् इव इत्यर्थः ॥ १ ॥ नह्यति न । यथा—"नैकं सुतेषु आत्मवात्" ॥२॥ नयति नो बाहुलकात् डो । यथा—नो जानीमः किमत्र विमास्यति ॥ ३ ॥ नह्यति नहि "पदिपठि-" ॥ (उणा–६०७) ॥ इति इः, अव्ययसमुदायो वा यथा—नहि मौरुतं निवर्तते ॥ ४ ॥

हठे प्रसह्य

प्रहसनं पूर्वं प्रसह्य । यथा—"प्रसह्य वित्तानि हरन्ति चौराः" ॥ १ ॥

मा मास्म वारणे

माति मा "क्वित्" ॥ (उणा–६०५) ॥ इत्याप्रत्ययः । यथा—"कुम्भः सिद्धपते कृपाण इति रे । मा भवत अप्रिया" ॥ १ ॥ मास्मेत्यव्ययसमुदाय । यथा—"प्रावृड् जातेति हे । मूर्खा । मास्म त्यजत काननम्" ॥ २ ॥

अस्तमदर्शने ॥ १७५ ॥

अस्यतेऽस्तं बाहुलकात् तम् । यथा- "अस्तंगते यामिनीति" ॥ १ ॥ १७५ ॥

अकामानुमतौ कामम्

आदावनिच्छायां पश्चादङ्गीकारे इत्यर्थः, काम्यते काम बाहुलकादम् । यथा—"कामं भवन्तु सरितो भुवि सुप्रतिष्ठाः" ॥ १ ॥

स्यादों ओं परम मते ।

मतमभ्युपगमस्तत्र, अवत्योम् "अवेर्मः" ॥ (उणा-९३३) ॥ इति मे "मव्यवि" ॥ ४ । १ । १०९ ॥ इत्युपान्त्येन ऊत्वम्, ततो गुणः यथा—"ओं

मिरमुरुकवतेऽप्य शार्ङ्गिण " इति ॥१॥ 'अमण् रोगे' आममति आम् । यथा--आं कुर्म ॥२॥ परम विभक्त्यन्तप्रतिरूपकम् । यथा--परम तत्रागतम् ॥ ३ ॥

कच्चिदिष्टपरिप्रश्ने

कृतिमर्थं चिनोति कच्चित् यथा । कच्चिज् जीवति मे माता ? ॥ १ ॥

अवश्य नूनं च निश्चये ॥ १७६ ॥

अवस्यायतेऽवश्यं बाहुलकात् डिदम् । यथा--"अवश्यं यातारश्चिरतरमुषित्वाऽपि विषया" ॥ १ ॥ नूनं " नयिनूभ्यां नकनूलौ च " ॥ ( उणा ५३५ ) ॥ इत्यम् । यथा "नूनं हन्ताऽसि रावणम्" ॥ २ ॥ ॥ १७६ ॥

बहिर्बहिर्भवे

वहते बहिः " वहिहंहेर्नेलक् च " ॥ ( उणा ९९८ ) ॥ इतीस् । यथा-ग्रामाद् बहिर्वसति ॥ १ ॥

ह्यः स्यादतीतेऽह्नि

जहाति ह्यः अनन्तरातीतदिनम्, " जहाकृभ्यां यसौ च " ॥(उणा ९५१)॥ इत्यस् । यथा-ह्यस्तन ॥ १ ॥

श्व एष्यति ।

अहीनेष श्वयति श्वः अनन्तरागामिदिनम्, यथा-अद्य श्वो वा गमिष्यति ॥१॥

नीचैरल्पे

न्यञ्चति नीचैः " न्युद्भ्यामश्च -" ॥ ( उणा-१००१ ) ॥ इति कैसि साधुः । यथा-"नीचैर्वाति समीरणः" ॥ १ ॥

महत्युच्चैः

उदञ्चत्युच्चैः " न्युद्भ्याम्- " ॥ ( उणा-१००१ ) ॥ इति कैसि साधुः । यथा-"उच्चैरुच्चरतु चिरम्" ॥ १ ॥

सत्त्वेऽस्ति

सत्त्वे सत्तायां अस्तीति तिबन्तप्रतिरूपकः । यथा-अस्तिक्षीरा ब्राह्मणी ॥ १ ॥

दुष्ठु निन्दने ॥ १७७ ॥

निन्दितं तिष्ठति दुष्ठु " दु सपवनिभ्य " ॥ ( उणा-७३२ ) ॥ इति किदु । षीदशत्वादिस्वात् षत्वम् । यथा-दुष्ठु वादी खल ॥ १ ॥ ॥ १७७ ॥

ननुच स्याद् विरोधोक्तौ

ननुचेत्यव्ययसमुदायः । यथा–ननुच कः शब्दः ?, इति ॥ १ ॥

पक्षान्तरे तु चेद् यदि ।

चिनोति चेत् "चिनोतेर्डित्" ॥ ( उणा ८८२ ) ॥ इति निपात्यते ॥ १ ॥ यदति यदि "दिः", बाहुलकाद् गुणाभावः । यथा– 'सत्यमदमृतेन किं यदि खलस्तत् काल-कूटेन किम्' ? ॥ २ ॥

शनैर्मन्दे

शं सुखं भवति शनैः "शमो नियो डैस् मलुक् च" ॥ ( उणा १००४ ) ॥ इति साधुः । यथा– 'शनैर्याति पिपीलिका' ॥ ४ ॥

अवरे त्वर्वाक्

अवरः परतस्त्वस्मात्, अवरमञ्चत्यर्वाक् पृषोदरादित्वात् । यथा–अर्वाक् षोडशा-दर्वाक् ॥ १ ॥

रोषोक्तावुम्

ऊयते उं बाहुलकात् क्विन् म् । यथा "उं कैवासि तव प्रिया" ॥ १ ॥

नतौ नमः ॥ १७८ ॥

नमयं नमः "अस्" ॥ ( उणा-९५२ ) ॥ इत्यस् । यथा—

"नमो दुर्वाररागादिवैरिवारनिवारिणे ।
अर्हते योगिनाथाय महावीराय तायिने" ॥ इति ॥ १ ॥

नमःशब्दस्यार्थे धात्वन्ते प्रयुक्तार्थः, यतो नमस्यतीति, नमस्कृत्यापि, नमस्का-न्तानि च धातवोऽपि भवन्तीति । शेषश्चात्र—

आनुकूल्यार्थकं प्राध्वमसाकल्ये तु चिच्चन ।
तु हि च स्म ह वै पादपूरणे, पूजने स्वती ॥
यद् वा यथा तथैवैवं साम्येऽहो ही च विस्मये ।
स्युरेवं तु पुनर्वै वेत्यवधारणवाचकाः ॥
स्म पृच्छायामतीते प्राक् निश्चये द्राक् खलु ध्रुवम् ।
अतो हेतौ मह: प्रस्तारम्भेऽथ स्वयमात्मनि ॥
प्रशंसने तु सुष्ठु स्यात् परश्वः श्वः परेऽहनि ।
अथाद्याह्न्यथ पूर्वेऽह्नीत्यादौ पूर्वेद्युरादयः ॥
समानेऽहनि सद्य स्यात् पर त्वहि परेद्यवि ।

उभयद्युस्तूभयेद्यु समे युगपदेकदा ॥
स्यात् तदानीं तदा तर्हि यदा यर्ह्यन्यदैकदा ।
परुत् परार्येषमोऽब्दे पूर्वे पूर्वतरेऽत्र च ॥
प्रकारेऽन्यथेतरथा कथमित्थं यथा तथा ।
द्विधा द्वेधा त्रिधा त्रेधा चतुर्धा द्वैधमादि च ॥
द्विस्त्रिश्चतुः पञ्चकृत्व इत्याद्यावर्तने कृते ।
दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः ॥

अव्ययानामनन्तत्वात् दिग्मात्रमिह दर्शितम् । यदाहुः —

"इयन्त इति सङ्ख्यानं निपातानां न विद्यते ।
प्रयोजनवशादेते निपात्यन्ते पदे पदे" ॥ इति ॥ १७८ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां स्वोपज्ञाभिधानचिन्तामणिनाममालाटीकायां
सामान्यकाण्डः षष्ठः ॥ ६ ॥



॥ समाप्ता चेयमभिधानचिन्तामणिनाममालाटीका ॥




